# वैयाकरणसिद्धान्तकौमुद्याः

## उत्तरार्धम् ।

श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम् ।
तोष्टूय्यमानोऽप्यगुणो विभुर्विजयतेतराम् ॥

अस्तु नमः पाणिनये भूयो मुनये तथास्तु वररुचये ।
किंचास्तु पतञ्जलये [1]भ्रात्रे विश्वेश्वराय गुरवे च ॥ १ ॥
व्याख्याता बहुभिः प्रौढैरेषा सिद्धान्तकौमुदी ।
वासुदेवस्तु तद्व्याख्यां वष्टि बालमनोरमाम् ॥ २ ॥

ॐ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः स्युरिति भाष्यप्रमाणकं ग्रन्थमध्ये विघ्नविघातादिप्रयोजनाय कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नाति श्रौत्रेति । वेदाध्येता श्रोत्रियः । 'श्रोत्रियंश्छन्दोऽधीते' इति वेदपर्यायात् छन्दश्शब्दाद् द्वितीयान्तादधीत इत्यर्थे घन्प्रत्ययः । प्रकृतेः श्रोत्रादेशश्च निपातितः । श्रोत्रियस्य भावः श्रौत्रम् । श्रोत्रियस्य यलोपश्चेत्यणि इकारादुत्तरस्य यकाराकारसंघातस्य लोपे इकारस्य 'यस्येति च' इति लोपः । अर्हति आर्यैः प्रशस्यमानेषु वेदविहितकर्मसु योग्यो भवतीत्यर्हन् । 'अर्हः प्रशंसायाम्' इति शतृप्रत्ययः । अर्हतो भाव आर्हन्ती । 'आर्हतो नुम् च' इति ष्यञि आदिवृद्धौ प्रकृतेर्नुमागमे पित्त्वान्ङीषि 'हलस्तद्धितस्य' इति यकारलोपे 'यस्येति च' इत्यकारलोपः । स्त्रीत्वं लोकात् । श्रौत्रं च आर्हन्ती च श्रौत्रार्हन्त्यौ । ताभ्यां वित्ताः श्रौत्रार्हन्तीचणाः, तैरिति विग्रहः । 'तेन वित्तश्चुञ्चुप्चणपौ' इति

---

अज्ञाननाशने दक्षं दीक्षितं भक्तरक्षणे ।
वटमूलाश्रयं त्र्यक्षं दक्षिणामूर्तिमाश्रये ॥ १ ॥

ग्रन्थमध्ये विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षार्थं निबध्नाति श्रौत्रेत्यादिना । श्रोत्रियस्य भावः श्रौत्रम् । 'हायनान्तयुवादिभ्योऽण्' इति सूत्रे 'श्रोत्रियस्य यलोपश्च' इति वार्तिकाद्यलोपे अण्प्रत्यये च 'यस्येति च' इतीकारलोपः । अर्हतो भाव आर्हन्ती । 'गुणवचनब्राह्मणादिभ्यः–' इति सूत्रे 'अर्हतो नुम् च' इत्युक्तेर्नुम् ष्यञ् च । पित्त्वाद् ङीषि 'हलस्तद्धितस्य' इति यलोपः । ताभ्यां वित्तैः श्रौत्रार्हन्तीचणैः । 'तेन वित्तः–' इति चणप् । श्रोत्रियत्वयोग्यत्वाभ्यां प्रसिद्धैरित्यर्थः । किं च गुण्यैर्गुणवद्भिः । प्रशस्तगुणयुक्तैरिति यावत् । 'रूपादाहतप्रशंसयोः–' इति सूत्रे 'अन्येभ्योऽपि दृश्यते'

---

१ 'शब्दब्रह्मात्मने च धूर्जटये' इति पाठः कः ।

चणप् । वेदाध्येतृत्वेन वेदविहितकर्मयोग्यतया च प्रसिद्धेरिति यावत् । **गुण्यैरिति** । नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसम्पत्तिः, मुमुक्षुत्वमित्यादिप्रशस्तगुणसम्पन्नैरित्यर्थः । 'रूपादाहतप्रशंसयोः–' इति सूत्रे 'अन्येभ्योऽपि दृश्यते' इति वार्तिके यप् प्रत्ययः, तद्भाष्ये 'गुण्या ब्राह्मणाः' इत्युदाहरणात् । **महर्षिभिरिति** । महान्तश्च ते ऋषयश्चेति कर्मधारयः । 'आन्महतः–' इत्यात्वम् । अतितपस्विभिरित्यर्थः । **अहर्दिवमिति** । अहश्च दिवा चेति वीप्सायाम् 'अचतुर–' इत्यादिना द्वन्द्वो निपातितः । अहन्यहनीत्यर्थः । **तोष्टूय्यमानोऽपीति** । 'ष्टुञ् स्तुतौ' सकर्मकः । गुणवत्त्वेनाभिधानं स्तुतिः । अभिधानक्रियानिरूपितं कर्मत्वमादाय देवान् स्तौतीत्यादौ द्वितीया । न तु गुणाभिधानमेव स्तुतिः, तथा सति गुणस्य धात्वर्थोपसंगृहीतत्वेनाकर्मकत्वापत्तेः । 'धात्वादेः षः सः' इति षकारस्य सकारे ष्टुत्वनिवृत्तौ, 'धातोरेकाचः–' इति भृशार्थे यङि, 'अकृत्सार्वधातुकयोः–' इति दीर्घे, 'सन्यङोः' इति द्वित्वे, 'शर्पूर्वाः खयः' इति सकारस्याभ्यासगतस्य लोपे, 'गुणो यङ्लुकोः' इत्यभ्यासोकारस्य गुणे, ततः परस्य सस्य 'आदेशप्रत्यययोः' इति षत्वे, ष्टुत्वेन तकारस्य टकारे, तोष्टूयेति यङन्तात् 'सनाद्यन्ताः–' इति धातुसंज्ञकात् कर्मणि लटश्शानचि 'आने मुक्' इति मुगागमे, 'सार्वधातुके यक्' इति यकि, यङोऽकारस्य 'अतो लोपः' इति लोपे, तोष्टूय्यमान इति रूपम् । भृशं स्तूयमानोऽपीत्यर्थः । अचिन्त्यजगद्रचनाद्यनन्तगुणसम्पन्नतया भृशङ्कीर्त्यमानोऽपीति यावत् । **अगुण इति** । निर्गुण इत्यर्थः 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतेरिति भावः । निर्गुणस्य गुणवत्त्वेन कथनात्मिका स्तुतिर्विरुद्धेत्यापातप्रतिपन्नं विरोधमपिशब्दो द्योतयति । गुणानां व्यावहारिकसत्यत्वेऽपि पारमार्थिकत्वाभावान्न विरोध इत्युत्तरमीमांसायां स्पष्टम् ।**विभुरिति**। सर्वव्यापकः परमेश्वर इत्यर्थः । **विजयतेतरामिति** ।

---

इत्युक्त्वा 'गुण्या ब्राह्मणाः' इत्यस्य भाष्यदावुदाहृतत्वात् । **अहर्दिवमिति** । अहन्यहनि, प्रत्यहमित्यर्थः । 'अचतुर–' इत्यादिना निपातनात्साधुः । **तोष्टूय्यमान इति** । स्तौतेर्यङन्तात्कर्मणि शानच्, 'सार्वधातुके यक्' इति धातोर्यक्, 'आने मुक्' इति मुक् । अपिशब्देन आपाततो विरोधं द्योतयति । वस्तुतस्तु न विरोधः । स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात्तदभावस्य पारमार्थिकत्वात् । एतच्चोत्तरमीमांसायां स्पष्टमेव । विभुर्व्यापकः परमेश्वरः । अतिशयेन विजयते विजयतेतराम् । सर्वोत्कर्षेण वर्तत इति फलितोऽर्थः । 'विपराभ्यां जेः' इति तङ् । तदन्ताद् 'द्विवचनविभज्य–' इत्यादिना तरप् 'किमेत्तिङव्ययघादामु–' इत्याम् । नन्विह तरब् दुर्लभ एव, विजयत इत्यस्य अप्रातिपदिकत्वादतिङन्तत्वाच्च । न च 'सह सुपा' इत्यत्र सहेति योगविभागात्तिङन्तेन तरशब्दस्य समासे प्रातिपदिकत्वं स्यादेवेति वाच्यम् स च छन्दस्येवेति तत्रत्यग्रन्थेन सह विरोधापत्तेः । किं च प्रातिपदिकत्वाभ्युपगमे सोरुत्पत्तिः स्यात्, लिङ्गसर्वनामताभ्युपगमेन नपुंसकत्वात्सोर्लुक्यपि 'ह्रस्वो नपुंसके–' इति ह्रस्वो दुर्वारः स्यात् । समुदायान्तर्गतस्य 'जयते' इत्यस्य [illegible] क्षत्वेनासामर्थ्यात्ततोऽपि भवितुं नार्हति । 'समर्थः पदविधिः'

पूर्वार्धे कथितास्तुर्यपञ्चमाध्यायवर्तिनः ।
प्रत्यया अथ कथ्यन्ते तृतीयाध्यायगोचराः ॥ २ ॥

## अथ भ्वादिप्रकरणम् ।४३।

तत्रादौ दश लकाराः प्रदर्श्यन्ते—लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः । २१५१

'जि जये' अकर्मकः । उत्कर्षेण वर्तनं जयः । 'विपराभ्यां जेः' इत्यात्मनेपदम् । 'तिङश्च' इत्यतिशायने तरप् । 'किमेत्तिङव्यय–' इति तरबन्तात् स्वार्थे आम्प्रत्ययः । 'तद्धितश्चासर्व-विभक्तिः' इत्यत्र तसिलादिषु परिगणनादामन्तमव्ययम् । सर्वोत्कर्षेण वर्तत इत्यर्थः । न च विजयते इति समुदायस्यातिङन्तत्वात् कथं ततस्तरबिति वाच्यम् । वि इति हि भिन्नं पदम्, तिङन्तोत्तरपदसमासस्य छन्दोमात्रविषयत्वात् । ततश्च जयत इत्यस्मादेव तरप् । न च जयत इत्यस्य 'विपराभ्यां जेः' इति कृतात्मनेपदस्य विशब्दसापेक्षत्वादसामर्थ्यं शङ्क्यम् । वीत्युप-सर्गस्य द्योतकत्वेन पृथगर्थविहीनतया तत्सापेक्षत्वाभावात् तिङन्तस्य प्रधानतया तस्य विशब्दापेक्षत्वेऽपि बाधकाभावाच्चेत्यलम् । वृत्तकथनपूर्वकं वर्तिष्यमाणनिरूपणं प्रतिजानीते **पूर्वार्धे इति** । तुर्यश्चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति चतुर्शब्दाद्यत्प्रत्ययः, प्रकृतेश्चकाराकारसंघातलोपश्च । पूर्वार्धे चतुर्थपञ्चमाध्यायवर्तिनः प्रत्यया, कथिता इत्यन्वयः । 'स्पृशोऽनुदके क्विन्' इत्यादितार्तीयीककतिपयप्रत्ययोपन्यासस्तु प्रासङ्गिक इति भावः । **अथेति** । चतुर्थपञ्चमाध्यायवर्तिप्रत्ययनिरूपणानन्तरं तृतीयाध्यायगोचराः प्रत्ययाः कथ्यन्त इत्यन्वयः । तृतीयाध्यायस्य गोचराः प्रतिपाद्यतया विषयाः । तृतीयाध्यायविहिता इति यावत् । कृत्सु 'णचः स्त्रियामञ्' इत्यादितद्धितव्युत्पादनं तु प्रासङ्गिकमिति भावः ।

**तत्रेति** । निर्धारणसप्तम्यन्तात्त्रल् । तेषु तृतीयाध्यायवर्तिप्रत्ययेष्वित्यर्थः । **दशेति** । अनुबन्धभेदाल्लकारभेद इति भावः । **पञ्चम इति** । लेडित्यर्थः । **छन्दोमात्रेति** । 'लिङर्थे लेट्' इत्यत्र 'छन्दसि लुङ्लङ्लिटः' इति पूर्वसूत्रात्, 'छन्दसि' इत्यनुवृत्तेरिति भावः । एतेन लेड्रूपाणि इह कुतो न प्रदर्श्यन्त इति शङ्का निरस्ता ।

---

इति परिभाषितत्वात् । 'आमन्तेन विशब्दो युज्यते' इति कल्पनायां त्वन्तरङ्गत्वात् परस्मै-पदप्रवृत्तौ विजयतितरामिति स्यादिति चेत् । अत्राहुः—समुदायान्तर्गताज्जयत इत्यस्मादेव तरप् । न च तस्य विशब्देन सह साकाङ्क्षत्वेनासामर्थ्यं शङ्क्यम्, तिङन्तस्य प्रधानत्वेन सापेक्षत्वेऽपि दोषाभावात्, उपसर्गस्य द्योतकत्वेन-प्रत्येकमर्थ एव नास्तीति साकाङ्क्षताया वक्तुमशक्यत्वाच्चेति । वृत्तकथनपूर्वकं वर्तिष्यमाणमाह **पूर्वार्धे इति** । हलन्तेषु 'स्पृशोऽनुदके क्विन्' 'ऋत्विग्दधृक्स्रग्–' इत्यादिना क्विन्नादिव्युत्पादनं प्रासङ्गिकमिति भावः । तुर्यश्चतुर्थः । 'चतुरश्छयतावाद्यक्षरलोपश्च'इत्युक्तत्वात् । **अथेति** । इहापि कृत्सु 'णचः स्त्रियामञ्' 'अणिनुणः' इत्यादिव्युत्पादनं प्रासङ्गिकं बोध्यम्, प्राधान्येन तु तृतीयाध्यायस्था एवेहोच्यन्त इति भावः । अनुबन्धभेदेन भेदमाश्रित्याह **दश लकारा इति** । **प्रदर्श्यन्त इति** । यद्यपि पञ्चमलकाररूपा-

**वर्तमाने लट्।** ( ३—२—१२३ ) वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। २१५२ **लः कर्मणि च भावे चाकर्मकेभ्यः।** ( ३—४—६९ ) लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च। २१५३

---

**वर्तमाने लट्।** धातोरिति सूत्रमातृतीयाध्यायसमाप्तेरधिकृतम्। वर्तमाने इति तत्रान्वेति। वर्तमानेऽर्थे विद्यमानाद्धातोः लडिति लभ्यते। फलितमाह **वर्तमानक्रियावृत्तेरिति।** धात्वर्थक्रियाया वर्तमानत्वं तु वर्तमानकालवृत्तित्वम्। कालस्य तु वर्तमानत्वम् अतीतानागतभिन्नकालत्वम्। 'भूतभविष्यतोः प्रतिद्वन्द्वी वर्तमानः कालः' इति भाष्यम्। वर्तमानत्वं च न प्रत्ययार्थभूतकर्त्रादिविशेषणम्, अतीतपाकादिक्रिये कर्तरि वर्तमाने पचति इत्याद्यापत्तेः। किंतु धात्वर्थविशेषणमेव वर्तमानत्वम्। लट् तु तस्य द्योतक एव। **अटाविताविति।** न च अकार उच्चारणार्थ एवास्त्विति वाच्यम्। लिडादिवैलक्षण्याय तस्यावश्यकत्वात्। तथा च तस्य इत्संज्ञां विना निवृत्त्युपायाभावाद् इत्संज्ञैवादर्तव्येति भावः। **लःकर्मणि च।** वाक्यद्वयमिदं सूत्रम्। 'लः कर्मणि च–' इति प्रथमं वाक्यम्। ल इति प्रथमाबहुवचनान्तम्। चकारेण 'कर्तरि कृत्' इत्यतः 'कर्तरि' इत्यनुकृष्यते। 'धातोः' इत्यधिकृतम्। लकाराः कर्मणि कर्तरि च धातोः स्युरिति लभ्यते। सकर्मकधातुविषयमेवेदम्। अकर्मकेषु कर्मणीत्यस्य बाधितत्वात्। तदाह **लकाराः सकर्मकेभ्यो ( धातुभ्यः ) कर्मणि कर्तरि च स्युरिति।** एवं च सकर्मकेभ्यो भावे लकारा न भवन्ति। सकर्मकेभ्योऽपि भावलकाराप्रवृत्तौ तु देवदत्तेन घटं क्रियत इत्यादौ भावलकारेण कर्मणोऽनभिहितत्वाद् द्वितीया स्यादिति भावः। 'भावे चाकर्मकेभ्यः' इति द्वितीयं वाक्यम्। अत्रापि चकारेण कर्तैवानुकृष्यते। न तु कर्म, असंभवात्। तदाह **अकर्मकेभ्यो भावे कर्तरि चेति।** अत्राकर्मकग्रहणेन अविवक्षितकर्मका अपि गृह्यन्ते। तेन देवदत्तेन भुज्यत इत्यत्र सतोऽप्योदनरूपकर्मणः अविवक्षायां भावे लकारोऽस्त्येवेत्यन्यत्र विस्तरः।

---

ण्यधुना न व्युत्पाद्यन्ते तथापि लकारः स्वरूपेण प्रदर्श्यते 'लः कर्मणि च भावे चाकर्मकेभ्यः' 'लस्य' इत्यादिसूत्रविषयतां व्युत्पादयितुमिति भावः। **पञ्चम इति।** लेडित्यर्थः। लट्लिडिति स्वोक्तक्रमेणेति बोध्यम्। **वर्तमाने लट्।** वर्तमान इत्येतत्प्रकृत्यर्थविशेषणमित्याह **वर्तमानक्रियावृत्तेर्धातोरिति।** धातोरिति सूत्रमातृतीयाध्यायान्तमधिक्रियत इति भावः। **लट् स्यादिति।** तस्य वाच्यं त्वनुपदमेव स्फुटीभविष्यति। वर्तमानकालस्तु न तद्वाच्यः, किंतु द्योत्य एव। लिडादिष्वपि भूतादिकालो यथायथं द्योत्य एवेत्यवगन्तव्यम्। वस्तुतस्तु वाच्यत्वाभ्युपगमोऽपि सुगम इति विध्यादिसूत्रे वक्ष्यामः। **अटाविताविति।** अकार उच्चारणार्थ इति तु नोक्तम्, लिडादिवैलक्षण्यसम्पादनाय तस्यावश्यवक्तव्यत्वात्। **लः कर्मणि च।** चकारात् 'कर्तरि कृत्' इत्यतः कर्तरीत्यनुकृष्यते, सकर्मकविषयं चेदम्। अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्, भावे चेत्युत्तरवाक्येन तत्र विशेषविधानाच्च तदेतदाह **सकर्मकेभ्य इति। भावे चेति।** चकारेण कर्तैवानुकृष्यते न तु कर्म, असम्भवात्तदाह **भावे कर्तरि चेति।** ननु भावकर्मणो-

रात्मनेपदविधानात् 'शेषात्कर्तरि–' इति परस्मैपदविधानाच्च ज्ञापकाल्लकाराणां भावकर्म, कर्तारोऽर्था अनुमातुं शक्यन्त इति किमनेन सूत्रेण । मैवम्, असत्यस्मिन्सूत्रे सकर्मके[illegible] घञादिवद्भावे लकारापत्तौ घटं क्रियते देवदत्तेनेत्यादिप्रयोगः प्रसज्येत. तन्मा भूदित्येतदर्थमेतत्सूत्रस्यावश्यकत्वात् । न चैवम् 'अकर्मकेभ्यो भावे लः' इत्येव सूत्र्यताम्, भावे अकर्मकेभ्य एवेति नियमार्थमिति वाच्यम्, अकर्मकेभ्यो भाव एवेति विपरीतनियमापत्त्या कर्तरि तेभ्यो लकारानापत्तेः । तस्माद्भावे चेति चकार आवश्यकः । न चैवं 'भावे चाकर्मकेभ्यः' इत्येवास्त्विति वाच्यम्, भावे इव कर्तर्यप्यकर्मकेभ्य एवेति नियमापत्तौ सकर्मकेभ्यो भाव इव कर्तर्यपि लकारानापत्तेः नन्वेवमपि 'लश्च भावे चाकर्मकेभ्यः' इत्येवास्तु चकारेण कर्तरीत्यनुकर्षणाल्लकाराः सकर्मकेभ्यः कर्तरि स्युरकर्मकेभ्यो भावे कर्तरि च स्युरित्यर्थे पर्यवसिते कर्मणि तूक्तज्ञापकाद्भविष्यन्तीति किमनेन कर्मणीत्यनेनेति चेत् । मैवम्, उत्तरसूत्रे तयोरित्यनेन कर्मणोऽपि परामर्शार्थं तस्यावश्यकतया ज्ञापकानुसरणक्लेशस्य वैयर्थ्यात् । तस्माद्यथान्यासमेव रमणीयम् । अत्र नैयायिकाः—'लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि । कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्, देवदत्त इत्यादिप्रथमान्तपदेन तल्लाभाच्च । देवदत्तः पचतीत्यत्र हि देवदत्तो विशेष्यः, यत्नो विशेषणम्, आश्रयत्वं तु संसर्गः । तथा च पाकानुकूलकृत्याश्रयो देवदत्त इत्यादिशाब्दबोधोऽपि सुष्ठूपपद्यते' इति । तन्न, पचतीत्युक्ते पाककर्ता क इत्याकाङ्क्षानुरोधेन लकाराणां कर्तरि शक्तिरित्यभ्युपगन्तुमुचितत्वात् । पाकानुकूला कृतिरिति शाब्दबोधाभ्युपगमे तु कस्मिन्नित्याकाङ्क्षा स्यात्, कस्येति वा । न चैककर्तृका पचिक्रियेति शाब्दबोधाभ्युपगमेऽपि क इत्याकाङ्क्षा नोपपद्यत एवेति शङ्क्यम्, कर्तृसामान्यबोधे सति क इति कर्तृविशेषाकाङ्क्षायां बाधकाभावात् । नापि देवदत्तकर्तृका पचिक्रियेत्युक्तेऽपि कस्य वेत्याकाङ्क्षा दुर्वारैवेति शङ्क्यम्,विक्लृत्यनुकूलव्यापारस्यैव पचिक्रियात्वात् तदाश्रयस्य देवदत्तस्य कर्तृत्वात् क्रियाश्रयत्वे निश्चिते कस्मिन्नित्याकाङ्क्षाया अप्रवृत्तेः । किंच पचन्तं देवदत्तं पश्य, पचते देवदत्ताय देहि, पचमानस्य देवदत्तस्य द्रव्यम् इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशत्वाविशेषेण तेभ्योऽपि कृतिमात्रबोधापत्तेः । न चेष्टापत्तिः, आश्रयत्वं संसर्ग इत्युक्तत्वेन पाकानुकूलकृत्याश्रयं देवदत्तं पश्येत्याद्यर्थस्वीकारे दोषाभावादिति वाच्यम्, नामार्थयोर्भेदान्वयस्य स्वपरसिद्धान्तविरुद्धत्वात् । न चैवं नामार्थयोरभेदसंसर्गव्युत्पत्त्यनुरोधेन शतृशानजादीनां कर्तरि शक्तिस्तिबादीनां तु कृतावेवेति वैषम्यं स्वीक्रियते, प्रामाणिकगौरवस्यादोषत्वादिति वाच्यम्, स्थान्येव वाचको लाघवान्न त्वादेशो गौरवादिति स्वसिद्धान्तस्य परित्यागापत्तेः । रामः, ज्ञानम्, कतरत्, इत्यादौ सोर्विसर्गे सोरमि सोरदडि च कृते लाघवात्सुत्वेनैव शक्तिर्न तु तत्तद्रूपेणेत्यादिभवदीयव्यवहारस्यापत्तेश्च । एवं च तिबादीनां शत्रादीनां च स्मारकतया लिपिस्थानीयत्वम्, बोधकस्तु लकार एवेति स्थितम् । स च शत्राद्यन्ते कर्तरि शक्त इत्यभ्युपगमे तिङन्ते कथं कृतिं बोधयेत् । 'अन्यायश्चानेकार्थत्वम्' इति न्यायात् । यदि तु वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचका इत्याद्यभ्युपगम्यते, तर्हि घटम्, घटेन, हरेऽत्र, विष्णोऽवेत्यादिषु 'सर्वे सर्वपदादेशा–' इति

न्यायेन पदस्फोटो वाक्यस्फोटश्च सिध्येदिति भवतां तन्महदेवानिष्टम् । किं च 'कर्तरि कृत्' इति यत्कर्तृग्रहणं तदेव 'लः कर्मणि–' इति सूत्रे चकारेणानुकृष्यत इति कथं ण्वुलादीनां लकाराणां च शक्तौ वैलक्षण्यम् । न च नामार्थयोरभेदान्वयसंसर्गाभ्युपगम एव ण्वुलादौ कर्तृवाच्यत्वे बीजमिति वाच्यम् पचतिरूपं पचतिकल्पं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यतौचित्यात् । ननु समुदायस्य नामत्वेऽपि तिङ्प्रत्ययो न नामेति चेत्पाचक इत्यत्राप्यक इत्येतन्न नामेति तुल्यम् । अकान्तं नामेति चेति रूपवाद्यन्तमपि नामेति तुल्यम् । ततश्चात्रप्रशस्तपाककर्ता देवदत्त इत्याद्यभेदान्वयो भवद्भिरभ्युपगन्तव्य इति तिङ्क्ष्वपि कर्तृवाच्यता स्वीकर्तव्यैव । किं च कर्तृवाच्यत्वानभ्युपगमे 'युष्मदि समानाधिकरणे मध्यमः' 'अस्मद्युत्तमः' इति सामानाधिकरण्यप्रयुक्ता पुरुषव्यवस्था 'अभिहिते कर्तरि प्रथमा' इत्यादिकं च भवन्मते कथं संगच्छताम् । यत्तु अनभिहित इत्यस्यानभिहितसंख्याक इत्यर्थवर्णनेन 'देवदत्तः पचत्योदनम्, ओदनः पच्यते देवदत्तेन' इत्यादौ प्रथमाद्वितीयादिव्यवस्थापनमुक्तम् । तन्न, कृत्तद्धितसमासेषु संख्याभिधानस्याप्रसिद्धत्वात् । ततश्च पक्तव्यस्तण्डुलः, शत्यः शतिकोऽश्वः, प्राप्तोदको ग्रामः, इत्यादिषु 'कर्मणि द्वितीया' इत्यस्य प्रवृत्तौ प्रथमा न स्यात् । न च तिष्ठतीत्यध्याहारेण संख्याभिधानमिहाप्यस्तीति वाच्यम्, स्थित इत्याद्यध्याहारे तदभावात् । शाब्दिकोऽयं देवदत्तो न तु नैयायिक इत्यादिषु नीलमिदं न तु रक्तमित्यत्रेव क्रियापदाध्याहारस्यानावश्यकतया आख्यातेन 'शब्दर्दुरं करोति' इति ठक्प्रत्ययेन वा कर्तृसंख्याया अनुक्तत्वाद्देवदत्ते कर्तरि तृतीयोत्पत्तिसङ्गाच्च । तस्मादनभिहिते कर्तरीत्यादिव्याख्यानमेवाभ्युपेतव्यम् । अपि च धातूपात्तव्यापाराश्रयः कर्ता, तत्राश्रयमात्रं कृतां लकाराणां चार्थः, न तु व्यापारोऽपि, तस्य धातुनैव लब्धत्वात् । अत एव कर्ता कारक इत्यादौ प्रकृतिप्रत्ययार्थयोर्नान्वयः, व्यापाराश्रयस्य प्रत्ययार्थत्वे तु तस्य प्रकृत्यर्थेन व्यापारेणान्वयः क्लिष्टः स्यात् । यस्तु वदति—'कृधातोः' कृतिरर्थः, कृत्प्रत्ययस्यापि कृतावेव शक्तिर्न तु कर्तरि । 'कर्तरि कृत्' इत्यत्र हि कर्तरीति भावप्रधानो निर्देशः । कर्तृत्वं कृतिमत्त्वम् । तच्च कृतिरेव । यत्र तु देवदत्तादिपदसमभिव्याहारस्तत्र तृजादौ कृतिमति लक्षणेत्यादि, तन्मते पूर्वोक्तकर्तेत्यादौ सुतरामनन्वयः । 'कर्मवत्कर्मणा–' इति सूत्रे करोतिरुत्पादनार्थः, उत्पत्तिश्च कर्मस्था, यत्नार्थकत्वे तु करिष्यते घट इत्यादि न सिध्येदिति वक्ष्यमाणदूषणं च दुरुद्धरम् । आश्रयमात्रस्य प्रत्ययार्थत्वे तु रथो गच्छतीत्यत्र रथस्याचेतनस्य यत्नाभावेऽपि गमनानुकूलचक्रभ्रमणादिव्यपाराश्रयत्वान्न काचिदनुपपत्तिः । एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसंभव एव नास्ति, कृतेरपि व्यापारविशेषतया प्रायेण धातुत एव लाभात्, जानातीत्यादावाश्रयत्वं प्रत्ययस्यार्थ इति स्वीकृत्य यत्नार्थत्वस्य त्वयाऽपि वक्तव्यत्वात् । न हि यत्नमन्तरेण ज्ञानं नोदेतीति कश्चिदभ्युपैति । तस्मात्कृतां तिङां च वैलक्षण्यं दुर्लभमिति कर्त्रर्थकत्वमभ्युपेयम् । एतेन कर्त्रविकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जञ्जभ्यमानाधिकरणे यङन्ताद्विहितस्य जञ्जभ्यमान इति शानचः कर्तृवाचकत्वं स्वीकुर्वन्तो मीमांसका अपि प्रत्युक्ताः । यत्तु तैरुक्तं शानजंशे 'कर्तरि कृत्' इति व्याकरणं शक्तिग्राहकमस्तीति

तत्र, कृद्वाक्यशेषो ह्ययमर्थाकाङ्क्षायामनिर्दिष्टार्थेषु ण्वुलादिष्वेवोपतिष्ठते 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात्, न तु शत्रादिषु। स्थानिभूतलकारार्थैनैवैतेषां निराकाङ्क्षत्वात्, अन्यथा भावे कर्मणि च शानचो दौर्लभ्यापत्तेः। ततश्च शय्यमाने आस्यमाने चायं गत इत्यादि-प्रयोगो भावे न स्यात्। कर्मणि तु क्रियमाण इत्यादिप्रयोगो न स्यात्। यत्तु भट्टपादा आहुः—कर्तरि यदेकत्वं तत्र तिप्, कर्तरि यद् द्वित्वं तत्र तस्, इत्यादिक्रमेण 'लः कर्मणि' इत्यस्य 'द्व्येकयोः—' इत्यादेश्चैकवाक्यतया व्याख्यानान्न कर्तृवाच्यता सूत्रादायातीति। तच्चिन्त्यम्, 'तान्येकवचनद्विवचन–' इति विहितद्विवचनादिसंज्ञा हि तिवाद्यादेशनिष्ठा। ततश्च द्विवचनादिसंज्ञकतिबादिविधिना 'द्व्येकयोः' इत्यस्यैकवाक्यताऽस्तु। न च तिबादिविधौ कर्तरीत्यस्ति, यद् द्वित्वैकत्वादिविशेषणतया कथंचिन्नीयेत। ननु 'लः कर्मणि–' इति सूत्रे 'कर्तरि कृत्' इति इत्यतोऽनुवृत्तं कर्तृग्रहणं तिबादिविधावस्त्येव, लविधितिबादिविध्योरप्येक-वाक्यतास्वीकारादिति चेत्। सत्यम्, वाक्यैकवाक्यता हि सा, न तु पदैकवाक्यता, 'लः कर्मणि–' इति विहितलकारानुवादेन तिवाद्यादेशविधेः प्रवृत्तत्वात्। तथा च लविधौ श्रूयमाणं कर्तृग्रहणं कथं संख्यां विशिनष्टु। न हि यत्र कर्तृग्रहणं तत्र संख्योपस्थापकमस्ति लकारस्य द्विवचनादिसंज्ञाविनिर्मुक्तत्वात्। ततश्च 'कर्तरि यदेकत्वम्' इति व्याख्या कथमपि नसंभवत्येव। स्यादेतत्, 'लः कर्मणि' इति सूत्रे ल इत्यकारानुबन्धकयोर्लङ्लटोः सामान्य-ग्रहणं न भवति किंतूच्चष्टानुबन्धकलकाराणां सामान्यग्रहणमिति निर्विवादम्। तत्र 'लः' इति जसन्तं मा भूत् किंतु ङसन्तमस्तु। 'लः परस्मैपदम्' इतिवदादेशापेक्षा चेयं षष्ठी, लस्य आदेशः स कर्मणि चेत्यादि। न चाविहितस्य लस्यानुवादो न संभवतीति वाच्यम्, 'वर्तमाने लट्' इत्यादिभिरेव लविधानात्। तथा च लस्य स्थाने य आदेशः स सकर्मकात्कर्मणि कर्तरि च स्यादकर्मकाद्भावे कर्तरि चेत्यर्थः सुलभ इति भट्टपादोक्तयोजनिका निर्बाधैवेति चेत्। अत्राहुः—ल इत्यस्य षष्ठ्यन्तत्वे आदेशानामेवार्थ उक्तः स्यात्। सोऽपि तिवादीनामेव न तु शत्रादीनां, तेषां द्विवचनादिसंज्ञाविरहात्। 'द्व्येकयोः–' इत्यादिनाऽस्यैकवाक्यता भवद्भिरुक्त-त्वात्। न च भवदुक्तरीत्या 'कर्तरि कृत्' इत्यनेनैव निर्वाहः, भावे कर्मणि च शानचो दौर्ल-भ्यापत्तेरुक्तत्वात्। न च शानज्विधिना सहात्मनेपदव्यवस्थापकानामेकवाक्यतया 'भावकर्मणोः' इत्यनेनेष्टसिद्धिः, सकर्मकादपि भावे शानजापत्तेः। किञ्च, जसन्तत्वे श्रुतेनैव संबन्धः, षष्ठ्य-न्तत्वे त्वादेश इत्यध्याहाराद्गौरवमित्यादि। अत्रेदं बोध्यम्–'भावे चाकर्मकेभ्यः' इत्यकर्मक-ग्रहणेनाविवक्षितकर्माणोऽपि गृह्यन्ते। अत एव 'णेरणौ–' इति सूत्रे 'नेह पच्यते, नेह भुज्यते' इति भावे लकार इति हरदत्तः। अत्यन्ताविद्यमानकर्मकाणामेव ग्रहणम् 'नेह पच्यते' इत्यादौ तु कर्मण्येव लकारः। गम्यमानत्वाच्च कर्म न प्रयुज्यत इति मतान्तरम्। एतच्च 'गतिबुद्धि—' इत्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम्। यत्तु कैश्चिदुक्तम्—'अविवक्षितकर्मणां भावे लकार इति प्रसादकृतोक्तं भाष्यादिविरोधादयुक्तम्' इति तच्चिन्त्यम्, पक्षद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात्। प्रत्युत 'अविवक्षितकर्माणोऽप्यकर्मकाः' इति पक्ष एव प्रबलः। तथा हि 'समानकर्तृकेषु तुमुन्' इति

लस्य । ( ३—४—७७ ) अधिकारोऽयम् । **२१५४ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्** । ( ३—४—७८ ) एतेऽष्टादश लादेशाः स्युः । **२१५५ लः परस्मैपदम्** । ( १—४—९९ ) लादेशाः परस्मैपदसंज्ञाः

---

**लस्य** । 'धातोः' इत्यधिकृतम् । अकारो न विवक्षितः । तेन लिडादीनामपि संग्रहः । चूडाल इत्यादौ च नातिप्रसङ्गः । **तिप्तस्** । तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ् । एषां समाहारद्वन्द्वात् प्रथमैकवचनम् । 'लस्य' इति स्थानषष्ठ्यन्तमविकृतम् । तेन आदेश इति लभ्यते । फलितमाह **एत इति** । तसादौ रुत्वाभाव आर्षः । तिवादौ पकारानुबन्धयोजनं तु द्वेष्टीत्यादौ सार्वधातुकमपिदिति ङित्त्वनिवृत्त्यर्थम् । तदुदाहरणेषु स्पष्टीभविष्यति । **लः पर** । 'लः' इति स्थानषष्ठी । आदेश इत्यध्याहार्यम् । तदाह

---

सूत्रे इच्छता क्रियत इति भावे लडुक्तो हरदत्तेन, 'णेरध्ययने वृत्तम्' इति सूत्रे कैयटहरदत्तादिभिरपि नपुंसके भावे क्तोऽप्यकर्मकेभ्य एव, 'तयोरेव कृत्यक्त—' इत्यत्र क्तमात्रस्य ग्रहणात्तत्र भावे चाकर्मकेभ्य इत्यनुवर्तनात्, अन्यथा घटं कृतमिति प्रसज्येतेति सिद्धान्तितम् । एवं स्थिते यद्यविवक्षितकर्माणोऽपीह सूत्रेऽकर्मग्रहणेन गृह्येरन्, तर्हि पीता गावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तान्तादर्शआद्यजित्यादि निष्ठादि प्रकरणे स्वयमेव वक्ष्यमाणम्,'आदिकर्मणि क्तः' इति सूत्रे हरदत्तेन वक्ष्यमाणं कृतपूर्वीत्यत्र भावे क्त इति कैयटाद्युक्तं च कथं संगच्छेत, कथं च 'गतं तिरश्चीनम्' इत्यादिप्रयोगाः संगच्छेरन् । 'गतिबुद्धि—' इति सूत्रे त्वकर्मकग्रहणेनाविवक्षितकर्माणो न गृह्यन्त इत्युक्तम्, तेनाणौ यः कर्ता स ण्यन्ते कर्म न भवतीति देवदत्तेन पाचयतीति सिद्धम् । 'गत्यर्थाकर्मक—' इति सूत्रेऽपि न गृह्यन्ते, तेन हि सूत्रेण कर्तर्यपि क्तो विधीयत इति दत्तवान् पक्ववान् इत्याद्यर्थे दत्तः पक्व इत्याद्यापत्तेः, इह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणे न कोऽपि दोष इत्यास्तां तावत् । **लस्य** । वर्णग्रहणे प्रत्ययग्रहणपरिभाषा, अर्थवद्ग्रहणपरिभाषा च न प्रवर्तते इति लुनाति, चूडाल इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेद् अत्राहुः—'लः कर्मणि—' इति सूत्रे निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेः कर्त्राद्यर्थे विहितस्य लकारस्य ग्रहणमिति । अतोऽपि तिबाद्यादेशोनुवादेन कर्त्राद्यर्थविधिरिति कल्पना निरस्ता । लस्थानिकतिबादीनां कर्त्राद्यर्थविधानम्, कर्त्राद्यर्थे विहितस्य लस्य तिबादिविधानमित्यन्योन्याश्रयापत्तेः यद्वा धातोरित्यधिकाराद्धातोर्विहितस्यैव लस्येह ग्रहणमिति नोक्तातिप्रसङ्गः । लस्येत्संज्ञा तु न भवति, फलाभावात् । न च लित्स्वरः फलम्, णलो लित्त्वेन तदभावस्य ज्ञापनात् । नाप्यश्रवणमेव फलम्, तदुच्चारणस्यानर्थक्यापत्तेरादेशविधिनैवाश्रवणलाभाच्च । लस्य तिबादिस्थानित्वाभ्युपगमे तु 'लः परस्मैपदम्' इत्यादिस्वरसतः संगच्छत इति दिक् । **तिप्तस्झि** । समाहारे द्वन्द्वः । इटष्टकार आगमलिङ्गं न भवति, सप्तदशभिरादेशैः समभिव्याहारात् । किंतु 'इटोऽत्' इति विशेषणार्थः । एरदित्युच्यमाने एधेवहि एधेमहीत्यत्रापि स्यात्, वर्णग्रहणे प्रत्ययग्रहणार्थवद्ग्रहणपरिभाषयोरप्रवृत्तेः । केचित्तु—'इटोऽत्' इत्यत्र लिङः इत्यनुवर्तनाल्लिङादेशस्यैवर्णस्येति सामानाधिकरण्येन

स्युः । २१५६ तङानावात्मनेपदम् । ( १-४-१०० ) तङ् प्रत्याहारः-तादिनवकं शानच्कानचौ चैतत्संज्ञानि स्युः । पूर्वसंज्ञापवादः । २१५७ अनुदात्तङित आत्मनेपदम् । ( १-३-१२ ) अनुदात्तेन उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदं स्यात् । २१५८ स्वरितञितः कर्त्रभि-

लादेशा इति । तङानौ । तङ् च आनश्चेति द्वन्द्वः । प्रत्याहार इति । त आतामिति तशब्दमारभ्य महिङिति ङकारेणेति शेषः । तदाह तादिनवकमिति । इह पूर्वसूत्राल्ल इत्यनुवर्तते । ततश्च आनग्रहणेन शानच्कानचावेव गृह्येते । न तु 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति विहितश्चानशपि, तस्य लादेशत्वाभावात् । तेन परस्मैपदिभ्योऽपि चानश् सिध्यति निघ्नाना इत्यादौ । तदाह शानच्कानचौ चेति । एतत्संज्ञानीति । आत्मनेपदसंज्ञकानीत्यर्थः । पूर्वसंज्ञेति । परस्मैपदसंज्ञापवाद इत्यर्थः । एवं च तिबादिनवके परस्मैपदसंज्ञा पर्यवस्यति । अथ कस्माद्धातोः परस्मैपदम्, कस्मादात्मनेपदमित्याकाङ्क्षाया-माह अनुदात्तङितः । अनुदात्तश्च ङ् च अनुदात्तङौ, तावितौ यस्य सः अनुदात्तङित्, तस्माद् अनुदात्तङितः । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते, अनुदात्तेतो ङितश्चेति लभ्यते । 'उपदेशेऽजनुनासिक इत्' इत्यस्माद् मण्डूकप्लुत्या 'उपदेशे' इत्यनुवृत्तं 'ङितः' इत्यनेन सम्बध्यते, न तु 'अनुदात्तेत' इत्यनेन । उपदेशादन्यत्र अनुदात्तस्ये-त्संज्ञाया अप्रसक्तत्वेनाव्यभिचारात् । 'भूवादयो धातवः' इत्यस्मान्मण्डूकप्लुत्या 'धातवः' इत्यनुवृत्तं पञ्चम्या विपरिणतम् अनुदात्तेता ङिता च विशेष्यते । तत्रानुदात्तेदंशे तदन्त-विधेः प्रयोजनाभावाद् ङिदंशे तदन्तविधिः । तदाह अनुदात्तेत इत्यादिना । लस्य स्थान इति । आत्मनेपदग्रहणलभ्यमिदम्, तिङां लादेशत्वनियमात् । 'उपदेशे' किम् ? चुकुटिपति । अत्र 'गाङ्कुटादिभ्यः-' इति सन आतिदेशिकमेव

व्याख्याने एधेवहि एधेमहीत्यादावतिप्रसङ्गो नास्त्येव । न हि तत्र इकारमात्रमादेशो भवति । तेन 'इटोऽत्' इत्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ एवेत्याहुः । तच्चिन्त्यम्, इकारस्य विशेषणत्वे विशेषणेन तदन्तग्रहणादिवर्णान्तस्य लिङोऽत्स्यादित्यर्थप्रसक्त्या उक्तातिप्रसङ्गस्य तदवस्थ-त्वात्, वहीमहीत्यस्यापि स्थानिवत्त्वेन तिङ्त्वात् । महिङो ङकारस्तङ् तिङिति प्रत्याहा-रार्थः । स च समुदायानुबन्धो न त्ववयवानुबन्धो व्याख्यानात् । तेनेषेः कर्मणि आशीर्लिङि एषिषीमहीत्यत्र गुणनिषेधो न, तथा च वृश्चतेः पृच्छतेश्च कर्मणि लिटि च वव्रश्चिमहे पप्रच्छिमहे इत्यत्र 'ग्रहिज्या-' इति संप्रसारणं न । तङानौ । लस्येत्यस्यानुवृत्तेर्लादेश एवानो गृह्यते इत्याशयेनाह शानच्कानचौ चेति । तेन परस्मैपदिभ्योऽपि 'ताच्छील्य-वयोवचन-' इति चानश् भवत्येव, कतीह निघ्नानाः । अनुदात्तङितः । अनुदात्तश्च ङश्च अनुदात्तङौ, तौ इतौ यस्य सोऽनुदात्तङित् । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते । तत्रानुदात्तांशे तदन्तविधेः फलाभावाद् अंशान्तर एव तदन्तग्रहणमित्याशयेनाह अनुदात्तेत इत्यादि । 'उपदेशेऽजनुनासिक-' इत्यतोऽनुवृत्तमुपदेशग्रहणमपि ङिदंश एव संबध्यते नान्यत्र, अव्यभिचारात्तदाह उपदेशे यो ङिदिति । विशेष्यमन्तरेण

प्राये क्रियाफले । ( १-३-७२ ) स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । २१५९ शेषात्कर्तरि परस्मैपदम् । ( १-३-७८ )

---

ङित्त्वम्, नत्वौपदेशिकम् । 'धातोः' किम् ? अदुद्रुवत् । अत्र णिश्रीति चङन्तान्नात्मनेपदम् । ङिदंशे तदन्तविध्यभावे तु बोभूयत इत्यादौ 'सनाद्यन्ताः–' इति धातुसंज्ञकाद् यङन्तादात्मनेपदं न स्यात् । ङित इत्येवोक्तौ यङो ङित्त्वेऽपि तदन्तस्य धातोर्ङित्त्वाभावादात्मनेपदं न स्यात् । **स्वरितञितः** । स्वरितश्च ञ् च स्वरितञौ, तौ इतौ यस्य तस्मादिति बहुव्रीहिः । इच्छब्दः प्रत्येकं सम्बध्यते । तदाह **स्वरितेतो ञितश्चेति** । धातोरित्यनन्तरं लस्य स्थान इति शेषः। कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम् । कर्मण्यण् । तदाह **कर्तृगामिनीति** । एवं च 'होता याज्यया यजति, इत्यादौ यागफलस्य स्वर्गस्य यजमानगामित्वेन होतृगामित्वाभावाद् नात्मनेपदम् । तथा वेतनेन यज्ञदत्तः पचतीत्यत्रापि पाकफलस्य भोजनस्य पक्तृगामित्वाभावान्नात्मनेपदम् । दक्षिणादिलाभस्तु न फलम्, लोकतो वेदतो वा यदुद्देशेन क्रियाप्रवृत्तिः तस्यैवात्र क्रियाफलशब्देन विवक्षितत्वात् । कर्तृगामिफलकक्रियावृत्तेर्धातोरित्यर्थः । आत्मनेपदं तु धात्वर्थफलस्य कर्तृगामित्वं द्योतयतीत्यलम् । **शेषात्कर्तरि** । 'अनुदात्तङित–' इति

---

तदन्तविधिरिह दुर्लभ इत्यत आह **धातोरिति** । **लस्येति** । नन्विहानुवृत्तेरभावादुभयमपि दुर्लभं 'भूवादयः' इति सूत्रान्मण्डूकप्लुत्यानुवृत्तस्य धातव इत्यस्य विभक्तिविपरिणामात्कथंचिद्धातोरिति पदे लब्धेऽपि लस्येत्येतन्न लभ्यत इति चेत् । अत्राहुः—'इको झल्' इत्यत्र सना धातोरिवेहात्मनेपदेन लकारधात्वोराक्षेपो बोध्यः, तिङा लादेशत्वाल्लस्य च धातोर्विधानादिति । उपदेशे इति किम्, चुकुटिषति 'गाङ्कुटादिभ्यः–' इति सन आतिदेशिकं ङित्त्वम् । धातोः किम्, चङङ्भ्यां माभूत्, अदुद्रुवत्, अवोचत् । ननु लावस्थायामेव वृतादिभ्यः 'स्यतासी–' इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात्स्यप्रत्ययात्पूर्वमेव लस्य तिबादिषु सत्सु पक्षे परस्मैपदं पक्षे चात्मनेपदं सिध्यत्येवेति 'वृद्भ्यः स्यसनोः' इति सूत्रे स्यग्रहणं व्यर्थं सत् तेनैव स्यग्रहणेन 'विकरणेभ्यो नियमो बलीयान्' इति ज्ञापितम् । तेनानुदात्तेत्त्वाद्वर्तिष्य इत्येवं नित्यमात्मनेपदे प्राप्ते 'वृद्भ्यः स्यसनोः' इति परस्मैपदमपि पक्षे भवति । तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङङोर्न दोषो विकरणात्प्रागेव परस्मैपदप्रवृत्तेरिति चेत् । सत्यम्, स्यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङङोर्दोषः स्यादेव । अयं च पक्षः 'शदेः शितः' इति सूत्रे भाष्यकैयटयोः स्पष्टः । किं च तदन्तविलाभार्थमपि धातुग्रहणमावश्यकम्, तत्फलं तु 'धातोरेकाच–' इत्यादिना यङि बोभूयते । ऋतेरीयङि ऋतीयते । शेते ह्नुते इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम् । 'नमोवरिवश्चित्रङः–' इति क्यचि चित्रीयते इत्येतत्कथमिति चेत्, अत्राहुः—अवयवेऽचरितार्थो ङकारः क्यजन्तस्य विशेषणं भवति । तथा च समुदायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति । **स्वरितञितः** । **पूर्ववदिच्छब्दः प्रत्येकं संबध्यते** । कर्तारमभिप्रैति

वचनादिसंज्ञानि स्युः । २१६२ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः । ( १—४—१०५ ) तिङ्वाच्यकारकवाचिनि युष्मदि अप्रयुज्याने प्रयुज्यमानेऽपि मध्यमः स्यात् । २१६२ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च । ( १—४—१०६ ) मन्यधातुरुपपदं यस्य धातोस्तस्मिन्प्रकृतिभूते सति

---

प्रथमादिसंज्ञानीति । एकश इत्यस्य विवरणं प्रत्येकमिति 'संख्यैकवचनाच्च वीप्सायाम्' इति शसिति भावः । युष्मदि । उपोच्चारितं पदमुपपदम् । युष्मदि समीपोच्चारिते सतीत्यर्थः । समानमेकमधिकरणं वाच्यं यस्येति विग्रहः । सामानाधिकरण्यं च युष्मदस्तिङः स्थानीभूतलकारेण विवक्षितम् । 'लः परस्मैपदम्' इत्यतस्तदनुवृत्तेः । तथा च फलितमाह तिङ्वाच्यकारकवाचिनि युष्मदीति । स्थानं प्रसङ्गः अस्यास्तीति स्थानी, तस्मिन् प्रसक्ते सतीत्यर्थः। प्रसङ्गश्च तदर्थावगतौ सत्यां वक्त्रा अप्रयोग एव भवति । तथा च स्थानिनीत्यनेन उपपदभूते युष्मदि प्रयोगं विना स्वार्थं बोधयति सतीत्यर्थः पर्यवस्यति, तदाह अप्रयुज्यमान इति । स्थानिनीत्यनुक्तौ युष्मद्युपपदे प्रयुज्यमान एव मध्यमः स्यात् । ततश्च राम पाहीत्यादौ अव्याप्तिः स्यात् । अपिना लब्धमाह प्रयुज्यमानेऽपीति । 'युष्मद्युपपदे स्थानिनि' इत्येवोक्तौ राम त्वं पाहीत्यादौ युष्मत्प्रयोगे मध्यमो न स्यात् । अतोऽपिग्रहणमिति भावः । अत्वं त्वं संपद्यत इत्यत्र तु न मध्यमपुरुषः तत्र युष्मच्छब्दस्य गौणत्वात् । भवानागच्छतीत्यादौ भवच्छब्दयोगे तु न मध्यमपुरुषः, युष्मच्छब्दस्य संबोध्यैकविषयत्वात्, भवच्छब्दस्य तु स्वभावेन संबोध्यासंबोध्यसाधारणत्वादित्यलम् । प्रहासे च । वाक्यद्वयमिदं सूत्रम् । 'प्रहासे च मन्योपपदे' इति प्रथमं वाक्यम् । 'मध्यम' इत्यनुवर्तते । मनधातुः श्यन्विकरण उपपदं यस्येति बहुव्रीहिः । मन्यपदश्रवणबलाद् धाताविति विशेष्य लभ्यते, तदाह मन्यधातुरित्यादिना । तस्मिन् प्रकृतिभूते सतीति । तस्माद्धातोर्लस्य स्थाने इत्यर्थः ।

---

प्रवृत्त्या आन्नीत्यादिप्रयोगोऽपि साधुः स्यादिति भावः । प्रत्येकमिति । यत्तु प्राचा एकैकश इत्युक्तं तदयुक्तम् । शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात्, येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शसिति सिद्धान्तात् । तथा 'सुपः' इति सूत्रेऽप्येकैकश इति प्राचोक्तमेव । एतच्च मनोरमाग्रन्थानुरोधेनोक्तम् । अन्ये तु एकैकमेवैकैकशः स्वार्थे शस्, न त्वत्र वीप्सायाम् । न च स्वार्थे यः शस् स आकरग्रन्थान्नावगम्यत इति वाच्यम्, एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वेति भाष्यात् शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यानाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात् ततश्चैकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवायुक्तमित्याहुः । युष्मदि । समानाधिकरण इत्यस्य व्याख्यानं तिङ्वाच्यकारकवाचिनीति भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् स्थानिनीत्यस्य व्याख्यानमप्रयुज्यमान इति । समानाधिकरणे किम्, त्वां पश्यति, त्वया क्रियते, तुभ्यं ददाति प्रहासे। मन्योपपद इति सप्तम्यन्तस्यानुगुणत्वेन व्याचष्टे तस्मिन्प्रकृतिभूते सतीति । तस्माद्धातोर्लस्य स्थान

मध्यमः स्यात्परिहासे गम्यमाने । मन्यतेस्तूत्तमः स्यात्स चैकार्थस्य वाचकः स्यात् । २११६ अस्मद्युत्तमः । ( १—४—१०७ ) तथाभूतेऽस्मद्युत्तमः स्यात् । २१६५ शेषे प्रथमः । ( १—४—१०८ ) मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू १ सत्तायाम् । कर्तृविवक्षायां भू ति इति स्थिते । २१६६ तिङ्शित्सार्वधातुकम् । ( ३—४—११३ ) तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः । २१६७ कर्तरि शप् । ( ३—१—६८ ) कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् । शपावितौ । २१६८ सार्वधातुकार्धधातुकयोः । ( ७—३—८४ )

मध्यमः स्यादिति । 'अस्मद्युपपदे—' इति शेषः । अस्मद्युत्तम इत्युत्तरसूत्रात्तदनुवृत्तेः । एवं च उत्तमपुरुषापवादोऽयं मध्यमविधिः । 'मन्यतेरुत्तम एकवच्च' इति द्वितीयं वाक्यम् तद्व्याचष्टे मन्यतेस्तूत्तमः स्यादिति । 'युष्मद्युपपदे' इति शेषः, पूर्वसूत्रात्तदनुवृत्तेः । स चेति । स मन्यतेरुत्तमपुरुषो द्वित्वबहुत्वयोरपि एकवचनं लभते इत्यर्थः । मध्यमोत्तमयोर्व्यत्यासार्थमिदम् । एतत्सर्वमनुपदमेवोदाहरणे स्पष्टीभविष्यति । अस्मद्युत्तमः तथाभूत इति । तिङ्वाच्यकारकवाचिनि प्रयुज्यमाने अप्रयुज्यमाने चेत्यर्थः । शेषे । उक्तान्मध्यमोत्तमविषयादन्यः शेषः, तदाह मध्यमोत्तमयोरविषय इति । त्वम् अहं च पचाव इत्यत्र तु परत्वादुत्तमपुरुष एव । न तु मध्यमः । देवदत्तस्त्वं च पचथ इन्यत्रापि न प्रथमपुरुषः । युष्मदस्सत्त्वेन शेषत्वाभावादित्यलम् । भू सत्तायामिति । वर्तत इति शेषः । भ्वादिगणे प्रथमो धातुरयम् । तत्र भू इत्येव गणे पाठः । अर्थनिर्देशस्त्वाधुनिक इति वक्ष्यते । यद्यपि सत्ता जातिः, न क्रिया: तथापि आत्मधारणं सत्तेत्युच्यते । स्वरूपेणावस्थानमिति यावत् । कर्तृविवक्षायामिति । वर्तमानसत्तावृत्तेर्भूधातोः कर्तरि लटि आत्मनेपदनिमित्तहीनतया परस्मैपदे तिबादिनवके तत्रापि युष्मदस्मत्सामानाधिकरण्याभावात् प्रथमपुरुषत्रिके तत्रापि कर्तुरेकत्वविवक्षायां तिपि सति, भू ति इति स्थिते प्रक्रिया वक्ष्यत इत्यर्थः । तत्र सार्वधातुककार्यं वक्ष्यन् सार्वधातुकसंज्ञामाह तिङ्शित् । 'धातोः' इत्यधिकृतम्, तदाह धात्वधिकारोक्ता इति । तेन हरीनित्यत्र शसः सार्वधातुकत्वं न । अन्यथा 'तिङ्शित्सार्वधातुकम्' इति शसः सार्वधातुकत्वात् सार्वधातुकमपिदिति ङित्त्वे 'घ्ङिति' इति गुणः स्यात् । कर्तरि शप् । 'सार्वधातुके यक्' इत्यस्मात् सार्वधातुक इत्यनुवर्तते । 'धातोरेकाचो हलादेः—' इत्यस्माद्धातोरिति । तदाह कर्त्रर्थे इत्यादिना । तिङि परे धातोर्विहितानां प्रत्ययानां शबादीनां विकरणसंज्ञा प्राचीनाचार्यसिद्धा । शपाविताविति । शकारपकारौ 'लशक्वतद्धिते' इति 'हलन्त्यम्'

इत्यर्थः । तथाभूत इति । तिङ्वाच्यकारकवाचिनि प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थः । तिङ्शित् । धात्वधिकारोक्ता इति किम्, हरीन् । शसः 'सार्वधातुकमपित्' इति ङित्त्वे 'घ्ङिति' इति गुणः स्यात्, लिहः श्रिय इत्यादिशसन्तेषु 'सार्वधातुके यक्' इति यक् च स्यात् । केचित्तु वारिणीत्यत्र मुमि कृतेऽपि लघूपधगुणः स्यादित्याहुः । तन्न, क्ङितीति निषेधात्, इगन्तत्वप्रयुक्तस्य नुमो गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च । कर्तरि शप् । 'सार्वधातुके यक्' इत्यतः सार्वधातुक इत्यनुवर्तते, 'धातो-

अनयोः परयोरिगन्तस्याङ्गस्य गुणः स्यात् । अवादेशः भवति । भवतः ।

२१६९ झोऽन्तः । ( ७—१—३ ) प्रत्ययावयवस्य झस्यान्तादेशः स्यात् । 'अतो

---

इति चेत्संज्ञकावित्यर्थः । ततश्च शपि शकारपकारयोः लोप अकारमात्रं शिष्यत इत्यर्थः । भू अ ति इति स्थिते सार्वधातुकार्ध । 'इको गुणवृद्धी' इति परिभाषया 'इक' इत्युपस्थिते 'अङ्गस्य' इत्यधिकृतं विशेष्यते । तदन्तविधिः । 'मिदेर्गुणः' इत्यस्माद् 'गुण' इत्यनुवर्तते, तदाह अनयोरित्यादिना । तथा च ऊकारस्य गुण ओकारः । अवादेश इति । ओकारस्येति शेषः । तथा च परिनिष्ठितं रूपमाह भवतीति । भवत इति । कर्तृद्वित्वविवक्षायां भूधातोर्लटः तसादेशे शपि गुणे अवादेशे सकारस्य रुत्वविसर्गाविति भावः । कर्तृबहुत्वाविवक्षायां भूधातोर्लटो झि इत्यादेशे शपि गुणे अवादेशे च कृते झोऽन्तः । झः अन्तः इतिच्छेदः । झ इति षष्ठ्यन्तम् । आदेशे तकाराद् अकार उच्चारणार्थः । 'आयनेयी—' इति सूत्रात् प्रत्ययग्रहणमनुवर्तते, न त्वादिग्रहणमपि, अस्वरितत्वात् । अनुवृत्तं च प्रत्ययग्रहणमवयवषष्ठ्यन्तमाश्रीयते, तदाह प्रत्ययावयवस्येति । झस्य । झकारस्येत्यर्थः । अन्तादेशः स्यादिति । अन्त इत्ययमादेशः स्यादित्यर्थः । 'प्रत्ययावयवस्य' इति किम् ? उज्झिता । अत्र धात्ववयवस्य झकारस्य न भवति । आदिग्रहणानुवृत्तौ तु शयान्ते इति न सिध्यति । अन्तादेशात्प्रागेवान्तरङ्गत्वाल्लेटोऽडाटावित्याटि कृते झकारस्य प्रत्ययादित्वाभावाद् इति भाष्ये स्पष्टम् । एवं च भव झि इत्यत्र झकारस्य अन्त् इत्यादेशे, भव अन्ति इति स्थिते, 'अतो गुणे' इति द्वयोरकारयोः सवर्णदीर्घापवादे पररूपे कृते, भवन्तीति रूपमित्यर्थः । अन्तादेशे प्रथमाकारोच्चारणं तु लुग्विकरणे द्विषन्तीत्यादौ अकारः

---

रेकाचः—' इति सूत्राद्धातोरिति च, तदाह कर्त्रर्थे इत्यादि झोऽन्तः । तकारदकार उच्चारणार्थः 'आयनेयीनी—' इति सूत्रात्प्रत्ययग्रहणमनुवर्तते न त्वादिग्रहणम्, एकदेशे स्वरितत्वप्रतिज्ञानात् । तस्याप्यनुवृत्तौ तु शयान्ते इति न सिध्येत् । शीङो 'लेटोऽडाटौ' इत्यन्तरङ्गत्वादन्तादेशात्प्रागाटि कृते झस्यादित्वाभावात, तदेतदाह प्रत्ययावयवस्येति । प्राचा तु प्रत्ययादेर्झस्येत्युक्तं तदनेन प्रत्युक्तं । इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तम्, तदापाततः, अन्यत्राप्रवृत्तस्यादिग्रहणस्य निवृत्तत्वयोगात्, निवृत्तमित्यस्याननुवृत्तमित्यर्थे इति वा कथंचिद्व्याख्येयम् । यत्तु प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते—अडागमे कृते तत्सहितोऽपि प्रत्ययोऽस्तु नाम, न तु तत्सहित एव प्रत्यय इति नियमोऽस्तीति । तन्न, अवयवविनिर्मुक्तस्यावयवित्वायोगात् । अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः । ननु अङ्गात्परस्य प्रत्ययस्येटो यासुडन्तं तु नाङ्गमिति चेत् । न, आगमविनिर्मुक्तस्यापि प्रत्ययत्वमिति वदतां मते भवामि भविष्यामीत्यादौ विकरणान्तस्येव तदादिग्रहणबलेन यासुडन्तस्याप्यङ्गताया दुर्वारत्वात् । किं च लविपीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट् तस्यागमेनादित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशङ्क्य प्रत्ययस्वरे कर्तव्ये आगमा अविद्यमानवदित्यतिदेशः 'आद्युदात्तश्च' इति सूत्रे भाष्यादौ स्वीकृतः । न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते, न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्तः स्यात्, तद्वारणाय

गुणे' ( सू १९१ )। भवति। भवसि भवथः भवथ। २१७० अतो दीर्घो यञि। (७-३-१०१) अदन्तस्याङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके परे। भवामि भवावः भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः। एहि मन्ये ओदनं भोक्ष्यस इति भुक्तः सोऽतिथिभिः। एतमेत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे इत्यादि। भोक्ष्ये, भोक्ष्यावहे भोक्ष्यामहे। मन्यसे, मन्येथे, मन्यध्वे इत्यादिरर्थः। 'युष्मद्युपपदे-' ( सू २१६२ ) इत्याद्यनुवर्तते। तेनेह न—

श्रवणार्थम्। भवसीति। मध्यमपुरुषैकवचने सिपि शपि गुणे अवादेशे रूपम्। भवथ इति। मध्यमपुरुषद्विवचने थसि शपि गुणे अवादेशे रुत्वविसर्गयोश्च रूपम्। 'न विभक्तौ तुस्माः' इति सस्य नेत्वम्। भवथेति। मध्यमपुरुषबहुवचने थादेशे शपि गुणे अवादेशे रूपम्। उत्तमपुरुषैकवचनेऽपि शपि गुणे अवादेशे भव मि इति स्थिते अतो दीर्घो यञि। 'अङ्गस्य' इत्यधिकृतम् अता विशेष्यते। तदन्तविधिः। 'तुरुस्तुशम्यम-' इत्यतः सार्वधातुके इत्यनुवृत्तं यञा विशेष्यते। तदादिविधिः। तदाह अदन्तस्येत्यादिना। भवामीति। न च भूधातोर्विहितलादेशं प्रति भूधातुरेवाङ्गम्, न तु भवेति विकरणान्तमिति वाच्यम्। 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इत्यत्र तदादिग्रहणेन विकरणविशिष्टस्यापि अङ्गत्वात् भवावः भवाम इति। लस्य वसि मसि च शपि गुणे अवादेशे अतो दीर्घे रुत्वे विसर्गे च रूपे। न विभक्ताविति सस्य नेत्वम्। अथ प्रथममध्यमोत्तमपुरुषव्यवस्थामुक्तां स्मारयितुमाह स भवतीत्यादि। अथ 'प्रहासे च-' इति सूत्रस्योदाहरति एहीति। सर्वेषु भुक्तवत्सु भोक्तुमागतं जामातरं प्रति परिहासाय प्रवृत्तमिदं वाक्यम्। भो जामातः, एहि आगच्छ, ओदनं भोक्ष्ये इति त्वं मन्यसे, नैतद्युक्तमित्यर्थः। कुत इत्यत आह भुक्तः सोऽतिथिभिरिति। स ओदनः अतिथिभिर्भक्षित इत्यर्थः। अत्र भुजेरुत्तमपुरुषे प्राप्ते

प्रत्ययस्वरे कर्तव्य इत्यादिग्रन्थः स्वीकर्तव्य एवेति नास्त्येवाकरग्रन्थविरोध इति वाच्यम्, 'आगमा अनुदात्ताः' इति विशेषवचनेनागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राप्रवृत्तेरिति दिक्। झस्येति। झकारादकार उच्चारणार्थः। अतो गुण इति। 'अतो दीर्घो यञि' इति तु न प्रवर्तते, स्यान्यलादेशविधौ स्थानिवत्त्वनिषेधादिति भावः। अतो दीर्घो। 'तुरुस्तुशम्यमः-' इति सूत्रात्सार्वधातुक इत्यनुवर्तते सार्वधातुके किम्, केशवः, अङ्गना। अत आत् इति वक्तव्ये दीर्घग्रहणं दीर्घ एव यथा स्यादित्येवमर्थम्। अन्यथाऽपाक्षीरोदनं देवदत्त, ननु पचामि भोरित्यत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यात्। केचित्तु—अत आदिति सुवचम्, तपरकरणसामर्थ्याद् विकारानिवृत्तिर्भवेदिति प्लुतस्यापि प्रसङ्गात्, उदात्तस्थान उदात्त आकारः अनुदात्तस्थानेऽनुदात्त आकार इत्यादि तु 'स्थानेऽन्तरतमः' इत्यनेनैव सिद्धम्। अतएव 'वृषाकप्यग्नि-' इति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयति, अग्न्यादिषु तु 'स्थानेऽन्तरतमः' इत्येव सिद्धमिति मनोरमादावुक्तम्। ततश्च प्रयोजनाभावात्तपरकरणमनणि विध्यर्थमिति नाशङ्कनीयमेव। यदि तु 'हल्ङ्याब्भ्यः---' इत्यत्र आ

एतु भवान्मन्यते ओदनं भोक्ष्य इति भुक्तः सोऽतिथिभिः । 'प्रहासे' किम्—यथार्थकथने मा भूत्। एहि मन्यसे ओदनं भोक्ष्य इति भुक्तः सोऽतिथिभिः । २१७१ परोक्षे लिट् । ( ३—२—११५ ) भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः । २१७२ लिट् च । ( ३—४—११५ ) लिडादेशस्तिङार्धधातुकसंज्ञ एव स्यान्न तु सार्वधातुकसंज्ञः । शबादयो न । २१७३

मध्यमः पुरुषः । मन्यतेस्तु मध्यमपुरुषे प्राप्ते उत्तमः पुरुषः । एतं एत वेति । हे जामातरौ आगच्छतम् ओदनं भोक्ष्यावह इति मन्येथे इति, भो जामातरः ओदनं भोक्ष्यामह इति मन्यध्वे इति चार्थः । अत्रोभयत्रापि भुजेरुत्तमे प्राप्ते मध्यमः । मन्यतेस्तु मध्यमे प्राप्ते उत्तमः । द्वित्वबहुत्वयोरेकवचनं । इत्यादीति । एहि एतं एत वा मन्ये जलं पास्यसि पास्यथः इत्यादिसंग्रहः । मन्ये इत्युत्तमपुरुषैकवचनान्तं व्याचष्टे मन्यस इत्यादिना । अनुवर्तत इति । 'प्रहासे च' इति सूत्र इति शेषः । एतु भवानिति । युष्मद्भवतोः पर्यायत्वाभावस्यानुपदमेवोक्तत्वादिति भावः । इति लट् प्रक्रिया । परोक्षे लिट् । 'अनद्यतने लङ्' इत्यस्मादनद्यतन इत्यनुवर्तते । 'भूते' इत्यधिकृतम् । परोक्षत्वं धात्वर्थविशेषणम् । तदाह भूतानद्यतनेत्यादिना । अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन सहितो दिवसः अद्यतन इति लुङ्सूत्रभाष्ये कैयटे स्थितम् । परोक्षत्वं तु वर्षशतवृत्तत्वमित्येके । वर्षसहस्रवृत्तत्वमित्यपरे । द्व्यहवृत्तत्वं त्र्यहवृत्तत्वं चेत्यन्ये । कुड्यकटाद्यन्तरितत्वमितीतरे । एते पक्षा भाष्ये स्थिताः । तत्र प्रयोक्तुरिन्द्रियागोचरत्वं परोक्षत्वमित्येव सर्वसम्मतमित्यलम् । लस्य तिबादय इति । तिबादिनवकमित्यर्थः । लिट् च । लिडिति लुप्तस्थानषष्ठ्यन्तम् । 'तिङ्शित्सार्वधातुकम्' इत्यस्मात् तिङित्यनुवर्तते । 'आर्धधातुकं शेषः' इत्यस्मादार्धधातुकमिति । तदाह । लिडादेशस्तिङिति । एकसंज्ञाधिकारबहि-

---

आविति वदत आ इत्यत्र आ आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः 'प्रहासे च–' इति सूत्रस्योदाहरणमाह एहि मन्य इति । ओदनं भोक्ष्य इति त्वं मन्यस इत्यर्थः । एतं एत वेति । एतं मन्ये ओदनं भोक्ष्येथे, एत मन्ये ओदनं भोक्ष्यध्वे इत्यन्वयः । भोक्ष्यावहे इति युवां मन्येथे, भोक्ष्यामह इति यूयं मन्यध्वे इति क्रमेणार्थः । परोक्षे लिट् । यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैव । उक्तं हि भाष्ये 'क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति, तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यमिह विवक्षितम्, तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेऽपि लिड् भवत्येव, अयं पपाच त्वं पेचिथ । ननु क्रियाशब्दावाच्यधिश्रयणाधः श्रयणादिव्यापाराणां युगपत्प्रत्यक्षाविषयत्वेऽपि क्रमशः प्रत्यक्षविषयत्वमस्ति, यत्र तु क्रमशोऽपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः । ततश्च लिङुत्तमपुरुषो दुर्लभ इति चेत् । अत्राहुः—स्वव्यापारस्यापि वर्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसंधाने ततः कार्येणानुमितौ भवत्येव—'बहु जगद पुरस्तात्तस्य मत्ता किलाहम्' इतिवदिति । लिट च । आर्धधातुकसंज्ञ एवेति । 'लङः शाकटायनस्य—'

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः । ( ३—४—८२ ) लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते । २१७४ भुवो वुग्लुङ्लिटोः । ( ६—४—८८ ) भुवो वुगागमः स्यात् लुङ्लिटोरचि । नित्यत्वाद्

---

भूतत्वात् सार्वधातुकसंज्ञाया अपि समावेशे प्राप्ते आह आर्धधातुकसंज्ञ एवेति । 'लङ्शाकटायनस्यैव' इति सूत्रादेवकारानुवृत्तेरिति भावः । तेनेति। सार्वधातुकत्वाभावेन तन्निमित्ताः शप्श्यन्नादयो न भवन्तीत्यर्थः । परस्मैपदानाम् । 'लिटस्तझयोः–' इत्यस्माद् लिट इत्यनुवृत्तिमभिप्रेत्याह लिटस्तिबादीनामिति । णलादय इति । णल्, अतुस्, उस्, थल्, अथुस् , अ, णल्, व, म, इत्येते नव यथासंख्यं स्युरित्यर्थः । तत्र तिपो णल् सर्वादेशः । न च णकारलकारयोः 'चुटू' इति 'हलन्त्यम्' इति च इत्संज्ञकत्वाल्लोपे कथमनेकाल्त्वमिति वाच्यम् सर्वादेशत्वात्प्राग् णलः प्रत्ययत्वाभावेन 'चुटू' इत्यस्याप्रवृत्तेः । णित्त्वं जुहावेत्यादौ वृद्ध्यर्थम् । लित्त्वं तु लित्स्वरार्थम् । ननु मध्यमपुरुषबहुवचनथस्य विधीयमानः अकारः 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात् । अकारस्य अकारविधिस्तु यथासंख्यापादनार्थ इति चेत्, सत्यम् । द्वयोरकारयोः पररूपेण अ इति सूत्रे निर्देशादनेकाल्त्वात् सर्वादेशत्वमिति भाष्ये स्पष्टम् । न च अतुसादीनामादेशत्वात् पूर्वं विभक्तित्वाभावेन 'न विभक्तौ–' इति निषेधाभावात् सकारस्येत्त्वं दुर्वारमिति वाच्यम्, सकारादुपरि सकारान्तरस्य संयोगान्तलोपेन लुप्ततया श्रूयमाणसकारस्योपदेशेऽन्त्यत्वाभावादित्यलम् । भुवोवुक् । अचीति । 'अचि श्नुधातु–' इत्यतस्तदनुवृत्तेरिति भावः । 'अचि' इति किम् ? अभूत् । ननु णलि परत्वाद् वुकं बाधित्वा 'अचो ञ्णिति' इति वृद्धिः स्यात् । बभूविथेत्यत्र तु 'सार्वधातुकार्धधातुकयोः' इति गुणः स्यादित्यत आह नित्यत्वादिति । कृतयोरपि गुणवृद्ध्योरेकदेशविकृतन्यायात् वुक् प्रवर्तते । अकृतयोरपि प्रवर्तते । ततश्च

---

इति सूत्रादेवकारोऽनुवर्तत इति भावः । परस्मैपदानाम् । अत्र थशब्दस्याकारो विधीयमानोऽन्त्यस्य प्राप्नोति । न चाकारस्याकारविधौ निरर्थकत्वमिति वाच्यम्, यथासंख्यसंपादनेन कृतार्थत्वात् । अत्राहुः—धातोरित्यधिकाराद् 'आदेः परस्य' इति व्यञ्जनमात्रस्य कृते, द्वयोः 'अतो गुणे' इति पररूपम् । यद्वा द्वयोरकारयोः पररूपेण सूत्रे निर्देशस्तथा चानेकाल्त्वात्सर्वादेशे सिद्धमिष्टमिति । ननु सुबन्तानामेव द्वन्द्वस्तत्र त्वकारद्वयकल्पनायां सवर्णदीर्घ एव स्यादिति चेत् । मैवम्, आदेशानां स्थान्यर्थेनैवार्थवत्त्वात् थशब्दस्य विधीयमानमकारद्वयं प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेन 'अतो गुणे' इति पररूपस्यैव प्रवृत्तेः । भुवो वुक् । 'अचि श्नुधातु–' इति सूत्रादचीत्यनुवर्तते तदाह लुङ्लिटोरचीति । अचीति किम्, अभूत्, अभूः इत्यत्र वुकि सति 'लोपो व्योः—' इति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात् । ननु हल्ङ्यादिलोपादन्तरङ्गत्वाद् 'लोपो व्योः–' इति लोप एव भविष्यति । तथा च भव्यतेर्यङ्लुगन्ताल्लङि तिप्सिपोः अबाभव् अबाभव् इत्यत्र व्योर्लोप एव माधवादिभिः स्वीकृतः । एवं चाज्ग्रहणम् 'ऊदुपधाया–' इत्युत्तरार्थमनुवर्तमानमिहाप्युपरञ्जकतया वृत्तिकारादिभिर्योजितम्, न त्वावश्यकतयेत्येव निष्कर्ष उचित इति चेत् । अत्राहुः—

वुग्गुणवृद्धी बाधते। २१७५ एकाचो द्वे प्रथमस्य। ( ६—१—१ ) २१७६ अजादेर्द्वितीयस्य। ( ६—१—२ ) इत्यधिकृत्य । २१७७ लिटिधातोरनभ्यासस्य। ( ६—१—८ ) लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः, आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते। २१७८

---

'कृताकृतप्रसङ्गी यो विधिः स नित्यः' इति न्यायेन वुक् नित्यः सन्, गुणवृद्धी बाधत इत्यर्थः। वुकि ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्तावयवः। भूव् अ इति स्थिते। एकाचः। अजादेः। इत्यधिकृत्येति। षष्ठाध्यायारम्भे द्वे इमे सूत्रे। ते च न विधायके, अतिप्रसङ्गात्। किन्तु 'ष्यङः सम्प्रसारणम्' इत्यतः प्राग् अनुवर्तेते एवेति भावः। लिटि धातोः। 'एकाचो द्वे प्रथमस्य' इत्यधिकृतम्। धातोरित्यवयवषष्ठी तदाह धात्ववयवस्येति। एकाच इति प्रथमस्येति च धात्ववयवस्य विशेषणम्। एकः अच् यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। तथा च लिटि परे अभ्यासभिन्नस्यैकाच्कस्य प्रथमस्य धात्ववयवस्य द्वे उच्चारणे स्त इत्यर्थः। एकाच इत्यत्र कर्मधारयाश्रयणे तु पपाचेत्यादि न सिध्येदिति भाष्ये स्पष्टम्। 'अजादेर्द्वितीयस्य' इत्यप्यधिकृतम्। तत्राच्चासावादिश्च अजादिः, तस्मादिति कर्मधारयात् पञ्चमी, तदाह आदिभूतादचः परस्य तु द्वितीयस्येति। एकाच इति शेषः। अजादिधात्ववयवस्य एकाचश्चेद् द्वित्वम्, तर्हि द्वितीयस्यैवैकाचो द्वित्वम्, नतु प्रथमस्येति यावत्। अत्र द्वे इत्यनन्तरमुच्चारणे इत्यध्याहृत्यैकाचः प्रथमस्येति कृद्योगलक्षणषष्ठीं चाश्रित्य द्विः प्रयोग एवात्र विधीयते। न स्थानषष्ठीमाश्रित्यादेशपक्ष इति प्रकृतसूत्रभाष्ये प्रपञ्चितम्। 'आदेशप्रत्यययोः' इति सूत्रभाष्येऽपि द्विः प्रयोगपक्ष एवोक्तः। तदिह विस्तरभयान्न लिखितम्। पपाच इयायेत्यादौ प्रथमत्वमेकाच्कत्वं च व्यपदेशिवत्त्वेन बोध्यम्। अजादेरिति बहुव्रीह्याश्रयणे तु इन्द्रमात्मन इच्छति इन्द्रीयति इन्द्रीयितुमिच्छति इन्दिद्रीयिषतीत्यादौ 'न न्द्राः संयोगादयः' इति दकारस्य द्वित्वनिषेधश्च स्यात्, तत्राजादेरित्यनुवृत्तेः। 'धातोः' इति किम्? तदभावे हि लिटि

---

'भुवो वुक्–' इत्यस्याङ्गत्वाद्बहृपेक्षत्वेन हृल्ङ्यादिलोपस्येव वुकोऽपि बहिरङ्गतया असिद्धत्वे सति वलि लोपस्य प्राप्तेरेवाभावादज्ग्रहणमिहार्थमपीत्येव युक्तमिति। अयं च शङ्काग्रन्थः समाधानग्रन्थश्च मनोरमायां स्थितः। अत्र नव्याः—मव्यतेर्यङ्लुगन्त एव नास्ति अमामदित्यादि रूपं तु दूरादपास्तमेव, यकारपकारान्तानामूठ्भाविनां यङ्लुग् नास्तीति 'छ्वः शूड–' इति सूत्रे भाष्ये ध्वनितम्, कैयटेन च स्पष्टीकृतम्। इदं च छ्वोरिति यत्रोठ् तद्विषयकं 'ज्वरत्वर–' इत्यूठ्भाविनोः स्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यं माधवादिसंमतं च। 'मव्य बन्धने' अयं यान्त ऊठ्भावीति मूले वक्ष्यमाणत्वात्। तथा च तद्ग्रन्थेन सहात्रत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः। यदि तु मवतेर्यङ्लुगन्तादिति मनोरमायां पठ्येत तदा तत्र पूर्वापरग्रन्थविरोधो नास्तीति दिक्। अजादेरिति। यदि बहुव्रीहेः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति, इन्द्रीयितुमिच्छति इन्दिद्रीयिषति इत्यत्र दकारस्य 'न न्द्राः–' इति द्वित्वनिषेधः स्यात्, किंतु अच्चासावादिश्चाजादिस्तस्मादिति कर्मधारयादेषा पञ्चमी, तदाह आदिभूतादचः

पूर्वोऽभ्यासः । ( ६—१—४ ) अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् । २१७९ हलादिः शेषः । ( ७—४—६० ) अभ्यासस्यादिर्हल् शिष्यतेऽन्ये हलो लुप्यन्ते । इति वलोपः । २१८० ह्रस्वः । ( ७—४—५९ ) अभ्यासस्याचो

परे यः प्रथम एकाच् तस्य द्वे इत्यर्थः स्यात् । एवं सति पपाचेत्यादावेव स्यात् । न तु जजागारेत्यादाविति भाष्ये स्पष्टम् । न च पपाचेत्यादौ 'लिटि धातोः—' इति द्वित्वे कृते लक्ष्ये लक्षणस्येति न्यायेन पुनर्द्वित्वस्याप्रसक्तेरनभ्यासग्रहणं व्यर्थमिति वाच्यम्, यङन्तात् 'सन्यङोः' इति यङ्निमित्तकद्वित्वविशिष्टात् सनि सन्निमित्तकद्वित्वनिवृत्तये सन्नन्तात् 'सन्यङोः' इति कृतद्वित्वाण्णिचि लुङि चङि कृते 'चङि' इति द्वित्वनिवृत्तये चानभ्यासग्रहणस्यावश्यकत्वात् । भाष्ये तु 'कृष्णो नोनाव वृषभो यदीदम्' इत्यादौ नुवातोर्यङन्तात् 'सन्यङोः' इति कृतद्वित्वाद् नोनूय इत्यस्माद् लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' इति मन्त्रपर्युदासादामभावे 'यस्य हलः' इति एकारलोपे अतो लोपे तिपो णलि वृद्धावावादेशे नोनावेत्यत्र 'लिटि धातोः—' इति द्वित्वनिवृत्तये अनभ्यासग्रहणमित्युक्त्वा 'अनभ्यासग्रहणमनर्थकं छन्दसि वा वचनात्' इत्युक्तम् । यङन्तात् सनि सन्नन्ताण्णिचि चङि च प्रयोगो लोके नास्त्येवेति तदाशय इति शब्देन्दुशेखरे स्पष्टम् । प्रकृते च भूव् अ इत्यत्र चत्वार एकाचः । तत्र भू इति प्रथमः, ऊव् इति द्वितीयः, ऊ इति व्यपदेशिवद्भावेन तृतीय एकाच्, भूव् इति समुदायस्तु चतुर्थः । तत्र समुदाये द्विरुच्यमाने सर्वे अवयवा द्विरुच्यन्त इति भूव् इति समुदायस्यैव द्विर्वचनमिति भाष्ये स्पष्टम् । तदाह भूव् भूव् अ इति स्थित इति । अत्र भूव् इत्यस्य एकाचो धात्ववयवत्वं प्रथमत्वं च व्यपदेशिवत्त्वाद्बोध्यम् । पूर्वः । अत्रेति । 'एकाचो द्वे प्रथमस्य' इति षाष्ठद्वित्वप्रकरण इत्यर्थः । तेन 'सर्वस्य द्वे' इत्यादिविहितस्य द्वित्वस्य न संग्रहः । कस्य पूर्व इत्याकाङ्क्षायां द्वे इत्यनुवृत्तं षष्ठ्या विपरिणतं संबध्यते, तदाह ये द्वे विहिते तयोरिति । हलादिः शेषः । 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते । शिष्यत इति शेषः, कर्मणि घञ् । शिषधातुरितरनिवृत्तिपूर्वकावस्थितौ, तदाह अभ्यासस्येत्यादिना । इति वलोप इति । भूव् भूव् इत्यत्र अभ्यासवकारस्य लोप इत्यर्थः । भू भूव् अ इति स्थिते ह्रस्वः । 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते । ह्रस्वश्रवणाद् 'अचश्च' इति परिभाषया अच

परस्य त्विति । भूवभूव इति । यद्यप्यत्र धात्ववयवत्वं प्राथम्यं च न संगच्छते, तथापि व्यपदेशिवद्भावेन तद्बोध्यम् । नन्विह चत्वार एकाचस्तत्रावयवाश्रयः, तत्र भूऊ ऊव् इति भूविति समुदायश्चतुर्थः, तथा चानियमेन यस्य कस्यचिद् द्वित्वं स्यात् । मैवम्, समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात्तस्मिन्हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव वृक्षचलनेन सर्वावयवचलनवत् । अत्रेति । एकाचो द्वे इति प्रकरणे । हलादिः । अभ्यासस्येति जातिपरो निर्देशस्तेन आटतु आततुरित्यादौ तकारादिनिवृत्तिः सिध्यति, क्वचिदभ्यासे आदेर्हलः सत्त्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् । भवतेरः । 'अत्र लोपोऽभ्यासस्य' इति सूत्रादभ्यासपदमनुवर्तते । अत्र प्राचोक्तम्—भवतेरिति कर्तृनिर्देशाद् भावकर्मणोर्नात्वमिति, व्याख्यातं च तत्पौत्रेण

ह्रस्वः स्यात् । २१८१ भवतेरः । ( ७—४—७३ ) भवतेरभ्यासोकारस्य अः स्याल्लिटि । २१८२ अभ्यासे चर्च । ( ८—४—५४ ) अभ्यासे झलां चरः

---

इत्युपस्थितम्, तदाह अभ्यासस्याच इति । भुभूव् अ इति स्थितम् । यद्यपि 'भवतेरः' इति वक्ष्यमाणाकारविधिनैव सिद्धमिदम्, तथापि लुलावेत्याद्यर्थमावश्यकमिदम् अत्रैव न्याय्यत्वादुपन्यस्तम् । भवतेरः । 'भवतेः' 'अः' इति छेदः । भवतेरिति श्तिपा निर्देशः । भूधातोरित्यर्थः । 'इक्श्तिपौ धातुनिर्देशे' इत्युक्तेः । 'अत्र लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'व्यथो लिटि' इत्यस्माद् लिटीति । भूधातोरभ्यासस्य भवन्नकारः 'अलोऽन्त्यस्य' इत्यन्त्यस्योकारस्य भवति, तदाह अभ्यासोकारस्येति । नानर्थकेऽलोन्त्यविधिः—' इति तु नेह प्रवर्तते । अनभ्यासविकार इत्युक्तेः । भ भूव् अ इति स्थिते—अभ्यासे चर्च । 'झलां जश् झशि' इत्यस्माद् झलामित्यनुवर्तते । चकारेण जश् समुच्चीयते, तदाह अभ्यासे झलामित्यादिना । झलश्चतुर्विंशतिः । तत्र शषसाः शरः । तेषामभ्यासे लोपो वक्ष्यते 'शर्पूर्वाः खयः' इति । हकारस्य त्वभ्यासे 'कुहोश्चुः' इति चुत्वं वक्ष्यते । एवं च झल्षु झयो

---

कर्त्रर्थयोः श्तिप्शपोर्निर्देशादित्यर्थं इति । तन्न, धातुनिर्देशमात्रे श्तिपो विधानात्, शपश्च विकरणत्वेनानर्थकत्वात् कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादिवेह प्रवृत्तेः, अन्यथा त्वदुक्तरीत्या 'उपसर्गात्सुनोतिसुवति—' इत्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात्, अपसिद्धान्तश्चायमिति स्पष्टमेवाकरदृशाम् । प्रयुञ्जते च कर्मण्यप्यकारं कवयः 'तस्यातपत्रं बिभरांबभूवे' 'विभावरीभिर्बिभरांबभूविरे' इत्यादि । एतच्च प्रक्रियाप्रसादग्रन्थदूषणं मनोरमायां स्थितम् । अत्र नव्याः—श्तिपः शित्त्वसामर्थ्यादिवेह शपः प्रवृत्तिरिति यदुक्तं तन्न । पिबतिः ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । एवं च 'उपसर्गात्सुनोतिसुवति—''भवतेरः''ध्यायतेः संप्रसारणं च' इत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादय इत्येव व्याख्येयम् । अन्यथा 'इक्श्तिपौ—' इति सूत्रे वक्ष्यमाणस्वग्रन्थेन सह विरोधापत्तेः । केचित्तु—शित्त्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ 'आर्धधातुकस्येड् वलादेः' इतीडागमनिवृत्त्या, ब्रवीतिरित्यत्र 'ब्रुव ईट्' इतीडागमप्रवृत्त्या च शित्त्वं चरितार्थमिति व्याचख्युः, तच्चिन्त्यम् । 'तितुत्र—' इत्यनेनेण्निषेधादार्धधातुकत्वेऽपि क्षत्यभावात् । 'ब्रुव ईट्' इत्यत्र ब्रुवः परस्य हलादेः पित ईडागम इत्येतन्मात्रस्य मूले व्याख्यातत्वात्सार्वधातुकस्येति विशेषणाभावेऽपि क्षत्यभावात् । न च हलादेः पित्प्रत्ययस्य सार्वधातुकस्येति विशेषणाभावे ब्रुवो लिटि वच्यादेशे सिपस्थलि उवक्थेत्यत्रातिप्रसङ्गः स्यादिति वाच्यम्, थलोऽत्र पित्त्वाभावात् । न च स्थानिवद्भावेन पित्त्वम्, श्नः शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति तन्निषेधात् । तस्मात्पूर्वोक्तरीत्यैव श्तिपः शित्त्वसामर्थ्यादकर्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्तव्य इत्याहुः । तदपरे न क्षमन्ते । थलः पित्त्वाभावे हि 'असंयोगाल्लिट् कित्' इति कित्त्वाद् 'वचिस्वपि—' इति संप्रसारणे सत्युवचिथ उवक्थेति न सिध्येत् किंतु ऊचिथ ऊक्थेति स्यात् । तस्मात्स्थानिवत्त्वेन थलः कित्त्वेऽभ्युपगते उवक्थेत्यादा-

स्युर्जशश्च । झशां जशः । खयां चरः । तत्रापि प्रकृतिजशां प्रकृतिजशः, प्रकृतिचरां प्रकृतिचर इति विवेकः, आन्तरतम्यात् । २१८३ असिद्धवदत्राभात् ।

---

विंशतिरिहाभ्यासगताः स्थानिनो लभ्यन्ते । तेषां मध्ये कस्य चरः कस्य जश इत्याकाङ्क्षायामाह झशां जश इति । वर्गाणां तृतीयचतुर्था झशः । तेषां जशो जबगडदा इत्यर्थः । यद्यद्वर्ग्याः स्थानिनः तत्तद्वर्ग्या आदेशा इत्यपि बोध्यम् । खयां चर इति । वर्गाणां प्रथमद्वितीयाः खयः, तेषां चरः चटकतपा इत्यर्थः । अत्रापि यद्यद्वर्ग्याः स्थानिनः तत्तद्वर्ग्या आदेशा इत्यपि बोध्यम् । तत्रापीति । तेष्वपि वर्ग्येषु प्रकृत्या स्वभावेन जशामेव सतां प्रकृत्या स्वभावेन जश एव सन्तः तत्तद्वर्ग्या आदेशाः स्युः । एवं प्रकृत्या स्वभावेन चरामेव सतां प्रकृत्या स्वभावेन चर एव सन्तः तत्तद्वर्ग्या आदेशाः स्युरित्यर्थः । पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः । कुत इयं व्यवस्थेत्यत आह आन्तरतम्यादिति । झशां जशां च घोषसंवारनादप्रयत्नसाम्यम् । खयां चरां च श्वासाघोषविवारप्रयत्नसाम्यम् । तत्तद्वर्ग्याणां तत्तद्वर्ग्या आदेशा इत्यत्र तु स्थानसाम्यं नियामकं बोध्यम् । तथा च प्रकृतेः अभ्यासभकारस्य बकारे सति बभूव अ इति स्थिते 'अचिश्नुधातु–' इत्युवङादेशमाशङ्कितुमाह असिद्धवदत्र । षष्ठस्य चतुर्थपादे इदं सूत्रम् । 'श्नान्नलोपः' इति सूत्रात् पूर्वं पठितम् । आभादित्यभिविधावाङ् भस्येत्यधिकारमभिव्याप्येत्यर्थः । भाधिकारश्च आ पादपरिसमाप्तेरिति सिद्धान्तः । तथा च आ पादपरिसमाप्तेरिति लभ्यते । विहितं कार्यमिति शेषः । किमारभ्येत्याकाङ्क्षायामुपस्थितत्वादस्मादेव सूत्रादूर्ध्वमिति लभ्यते । ततश्च 'श्नान्नलोपः इत्यारभ्यापादसमाप्तेः विहितं कार्यं तदसिद्धवद्भवति । प्रवृत्तमप्यप्रवृत्तवद् भवतीत्यर्थः । अधिकारसूत्रमिदमुत्तरत्र 'श्नान्नलोपः'इत्यादौ प्रतिसूत्रमुपतिष्ठते । तथा च यद्यत्सूत्रे इदमनुवर्तते तत्तदाभीयकार्ये कर्तव्ये इति लभ्यते । एवं च 'श्नान्नलोपः' इत्यादि तत्तदाभीयं कार्यं 'श्नान्नलोपः' इत्याद्याभीये कार्ये कर्तव्ये असिद्धवदित्यर्थः पर्यवस्यति । अत्रेत्यनेन निमित्तसप्तम्यन्तेन त्वसिद्धीभवतः कार्याय यन्निमित्तं तन्निमित्तके कार्ये कर्तव्ये सतीत्यर्थलाभात् समानाश्रये कार्ये कर्तव्ये सतीति लभ्यते ।

---

वतिप्रसङ्गवारणाय पितः सार्वधातुकस्येडागम इति व्याख्यातव्यमेव, तथा च ब्रवीतिरित्यत्र ईडागमप्रवृत्त्या ञित्त्वं चरितार्थमिति कैश्चिद्यदुक्तं तदपि सम्यगेवेति । असिद्धवदत्राभात । तत्करणं प्रतिपत्तिलाघवाय, अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत्सामर्थ्यासिद्धवदिति कल्पनीयं स्यात् । यथा राजभिन्ने पुरोहिते राजाऽयमिति प्रयोगो राजवदिति कथंचित्कल्पयति, राजवदयं पुरोहित इत्युक्ते तु लघुप्रतिपत्तिर्भवति, तथा चागत्या 'पत्वतुकोरसिद्धिः' इत्यत्रासिद्धवदिति कल्प्यते । 'असंयोगाल्लिट् कित्' इत्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम् । आ भादित्यभिविधावाङ् । भाधिकारमभिव्याप्येत्यर्थः । अधिकारश्चायम् । अत्र ग्रहणं समानाश्रयप्रतिपत्त्यर्थम् । आभाद्ग्रहणं विषयनिर्देशार्थम् । भाधिकारस्यावधिलाभस्तु 'अङ्गस्य' 'प्रत्ययः' 'परश्च' इत्यादाविव व्याख्यानेनैव सिध्यति । एवं च 'अनुदात्तोपदेश–' इत्यत्रास्थोपस्थाने सत्ययमर्थो भवति—एषामनुनासिकस्य लोपः स्याज्झलादौ क्ङिति परे,

( ६—४—२२ ) इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्तव्ये

एतत्सर्वं भाष्ये स्थितम्, इत ऊर्ध्वमित्यादिना । तस्मिन्निति । आभीये कर्तव्ये सतीत्यर्थः । एधि शाधीत्युदाहरणम् । अत्र 'घ्वसोरेद्धावभ्यासलोपश्च' इत्यस्तेरेत्वस्य 'शा हौ' इति शास्तेः शाभावस्य चाभीयत्वेनासिद्धत्वाद् 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वमाभीयं प्रवर्तते । तथा जहीत्याद्यप्युदाहरणम् । हनधातोर्यङ्लुगन्ताद् लोण्मध्यमपुरुषैकवचने सिपो हिभावे 'अनुदात्तोपदेश–' इति नलोपस्याभीयस्यासिद्धत्वाद् 'अतो हेः' इत्याभीयो लुङ् न भवति । 'समानाश्रये' इति किम् ? पपुष इत्यत्र पाधातोर्लिट क्वसौ 'लिटि धातोः–' इति द्वित्वे अभ्यासह्रस्वे क्वस्वन्ताद् द्वितीयाबहुवचने शसि 'वसोः संप्रसारणम्' आभीयम् 'आतो लोप इटि च' इत्याल्लोपे आभीये कर्तव्ये असिद्धं न भवति । आल्लोपः क्वसौ, संप्रसारणं तु शसीति भिन्नाश्रयत्वात् । 'आभीये कर्तव्ये' इति किम् ? अभाजि राग इत्यत्र भञ्जेश्चिणि, रञ्जेर्घञि च कृते, 'भञ्जेश्च चिणि' 'घञि च भावकरणयोः' इति नलोपस्याभीयस्यानाभीयायामुपधावृद्धौ कर्तव्यायां नासिद्धत्वम् । 'आभादित्यभिविधिः' किम् ? भाधिकारात् प्रागित्युक्ते भूयानित्यत्र 'बहोर्लोपो भू च बहोः' इति बहोर्भूभावस्य ओर्गुणे कर्तव्ये असिद्धत्वं न स्यात्,

स चासिद्धो भवति । अत्र झलादिकिदाश्रियैव यदाभीयं प्राप्नोति तस्मिन्कृते सति जङ्गहि जङ्गहि 'अतो हेः' इति लुग् न भवति, अनुनासिकलोपस्य हिशब्दाश्रितत्वेनासिद्धत्वात् । नन्वस्याधिकारत्वे यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयं तस्मिन्नेव कर्तव्येऽसिद्धत्वं स्यान्न तु ततः पूर्वस्मिन्नपि । ततश्च 'घ्वसोः—'इत्येत्वं पूर्वस्मिन्नपि धित्वे कर्तव्ये नासिद्धं स्यादिति चेत् । भवेदयं दोषः शब्दाधिकारे । अर्थाधिकारस्त्वयम् । ततश्चेह 'श्नान्नलोपः' इत्यवधिनिर्णीतः स एव प्रतिसूत्रमुपतिष्ठते, तदेतत्सकलमभिप्रेत्याह इत ऊर्ध्वमिति । अत्रापि शास्त्रासिद्धत्वमेवाकरे स्थितम् । तेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिर्वर्तितत्वात्तन्निबन्धनं 'हुझल्भ्यो हेर्धिः' इति धित्वं सिद्ध्यति । प्राचोक्तकार्यासिद्धत्वपक्षे तु न सिद्ध्यति । देवदत्तस्य हन्तरि हते देवदत्तस्य जीवनं नेति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याप्रवृत्तेरित्याहुः । समानाश्रये इति किम्, पपुषः । चिच्युषः । लुलुवुषः । इह पाधातोश्चिञो लूञश्च परस्य वसोर्यत्संप्रसारणं तत् 'आतो लोप इटि च' इत्यालोपे 'एरनेकाचः—' इति यण्युवङि च कर्तव्ये नासिद्धम्, आलोपादीनि हि क्वसौ, संप्रसारणं तु विभक्ताविति व्याश्रयत्वात् । न च बहिरङ्गत्वेनासिद्धताऽस्त्विति शङ्क्यम्, 'नाजानन्तर्ये—' इति निषेधात्, 'वाह ऊठ्' सूत्रस्थबहिरङ्गपरिभाषाया अप्याभीयत्वेनाऽऽलोपादिषु कर्तव्येष्वसिद्धत्वाच्च । न चोक्तपरिभाषाया आलोपादीनां च समानाश्रयत्वं नेति शङ्क्यम्, वसोः संप्रसारणे कृते ह्यजाद्याश्रयेणाऽऽलोपादीनि प्रवर्तन्ते, तेषु कर्तव्येषु संप्रसारणस्यासिद्धत्वाय तद्विषये बहिरङ्गपरिभाषाऽपि प्रवर्तत इति तेषां तत्सत्त्वादिति दिक् । विषयलाभार्थमाभाद्ग्रहणं किम्, आभीयं प्रत्येवाभीयमसिद्धं नान्यं प्रतीति यथा स्यादित्येवमर्थम् । तेन अभाजि राग इत्यत्र 'भञ्जेश्च चिणि' 'रञ्जेश्च' 'घञि च भावकरणयोः' इति नलोपे कृते तस्यासिद्धत्वाभावाद् 'अत उपधायाः' इति वृद्धि-

तदसिद्धं स्यात् । इति वुकोऽसिद्धत्वादुवङि । प्राप्ते—'वुग्युटावुवङ्यणोः सिद्धौ

भस्येति सूत्रादूर्ध्वंभावित्वादित्यलम् । इति वुकोऽसिद्धत्वादिति । वुक आभीयस्य अचि श्नुधात्वित्युवङि आभीये कर्तव्ये असिद्धता ऊकारस्योवङि लघूपधगुणे बभोवेति प्राप्ते सतीत्यर्थः । वुग्विधिस्तु गुणवृद्धिबाधकत्वेन चरितार्थ इति भावः । वुग्युटावुवङ्यणोरिति । यथासंख्यमन्वयः । बभूवेति । णलो णित्वं तु

र्भवतीत्याहुः । स्यादेतत्, देभतुः देभुरित्यत्र 'श्रन्थिग्रन्थिदम्भि—' इति वक्ष्यमाणवचनेन लिटः कित्त्वान्नलोपेऽप्येत्वाभ्यासलोपौ न स्याताम्, नलोपस्यासिद्धत्वात् । अत्राहुः—'श्नसोरल्लोपः' इति तपरकरणाल्लिङ्गादाभीयासिद्धत्वमनित्यमिति नास्त्यत्र दोषः । तपरकरणं हि आस्तामित्यत्राडागमस्य लोपो मा भूदित्येतदर्थम् । यद्याडागमः श्नसोरल्लोपं प्रत्याभीयत्वेनासिद्धः स्यात्तर्हि किं तेन तपरकरणेन । एवं च 'दम्भेश्च' इति वक्ष्यमाणं नापूर्वं वार्तिकं किं त्वनित्यत्वबललभ्यमेवेति । वुक इति । 'भुवो वुक्—' शास्त्रस्य । एवमग्रेऽपि । युट उदाहरणं दिदीये । बभूवेति । अत्र प्राचा 'इन्धिभवतिभ्यां च' इति सूत्रं पितोऽपि लिटः कित्त्वार्थमिति व्याख्याय 'अचोऽञ्णिति' इति वृद्धिप्राप्तौ 'क्ङिति च' इति निषेध इत्युक्तं तदुपेक्षितम् । इग्लक्षणयोरेव गुणवृद्ध्योर्निषेध इति सिद्धान्तात् । अन्यथा इक्स्थानिकयोर्निषेधे लैगवायन इत्यत्रापि वृद्धिर्न स्यात् । न चात्र कित्त्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यम्, थलि उत्तमे णलि च गुणनिषेधेन कित्त्वस्य चरितार्थत्वात् । सूत्रं तु प्रत्याख्यातमेवाकरे । तथा च वार्तिकम् 'इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति । यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति, तथापि कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियत इति पक्षोऽप्यस्मादेव वार्तिकादवगम्यते, तेन रध्रेर्णिचि परामप्युपधावृद्धिं बाधित्वा नित्यत्वाद् 'रधिजभोरचि' इति नुमि कृते रन्धयतीति सिद्धम् । नन्वेवमपि संयोगात्परस्य लिटः कित्त्वार्थमिन्धेश्चेत्यंशोऽपेक्षित एव । अन्यथा 'समीधे दस्यु हन्तमम्' इत्यत्रेन्धेर्नलोपो न स्यात् । मैवम्, 'छन्दस्युभयथा' इति सूत्रेण हि सार्वधातुकसंज्ञा आर्धधातुकसंज्ञा च विधीयते, तेन 'सार्वधातुकमपित्' इति लिटो ङित्त्वे स्यादेव नलोप इति वार्तिकाशयात् । अत्र नव्याः—बभूवेत्यत्र 'द्विर्वचनेऽचि' इत्यजादेशस्य निषेधाद् गुणवृद्धिभ्यां प्रागेव वुकः प्रवृत्त्या भुवो वुको नित्यत्वादिति वार्तिके नित्यत्वादिति हेतूपन्यासो निष्प्रयोजनः, शब्दान्तरस्य प्राप्त्या वुको नित्यत्वं नास्तीत्याशङ्क्य कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वं स्वीक्रियत इत्यादिसमाधानमपि व्यर्थमेवेत्याक्षिप्य स्वयमेव समादधुः । षाष्ठद्वित्वप्रकरणान्ते हि वार्तिककृता पूर्वविप्रतिषेधः पठ्यते, 'द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः' इति । तथा च 'द्विर्वचनेऽचि' इति सूत्रं नारम्भणीयमित्याशयेन नित्यत्वादिति हेतुरुपन्यस्त इति । 'द्विर्वचनेऽचि' इति सूत्रेणाजादेशस्य स्थानिवद्भावो विधीयत इति पक्षे तु द्वित्वात्प्रागेव वृद्ध्याद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वादित्यादिग्रन्थः सम्यगेव । न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वा-

वक्तव्यौ' । बभूव बभूवतुः बभूवुः । २१८४ आर्धधातुकस्येड्वलादेः । ( ७—२—३५ ) वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ बभूवथुः बभूव ।

---

जगादेत्यादौ वृद्ध्यर्थम् । **बभूवतुरिति** । तसः अतुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवुरिति** । झेरुसादेशे वुगादि पूर्ववत् । सिपः थलि बभू थ इति स्थिते—**आर्धधातुकस्येट्** । 'नेड्वशिकृति' इत्यस्मादनुवृत्त्यैव सिद्धेरिहेड्ग्रहणं न कार्यमिति 'नेड्वशि–' इति सूत्रभाष्ये प्रत्याख्यातम् । 'आर्धधातुकस्य' इति किम् ? जुगुप्सति । अत्र 'गुप्तिज्किद्भ्यः–' इति सनो धातोरित्यधिकृत्य विहितत्वाभावान्नार्धधातुकत्वम् । **बभूविथेति** । सिपः थलि तस्य इडागमे वुगादि पूर्ववत् । **बभुवथु**-

---

ट्टिलोप इति ग्रन्थः कथं सङ्गच्छेतेति वाच्यम्, 'प्रकृत्यैकाच्' इति सूत्रं भाष्ये प्रत्याख्यातमित्याशयेन तत्प्रवृत्तेः । अतएव स्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक् ।

**आर्धधातुकस्येड्वलादेः** । 'नेड्वशिकृति' इत्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसम्बद्धस्येटो निवृत्त्यर्थम् । वस्तुतस्तु 'समर्थानां प्रथमाद्वा' इत्यनुवृत्तस्य पदत्रयस्य मध्ये 'प्राग्दिशः–' इत्यनन्तरं 'समर्थानां प्रथमात्–' इति निवृत्तं 'वा' इति त्वनुवर्तत इति व्याख्यानेमिव नेति निवृत्तम्, इडित्यनुवर्तत इति व्याख्यातुं शक्यत्वादिड्ग्रहणं त्यक्तुं शक्यम्, तथापि स्पष्टप्रतिपत्त्यर्थं तत्स्वीकृतमिति बोध्यम् । आर्धधातुकस्येति किम्, आस्ते, शेते । वलादेः किम्, एधनीयम् । ननु 'रुदादिभ्यः सार्वधातुके' इत्यनेन सार्वधातुकस्य यदीड् भवति तर्हि रुदादिभ्य एवेति नियमादास्ते शेत इत्यत्र इट् न भवेदित्यार्धधातुकस्येति ग्रहणं व्यर्थम् । न च रुदादिभ्यः सार्वधातुक एवेति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेत इत्यत्र तु स्यादिति शङ्क्यम्, 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति क्त्वासनोः कित्त्वस्य वैयर्थ्यप्रसङ्गात्, त्वदुक्तरीत्या रुदादेः क्त्वासनोरिडागमाभावेन 'न क्त्वा सेट्' इति निषेधाप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात् । 'हलन्ताच्च' इति झलादिसनः कित्वाच्च । तस्माद्विपरीतनियमासम्भवेनार्धधातुकग्रहणं व्यर्थमेव । ननु तद्ग्रहणाभावे वलादेरित्यस्याङ्गस्येति यदधिकृतं तद्विशेष्यं स्यात्, ततश्च अडाटाविवेडागमोऽप्यङ्गस्य स्यात् । मैवम्, कृतेऽप्यार्धधातुकग्रहणे वलाद्यार्धधातुकस्य यदङ्गं तस्येडागम इति व्याख्यानापत्त्योक्तदोषतादवस्थ्यादकृतेऽपि तद्ग्रहणेऽङ्गस्य यो वलादिरङ्गनिमित्तं तस्येडिति व्याख्यानादिष्टसिद्धेश्च । तस्मादुभयथापि व्याख्याने शरणीकर्तव्ये 'आर्धधातुकस्य–' इत्यस्य त्याग एव श्रेयान् । नन्वेवं केशवः, अञ्जना, वृक्षत्वमित्यत्रेट् स्यात्, 'ऋत इद्धातोः' इत्यतो धातोरित्यनुवर्तनादधातोः परस्य न भवतीति परिहारसम्भवेऽपि लूभ्यां पूभ्यामित्यत्र दुर्वार एवेडागमो विहितविशेषणेनाप्ययं वारयितुमशक्यः, क्विबन्ता धातुत्वं नजहतीति पूभ्यां पूभिरित्यत्र भ्यामादेर्धातोर्विहितत्वानपायात् किं च जुगुप्सते इत्यादौ 'गुप्तिज्किद्भ्यः–' इति धातोर्विहितस्य सन इट् दुर्वारः । न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षितं तच्च दुर्लभम् 'ऋत इद्धातोः' इत्यत्र धातोरित्यस्य षष्ठ्यन्तत्वात्, तथा च वृक्षत्वमित्यादावपीडागमप्रसङ्ग इति वाच्यम्, शब्दाधिकारपक्षे स्वरितत्वेन

बभूव बभूविव बभूविम । **२१८५ अनद्यतने लुट्।** ( ३—३—१५ ) भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् । **२१८६ स्यतासी लृलुटोः।** ( ३—१—३३ ) 'लृ' इति लृङ्लृटोर्ग्रहणम् । धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः शवाद्यपवादः । **२१८७ आर्धधातुकं शेषः।** ( ३—४—११४ ) तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् । **२१८८ लुटः प्रथमस्य डारौरसः।** ( २—४—८५ ) डा, रौ, रस् एते क्रमात्स्युः । डित्वसामर्थ्यादभस्यापि

रिति । थसः अथुसादेशे वुगादि पूर्ववत् । सकारस्य रुत्वविसर्गौ । **बभूवेति** । मध्यमपुरुषबहुवचनस्य अकारः सर्वादेश इति परस्मैपदानां 'णलतुस्–' इत्यत्रोक्तम् । वुगादि पूर्ववत् । **बभूवेति** । मिपो णलि वुगादि पूर्ववत् । **बभूविवेति** । वसो वादेशे वलादित्वादिडागमे वुगादि पूर्ववत् । नचात्र 'श्र्युकः किति' इतीडागमनिषेधः शङ्क्यः, 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' इति क्रादिनियमादिट्सिद्धेः । **बभूविमेति** । मसो मादेशे इडागमे वुगादि पूर्ववत् । इति लिट्प्रक्रिया । **अनद्यतने लुट्** । धातोरित्यविकृतम् । 'भविष्यति गम्यादयः' इत्यतो भविष्यतीत्यनुवर्तते । भविष्यत्यनद्यतन इति धात्वर्थेऽन्वेति । तदाह **भविष्यत्यनद्यतन इति** । अनद्यतनशब्दस्तु परोक्षे लिडित्यत्र व्याख्यातः । उटावितौ । लुटस्तिबादयः भू ति इति स्थिते 'कर्तरि शप्' इति शपि प्राप्ते **स्यतासी लृ** । स्यश्च तासिश्चेति द्वन्द्वात् प्रथमाद्विवचनम् । तासेरिकार उच्चारणार्थः । लृ लुट् अनयोर्द्वन्द्वात् सप्तमीद्विवचनम् । **ग्रहणमिति** । लृस्वरूपस्योभयत्राविशिष्टत्वादिति भावः । 'धातोः' इत्यधिकृतम्, तदाह **धातोरिति** । भू तास् ति इति स्थिते **आर्धधातुकं शेषः** । 'तिङ्शित्सार्वधातुकम्' इति पूर्वसूत्रोपात्ततिङ्शिद्भ्यः शेषः, तदाह **तिङ्शिद्भ्योऽन्य इति** । **विहित इति** । धातोरित्यविकृतं विहितविशेषणमाश्रीयत इति भावः । एवं च जुगुप्सत इत्यादौ 'गुप्तिज्किद्भ्यः–' इत्यादिविहितसनादीनां धातोरित्युच्चार्य विहितत्वाभावेन आर्धधातुकत्वाभावादिडागमो न भवति । **एतत्संज्ञः स्यादिति** । आर्धधातुकसंज्ञक इत्यर्थः । **इडिति** । तास्प्रत्ययस्योक्तसूत्रेणार्धधातुकत्वात् स्वतो वलादित्वाच्च 'आर्धधातुकस्येड्वलादेः' इतीडागम इत्यर्थः । भू इ तास् इति स्थिते, ऊकारस्य गुणे अवादेशे च भविता स् इति स्थिते । **लुटः प्रथमस्य डा** । डा रौ रस् एषां द्वन्द्वात् प्रथमाबहुवचनम् । लुट इति स्थानषष्ठी लुडादेशस्य प्रथमपुरुषस्येत्यर्थः । **क्रमादिति** । यथासंख्यलभ्यम् ।

तत्सदृशशब्दोऽनुमीयत इति पञ्चम्यन्तलाभात् । अस्तु वा पष्ठ्यन्तत्वम्, विहितत्वं पष्ठ्यर्थ इति व्याख्यायामिष्टसिद्धेः । तस्माज्जुगुप्सत इत्यादावतिप्रसङ्गवारणार्थमार्धधातुकस्येति ग्रहणम् । केचित्तु—धातोरित्यावर्त्य धातोरित्युच्चार्य विहितो यः प्रत्ययस्तस्येडिति यदि व्याख्यायेत तदा लूभ्यां जुगुप्सत इत्यत्रातिप्रसङ्गाभावादार्धधातुकस्येति व्यर्थमित्याहुः । **बभूविवेति** । न चात्र 'श्र्युकः किति' इतीण्निषेधे वुगागमोऽपि न स्यादिति शङ्क्यम्, क्रादिनियमादिटःप्रवृत्तेः । **अनद्यतने** । अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन सहितो दिवसोऽद्यतन इति 'कालोपसर्जने च तुल्यम्' इत्यत्र स्थितम् । **आर्धधातुकम्** । **धातोरिति** । 'धातोरेकाच' इत्यतो धातो-

टेर्लोपः । २१८९ **पुगन्तलघूपधस्य च** । ( ७—३—८६ ) पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः स्यात्सार्वधातुकार्धधातुकयोः । येन नाव्यवधानं तेन व्यवहितेऽपि, वचनप्रामाण्यात् । तेन भिनत्तीत्यादावनेकव्यवहितस्येको न गुणः । भवित् आ, अत्रेको गुणे प्राप्ते । २१९० **दीधीवेवीटाम्** । ( १—१—६ ) दीधीवेव्योरिटश्च

---

ननु परस्मैपदस्य त्रयः प्रथमा आत्मनेपदस्य च त्रयः प्रथमा इति स्थानिनः षट् आदेशास्तु त्रय इति कथं यथासंख्यमिति चेन्न । डाश्च रौश्च रस् चेति कृतद्वन्द्वानां डारौरसश्च डारौरसश्चेति एकशेषमाश्रित्य भाष्ये समाहितत्वात् । डाभावस्य चादेशत्वात् प्राक् प्रत्ययत्वाभावेन 'चुटू' इत्यस्याप्रवृत्त्या सर्वादेशत्वम् । सति च तस्मिन् प्रत्ययत्वाच्चुटू इति टकारस्येत्संज्ञेति भाष्ये स्पष्टम् । एवं च भू तास् आ इति स्थिते प्रक्रियां दर्शयति **डित्त्वसामर्थ्यादिति** । डाभावस्य कप्रत्ययावधिषु स्वादिष्वनन्तर्भूतत्वेन तस्मिन् परे भत्वाभावेऽपि डित्त्वसामर्थ्यात् टेरिति टिलोप इत्यर्थः । तथा च भवित आ इति स्थिते **पुगन्तलघू** । 'मिदेर्गुणः' इत्यतो 'गुणः' इत्यनुवर्तते । 'अङ्गस्य' इत्यधिकृतमवयवषष्ठ्यन्तमाश्रीयते । पुगन्तलघूपधस्येति तद्विशेषणम् । पुक् अन्तो यस्य तत् पुगन्तम् । लघ्वी उपधा यस्य तल्लघूपधम् । पुगन्तं च लघूपधं चेति समाहारद्वन्द्वात् षष्ठी । 'इको गुणवृद्धी' इति परिभाषया 'इकः' इत्युपस्थितं स्थानषष्ठ्यन्तमाश्रीयते । तदाह **पुगन्तस्येत्यादिना** । **अङ्गस्येक इति** । अङ्गावयवस्येत्यर्थः । द्वेष्टि द्वेष्टा इत्याद्युदाहरणम् । नन्वत्राङ्गावयवस्येकः तदुपरितनहला व्यवधानात् सार्वधातुकपरत्वाभावात् कथमिह इको गुण इत्यत आह **येन नेति** । येन स्थान्युत्तरवर्णेन परनिमित्तस्य नाव्यवधानं व्यवधानं अवर्जनीयमिति यावत् । तेन वर्णेन व्यवहितेऽपि परनिमित्तं कार्यं भवतीत्यर्थः । कुत इत्यत आह **वचनप्रामाण्यादिति** । तथाविधवर्णव्यवधानेऽपि कार्यप्रवृत्तौ वचनारम्भस्यैव प्रमाणत्वादित्यर्थः । लघूपधस्य हीको गुणो विधीयते । उपधात्वं चान्त्यादलः पूर्वस्यैव भवति । ततश्चेक उपर्यन्त्यस्य वर्णस्याभावे इक उपधात्वाभावाल्लघूपधस्याङ्गस्य गुणविधानं निर्विषयमेव स्यात् । अतस्तद्व्यवधानं सोढव्यमिति भावः । ननु व्यवहितस्यापीको गुणप्रवृत्त्यभ्युपगमे भिनत्ति छिनत्तीत्यादौ इकारस्यापि गुणः स्यादित्यत आह **तेनेति** । अवर्जनीयव्यवधानस्यैवाश्रयणेनेत्यर्थः । उपधात्वस्यैकमेव वर्णमुपरितनमादाय संभवादनेकवर्णव्यवधानं नादर्तव्यमिति भावः । **गुणे प्राप्त इति** । भवित् आ इति स्थिते डाभावसंपन्नस्याकारस्य स्थानिवत्त्वेन सार्वधातुकतया तस्मिन् परे भवित् इत्यङ्गादवयवस्योपधाभूतस्येकारस्य गुणे प्राप्ते सतीत्यर्थः । न च भूधातोर्विहितं सार्वधातुकं प्रति भूधातुरेवाङ्गम् न तु भवित् इति विकरणविशिष्टमिति वाच्यम् । अङ्गसंज्ञासूत्रे तदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात् । **दीधीवेवी** । 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना तुल्ये' । दीधीश्च वेवीश्च इट् चेति द्वन्द्वात् षष्ठी । 'इको गुणवृद्धी' इत्यतो 'गुणवृद्धी' इति 'न धातुलोप—' इत्यतो 'न' इति चानुवर्तते, तदाह **दीधीवेव्यो-**

---

रित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिदं लभ्यते । एतच्च तत्रैव मनोरमायां स्पष्टम् । धातोरितिविहित इति किम्, लूभ्याम्, जुगुप्सते । **अनेकव्यवहितस्येति** ।

गुणवृद्धी न स्तः । भविता । २१६१ तासस्त्योर्लोपः । ( ७—४—५० ) तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे। २१६२ रि च । ( ७—४—५१ ) रादौ प्रत्यये प्राग्वत् । भवितारौ । भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । २१६३ लृट् शेषे च । ( ३—३—१३ ) भविष्यदर्थाद्धातोर्लृट् स्यात्क्रियार्थायां क्रियायामसत्यां सत्यां च । स्य इट् । भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भवि-

---

रित्यादिना । अथ प्रथमपुरुषद्विवचने तसि परे शवपवादे तासि इडागमे ऊकारस्य गुणे अवादेशे तसो रौभावे भवितास् रौ इति स्थिते रि चेति सकारस्य लोपं वक्ष्यन् तत्रानुवृत्तिप्रतिपत्तये तत्पूर्वसूत्रमुपन्यस्यति तासस्त्योः । तास् चास्तिश्चेति द्वन्द्वात् षष्ठी । 'सः स्यार्धधातुके' इत्यतोऽनुवृत्तेन सीति सप्तम्यन्तेनाविकृताङ्गाक्षिप्तप्रत्ययस्य विशेषणात् तदादिविधिः, तदाह तासेरित्यादि । अस्तेरिति श्तिपा निर्देशः । अस्धातोरित्यर्थः । 'अलोऽन्त्यस्य' इत्यन्त्यस्य लोपः । भवितासीत्यनुपदमेवोदाहरणं वक्ष्यते । रि च । 'तासस्त्योर्लोपः' इति सूत्रम्, अस्तिवर्जमनुवर्तते । रीत्यनेनाङ्गाक्षिप्तप्रत्ययस्य विशेषणात्तदादिविधिः, तदाह रादाविति । प्राग्वदिति । तासेर्लोप इत्यर्थः । अस्तिस्तु नानुवर्तते । ततो रादिप्रत्ययस्यासंभवात् । आर्धधातुके तस्य भूभावविधानात् । एवं च भवितास् रावित्यत्र सलोपे सति रूपमाह भविताराविति । भवितार इति । झौ तासि इडागमे ऊकारस्य गुणं अवादेशे झेः रस् इत्यादेशे तासः सकारस्य लोपे रसः सकारस्य रुत्वविसर्गाविति भावः । भवितासीति । सिपि तासि इडागमे उकारस्य गुणे अवादेशे 'तासस्त्योः—' इति सकारस्य लोप इति भावः । भवितास्थ इति । थसि तासि इडागमे गुणे अवादेशे थसः सस्य रुत्वविसर्गाविति भावः । भवितास्थेति । बहुवचने थे तासि इटि गुणावादेशौ । भवितास्मीति । मिपि तासि इटि गुणावादेशौ । भवितास्व इति । वसि तासि इटि गुणे अवादेशे रुत्वविसर्गौ । एवं मसि भवितास्म इति रूपम् । इति लुट्प्रक्रिया । लृट् शेषे च । 'धातोः' इत्यधिकृतम् । 'भविष्यति गम्यादयः' इत्यतो 'भविष्यति' इत्यनुवृत्तं धात्वर्थेऽन्वेति, तदाह भविष्यदर्थाद्धातोः लृट् स्यादिति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति पूर्वसूत्रे 'क्रियार्थायां क्रियायाम्' इत्यर्थनिर्देशः स्थितः, ततोऽन्यः शेषः । क्रियार्थायां क्रियायाम् असत्यामिति लभ्यते । चकारात् क्रियार्थायां क्रियायां सत्यामित्यपि लभ्यते, तदाह क्रियार्थायां क्रियायामसत्यां सत्यां चेति । ननु 'लृट्' इत्येव सूत्रमस्तु । 'शेषे च' इति मास्तु । भविष्यदर्थाद्धातोः लृट् इत्येतावतैव क्रियार्थायां क्रियायामसत्यां सत्यां च लृटो लाभ इति चेन्न मैवम् । 'शयिष्यते ज्ञाने स्थीयते' इत्यादौ भावकर्त्रोः

---

सार्वधातुकादिकमिको विशेषणं न त्वङ्गस्येति भावः । तासस्त्योरिति । 'सः स्यार्धधातुके' इत्यतः सीत्यनुवर्तते, अङ्गाक्षिप्तस्य प्रत्ययस्य सीत्यनेन विशेषणात् । 'यस्मिन्विधिः—' इति तदादिविधिस्तदिदमाह सादाविति । एवं रादावित्यत्राप्यूह्यम् । प्राग्वदिति । तासेर्लोप इत्यर्थः । अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्य सम्भवात् । लृट् शेषे च । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति प्रागुक्तं ततोऽन्यः शेष इत्याह

ष्याव: भविष्याम: । २१९४ लोट् च । ( ३—३—१६२ ) विध्यादिष्वर्थेषु धातोर्लोट् स्यात् । २१९५ आशिषि लिङ्लोटौ । ( ३—३—१७३ ) २१९६ एरुः । ( ३—४—८६ ) लोट इकारस्य उः स्यात् । भवतु । २१९७ तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् । ( ७—१—३५ ) आशिषि तुह्योस्तातङ् वा स्यात् । अनेकाल्त्वात्सर्वादेशः । यद्यपि 'ङिच्च' ( सू ४३ ) इत्ययमपवादस्तथाप्यनन्यार्थ-

---

तुमुन्ण्वुल्भ्यां लृटो बाधाभावार्थत्वात् । न च वासरूपविधिना तत्सिद्धिःशङ्क्या, 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति' इति तन्निषेधादित्यास्तां तावत् । स्य इडिति । लृटस्तिपि 'स्यतासी लृलुटोः' इति स्यप्रत्ययः । तस्य वलाद्यार्धधातुकत्वाद् इडागम इत्यर्थः । भविष्यतीति । स्यप्रत्ययस्य इटि ऊकारस्य गुणे अवादेशे प्रत्ययावयवत्वात् सकारस्य षत्वे भविष्यतीति रूपमित्यर्थः । तसादौ भविष्यत इत्याद्यप्येवं योज्यम् । भविष्यामीत्यादौ 'अतो दीर्घो यञि' इति दीर्घः । इति लृट्प्रक्रिया । लोट् च । 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु' इत्यनुवर्तते, तदाह विध्यादिष्विति । विध्यादिशब्दा अनुपदमेव लिङ्विधौ व्याख्यास्यन्ते । आशिषि लिङ् । आशिष्यपीत्यर्थः । आशासनमाशीः इष्टप्राप्तीच्छा । लोटस्तिपि विशेषमाह एरुः । 'एः' 'उः' इति च्छेदः । एरिति षष्ठ्यन्तम् । इवर्णस्येति लभ्यते । 'लोटो लङ्वत्' हिश्च इत्यतो 'लोटः' इत्यनुवर्तते, तदाह लोट इति । भवत्विति । तिपि शपि गुणे अवादेशे तिप इकारस्य उकारः । अथाशिषि लोटो विशेषमाह तुह्योस्तातङ् । तुश्च हिश्च तुही, तयोरिति विग्रहः । तातङि ङकार इत् । अकार उच्चारणार्थः । तादित्यादेशः शिष्यते । ननु किमस्य अनेकाल्त्वात्सर्वादेशता उत ङित्वादन्तादेशतेत्यत आह अनेकाल्त्वात् सर्वादेश इति । ननु 'ङिच्च' इत्यस्य सर्वादेशापवादतया अनङादेरिव तातङोऽप्यन्त्यादेशत्वमेवोचितमित्याशङ्कते यद्यपि ङिच्चेत्ययमपवाद इति ।

---

असत्यामिति । चार्थमाह सत्यामिति । हरदत्तस्त्वाह—अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते । एवं च शेषे चेति सुत्यजमिति । तच्चिन्त्यम् । शयिष्यत इति स्थीयत इत्यादौ तुमुना लृटो बाधापत्तेः । क्तल्युट्तुमुन्खलर्थेषु वासरूपविधेरभावात् । अत्र च ज्ञापकं 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इत्यत्र लोटा बाधा माभूदिति पुनः कृत्यविधिरित्यादि कृदन्ते वक्ष्यति । इदमपि ज्ञापकमित्यन्यदेतत् । यत्तु प्राचा भविष्यति व्रजतीत्युदाहृतं तदापाततः । तुमुन्विषयेऽपि लृड् भवति तुमुना लृण्न बाध्यत इत्येतत्प्रतिपादनाय तस्यानुपयोगात् । न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति, भावे हि सः । समानकर्तृकेष्वेवेति च वक्ष्यते । लुडित्येतावत्सूत्रकरणेऽपि भविष्यतीति व्रजतीत्ययं सिध्यत्येवेत्यास्तां तावत् । लोट् च । 'विधिनिमन्त्रणा—' इत्याद्यनुवर्तते तदाह विध्यादिष्विति । आशिषि लिङ्लोटौ । ननु विध्यादिसूत्र एव संप्रश्नप्रार्थनाशीःष्वित्युच्यतां किमनेन पृथक्सूत्रकरणेनेति चेत् । अत्राहुः—इह हि क्तिच्क्तौ च—इत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम् । लिङ्लोटावपीहैव विधेयौ । विध्यादिसूत्रे आशीर्ग्रहणे हि 'स्मे लोट्' इत्यादिना स्वविषये परत्वाद्बाधः स्यात् । सिद्धान्ते तु परत्वादेष विधिः 'स्मे लोट्' इत्यादेर्बाधक इति

ङित्त्वेष्वनङादिषु चरितार्थं इति गुणवृद्धिप्रतिषेधसंप्रसारणाद्यर्थतया संभवत्प्रयोजन-ङकारं तातङि मन्थरं प्रवृत्तः परेण बाध्यते । इहोत्सर्गापवादयोरपि समबलत्वात् । भवतात् । २१९८ लोटो लङ्वत् । (३—४—८५) लोटो लङ इव कार्यं स्यात् । तेन तामादयः सलोपश्च । तथाहि—२१९९ तस्थस्थमिपां तांतं-

---

परिहरति तथापीति । परेण बाध्यत इति । तातङादेशे 'ङिच्च' इत्ययं विधिः 'अनेकाल्शित् सर्वस्य' इति परेण बाध्यत इत्यर्थः । ननु 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परापेक्षया अपवादस्य प्रबलत्वाद् ङिच्चेत्यन्तादेशत्वमेव तातङि युक्तमित्यत आह तातङि मन्थरं प्रवृत्त इति । 'ङिच्च' इति विधिरिति शेषः । तातङ्विषये 'ङिच्च' इति विधिर्मन्थरं प्रवृत्त इति हेतोः परेण सर्वादेशविधिना बाध्यत इत्यर्थः । कुतो मन्दप्रवृत्तिकत्वमित्यत आह अनन्यार्थेत्यादिना । अन्तादेशत्वादन्योऽर्थो यस्य ङित्त्वस्य न विद्यते तदनन्यार्थम् । तथाविधं ङित्त्वं येषां तेषु अनङादिषु 'ङिच्च' इति विधिः चरितार्थो लब्ध-प्रयोजनक इति कृत्वा मन्दं प्रवृत्त इत्यर्थः । तातङो ङित्त्वं तु अन्तादेशत्वापेक्षया अनन्यार्थं नेत्याह सम्भवत्प्रयोजनङकार इति । सम्भवन्ति प्रयोजनानि अन्यानि यस्य स सम्भवत्-प्रयोजनः । तथाविधो ङकारो यस्य तथाविधे तातङीत्यर्थः । कथं सम्भवत्प्रयोजनकत्वमित्यत आह गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतयेति । हिष्टादित्यादौ लघूपधगुणनिषेधः । स्तुतात् युतादित्यादौ 'उतो वृद्धिर्लुकि हलि' इति विहिताया वृद्धेर्निषेधः । 'वश कान्तौ' उष्टादित्यत्र 'ग्रहिज्यावयि-' इति सम्प्रसारणम् । आदिना ब्रूतादित्यत्र 'ब्रुव ईट्' इतीटोऽ-भावस्य संग्रहः । ननु तातङ्विषये 'ङिच्च' इति विधिर्मन्दं प्रवर्तताम् । तथापि 'परनित्यान्त-रङ्गापवादानामुत्तरोत्तरं बलीयः' इति न्यायेन परस्यापि सर्वादेशविधेरपवादभूतेन 'ङिच्च' इत्यनेन बाध एवोचित इत्यत आह इहेति । इह तातङ्विषये 'अनेकाल्शित्सर्वस्य' इति सामान्यशास्त्रस्य 'ङिच्च' इति विशेषशास्त्रस्य च समबलत्वात् सामान्यशास्त्रं विशेषशास्त्रेण न बाध्यत इत्यर्थः । अयं भावः—अपवादशास्त्रस्य परनित्यान्तरङ्गापेक्षया प्राबल्ये निरवकाश-त्वमेव बीजम् । प्रकृते च 'ङिच्च' इति विधिः अनङादिङित्त्वमन्तादेशत्वैकप्रयोजनकं प्रयोजनान्तरविरहेण निरवकाशत्वाद् झटिति परिगृह्णन् कृतार्थतामनुभवन्, तातङो ङित्त्वं प्रयोजनान्तरसत्त्वेन सावकाशत्वादुपेक्षत इति । तदुक्तं भाष्ये—'ङित्त्वस्य सावकाशत्वाद्विप्र-तिषेधात्तातङ् सर्वादेशः' इति । अधिकन्तु विस्तरभिया विरम्यते । भवतादिति । आशिषि लोटस्तिपि शपि गुणे अवादेशे उकारे तोस्तातङ् सर्वादेशः । ङकार इत् । द्वितीयतकाराद-कार उच्चारणार्थः । लोटो लङ्वत् । लङ इव लङ्वत् । 'तत्र तस्येव' इति षष्ठ्यन्ताद्वतिः, तदाह लोटो लङ इवेति । ननु तर्हि 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमोऽपि स्यादि-त्यत आह तेनेति । लङ इति स्थानषष्ठ्यन्ताद् वतिप्रत्ययाश्रयणेनेत्यर्थः । अडाग-

---

महान्विशेष इति । तुह्योस्तातङ् । यद्यपि तिह्योस्तातङिति वक्तुं शक्यं तथापि लाघवाभावादतिप्रसङ्गवारणाय हिशब्दसाहचर्याश्रयणे लोट् इत्यनुवर्तमाने वा गौरवाच्च तुह्योरित्युक्तम् । लोटो लङ्वत् । लोट इत्युपमेयषष्ठीदर्शनादुपमानादपि षष्ठ्यन्ता-

तामः । ( ३—४—१०१ ) ङितश्चतुर्णामेषां तामादयः क्रमात्स्युः । २२०० नित्यं ङितः । ( ३—४—९९ ) सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । 'अलोऽन्त्यस्य' ( सू ४२ ) इति सस्य लोपः । भवताम् भवन्तु । २२०१ सेर्ह्यपिच्च । ( ३—४—८७ ) लोटः सेर्हिः स्यात्सोऽपिच्च । २२०२ अतो हेः ।

---

मस्तु न लङो विधीयते । किन्तु लङि अङ्गस्येति भावः । केन तामादयः, केन वा सलोप इत्यत आह तथा हीति । तामादयः सलोपश्च यथा ज्ञायन्ते तथा स्पष्टमुच्यन्त इत्यर्थः । तस्थस्थमिपाम् । तस्, थस्, थ, मिप् एषां द्वन्द्वात् षष्ठीवहुवचनम्, ताम् तम् त अम् एषां द्वन्द्वात् प्रथमावहुवचनम् । 'नित्यं ङितः' इत्यस्माद् 'ङितः' इत्यनुवर्तते, तदाह ङितश्चतुर्णामिति । ङितो लकारस्य आदेशभूतानामित्यर्थः । क्रमादिति । यथासंख्यसूत्रलभ्यमिदम् । नित्यं ङितः । उत्तमपुरुष एवास्य सूत्रस्य प्रयोजनम् । प्रसङ्गादिहोपन्यस्तम् । 'स उत्तमस्य' इति सूत्रमनुवर्तते । तत्र 'सः' इति षष्ठ्यन्तम् । तेन उत्तमो विशेष्यते । तदन्तविधिः । 'इतश्च लोपः—' इत्यतो 'लोपः' इत्यनुवर्तते, तदाह सकारान्तस्य ङिदुत्तमस्येति । ङितो लकारस्य य आदेश उत्तमपुरुषः तस्येत्यर्थः । 'वैतोऽन्यत्र' इत्यस्माद्वाग्रहणानुवृत्तिनिवृत्तये नित्यग्रहणम् । 'अलोऽन्त्यस्य' इत्यन्त्यलोपः । भवन्त्विति । लोटस्तस्, तस्य तामादेशः । शप् गुणावादेशौ । न च तामादेशस्य सर्वादेशत्वात् प्राग् विभक्तित्वाभावाद् 'न विभक्तौ तुस्माः' इति निषेधाभावाद् मकारस्येत्संज्ञा शङ्क्या, संयोगान्तलोपेन मकारान्तरप्रश्लेषेण उपदेशेऽन्त्यत्वाभावात् । भवन्त्विति । लोटो झेः अन्तादेशे शपि गुणे अवादेशे द्वयोरकारयोः पररूपे एरुरितीकारस्य उकारे भवन्त्विति रूपम् । अथ लोटः सिपि शपि गुणावादेशयोः भव सि इति स्थिते । सेर्ह्यपिच्च । 'हि' इति

---

देव वतिस्तदाह तेनेति । अडाटौ तु नातिदिश्येते । न हि तौ लङः क्रियेते, किं तु लङि अङ्गस्येति भावः । नन्वेवमपि यान्तु वान्तु इत्यत्र 'लङः शाकटायनस्य' इति जुस् स्यात्, जुह्वतु विदन्त्वित्यत्र तु 'सिजभ्यस्त—' इति जुस्स्यात् । अत्राहुः—'विदो लटो वा' इति वाग्रहणमिहानुवर्त्य व्यवस्थितविभाषाश्रयणान्न जुस् । यद्वा 'लङः शाकटायनस्य' इति सूत्रे 'नित्यं ङितः' इत्यतो ङित इत्यनुवृत्त्यैवेष्टसिद्धेर्लङ्ग्रहणमतिरिच्यते, लुङि सिचा लृङि स्यप्रत्ययेन च व्यवधानात्, लिङि तु 'झेर्जुस्' इति जसो विहितत्वाच्च । ङित इत्यस्य लङ्येव पर्यवसानात्ततो लङ्ग्रहणं विभज्यते । नियमश्चायं 'लङेव यो लङ् तस्यैव झेर्जुस्, न तु लङ्वद्भावेन यो लङ् तस्येत्यतो नोक्तदोषः' इति । तच्चिन्त्यम्, अदुरित्यत्र 'सिजभ्यस्त—' इति नित्यजुसं बाधित्वा परत्वाच्छाकटायनस्येति विकल्पप्रसङ्गात् । तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्तव्यमेव, न तु तदतिरिच्यते । न च 'आतः' इति सूत्रेणादुरित्यत्र नित्यं जुस्स्यादिति वाच्यम्, तस्य नियमार्थत्वेन विध्यर्थत्वायोगात्, अन्यथा अभूवन्नित्यत्र 'सिजभ्यस्त—' इति जुस् दुर्वार एव स्यादिति नव्याः । यदि त्विह 'आतः' इति सूत्रमावर्त्य विध्यर्थता नियमार्थता च व्याख्यायेत तदा तूक्तदोषाभावाद्यद्वेति समाधानमपि सम्यगेव, शाकटायनस्येति जुसो वैकल्पिकत्वात्, तदभावपक्षे पुनःप्रसङ्गविज्ञानात् । 'सिजभ्यस्त—'

( ६—४—१०५ ) अतः परस्य हेर्लुक्स्यात् । भव—भवतात् भवतम् भवत । २२०३ मेर्निः । ( ३—४—८९ ) लोटो मेर्निः स्यात् । २२०४ आडुत्तमस्य पिच्च । ( ३—४—९२ ) लोडुत्तमस्याडागमः स्यात्स पिच्च । हिन्योरुत्वं न । इकारोच्चारणसामर्थ्यात् । भवानि भवाव भवाम । २०२५ अनद्यतने लङ् ।

---

लुप्तप्रथमाकम् । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते । तदाह लोटः सेरिति । स्तुहीत्यादौ सिप्स्थानिकस्य हेः पित्त्वात्सार्वधातुकमपिदिति ङिद्वत्त्वाभावाद् गुणे प्राप्ते अपिद्वचनम् । एवं च ङिद्वत्त्वात् 'क्ङिति च' इति गुणो न । 'सेर्हि ङिच्च' इत्येव तु न सूत्रितम् । पित-स्सिपः अनुदात्तस्य स्थाने हेरप्यनुदात्तत्वापत्तेः भव हि इति स्थिते । अतो हेः । 'अतः' इति पञ्चमी । हेरिति षष्ठी । 'चिणो लुक्' इत्यतो लुगित्यनुवर्तते, तदाह अतः परस्येति । भवेति । हिविधानं तु स्तुहीत्याद्यर्थमिति भावः । भवतादिति । अशिषि लोटः सिपि तस्य 'सेर्ह्यपिच्च' इति हिभावे शपि गुणावादेशयोः 'अतो हेः' इति लुकं परत्वाद् बाधित्वा 'तुह्योः—' इति पक्षे तातङिति भावः । भवतमिति । थसि शपि गुणे अवादेशे च भव थस् इति स्थिते 'लोटो लङ्वत्' इति लङ्वत्त्वात्तस्थस्थमिपामिति थसः तमादेशे रूपम् । एवं भवतेति । तस्य तादेश इति विशेषः । लोटो मिपि शपि गुणे अवादेशे मिपः तस्थस्थमिपामित्यमादेशे प्राप्ते मेर्निः । 'लोटो लङ्वत्' इत्यतः 'लोटः' इत्यनुवर्तते, तदाह लोटो मेरिति । भव नि इति स्थिते—आडुत्तमस्य । 'लोटो लङ्वत्' इत्यतः 'लोटः' 'इत्यनुवर्तते, तदाह । लोडुत्तमस्येति । स्तवानि स्तवावेत्यादौ 'सार्वधातुकमपित्' इति ङित्वनिवृत्त्यर्थं पिद्वचनम् । यद्यपि मिप्स्थानिकस्य नेः पित्त्वात्तदागमस्यापि सिद्धं पित्त्वं तथापि वस्मसोराडागमस्याङित्त्वार्थं पिदिति वचनम् । ननु स्तुहि भवानीत्यत्र 'एरुः' इत्युत्वं कुतो न स्यादित्यत आह हिन्योरुत्वं नेति । सामर्थ्यादिति । अन्यथा 'हु' 'नु' इत्येव विदध्यादिति भावः भवानीति । अडागमे सवर्णदीर्घः । नचात्र लङ्वद्भावादितश्चेति लोपः शङ्क्यः, इकारोच्चारणसामर्थ्यात् । अन्यथा मो न इत्येव दीर्घसिद्धेराडागमविधिर्व्यर्थः । तथापि स्तवानीत्याद्यर्थमावश्यकमिहापि न्याय्यत्वादुपन्यस्तम् । भवावेति । लोटो वस् गुणावादेशौ अडागमः सवर्णदीर्घः । लङ्वद्भावाद् 'नित्यं ङितः' इति सकारलोपः । एवं मसि भवामेति रूपम् । इति लोट्-

---

इति जुसि स्वीकृते तु सुतरां सम्यगेव, परं तु जुह्वतु विन्दन्त्वित्यत्र जुस्वारणाय व्यवस्थित-विभाषा त्वाश्रयणीयैवेति दिक् । सकारान्तस्येति । 'ङित्सकारोत्तमसकारस्येति प्राचो व्याख्यानं त्वयुक्तम् भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः । ङिदुत्तमस्येति । ङित्सका-रोत्तमस्येत्यर्थः । तेन भवावः भवाम इत्यादौ नातिप्रसङ्गः । सोऽपिच्चेति । एवं च पित्त्वेनानुदात्तस्य सिपः स्थाने यो हिरादेशः स तु 'स्थानेऽन्तरतमः' इत्यनुदात्तो न भवति । 'जहि शत्रून्' 'स्तुहि श्रुतम्' भवतादिति । लुगपेक्षया परत्वाद्धेस्तातङ्, अन्तरङ्गमेव लुग् बाधते न तु परमिति भावः । स पिच्चेति । सइति तच्छब्देन यस्याडागमः स परामृश्यत इत्याहुः । इतश्च । 'इतश्च लोपः—'

( ३-२-१११ ) अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् । २२०६ लुङ्लङ्लृङ्क्ष्वडुदात्तः । (६-४-७१) एषु परेष्वङ्गस्याडागमः स्यात्, स चोदात्तः । २२०७ इतश्च । (३-४-१००) ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् । अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम । २२०८ विधिनिमन्त्रणामन्त्रणाऽधीष्टसंप्रश्नप्रार्थनेषु लिङ् । (३-३-१६१) एष्वर्थेषु द्योत्येषु वाच्येषु वा लिङ् स्यात् । विधि

---

प्रक्रिया । अनद्यतने लङ् । 'धातोः' इति 'भूते' इति चाधिकृतम् । भूत इति धात्वर्थे अन्वेति, तदाह अनद्यतनभूतार्थवृत्तेरिति । लुङ्लङ्लृङ्क्षु । 'अङ्गस्य' इत्यधिकृतम, तदाह एषु परेष्वङ्गस्येति । अन्तरङ्गत्वाद् नित्यत्वात्परत्वाच्च यथायथं तिपि शपि विकरणे गुणे अवादेशे विकरणविशिष्टस्याङ्गस्य अडागमः । लावस्थायामेवाडागम इति तु पक्षान्तरं भाष्ये स्थितम् । इतश्च । 'लस्य' इत्यधिकृतम् । 'इतश्च लोपः परस्मैपदेषु' इत्यस्माद् 'लोपः' इति 'परस्मैपदेषु' इति चानुवर्तते । परस्मैपदेष्वित्येतत् षष्ठ्या विपरिणम्यते, तदाह ङितो लस्येत्यादिना । 'अलोऽन्त्यस्य' इत्यन्त्यस्य लोपः, तदाह अभवदिति । अभवतामिति । लङस्तसः तामादेशः शप् गुणावादेशौ अट् अभवन्निति । झेरन्तादेशः । शप् गुणावादेशौ अट् 'इतश्च' इति इकारलोपः । तकारस्य संयोगान्तलोपः । अभव इति । सिपि शपि गुणे अवादेशे अटि इकारलोपे रुत्वविसर्गौ । अभवतमिति । थसस्तमादेशः । शप् गुणावादेशौ अट् । अभवतेति । थस्य तादेशे शपि गुणे अवादेशे अटि । अभवमिति । मिपः अमादेशे शपि गुणे अवादेशे पूर्वरूपम् । अभवावेति । वसि शपि गुणावादेशौ अट् । 'अतो दीर्घो यञि' इति दीर्घः । 'नित्यं ङितः' इति सकारलोपः । एवं मसि अभवामेति रूपम् । इति लङ्प्रक्रिया । विधिनिमन्त्रणा । ननु विध्यादयो हि न लिङो वाच्याः । 'लः कर्मणि च भावे च–' इति सूत्रेण कर्तृकर्मभावानां लकारवाच्यत्वबोधनात् । नच 'लः कर्मणि च–' इति शास्त्रं लिङ्व्यतिरिक्तलकारविषयकमेवास्त्विति वाच्यम्, तथा सति यजेतेत्यादौ कर्तृवाचकत्वाभावेन शबाद्यनापत्तेरित्यत आह द्योत्येष्विति । 'लः कर्मणि च–' इति सूत्रं सामान्यविषयं सदपि विधिनिमन्त्रणेति विशेषशास्त्रेण न बाध्यते, अविरोधात् । तथा च विध्यादिविशिष्टकर्त्रादिषु लिङिति फलतीति मत्वाह वाच्येषु वेति । पक्षद्वयमपीदं भाष्ये स्थितम् । 'विधि

---

इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इत इत्यनेन विशेष्यते तदाह परस्मैपदमिकारान्तं यत्तस्येति । प्राचा तु परस्मैपदेष्विकारस्य लोप इत्युक्तम्, तदयुक्तम्, भवेदित्यादावतिव्याप्तेः । ननु 'अतो येयः' इत्यत्र ईश् दीर्घादिरस्तु, एवं च नोक्तातिव्याप्तिः 'इतश्च' इति तपरकरणात् । अतएव अबोभवीदित्यादावपि न दोष इति चेत् । मैवम्, रुदेर्लङि अरुदितामित्यादौ दोषाद्रौव्यादिति मनोरमायां स्थितम् । विधिनिमन्त्रणा । द्योत्येषु वाच्येषु वेति । पक्षद्वयस्याप्याकरे स्थितत्वादिति भावः । अत्राद्ये त्वित्यमुपपत्तिः–विध्यादीनां प्रत्ययार्थत्वमनुचितम् । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोऽर्था

प्रेरणम्, भृत्यादेर्निकृष्टस्य प्रवर्तनम् । निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । प्रवर्तनायां लिङ् इत्येव सुवचम् । चतुर्णां पृथुगुपादानं

---

प्रेरणम्' इति भाष्यम् अर्थतस्संगृह्णाति **विधिः प्रेरणमिति** । ननु निमन्त्रणादीनामपि प्रेरणान्तर्भावात्पौनरुक्त्यमित्यतो व्याचष्टे **भृत्यादेर्निकृष्टस्य प्रवर्तनमिति** । तद्यथा भृत्यं स्वामी वदति—भवान् वस्त्रं क्षालयेदिति । आमन्त्रणाद् भेदं दर्शयितुं निमन्त्रणशब्दं व्याचष्टे **निमन्त्रणं नियोगकरणमिति** । नियोगशब्दस्य प्रेरणशब्दपर्यायत्वभ्रमं वारयति **आवश्यके श्राद्धभोजदौ दौहित्रादेः प्रवर्तनमिति** । 'त्रीणि श्राद्धे पवित्राणि दौहित्र-कुतपस्तिलाः' इत्यादिवचनादिति भावः । तद्यथा दौहित्रादीन् प्रति इह श्राद्धे भवान् भुञ्जी-तेति । **आमन्त्रणं कामचारानुज्ञेति** । यथेच्छं क्रियतामित्यस्यनुज्ञानमित्यर्थः । **अधीष्टः सत्कारपूर्वको व्यापार इति** । भाष्यवाक्यमिदम् । सत्कृत्य प्रवर्तनमित्यर्थः । अधिपूर्वकस्ये-ष्धातोर्भावे क्तान्तस्योपसर्गवशादस्मिन्नर्थे वृत्तिः । अत एव भाष्यप्रयोगादधीष्टशब्दस्य पुंस्त्वम् । अधीष्टमित्येव क्वचित्पाठः, माणवकं भवानध्यापयेदित्युदाहरणम् । इदं कार्यं न वेति विचार्य निर्धारणं संप्रश्नः, यथा—किं भोः व्याकरणं भवानधीयी-तेति । प्रार्थनं याच्ञा, तथा भवानन्नं मे दद्यादिति । **सुवचमिति** । प्रवर्तनात्वस्य विध्यादिचतुर्षु अनुस्यूतत्वादिति भावः । प्रवृत्त्यनुकूलव्यापारः प्रवर्तना । तत्र प्रवृत्तिः शिष्यादिनिष्ठा । तदनुकूलव्यापारस्तु प्रेरणात्मकः प्रवर्तयितृगुर्वादिनिष्ठः । विस्तरस्तु मञ्जूषायां द्रष्टव्यः । **चतुर्णामिति** । विधिनिमन्त्रणामन्त्रणाधीष्टानामित्यर्थः ।

---

बाधकाः स्युः, तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात् ततश्च द्विवचनबहुवचने न स्याताम्, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्,अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति । द्वितीये त्वित्थमुपपत्तिः—विध्यादिभिः कर्त्रादयो न बाध्यन्ते परस्परविरोधा-भावात् । तथा च 'लः कर्मणि—' इत्यत्र ल इति बहुवचननिर्देशेन सर्वलकाराणां संग्रहाल्लिङा-दीनामपि कर्त्रादयोऽर्था भवेयुः । किं च कर्त्रादयोऽपि निरवकाशाः । न च लडादयोऽवकाशः । न्यायसाम्येन विध्यादिवद्वर्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात् । न चैवं पचतीत्यादौ धात्वर्थं प्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात् । तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम्, प्रत्ययार्थतया विशेष्यत्वापादनस्य कर्त्रादावपि तुल्यत्वात् । ननु प्रत्ययार्थं प्रधानं प्रकृत्यर्थो विशेषमित्यौत्सर्गिकमाख्याते त्यज्यते 'भावप्रधानमाख्यातम्' इति सिद्धान्तानुरोधादिति चेत्तर्हि तत एव नोक्तदोष इति दिक् । **प्रवर्तनायामिति** । प्रवर्तना त्वस्य विध्यादिषु चतुर्ष्वनुस्यूतत्वादिति भावः । अत्र वदन्ति—प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः, स च धात्वर्थः । फलव्यापारयोर्धातुवाच्यत्व-स्वीकारात् । तदाश्रयस्तु लकारार्थः, व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेऽपि ( प्रवृत्तत्वात् ) प्रवर्तना तु लिङ्त्वादिरूपेण लकारवाच्या द्योत्या चेति पक्षद्वयम् । प्रवृत्तिः पुरुषनिष्ठा आर्थी भावनेत्युच्यते । प्रवर्तना तु विधिः मां प्रेरयतीत्यनुभवाल्लिङादिनिष्ठा शाब्दी

प्रचक्षार्थे। २२०६ यासुट् परस्मैपदेषूदात्तो ङिच्च। ( ३—४—१०३ ) लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च । ङित्त्वोक्तेर्ज्ञाप्यते क्वचिदनु

---

अथ लिङस्तिपि इतश्चेतीकारलोपे शपि गुणे अवादेशे भव त् इति स्थिते यासुट् पर । 'लिङः सीयुट' इत्यतो लिङ इत्यनुवर्तते । षष्ठ्यर्थं सप्तमी, तदाह लिङः परस्मैपदानामिति । सीयुटोऽपवादः । यासुटि टकार इत्, उकार उच्चारणार्थः । टित्वात् तिबादीनामाद्यवयवः । अवयवे ङित्वं च 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन समुदाये आगमविशिष्टतिबादौ विश्राम्यति । 'आगमा अनुदात्ताः' इति यासुटः अनुदात्तत्वे प्राप्ते उदात्तवचनम् । इदमेव वचनम् 'आगमा अनुदात्ताः' इत्यत्र ज्ञापकमितिभाष्यम् । स्तुयात् स्तुयातामित्यादौ गुणादिनिषेधार्थं यासुटो ङित्त्ववचनम् । ननु 'यदागमा—' इति न्यायेन यासुडागमो लिङादेशपरस्मैपदावयवः । ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेः यासुटो ङित्त्वविधिर्व्यर्थः । न च स्थानिभूतलिङो ङकारस्याल इत्वेन गुणनिषेधविधावाश्रयणादनल्विधाविति निषेधः शङ्क्यः 'घुमास्थागापाजहातिसां हलि' इति क्ङिति विहितस्य ईत्वस्य 'न ल्यपि' इति निषेधेन लिङ्गेनानुबन्ध-

---

भावनेत्युच्यते । वेद एव लिङादिनिष्ठा वक्तुरभावात्, लोके तु पुरुषनिष्ठेति केचिदभ्युपगच्छन्ति । प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या । पुरुषप्रवृत्तेस्तु यजनदानादि भाव्यम्, एवं च धातूपात्तव्यापारस्य विषयविषयिभावेन द्वैवान्वये तात्पर्यग्राहका लिङादय इति द्योतकतापक्ष एव ज्यायान् । लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात् । एवं णिच्यपि । इयांस्तु विशेषः—णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव न तु णिज्निष्ठा, लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुषनिष्ठा वेति । स्यादेतत्—लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठेति मते पाचयत्योदनं देवदत्तेन यज्ञदत्त इतिवत् पचेदोदनं देवदत्तेन यज्ञदत्त इति प्रयोगः स्यात् । प्रवृत्त्याश्रयः प्रवर्तनाश्रयश्च लकारेणोक्त इति कर्तरि तृतीया न भवति किं तु प्रथमैवेति चेत् । तर्हि ओदनं देवदत्तो यज्ञदत्तः पचेदिति प्रयोगः स्यात् । अत्राहुः—पुरुषनिष्ठेति मते प्रवर्तना लिङादिवाच्यैव, न तु धातुवाच्या । तथा च लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाभावान्नोक्तदोषः । देवदत्तेन पाचयति यज्ञदत्त इत्यादौ तु णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि कर्तृत्वाल्लकारेणानुक्ते प्रयोज्ये कर्तरि तृतीयेति वैषम्यमिति । कौस्तुभादौ तु—'हेतुमति च' इति सूत्रे प्रयोजकव्यापारस्य णिज्वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः । व्यापारद्वयस्यापि णिच्प्रकृत्यर्थत्वे त्वभीत्यस्य णिजर्थविशेष्यकत्वे अभिसावयति, प्रकृत्यर्थविशेष्यकत्वे तु 'उपसर्गात्सुनोति—' इति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति । तथा च 'गतिबुद्धि—' इति सूत्रे अणिकर्तेति विशेषणमव्यावर्तकं स्यात् । त्वन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वेन प्रयोजकस्याप्यणं कर्तृत्वमिति दिक् । प्रार्थनं याच्ञा । क्वचिदिति । ज्ञापनफलं तु वक्ष्यमाणेत्यां टिड्ढाणञ्‌लक्षणङीब्भाव इति 'टिड्ढा—' इति सूत्र एवोक्तम् । रुयादित्यादौ 'उत वृद्धिर्लुकि हलि' इति न प्रवर्तते, भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्न' इति व्याख्यान

न्धकार्येऽप्यनल्विधाविति प्रतिषेध इति । श्नः शानचः शित्त्वमपीह लिङ्गम् ।

२२१० सुट् तिथोः । ( ३—४—१०७ ) लिङस्तकारथकारयोः सुट् स्यात् । सुटा यासुट् न बाध्यते, लिङो यासुट् तकारथकारयोः सुडिति विषयभेदात् ।

२२११ लिङः सलोपोऽनन्त्यस्य । ( ७—२—७९ ) सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति सकारद्वयस्यापि निवृत्तिः । सुटः श्रवणं त्वाशीर्लिङि ।

---

कार्ये अनल्विधाविति निषेधाभावज्ञापनादित्यत आह ङित्त्वोक्तेरिति । क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेध इति । यासुटो ङित्त्वेन ज्ञायत इत्यन्वयः । तथा च एतज्ज्ञापनार्थमेव यासुटो ङित्त्वमिति भावः । ज्ञापनफलं तु वक्ष्यमाणेत्यत्र ङीबभावः । अन्यथा लृडादेशस्य शानचः स्थानिवत्त्वेन टित्त्वात् ङीप् स्यात् । ननु 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधः' इत्यत्र यासुटो ङित्त्ववचनं न ज्ञापकम् । अनुबन्धकार्ये सर्वत्र अनल्विधाविति निषेधाभावे सत्यपि यासुटो ङित्त्वस्य तिप्सिप्मिवागमयासुटो ङित्त्वार्थमावश्यकत्वात् । नहि लिङादेशत्वेपि तिप्सिप्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम् । हलश्श्नश्शानज्झाविति सूत्रभाष्ये 'ङिच्च पिन्न, पिच्च ङिन्न' इति प्रपञ्चितत्वादित्यस्वरसादाह श्नः शानचः शित्त्वमपीह लिङ्गमिति । इह अनुबन्धकार्येऽपि क्वचिदनल्विधाविति निषेधोऽस्तीत्यस्मिन्नर्थे श्नप्रत्ययस्य यः शानजादेशः 'हलः श्नश्शानज्झौ' इति विहितः, तस्य शित्त्वमपि लिङ्गम्, ज्ञापकमित्यर्थः । अन्यथा स्थानिवत्त्वेनैव तस्य शित्त्वसिद्धेस्तद्वचनं व्यर्थं स्यादिति भावः । अत्र च यद्वक्तव्यं तत् स्त्रीप्रत्ययप्रकरणे वक्ष्यमाणेत्यत्र प्रपञ्चितम् । तथा च प्रकृते भव यास् त् इति स्थिते । सुट्तिथोः । 'लिङस्सीयुट्' इत्यतो लिङ इत्यनुवर्तते । तिश्च थ् चेति द्वन्द्वात् षष्ठीद्विवचनम् । इकार उच्चारणार्थः, तदाह लिङस्तकारेति । सुटि टकार इत्, उकार उच्चारणार्थः । भव यास् स् त् इति स्थितम् । नन्विह परेण सुटा यासुटः कथं न बाधः, भवेयुरित्यादौ परस्मैपदेषु यासुड्विधेः चरितार्थत्वादित्याशङ्क्य निराकरोति सुटा यासुट् न बाध्यत इति । तत् कुत इत्यत आह लिङो यासुडिति । लिङः सीयुड् यासुडागमश्च । लिङादेशैकदेशस्य तकारस्य सुडागम इति विषयभेदादित्यर्थः । तथा च यौगपद्यसम्भवाभावात् विप्रतिषेधाभावान्न परेणापि सुटा यासुटो बाध इति भावः । लिङः स । 'स' इति लुप्तषष्ठीकं पदम् । 'रुदादिभ्यः सार्वधातुके' इत्यतः सार्वधातुक इत्यनुवृत्तं षष्ठ्या विपरिणम्यते, तदाह सार्वधातुक लिङ इति । सकारद्वयस्यापीति । अविशेषात् सकारद्वयस्यापि युगपल्लोपः प्रवर्तते । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति तु पर्यायेण पुनःप्रवृत्तिपरमिति भावः । यद्यपि भव यास स् त् इत्यत्र स्कोरित्येव सिध्यति तथापि भवेयुरित्याद्यर्थं सूत्रम्

---

द्विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यादौ वक्ष्यमाणतया यासुटो ङित्त्वं न ज्ञापकमित्यपरितोषादाह श्नः शानचः शित्त्वमिति । सुट् तिथोः । तकारादिकार उच्चारणार्थः । लिङः सलोपो । 'रुदादिभ्यः–' इति सूत्रात्सार्वधातुक इत्यनुवर्तते, सेति लुप्तषष्ठीकमनन्त्यस्येत्यनेन विशेष्यते तदाह सार्वधातुकलिङोऽनन्त्यस्येति । सकारद्वयस्यापीति । अवयवावयवोऽपि समुदायं प्रत्यवयव

स्फुटतरं तु तत्राप्यात्मनेपदे । २२१२ अतो येयः । ( ७—२—८० ) अतः परस्य सार्वधातुकावयवस्य या इत्यस्य इय् स्यात् । गुणः । यलोपः । भवेत् । 'सार्वधातुके' किम्—चिकीर्ष्यात् । मध्येऽपवादन्यायेन हि 'अतो लोपः । एव वाध्येत । भवेदित्यादौ तु परत्वाद्दीर्घः स्यात् । भवेताम् । २२१३ झेर्जुस् ।

---

ननु सुटो लोपे किमर्थस्सुड्विधिरित्यत आह सुटः श्रवणं त्वाशीर्लिङीति । भूयास्तामित्यादौ 'लिङाशिषि' इत्यार्धधातुकत्वेन तत्र सकारलोपस्याप्रसक्तेरिति भावः । व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषाभाव इति भाष्यादाह स्फुटतरं त्विति । तत्रापि आशिषि लिङ्यपि एधिषीष्टेत्यादावात्मनेपदे स्फुटतरं सकारद्वयस्य श्रवणमित्यर्थः । तत्र यासुटोऽभावेन सलोपाभावेन च सुट एव सकारस्य पृथक् स्पष्टं श्रवणसम्भवादिति भावः । तथा च भव यात् इति स्थिते । अतो येयः । या इति लुप्तषष्ठीकं पदम् । अत इति पञ्चमी । परस्येत्यध्याहार्यम् । इय इत्यत्राकार उच्चारणार्थः । 'रुदादिभ्यः—' इत्यस्मात् 'सार्वधातुके' इत्यनुवृत्तम् । अवयवषष्ठ्या विपरिणम्यते । तदाह अतः परस्येत्यादिना । भव इय् त् इति स्थितम् । गुण इति । 'आद् गुणः' इत्यनेनेति शेषः । भवेय् त् इति स्थितम् । यलोप इति । 'लोपो व्योः—' इत्यनेनेति शेषः । भवेदिति । यलोपात् प्राग् हल्ङ्यादिलोपः संयोगान्तलोपश्च न शङ्क्यः, अन्तरङ्गत्वेन यलोपस्य पूर्वं प्रवृत्तेः, संयोगान्तलोपस्य त्रैपादिकत्वेनासिद्धत्वाच्चेति भावः । सार्वधातुके किमिति । 'रुदादिभ्यः—' इत्यतस्सार्वधातुक इत्यनुवृत्तिलभ्यं सार्वधातुकावयवस्येति किमर्थमित्यर्थः । भूयादित्यादावाशीर्लिङि आर्धधातुके अतः परत्वाभावादेव इयादेशाभावसिद्धेः सार्वधातुकग्रहणानुवृत्तिर्व्यर्थेत्याशयः । चिकीर्ष्यादिति । कृन्धातोः सन्नन्ताद् आशीर्लिङि तिवादौ चिकीर्ष यादिति स्थिते 'अतो लोपः' इत्यकारलोपे चिकीर्ष्यादिति रूपम् । तत्र 'अतो येयः' इत्यत्र सार्वधातुकग्रहणाननुवृत्तौ चिकीर्ष यादिति स्थिते 'अतो येयः' इति इयादेशे आद्गुणे यलोपे चिकीर्षेदिति स्यात् । सार्वधातुकग्रहणानुवृत्तौ तु न दोषः, आशीर्लिङादेशस्य तिङो लिङाशिषीत्यार्धधातुकताया वक्ष्यमाणत्वादिति भावः । ननु आशिषि लिङि चिकीर्ष यादिति स्थिते नित्यत्वाद् 'अतो लोपः' इति अकारलोपे सति अतः परत्वाभावादेव अतो येय इत्यस्याप्रवृत्तेः, तत्र सार्ववातुकग्रहणानुवृत्तिर्व्यर्थैवेत्यत आह मध्येऽपवादन्यायेन ह्यतो लोप एव वाध्येतेति । षष्ठस्य चतुर्थपादे 'अतो लोपः' इति सूत्रम्, सप्तमस्य द्वितीयपादे 'अतो येयः' इति सूत्रम् सप्तमस्य चतुर्थपादे तु 'अतो दीर्घो यञि' इति सूत्रमिति स्थितिः । तत्र आशीर्लिङि आर्धधातुके चिकीर्ष

---

इत्याश्रयणात्सुटोऽपि लिङ्भक्तत्वादिति भावः । आशीर्लिङीति । भूयास्तामित्यादौ । ननु सुटि कृते 'अनचि च' इति द्वित्वस्यासिद्धत्वात्ततः प्रागेव 'स्कोः—' इति यासुटः सकारो लुप्यते, झलि परे यः संयोगस्तदादित्वात् । तथा चैकसकारकं रूपं तुल्यम् । सुडभावे यासुटः सकारस्य द्वित्वे कृते तु सुटि 'स्कोः—' इति सलोपात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह स्फुटतरं त्विति । एधिषीष्टेत्यादाविति भावः । मध्येऽपवादन्यायेनेति । 'रुदादिभ्यः—'

( ३—४—१०८ ) लिङो झेर्जुस् स्यात् । ज इत् । २२१४ उस्यपदान्तात् । ( ६—१—९६ ) अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्च 'अतो येयः' ( सू २२१२ ) इति प्राञ्चः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यम्, तथापि 'यास्' इत्येतस्य इय् इति व्याख्येयम् । एवं च सलोपस्या-

यादित्यत्राल्लोपप्राप्त्या विधिलिङि तु भव यादित्यत्र अतो दीर्घप्राप्त्या च इयादेशस्य निरवकाशत्वेन बाध्यसामान्यचिन्तामाश्रित्यापवादतया तेन अन्यतरस्मिन् बाध्ये सति 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'अतो लोपः' एव बाधमर्हति । न तु 'अतो दीर्घः–' इत्यर्थः । एवं चार्धधातुके चिकीर्ष यादिति स्थिते अतः परत्वादियादेशः प्रसज्येतेत्यतिव्याप्तिः स्यादिति स्थितम् । एवं चाव्याप्तिरपीत्याह **भवेदित्यादाविति** । अतः परस्य इयादेशविधौ सार्वधातुकग्रहणाननुवृत्तौ विधिलिङस्तिपि सार्वधातुके भव यादिति स्थिते इयादेशं परत्वाद् बाधित्वा 'अतो दीर्घो यञि' इति यञादौ सार्वधातुके परे अतो विधीयमानो दीर्घः स्यात् । ततश्च अतः परत्वाभावादियादेशो न स्यादित्यव्याप्तिः स्यादित्यर्थः । नच इयादेशस्य निरवकाशत्वाद् दीर्घबाधकत्वं शङ्क्यम्, चिकीर्ष्यादित्यार्धधातुके दीर्घप्राप्त्ययोग्ये इयादेशस्य सावकाशत्वादिति भावः । **भवेतामिति** । तसः तामादेशे शपि गुणे अवादेशे यासुडागमे सुटि सकारद्वयलोपे या इत्यस्य इयादेशे याद्गुणे यलोपः । अथ लिङो झे 'झोऽन्तः' प्राप्ते झेर्जुस् । 'लिङस्सीयुट्' इत्यतो लिङ इत्यनुवर्तते । तदाह **लिङो झेरिति** । अनेकाल्त्वात्सर्वादेशः । ज **इदिति** । जुसः स्थानिवत्त्वेन प्रत्ययत्वात् 'चुटू' इति जकार इत्संज्ञक इत्यर्थः । उसि शपि गुणे अवादेशे यासुटि सकारलोपे भव या उसिति स्थिते इयादेशं बाधित्वा पररूपप्रवृत्तिं शङ्कितुमाह **उस्यप** । 'एकः पूर्वपरयोः' इत्यधिकृतम् । 'आद्गुणः' इत्यस्मादादित्यनुवर्तते । 'एङि पररूपम्' इत्यस्मात्पररूपमिति, तदाह **अपदान्तादिति** । **उसीति** । उसि यः अच् उकारः तस्मिन् परत इत्यर्थः । 'इकोयणचि' इत्यतः अचीत्यनुवृत्तेः । यद्यपि उसः कृत्स्नस्याकारस्य च उसित्येकादेशेऽपि रूपं तुल्यम्, तथापि 'अकः सवर्णे दीर्घः' इत्यादावुत्तरत्राचीत्यावश्यकमत्राप्यनुवर्तत इति बोध्यम् । भिन्द्युरित्याद्युदाहरणम् । **इति प्राप्त इति** । भव या उसित्यत्राकारस्योकारस्य चाद्गुणं बाधित्वा एकस्मिन्नुकारे पररूपे प्राप्ते सतीत्यर्थः । सति च पररूपे या इत्यस्याभावाद् इय् न स्यादिति मन्यते । **परत्वादिति** । पररूपापेक्षया इयादेशः परो नित्यश्च, अकृते कृते च प्रवृत्तेः । कृते पररूपे य् इत्यस्यैकदेशविकृतन्यायेन एकादेशस्य पूर्वान्तत्त्वेन वा इयादेशस्य निर्बाधत्वात् । ततश्च पररूपं बाधित्वा इयादेशे भवेयुरिति रूपमिति प्राचीना मन्यन्त इत्यर्थः । ननु पररूपमङ्गाधिकारस्थत्वाभावाद् अङ्गानपेक्षत्वाद् अन्तरङ्गम्, इयादेशस्तु आङ्गत्वात् प्रकृतिप्रत्ययो-

इति सूत्रात्सार्वधातुक इत्यननुवृत्तावयं न्यायः प्रवर्तत इति भावः । **अन्तरङ्गत्वादिति** प्रत्ययमात्रापेक्षत्वात्, 'अतो येयः' इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः । नन्वपदान्ताकारस्य जुसश्चाश्रयणात्पररूपस्याप्युभयसापेक्षत्वमस्त्येवेति चेत् । मैवम्, अनेकाश्रयणेऽपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात् । व्याख्येय-

पवाद इय् 'अतोयेयः' ( सू २२१२ ) इत्यत्र तु सन्धिरार्षः। भवेयुः। भवेः भवेतम् भवेत । भवेयम् भवेव भवेम । २२१५ लिङाशिषि । ( ३—४—११६ ) आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् । २२१६ किदाशिषि। ( ३—४—१०४) आशिषि लिङो यासुट् कित्स्यात्। 'स्कोः—' ( सू ३८० ) इति सलोपः। २२१७

---

भयसापेक्षत्वाद् बहिरङ्गः। ततश्च परान्नित्यादपीयादेशात् पररूपस्यान्तरङ्गतया बलवत्त्वात् पररूपमेव इह स्यादिति शङ्कते यद्यपीति। परिहरति तथापीति। 'अतः' 'यास्' 'इयः' इति पदच्छेदः। यासिति लुप्तषष्ठीकं पदम्। ततश्च अतः परस्य यासित्येतस्य इय् स्यादिति व्याख्येयमित्यर्थः। ननु लिङः स लोपोऽनन्त्यस्येति सकारस्य लोप इयादेशं बाधित्वा नित्यत्वात् प्राप्नोतीति ततश्च यास् इत्यस्य इय् इति कथमित्यत आह एवं चेति। यासिति सकारान्तस्य इयादेशविधिसामर्थ्यादेव सकारलोपं बाधित्वा प्रागेव यासिति सकारान्तस्य इयादेशो भवतीत्यर्थः। तथा च सकारावस्थायामवर्णात्परत्वाभावेन पररूपस्याप्रवृत्तिरिति भावः। ननु यदि यास् इय इतिच्छेदः, तदा सकारस्य रुत्वे, 'भोभगो–' इति यत्वे, 'लोपः शाकल्यस्य' इति तस्य लोपे अतो या इय इति स्यात्। आद्गुणे कर्तव्ये यलोपस्यासिद्धत्वादित्यत आह सन्धिरार्ष इति। 'आने मुक्' इति सूत्रे भाष्ये तु 'अतो या इय' इत्येव सूत्रपाठो लक्ष्यते। भवेयमिति। सिपि, शपि गुणः । आवादेशः। 'इतश्च' इति इकारलोपः। यासुडागमः। सकारस्य लोपः। इयादेशः। आद्गुणः । यलोपः रुत्वविसर्गौ। एवं थसः तमादेशे थस्य तादेशे च, भवेतम् भवेतेति च रूपम्। भवेरिति। मिपि अमादेशः। शप्। गुणः। अवादेशः। यासुट्। सलोपः। इयादेशः। आद्गुणः। भवेवेति। वस् शप् गुणावादेशौ। 'नित्यं ङितः' इति सकारलोपः । यासुट्। सलोपः। इयादेशः आद्गुणः। यलोपः। एवं मसि भवेमेति रूपम् । इति विधिलिङ्प्रक्रिया। अथाशीर्लिङि विशेषमाह लिङाशिषि। लिङिति लुप्तषष्ठीकं पदम्। 'तिङ्शित्सार्वधातुकम्' इत्यतस्तिङित्यनुवर्तते, तदाह आशिषि लिङस्तिङिति। सार्वधातुकसंज्ञापवादोऽयम्। ततश्च सार्वधातुकसंज्ञाकार्यं शबादि न भवति। किदाशिषि। 'लिङस्सीयुट्' इत्यतो लिङ इत्यनुवर्तते। 'यासुट् परस्मैपदेषु–' इत्यतो यासुडिति च। तदाह आशिषि लिङ इति। 'यासुट् परस्मैपदेषु–' इति ङित्त्वस्यापवादः। यद्यपि ङित्त्वेनैव गुणनिषेधः सिध्यति, तथापि इज्यादित्यादौ 'वचिस्वपियजादीनां किति' इति संप्रसारणाद्यर्थं कित्त्वमावश्यकम् इहन्याय्यत्वादुपन्यस्तम्। अथ आशिषि लिङस्तिपि आर्धधातुकत्वात् शतभावे 'इतश्च' इतीकारलोपे यासुडागमे अतः परत्वाभावात् सार्वधातुकत्वाभावाच्च इयादेशाभावे सुटि भूयास् त् इति स्थिते प्रक्रियामाह स्कोरिति सलोप इति। लिङस्सलोप इत्यस्य सार्वधातुकविषयत्वात् स्कोरिति सुटः पदान्त-

---

मिति। एतच्च विप्रतिषेधसूत्रे भाष्ये स्पष्टम् । आर्धधातुकसंज्ञ इति । 'लङः शाकटायनस्यैव' इत्यत एवकारोऽनुवर्तनीयः। अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञापि स्यात्ततश्च पक्षे शबादिः स्यात्। किदाशिषि। ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थं जागर्यादित्यत्र गुणार्थं च।

क्क्ङिति च । ( १—१—५ ) गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः ।

संयोगादित्वाद् लोपः । ततो यासुटः सस्यापि पदान्तसंयोगादित्वादेव लोपः । न तु झल्परसंयोगादित्वेन यासुटः सस्य लोपे सुटः सस्य पदान्तसंयोगादित्वाल्लोप इति युक्तम् । तथा सति झल्परसंयोगादिलोपस्यासिद्धत्वेन संयोगान्तलोपापत्तेः । भ्रष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगान्तलोपाबाधकत्वादिति शब्दरत्ने विस्तरः । एवं च भूयास् स् त् इति स्थिते सकारद्वयस्य निवृत्तौ भूयादिति रूपम् । तत्र 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते । क्क्ङिति च । ग्क्ङ् एषां समाहारद्वन्द्वः कात्पूर्वं गकारस्य चर्त्वेन निर्देशाद् ग्क्ङ् च इद् यस्येति विग्रहः । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकमन्वेति । तथा च गिति किति ङिति चेति लभ्यते । निमित्तसप्तम्येषा । 'इको गुणवृद्धी' इत्यनुवर्तते । चकार इत्यर्थे । इक इत्युच्चार्य विहिते इति लभ्यते । 'न धातुलोप आर्धधातुके' इत्यतो नेत्यनुवर्तते । तदाह गित्किन्ङिन्निमित्ते इत्यादिना । गितीत्यनुक्तौ तु 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्यये जिष्णुरित्यत्र गुणनिषेधो न स्यात् । न च ग्स्नुप्रत्ययः किदेव क्रियतामिति वाच्यम्, तथा सति 'घुमास्था—' इति किति विहितस्य ईत्वस्य प्रसङ्गात् । यदि तु गिति किति ङिति परतो

जागर्तेर्गुणो हि ङिति पर्युदस्यते, ङित्वं चेह विशेषविहितेन कित्त्वेन बाध्यते । सलोप इति । झल्परसंयोगादित्वेन यासुटः सस्य लोपः सुटस्तु पदान्तसंयोगादित्वेनेति भाव इति मनोरमायां स्थितम्, तदसम्बद्धमिति मत्वात्र निष्कर्षमाहुः—भूयास्तां भूयास्तं भूयास्तेत्यत्र झल्परसंयोगादित्वेन यासुटः सस्य लोपः । भूयादित्यत्र तु सुट इव यासुटोऽपि सस्य लोपः पदान्तसंयोगादित्वेनैव । अन्यथा झल्परसंयोगादिलोपस्यासिद्धत्वात्संयोगान्तलोप एव स्यात् । भ्रष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगान्तलोपाबाधकत्वादिति । ङिन्निमित्त इति । गिति किति ङिति परे इको गुणवृद्धी न स्त इति न व्याख्यातम्, छिन्नंभिन्नमित्यत्र लघूपधगुणस्यानिषेधप्रसङ्गात् । नचारम्भसामर्थ्यं शङ्क्यम्, चितं स्तुतमित्यादावव्यवहिते किति चरितार्थत्वादिति भावः । अन्ये तु—क्ङितीति प्रत्ययग्रहणात् प्रत्ययेन संनिधापितस्याङ्गस्य क्ङिति पर इति व्याख्याने तु छिन्नं भिन्नमित्यादि सिध्यत्येव । न चैवं भवावो भवाम इत्यादावतिप्रसङ्ग इति वाच्यम्, अन्तरङ्गगुणं प्रति बहिरङ्गनिषेधस्याप्रवृत्तेरित्याहुः । 'क्क्ङिति च' इति सूत्रे चर्त्वेन गकारोऽपि प्रश्लिष्यत इत्याशयेन गित्किन्ङिन्निमित्त इत्युक्तम् । गिति किम्, 'ग्लाजिस्थश्च ग्स्नुः' जिष्णुः । किति त्वस्मिन्स्यास्नुरित्यत्र 'घुमास्था—' इतीत्वं प्रसज्येत । न च स्नोर्गित्त्वे भूष्णुरित्यत्रेण्णिषेधो न स्यात् 'ग्लाजिस्थश्च—' इति चकाराद् भुवश्च ग्स्नुर्भवतीति स्वीकारादिति वाच्यम्, 'श्र्युकः किति' इत्यत्रापि चर्त्वेन गकारं प्रश्लिष्य गित्किर्तोरिण्न स्यादिति व्याख्यानात् । न चैवं चर्त्वस्यासिद्धतया 'श्र्युकः—' इत्यत्र विसर्जनीयो न लभ्यत इति 'हशि च' इत्युत्वमेव स्यादिति वाच्यम्, सौत्रत्वात् । 'न मु ने' इत्यत्र नेति योगविभागेनासिद्धत्वाभावादिष्टसिद्धेः । वामनस्तु— 'ग्लाजिस्थश्च—' इति सूत्रे स्था आ इति प्रश्लेषात्स्थास्नुरित्यत्र 'घुमास्था—' इतीत्वं न भविष्यतीति गकारप्रश्लेषाभावान्न 'श्र्युकः किति' इत्यत्र चर्त्वस्यासिद्धत्वाभावसमर्थन-

भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म । २२१८ लुङ् । ( ३—२—११० ) भूतार्थवृत्तेर्धातोर्लुङ् स्यात् । २२१९ माङि लुङ् । ( ३—३—१७५ ) सर्वलकारापवादः । २२२० स्मोत्तरे लङ् च ।

---

गुणवृद्धी न स्त इति व्याख्यायेत, तदा च्छिन्नं भिन्नमित्यत्र क्तप्रत्यये परे लघूपधगुणनिषेधो न स्यात्, स्थानिभूतस्येको हला व्यवधानात् । नच येन नाव्यवधानन्यायः शङ्क्यः, चितं स्तुतमित्यादावव्यवहिते चरितार्थत्वात् । यदि च इको न गुणवृद्धी इत्येव व्याख्यायेत न क्ङिग्लक्षणे इति, तदा लिगोरपत्यं लैगवायनः, नडादित्वात् फक् इह आदिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वाद् निषेधः स्यादित्यलम् । भूयादिति । इहार्धधातुकत्वाद् 'लिङः सलोप-' इत्यस्याप्रवृत्तेः 'स्कोः-' इति सलोप इत्युक्तं न विस्मर्तव्यम् । न चैवमपि संयोगादिलोपस्यासिद्धत्वाद्धल्ङ्यादिलोपः स्यादिति वाच्यम्, सुटि यासुटि च सति ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावादित्यलम् । भूयासुरिति । आशिषि लिङस्तसस्तामादेशे आर्धधातुकत्वात् शबभावे यासुडागमे अतः परत्वाभावादियादेशाभावे सुटि झल्परसंयोगादित्वेन यासुटः सकारस्य लोपो गुणनिषेधश्च । भूयासुरिति । झेर्जुसि यासुडागमे गुणनिषेधे रूपम् । भूया इति । आशीर्लिङः सिपि 'इतश्च' इतीकारलोपः, यासुटः 'स्कोः' इति सलोपः, गुणनिषेधः, रुत्वविसर्गौ । भूयास्तमिति । थसस्तमादेशे यासुटि गुणनिषेधः । एवं थस्य तादेशेऽपि भूयास्तेति रूपम् । भूयासमिति । मिपः अमादेशे यासुटि गुणनिषेधः । भूयास्वेति । लिङो वस् 'नित्यं ङितः' इति सकारलोपः । यासुट् । गुणनिषेधः । एवं मसि भूयास्मेति रूपम् । इत्याशीर्लिङ्प्रक्रिया । लुङ् । 'धातोः' इति 'भूते' इति चाधिकृतम् । तदाह भूतार्थवृत्तेरिति । माङि लुङ् । माङि प्रयुज्यमाने धातोर्लुङ् स्यादित्यर्थः । ननु 'लुङ्' इत्युदाहृतसूत्रेणैव सिद्धेः किमर्थमिदमित्यत आह सर्वलकारापवाद इति । मास्त्वित्यादौ तु मा इत्यव्ययान्तरं प्रतिषेधार्थकमित्याहुः । 'आङ्माङोश्च' इति सूत्रभाष्ये तु ङितो माशब्दस्य निर्देशात् प्रमाच्छन्द इत्यत्र तुक् न भवतीत्युक्तम् । माशब्दस्याव्ययान्तरस्य सत्त्वे तु तदेवोदाह्रियेत । मास्त्वित्यत्र तु अस्त्विति विभक्तिप्रतिरूपकमव्ययमित्यन्ये । स्मोत्तरे लङ् च । चकाराद् 'माङि

---

क्लेश इत्याह इग्लक्षण इति । इक इत्येवं विहिते इत्यर्थः । इग्लक्षणे किम्, लैगवायनः । लिगोर्नडादित्वात्फक् । इहादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेऽपि न निषेधः । न चेक इत्युक्तेऽपि 'क्ङिति च' इत्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम्, नाडायनादौ तस्य चरितार्थत्वात् । भूयादिति । इह 'स्कोः-' इति लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोपः प्राप्तः पदान्तसंयोगादिलोपेनानवकाशेन बाध्यते । नन्वेवमपि संयोगादिलोपस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वाद्धल्ङ्यादिलोपः स्यात्, पदान्ते संयोगादिलोपस्य भृट् भृडित्यादौ सावकाशत्वादिति चेत् । अत्राहुः—सुड्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनापृक्तत्वाभावात् हलन्तायाः प्रकृतेः परत्वाभावाच्चोक्तदोषशङ्कैव नास्तीति । सर्वलकारापवाद इति । मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव न तु माङित्याहुः । च्लि लुङि । इकार उच्चारणार्थ इति

( ३-३-१७६ ) स्मोत्तरे माङि लङ् स्याल्लुङ् च । २२२१ च्लि लुङि । ( ३-१-४३ ) शवाद्यपवादः । २२२२ च्लेः सिच् । ( ३-१-४४ ) इचावितौ । २२२३ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । ( २-४-७७ ) एभ्यः सिचो लुक्स्यात् । गापाविहेणादेशपिवती गृह्येते । २२२४ भूसुवोस्तिङि । ( ७-३-८८ ) भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । २२२५ अस्तिसिचोऽपृक्ते । ( ७-३-९६ ) सिच् च अस् चेति समाहारद्वन्द्वः । सिच्छन्दस्य

---

लुङ्' इत्यनुकृष्यते । स्म इत्यव्ययम् उत्तरं यस्मादिति विग्रहः, तदाह **स्मोत्तरे माङीति** । अयमपि सर्वलकारापवादः । च्लि लुङि । च्लि इति लुप्तप्रथमाकम् । लुङि परे धातोः च्लिप्रत्ययः स्यादित्यर्थः । **शवाद्यपवाद इति** । आदिना श्यनादिविकरणसंग्रहः । **च्लेः सिच्** । **इचाविति** । चित्स्वरश्चित्त्वस्य प्रयोजनम् । इदित्त्वस्य तु अमंस्तेत्यत्र 'अनिदितां हल उपधायाः-' इत्युपधालोपस्याप्रवृत्तिः प्रयोजनम् । **गातिस्थाघु** । गाति स्था घु पा भू एषां द्वन्द्वात् पञ्चमीबहुवचनम् । परस्येति शेषः । सिच इति षष्ठी । गातीति शितपा निर्देशात् गाधातोर्ग्रहणम् । घु इत्यनेन 'दाधाध्वदाप्' इति घुसंज्ञकयोः दाधातोर्धाधातोश्च ग्रहणम् । 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इत्यस्माद्व्यवहितादपि लुगित्यनुवर्तते । 'जुहोत्यादिभ्यः श्लुः' इत्यव्यवहितमपि श्लुग्रहणं नानुवर्तते, व्याख्यानात्, तदाह **एभ्यः सिच इत्यादिना** । **गापाविहेति** । इह 'गातिस्था-' इति सूत्रे गातीत्यनेन पाग्रहणेन च 'इणो गा लुङि' इति लुग्विकरणस्येणो गादेशः, शब्विकरणः पिबादेशयोग्यः पाधातुश्च गृह्येते इत्यर्थः । गापोर्ग्रहणे इण्पिबत्योर्ग्रहणमिति भाष्यादिति भावः । तथा च लुङिस्तिबादेशे 'इतश्च' इति इकारलोपे शवपवादे च्लिप्रत्यये तस्य सिचि तस्य लुकि अडागमे अभूत् इति स्थिते पित्त्वाद् ङित्त्वाभावे 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते **भूसुवोस्तिङि** । 'मिदेर्गुणः' इत्यतो गुण इति 'नाभ्यस्तस्याचि पिति' इत्यतो नेति सार्वधातुक इति चानुवर्तते । तदाह **एतयोरिति** । भू सू इत्यनयोरित्यर्थः । इह 'षूङ् प्राणिगर्भविमोचने' इति लुग्विकरणस्यैव ग्रहणम् । न तु सुवतिसूयत्योः शविकरणश्यन्विकरणयोरपि, तत्र तिङो विकरणेन व्यवधानात् । अथ अभूत् इत्यत्र तकारस्येडागममाशङ्कितुमाह **अस्तिसिचोऽपृक्ते** । अस्तिश्च

---

मनोरमा । न च 'मन्त्रे-घस-' इति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यम्, 'गातिस्था-'इति सूत्रात्सिच इत्यनुवर्त्य सिच्स्थानिनः स्थान्यर्हस्य लस्य लुगिति व्याख्यायामतिप्रसङ्गाभावाद्विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्यानापाद्यतया च सिजनुवृत्तिं विनापि नातिप्रसङ्ग इत्याहुः । **शवाद्यपवाद इति** । आदिशब्दात्तत्तद्गणप्रयुक्तानां श्यन्नादीनां ग्रहणम् । **इचाविताविति** । तत्रेदित्त्वे प्रयोजनममंस्तेत्यत्र 'अनिदिताम्-' इत्युपधालोपाभावः । **गातिस्था** । इह व्यवहितोऽपि लुगनुवर्तते न तु श्लुः, व्याख्यानादित्याशयेनाह **लुगिति** । **गापाविति** । गातीति शितपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्यते, 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति परिभाषया

सौत्रं भत्वम् । अस्तीत्यव्ययेन कर्मधारयः । ततः पञ्चम्याः सौत्रो लुक् । विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तहल ईडागमः स्यात् । इति ईट् नेह, सिचो लुका

---

सिच्चेति समाहारद्वन्द्वात् पञ्चमी । 'ब्रुव ईट्' इत्यत ईडित्यनुवर्तते 'तस्मादित्युत्तरस्य' इति परिभाषया 'अस्तिसिचः–' इति पञ्चमीं अपृक्तस्येति षष्ठीं प्रकल्पयति । ततश्च अस्तेः सिचश्च परस्यापृक्तस्य ईडागमः स्यादिति प्राचीना व्याचक्षते । तथा सति लुङि अस्तेर्भूभावे अभूदिति न स्यात् । भूभावस्य स्थानिवत्त्वेन अस्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात् । तथा अगात् अस्थात् अपादित्यादावपि 'गातिस्था–' इति सिचो लुक्यपि स्थानिवत्त्वेन सिचः परत्वादीडागमः स्यात् । अतः प्रकारान्तरेण व्याचष्टे **सिच्च अस् चेत्यादिना** । ननु सिचस्शब्दे सिच्शब्दस्य पूर्वखण्डस्यान्तर्वर्तिविभक्त्या पदत्वात् 'चोः कुः' इति कुत्वप्रसङ्ग इत्यत आह **सिच्शब्दस्य सौत्रं भत्वमिति** । तथा च भत्वेन पदत्वस्य बाधान्न कुत्वमिति भावः । ननु सिचस्शब्दे अस् इत्यनेनैवास्तेर्लाभाद् अस्ति ग्रहणं किमर्थमित्यत आह **अस्तीत्यव्ययेन कर्मधारय इति** । अस्तीति विभक्तिप्रतिरूपकमव्ययं लुप्तसुब्विभक्तिकं विद्यमानार्थकम् । तेन सिचस्शब्दस्य कर्मधारय इत्यर्थः । तथा च अस्तिसिचस् इत्येकं पदमिति स्थितम् । **ततः पञ्चम्याः सौत्रो लुगिति** । 'सुपां सुलुक्—' इत्यनेनेति शेषः । तथा च अस्तिसिच इति पदाद् लब्धार्थमाह **विद्यमानात्सिचोऽस्तेश्च परस्येति** ।

---

पिबतिर्गृह्यते न तु पातिरित्यर्थः । **भूसूवोः** ।' षूङ् प्राणिगर्भविमोचने' । इत्यादादिकस्येह ग्रहणम्, सुवतिसूयत्योस्तु न ग्रहणम्,तिङो विकरणेन व्यवधानात् । **अस्तिसिचोऽपृक्ते** । अत्र प्राञ्चः–अस्तिश्च सिच्चेति समाहारद्वन्द्वे अस्तिसिच्, तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युः । तच्चिन्त्यम्, तत्र समासान्तस्यानित्यत्वाश्रयणे 'द्वन्द्वाच्चुदषहान्ताद्–' इति प्राप्तस्य टचः परिहारेऽपि 'समुद्राभ्राद्घः' इति निर्देशाद् 'अल्पाच्तरम्' इत्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थनेऽपि 'अस्तेर्भूः' इति भूभावस्य स्थानिवत्त्वेनास्तितया तत्रापृक्तस्य हल ईडागमस्य दुर्वारत्वात्, तथा गातिस्थाघुपाभूभ्यः सिचो लुक्यपि स्थानिवद्भावेन सिचः परत्वानपायादगादस्थादभूदित्यादावतिप्रसङ्गाच्च । तदेतद् ध्वनयन्व्याचष्टे **सिच्च अस् चेति** । **सौत्रं भत्वमिति** । तेनात्र कुत्वजश्त्वे न भवत इति भावः । **विद्यमानादिति** । सिचोऽस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः । भाष्यकारास्त्वाहुः—'अस्तिसिचोऽपृक्ते' इति द्विसकारकोऽयं निर्देश इति । अत्र माधवः–अस् स् इति समुदायस्याधातुतया 'इक्श्तिपौ धातुनिर्देशे' इति श्तिप् प्रत्ययो न स्यादिति । अत्र वदन्ति–द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तं तद्भ्रमसोक्तिमात्रम् । इत्थं हि भाष्याशयः–सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते न तु श्तिपः प्राक्, अत एव 'सिचोऽपृक्ते' इति द्विसकारकोऽयं निर्देश इत्युक्तं भाष्ये । अन्यथा अस्तीति निर्देशो द्विसकारक इत्येव ब्रूयात्, एवं च सान्तानस्तेः सान्तात्सिच इति चार्थो निर्बाध एव । द्वितयश्च सकारो लुप्यते 'संयोगान्तस्य पदान्तस्य' इति व्याख्यानात्, व्यपदेशिवद्भावेन पदान्तत्वाद् द्वितीयसकारस्य । न च संयोगान्तलोपस्यासिद्धत्वाद् 'अतो रोः–' इत्युत्वं दुर्लभमिति

लुप्तत्वात् । अभूत् । 'हलः' किम्—ऐधिषि । 'अपृक्तस्य' इति किम्—ऐधिष्ट । अभूताम् । २२२६ सिजभ्यस्तविदिभ्यश्च । ( ३–४–१०९ ) सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् स्यात् । इति प्राप्ते २२२७ आतः । ( ३—४—११० ) सिज्लुक्यादन्तादेव झेर्जुस् स्यात् । अभूवन् । अभूः अभूतम्

---

हल इति । 'इतो वृद्धिर्लुकि हलि' इत्यतोऽनुवृत्तस्य हलीत्यस्य षष्ठ्या विपरिणाम इति भावः । इतीट् नेहेति । अनेन सूत्रेण अभूत इत्यत्र ईडागमो नेत्यर्थः । कुत इत्यत आह सिचो लुका लुप्तत्वादिति । विद्यमानत्वविशेषणेन लुप्तात्सिचः परस्य नेति भावः । एवं च अगादित्यादावपि लुप्तात्सिचः परस्य, अस्तेर्लुङि कृतभूभावात्परस्य च नेत्युक्तप्रायम् । एधिषीति । एधधातोर्लुङि उत्तमपुरुषैकवचनम्, इट् । अत्र इकारस्य सिचः परत्वेपि हल्त्वाभावाद् ईडागमो नेति भावः । ऐधिष्टेति । एधधातोर्लुङि प्रथमपुरुषैकवचनम् । अत्र त इत्यस्य सिचः परत्वेपि एकाल्प्रत्ययत्वाभावेनापृक्ताभावाद् ईडागमो नेति भावः । अभूतामिति । लुङस्तसि तस्य तामादेशः, च्लिः सिच् । अट् । गुणनिषेधः । सिजभ्यस्तविदि । 'झेर्जुस्' इति सूत्रमवर्तते । 'नित्यं ङितः' इत्यतो ङित इति च तदाह सिचोभ्यस्तादित्यादिना । इति प्राप्त इति । लिङो झेर्जुसीति शेषः । आतः । 'झेर्जुस्' इति सूत्रमनुवर्तते । 'आतः सिज्लुगन्तादिति वक्तव्यम्' इति वार्तिकं भाष्ये पठितम् । ततश्च सिज्लुकि यदाकारान्तं तस्मात्परस्य झेर्जुसिति लभ्यते 'सिजभ्यस्त—' इति पूर्वसूत्रेणैव सिद्धे नियमार्थमिदम् । तदाह सिज्लुक्यादन्तादेवेति । अभूवन्निति ।

---

वाच्यम्, 'संयोगान्तलोपो रोरुत्वे' इति वार्तिकेनासिद्धत्वनिषेधात्, संयोगान्तं यत्पदमिति व्याख्याने तु नेह संयोगान्तलोपः, किंतु सकारद्वयस्यापि रुत्वे कृते 'अतो रोः-' इत्यनेनैक एवोकारो भविष्यति, विधेयविशेषणस्यैकत्वस्य पशुवेकत्ववद्विवक्षितत्वात् । न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे सति समीहितरूपसिद्धेरिति वाच्यम्, एकपदाश्रयत्वेनान्तरङ्गत्वाद् गुणे पश्चादवादेशप्रवृत्त्या 'अस्तिसिचोऽपृक्ते' इति रूपासिद्धेः, तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम् । अतएव विधेयगतैकत्वस्य विवक्षितत्वाद् 'एकः पूर्वपरयोः' इत्यत्रैकग्रहणं भाष्यादौ प्रत्याख्यातम् । नन्वति परे यो रुः स त्वतः परो न भवति, अतः परस्तु अतिपूर्वो न भवतीति रुद्वयस्थाने कथमुकारः स्यात् । मैवम्, 'रोः' इति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च सम्भवात् । न चैवमपि परत्वाद् 'हशि च' इति प्रथमस्यैव रोरुः स्यादिति वाच्यम्, रुत्वस्यासिद्धतया हश्परत्वाभावात् । न चाश्रयासिद्धत्वमिति वाच्यम्, स्थान्यंशे तथात्वेऽपि निमित्तभूतहशंशे तदसंभवात् । यद्यपि रुत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यायां नायं क्लेशस्तथापि रुत्वविधौ पदस्येत्यनुवर्तमानादेकपदान्तत्वं न संभवति, द्वितीयसकारस्य पृथक्पदत्वादित्याहुः । अपृक्तहल इति । अपृक्तसार्वधातुकस्येति प्राचोक्तंत्वयुक्तम् । ऐधिषि इत्यादावतिव्याप्तेः सार्वधातुकग्रहणव्यावर्त्यालाभाच्च । आतः । सिज्ग्रहणमनुवर्तते 'झेर्जुस्' इति च । सिचः आकाराच्च परस्य झेर्जुस् । तत्र प्रत्ययलक्षणेन सिचः परत्वमाकारात् श्रुत्या । एवं स्थिते फलितमाह

अभूत । अभूवम् अभूव अभूम । **२२२८ न माङ्योगे ।** ( ६—४—७४ ) अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् भूद्वा । **२२२९ लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।** ( ३—३—१३९ ) हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे लृङ् स्यात्क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम्

---

झिः, च्लिः, सिच्, लुक्, अट्, झोऽन्तः 'इतश्च' इति इकारलोपः । तकारस्य संयोगान्तलोपः । 'भुवो वुग्लुङ्लिटोः' इति वुक् । सिज्लुकि आतः परस्यैवेति नियमात् 'सिजभ्यस्त–' इति न जुसिति भावः । **अभूरिति** । सिप्, च्लिः, सिच्, लुक्, अट्, इकारलोपो रुत्वविसर्गौ । **अभूतमिति** । थसस्तम् च्लिः, सिच् लुक् अट्, गुणनिषेधः । एवं थस्य तादेशे अभूतेति रूपम् । **अभूवमिति** । मिप्, अम्, च्लिः, सिच्, लुक्, वुक् । **अभूवेति** । वस्, च्लिः, सिच्, लुक्, अट्, 'नित्यं ङितः' इति सकारलोपो गुणनिषेधः । एवं मसि अभूमेति रूपम् । अथ माङि लुङि विशेषमाह **न माङ्योगे** । शेषपूरणेन सूत्रं व्याचष्टे **अडाटौ न स्त इति** । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यतः 'आडजादीनाम्' इत्यतश्च तदनुवृत्तेरिति भावः । **मा भवान् भूदिति** । मा भूदित्यत्र अडागमे सति असति च विशेषाभावाद् भवत्पदस्य मध्येप्रयोगः । अथ 'स्मोत्तरे लङ् च' इत्यस्य उदाहरति **मा स्म भवद् भूद्वेति** । एवं बहुवचने मा स्म भवन् मा स्म भूवन्निति चोदाहरणं बोध्यम् । इति लुङ्प्रक्रिया । **लिङ्निमित्ते** । **हेतुहेतुमद्भावादिति** । 'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ, इत्यादि लिङ्निमित्तं लकारार्थप्रक्रियायां स्पष्टीभविष्यति । **भविष्यत्यर्थ इति** । 'भविष्यति मर्यादावचने' इत्यतः तदनुवृत्तेरिति भावः । क्रियातिपत्तिपदं व्याचष्टे **क्रियाया अनिष्पत्ताविति** । सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् इत्युदाहरणं बोध्यम् । **अभविष्यदिति** । लृङ्, तिप्, 'इतश्च' इतीकारलोपः । 'स्यतासी लृलुटोः' इति शबपवादः स्यप्रत्ययः । अट्, वलादिलक्षण इट् । गुणावादेशौ । षत्वम् । **अभविष्यतामिति** । तसस्तामादेशः । स्यः, अट्, इट्, गुणावादेशौ षत्वम् । **अभविष्यन्निति** । झिः, स्यः, अट्, इट्, गुणावादेशौ । 'झोऽन्तः' इति झेरन्तादेशः 'इतश्च' इतीकारलोपः । तकारस्य संयोगान्तलोपः । षत्वम् । **अभविष्य इति** । सिप् स्यः, अट्, इट्, गुणः, अवादेशः, 'इतश्च' इतीकार-

---

**सिज्लुकीति** । 'गातिस्था-' इति सूत्रेणेत्यर्थः । 'सिजभ्यस्त-' इति पूर्वसूत्रेणैवादान्तादपि झेः जुसि सिद्धे नियमार्थोऽयमित्याह **आदन्तादेवेति** । **हेतुहेतुमद्भावादिति** । अत्र केचिद् आदिशब्देनाशंसावचनं गृह्यत इति व्याख्याय आशंसावचनं लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति लृङ्, गुरुश्चेदायास्यत् आशंसे अहमध्येष्ये इत्युदाहरन्ति । अन्ये तु-'भविष्यति मर्यादा'-इत्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ् विहितस्तन्निमित्त एव क्रियातिपत्तौ लृङ् भवति नान्यत्रेत्याहुः । **लिङ्निमित्तमिति** । 'हेतुहेतुमतोर्लिङ्', 'इच्छार्थेषु लिङ्लोटौ' इत्यादिलकारार्थप्रक्रियायां स्फुटीभविष्यति । **अनिष्पत्ताविति** । सुवृष्टिश्चेदभवि-

अभविष्याव अभविष्याम। २२३० ते प्राग्धातोः। (१-४-८०) ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः। २२३१ आनि लोट् (८-४-१६) उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि। 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' दुःस्थितिः। दुर्भवानि। 'अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्'। अन्तर्धा[illegible]र्धिः। अन्तर्भवाणि। २२३२ शेषे विभाषाऽकखादावषान्त उपदेशे। (८-४-१८) उपदेशे

---

लोपः, षत्वम्, रुत्वविसर्गौ। अभविष्यतमिति। थसः तमादेशः, स्यः, अट्, इट्, गुणावौ, षत्वम्। एवं थस्य तादेशादि पूर्ववत्। अभविष्यमिति। मिपः अम्, स्यः, अट् इट्, गुणावौ पूर्वरूपम्, षत्वम्। अभविष्यावेति। वस्, स्यः, अट्, इट्, 'नित्यं ङितः', इति सकारलोपः। अतो दीर्घः। षत्वम्। एवं मसि अभविष्यामेति रूपम्। इति लृङ्प्रक्रिया। अथ प्रसङ्गादाह ते प्राग्धातोः। त इत्यस्य विवरणम् गत्युपसर्गसंज्ञा इति। 'उपसर्गाः क्रियायोगे' 'गतिश्च' इति प्रकृतत्वादिति भावः। प्रागेवेति। न परतो नापि व्यवहिता इत्यर्थः। इह धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गाः स्युरिति संज्ञानियमपक्षोऽपि भाष्ये स्थितः। आनि लोट्। लोडिति आनीति च लुप्तषष्ठीकं पदम्। 'रषाभ्यां नो णः' इत्यनुवर्तते। 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च। तदाह उपसर्गस्थान्निमित्तादिति। रेफषकारात्मकादित्यर्थः। असमानपदत्वार्थ आरम्भः। 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति सूत्रं णत्वप्रकरणे सर्वत्र भवतीति भाष्यम्। दुरःषत्वेति। षत्वणत्वयोः कर्तव्ययोः दुर उपसर्गत्वप्रतिषेध इत्यर्थः। दुःस्थितिरिति। अत्र 'उपसर्गात्सुनोति—' इति षत्वं न भवति। दुर्भवानीति। अत्र 'आनि लोट्' इति णत्वं न भवति। अन्तःशब्दस्येति। अङ्विधौ किविधौ णत्वे च कर्तव्ये अन्तर् इत्यविकारे धाधातोः 'आतश्चोपसर्गे' इत्यङ्। टाप्। अन्तर्धिरिति। 'उपसर्गे घोः किः'। अन्तर्भवाणीति। 'आनि लोट्' इति णत्वम्। शेषे विभाषा। अकखादाविति च्छेदः। 'नेर्गदनद-' इति पूर्वसूत्रोक्तधातुभ्योऽन्यः शेषः। तदाह

---

ष्यत्तदा सुभिक्षमभविष्यदिति तत्रैवोदाहरिष्यति। प्रागेवेति। न परतः, नापि व्यवहिता इत्यर्थः। अतएव 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रितम्। आनि लोट्। नि लोडित्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुम्। तेन 'सागरं तर्तुकामस्य जप्त्वा स्तोत्रम्' इत्यादि सिध्यति। लोड्ग्रहणं स्पष्टप्रतिपत्त्यर्थम्। न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्यनेन नित्यं णत्वं स्यादिति वाच्यम्, उपसर्गग्रहणादर्थवद्ग्रहणाच्चास्याप्रवृत्तेः। 'प्रातिपदिकान्त—' इति वैकल्पिकत्वं लिप्यत एव। दुरः षत्वेति। 'दुरः परस्य णत्वं नेति केचित्' इति प्राचोक्तं त्वयुक्तम्। एवं हि सिद्धान्ते। णत्वं स्यात् तच्चाकरविरुद्धमिति भावः। अन्तर्वेति। 'आतश्चोपसर्गे' इत्यङ् टाप्। अन्तर्धिरिति। 'उपसर्गे घोः किः' श्च्छन्दस्याङ्विधावुपसर्गत्वमुपसंख्यातं,तत्तु प्रकृतानुपयोगादुपेक्षितम्। भिदादिपाठेन'प्रज्ञाश्रद्धा'

कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा स्यात् । प्रणिभवति, प्रनिभवति । इहोपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥' इति ।

सत्ताद्यर्थनिर्देशश्चोपलक्षणम् । यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति पराभवति संभवति अनुभवति अभिभवति उद्भवति परिभवतीत्यादौ विलक्षणार्थावगतेः उक्तं च—

---

गदनदादेरन्यस्मिन्निति । ननु णत्वप्रकरणं संहिताधिकारस्थम् । ततश्चाविवक्षितायां संहितायाम् उपसर्गात्परत्वाभावाद् णत्वाभावः । विवक्षितायां तु णत्वमिति विकल्पसिद्धेः किमिह विभाषाग्रहणेनेत्यत आह इहोपसर्गाणामिति । उक्तमिति । हरिणेति शेषः । अत्र एकपद इत्यनेन अखण्डं पदं विवक्षितम्, 'नित्या समासे' इति लिङ्गात् । अखण्डत्वं च पदभिन्नोत्तरखण्डकत्वम् । अन्यथा राजीयतीत्यादौ 'अतो गुणे' इति शपा पररूपम् एकादेशः पक्षे न स्यात् । अर्थनिर्देशश्चेति । धातुपाठे 'भू सत्तायाम्' इत्याद्यर्थनिर्देश इत्यर्थः । उपलक्षणमिति । प्रदर्शनमात्रमित्यर्थः । नन्वर्थान्तरपरिसंख्या कुतो न स्यादित्यत आह यागादिति । न च यागात् स्वर्गो भवतीत्यादौ उत्पत्त्यादौ लक्षणा कुतो न स्यादितिवाच्यम्, प्रयोगप्राचुर्यसत्त्वात् । पाणिनिर्हि धातुपाठे धातून् कांश्चिदर्थरहितान् पठतीति 'चुट्ट' इति सूत्रभाष्ये स्थितम् । न चातिप्रसङ्गः शङ्क्यः, अनेकार्था अपि धातवो भवन्तीति भाष्ये अपिशब्देन प्रयोगानुसारित्वापत्तेः । सर्वेषु धातुष्वर्थनिर्देशस्त्वाधुनिकः । एवं च 'सेधतेर्गतौ' इति सूत्रे गतावित्यनुपादानात् 'षिध गत्याम्' इत्यर्थनिर्देशः अपाणिनीय एवेति दिक् । ननु भूधातोः केवलस्योत्पत्त्याद्यर्थकत्वे उद्भवतीत्यादौ उपसर्गा व्यर्था इत्यत आह उपसर्गास्त्विति । उपसर्गं विनापि भूधातोरुत्पत्त्याद्यर्थप्रतीतेः । उद्भवतीत्यादौ प्रयु-

---

इति निपातनेन वा गतार्थत्वाच्च । शेषे विभाषा । 'नेर्गदनद–' इति सूत्रोक्तापेक्षया शेष इत्याह गदनदादेरन्यस्मिन्निति । उपदेशे किम्, प्रनिचकार प्रनिचखादेत्यत्रापि निषेधो यथा स्यात् । अषान्तेति किम्, प्रनिपिनष्टि । उपदेशग्रहणात् प्रनिपेक्ष्यति । 'चक्षिङः ख्याञ्' प्रनिचक्शे इत्यत्रापि निषेधः । शेषग्रहणं स्पष्टार्थम् । णत्वशास्त्रे संहितायामित्यधिकारात् संहितायामविवक्षितायां णत्वाभावः, संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह इहोपसर्गाणामित्यादि । एकपद इत्यनेनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम् । वाक्ये त्विति । सा संहिता विवक्षाधीना न त्वत्र नित्येत्यर्थः । उपलक्षणमिति । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र 'कुर्द खुर्द गुर्द गुद क्रीडायामेव' इत्येवकारो ज्ञापकः । 'सेधतेर्गतौ' इति सूत्रे गतावित्येतदपि 'षिध गत्याम्' इत्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेति दिक् । उत्पद्यत इत्याद्यर्थादिति । एवं च उपसर्गं विनाप्युत्पत्त्यर्थप्रतीतेरुद्भवतीत्यादौ प्रयुज्यमानो-

'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥' इति ।

एध २ वृद्धौ । कत्थन्ताः षट्त्रिंशदनुदात्तेतः । २२३३ टित आत्मनेपदानां टेरे । ( ३—४—७९ ) टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते । २२३४ सार्वधातुकमपित् । ( १–२—४ ) अपित्सार्वधातुकं ङिद्वत्स्यात् । २२३५ आतो ङितः । ( ७–२–८१ ) अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते एधन्ते । २२३६ थासः से । ( ३—४—८० ) टितो लस्य थासः से

---

ज्यमाना अप्युपसर्गा द्योतका एव, न तु वाचका इति भावः । द्योतकत्वं वा तेषां किमर्थं स्वीकार्यमित्यत आह **प्रभवतीत्यादि** । प्रभवः प्रकाश उत्पत्तिः शक्तिर्वा । पराभवः पराजयः । सम्भवः सम्भावना । अनुभव उपभोगः । अभिभवो हिंसा । उद्भव उत्पत्तिः । परिभवः तिरस्कारः । **उक्तं चेति** । हरिणेति शेषः । प्रहारः कशाद्याघातः । आहारो भक्षणम् । संहारो वधः । विहारः क्रीडा । परिहारः परित्यागः । इति भूधातुप्रक्रिया । **एध वृद्धाविति** । जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यतीति षड् भावविकाराः । तत्र चतुर्थावस्था वृद्धिः उपचयः । **कत्थन्ता इति** । 'कत्थ श्लाघायाम्' इत्यन्ता इत्यर्थः । **अनुदात्तेत इति** । ततश्च एतेभ्य आत्मनेपदमेवेति भावः । तत्र एध् इत्यस्मात् कर्तरि लटि तस्यात्मनेपदप्रथमपुरुषैकवचने तादेशे शपि एध त इति स्थिते **टित आत्म** । 'टेः' 'ए' इति च्छेदः । लस्येत्यधिकृतम् । तदाह **टितो लस्येति** । आदेशानामिति शेषः । अत्रात्मनेपदशब्देन तङेव गृह्यते नत्वानोऽपि । तेन पचमानो यजमान इत्यादावेत्वं नेति भाष्ये स्पष्टम् । **एधत इति** । अत्र तकारादकारस्य व्यपदेशिवद्भावेनान्त्यादित्वे टित्वादेत्वम् । अथ लटः प्रथमपुरुषद्विवचने आतामित्यादेशे 'टित आत्मनेपदानाम्–' इति आम एत्वे शपि एध आते इति स्थिते ङित्कार्यं वक्ष्यन् ङित्त्वमाह **सार्वधातुकमपित्** । 'गाङ्कुटादिभ्यः–' इत्यतो ङिदित्यनुवर्तते । अङितो ङित्त्वं वास्तवं न संभवतीति ङिद्वदिति लभ्यते । तदाह **ङिद्वदिति** । **आतो ङितः** । ङित इत्यवयवषष्ठी । 'अतो येयः' इत्यस्माद् अत इति पञ्चम्यन्तम्, इय इति प्रथमान्तं चानुवर्तते । यकारादकार उच्चारणार्थः । तदाह **अतः परस्येति** । ङितामित्यनन्तरं अवयवस्येति शेषः । **एधेते इति** । एध आते इति स्थिते, आकारस्य इय्, आद् गुणः, 'लोपो व्योर्वलि' इति यकारलोप इति भावः । **एधन्त इति** । लटः प्रथमपुरुषबहुवचने झादेशे परे शपि झकारस्य अन्तादेशे पररूपे टेरेत्वमिति भावः । अथ लटो मध्यमपुरुषैकवचने थासादेशे कृते टित आत्मनेपदानामित्येत्वे प्राप्ते । **थासः से** । 'से' इति लुप्तप्रथमाकम् । **एधसे**

---

द्योतक एव न तु वाचक इति भावः । **उपसर्गेण धात्वर्थ इति** । अत एवाऽमरेणाप्युक्तम्—'स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा विलापः परिदेवनम् । विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । सुप्रलापः सुवचनमपलापस्तु निह्नवः' इति । **टित आत्मने** । ननु शानचोऽपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इत्यत्र टेरेत्वेन भवितव्यमिति चेत् । अत्राहुः—

स्यात् । एधसे एधेथे एधध्वे । 'अतो गुणे' ( सू १९१ ) । एधे एधावहे एधामहे । २२३७ इजादेश्च गुरुमतोऽनृच्छः । ( ३—१—३६ ) इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम्स्याल्लिटि । 'आमो मकारस्य नेत्त्वम्' । आस्कासोराम्विधानाज्ज्ञापकात् । २२३८ आमः । ( २—४—८१ ) आमः परस्य लेर्लुक्स्यात् । २२३९ कृञ्चानुप्रयुज्यते लिटि । ( ३—१—४० ) आमन्ताल्लिट्-

इति । थासि शपि थासः सेभावः । एधेथे इति । लटो मध्यमपुरुषद्विवचने आथामादेशे शपि आम एत्वे आकारस्य इयादेशे गुणे यलोप इति भावः । एधध्व इति । लटो मध्यमपुरुषवहुवचने ध्वमादेशे शपि टेरेत्वे रूपम् । लट उत्तमपुरुषैकवचने इडादेशे एत्वे शपि एध ए इति स्थिते प्रक्रियां दर्शयति अतो गुण इति । 'अतो गुणे' इति पररूपे वृद्ध्यपवादे कृते सति एध इति रूपमित्यर्थः । एधावह इति । लट उत्तमपुरुषद्विवचने वहि इत्यादेशे टेरेत्वे शपि अतो दीर्घः । एधामह इति । लट उत्तमपुरुषवहुवचने महि इत्यादेशे टेरेत्वे शपि अतो दीर्घः । महिङिति ङकारस्तङ्प्रत्याहारार्थः । इति लट्प्रक्रिया । इजादेश्च । नञः ऋच्छ इत्यनेन समासे अनृच्छ इत्यस्मात् पञ्चमी । 'धातोरेकाचः—' इत्यतो धातोरित्यनुवर्तते । 'कास्प्रत्ययात्—' इत्यत आमिति लिटीति चानुवर्तते । तदाह इजादिरित्यादिना । आस्कासोरिति । 'कास्प्रत्ययादाममन्त्रे लिटि' इति 'दयायासश्च' इति च, कास्धातोः, आस्धातोश्च लिटि आम् विहितः । तत्र मकारस्य इत्संज्ञकत्वे 'मिदचोऽन्त्यात् परः' इति आकारादाकारान्तरं स्यात् । ततश्च सवर्णदीर्घे कृते कास् आस् इत्येवं भवतीति आम्विधिरनर्थकः स्यात् । अत आमो मकारस्य नेत्संज्ञेति विज्ञायत इत्यर्थः । तथा च एध् आम् ल इति स्थिते आमः । 'मन्त्रे घसह्वर—' इत्यतो लेरिति, 'ण्यक्षत्रियार्षञितः—' इत्यतो लुगिति चानुवर्तते, तदाह आमः परस्य लेरिति । अत्रेदमवधेयम् । 'कृन्मेजन्तः' इत्यत्र कृद्यो मान्तस्तदन्तमव्ययमिति व्याख्याने एधामित्यादि नाव्ययम्, लिट एव कृत्त्वात् तस्य च मान्तत्वाभावात् । तथा च प्रत्ययलक्षणेन कृदन्तत्वात् प्रातिपदिकत्वे स्वाद्युत्पत्तौ 'आमः' इति लुक् । लेरिति तु नानुवर्तते । मान्तं कृदन्तमव्ययमिति व्याख्याने तु प्रत्ययलक्षणेन कृदन्तत्वाद् एधामिति मान्तमव्ययम् । ततः सुबुत्पत्तौ

प्रकृतेस्तिवादिभिरात्मनेपदानां विशेषणान्न दोषः । एवं च 'टितस्तङां टेरे' इत्येव वक्तुमुचितमिति । थासः से । एकारोच्चारणं ज्ञापनार्थमिति 'लिटस्तझयोः—' इत्यत्र स्फुटीभविष्यति । अतो गुण इति । इट एत्वे कृते आद्गुणं वाधित्वा वृद्धौ प्राप्तायामनेन पररूपमित्यर्थः । इजादेश्च । 'धातोरेकाचः—' इत्यतो धातुग्रहणं 'कास्प्रत्ययात्—' इत्यत आम् लिटीति चानुवर्तत इत्याह इजादिर्यो धातुरित्यादि । गुरुमान् किम्, इयेष । ऋच्छेस्त्वा नर्च्छ । आमः । 'लक्षणप्रतिपदोक्त—' परिभाषया, 'प्रत्ययग्रहण—' परिभाषया च नेह—आम, श्यामतुः । परस्य लेर्लुगिति । 'मन्त्रे घस—' इति सूत्राल्लेरित्यनुवर्त्य 'लेर्लुक्' इति काशिकादौ व्याख्यातं तदत्रोपेक्षितं व्यावर्त्यालाभात् । तिङाद्यपवादत्वाल्लावस्थायामेवायं लुक् । तेन आमन्तस्यातिङन्तत्वाद्देवदत्तादिपदात्परत्वेऽपि 'तिङ्ङतिङः' इति न निघातः । आमन्तात्परस्य

पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इति सूत्रे कृञ्ग्रहणसामर्थ्यादनुप्रयोगोऽन्यस्यापीति ज्ञायते । तेन 'कृभ्वस्तियोगे-' ( सू २११७ ) इत्यतः 'कृञो द्वितीय-'( सू २१२९ ) इति ञकारेण प्रत्याहाराश्रयणात्कृभ्वस्तिलाभः । तेषां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोरभेदेनान्वयः । सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते ।

'अव्ययादाप्सुपः' इति लुक् । 'आमः' इत्यनेन तु परिशेषाल्लेरेव लुक्सिद्धेर्लेरिति नोनुवर्तनीयम् । आमः परस्य लेरिति विवरणवाक्ये तु लेरिति स्पष्टार्थमेव । एवं च एधामित्यव्ययं न वेति विचारद्वयम्, उभयथापि सुबन्तं पदमिति भाष्ये स्पष्टम् । कृञ्चा० । 'कास्प्रत्ययादाम्–' इत्यत आमित्यनुवृत्तं पञ्चम्या विपरिणम्यते । प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । लिटि परे यः कृञ् सः अनुप्रयुज्यत इत्यन्वयः । फलितमाह **आमन्ताल्लिट्परा इति** । लिट्शिरस्का इत्यर्थः । **कृभ्वस्तय इति** । कृञित्यनेन कृभ्वस्तीनां ग्रहणमिति भावः । **अनुप्रयुज्यन्त इति** । प्रशब्दादनुशब्दाच्चाव्यवहिताः पश्चात्प्रयुज्यन्त इत्यर्थः । विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकाद् भाष्याच्च । एवं च 'तं पातयां प्रथममास पपात पश्चात्' 'प्रभ्रंशयां यो नहुषं चकार' इत्यादिप्रयोगाः प्रामादिका एव । धातोराम् स्यात्, कृञ्चानुप्रयुज्यत इत्युक्तसमुच्चयार्थश्चकारः । ननु कृञ एवानुप्रयोगश्रवणात् कथं भ्वस्त्योरप्यनुप्रयोग इत्यत आह **आम्प्रत्ययवदित्यादिना** । 'कृञ्चानुप्रयुज्यते–' इत्यत्र कृञ एकस्यैवानुप्रयोगविधौ सति 'आम्प्रत्ययवत्–' इति सूत्रे अनुप्रयुज्यमानस्येत्यस्य कृञ इति विशेषणं व्यर्थं स्यात् । धात्वन्तरस्यानुप्रयोगाप्रसक्तेः । ततश्च कृञ इति विशेषणादन्यस्यापि अनुप्रयोगो विज्ञायत इत्यर्थः । ननु कृञोऽन्यस्याप्यनुप्रयोगो विज्ञायताम्, भ्वस्त्योरपीत्येव कुत आयातमित्यत आह **तेनेति** । कृञ्ग्रहणेनेत्यर्थः । **प्रत्याहाराश्रयणादिति** । एतच्च भाष्ये स्पष्टम् । नन्वनुप्रयुज्यमानानां कृभ्वस्तीनां आम्प्रकृतिभूतानां च कथमन्वय इत्यत आह **तेषामित्यारभ्या-**

निघातश्च तिङन्तस्येत्यर्थः । न चातिङन्तत्वे पदत्वाभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यम्, लिटः कृत्त्वात्प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् । **कृञ्चानुप्रयुज्यते** । कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्' । 'प्रभ्रंशयां यो नहुषं चकार' इति । प्रमाद एवायम् । न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात् पश्चात्प्रयोगो व्यवहितोऽपि न दुष्यतीति वाच्यम्,विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं चेति वार्तिकविरोधात् । **अन्यस्यापीति** । यदीह कृञ्शब्देन एक एव धातुर्गृह्येत तदा धात्वन्तरस्य प्राप्त्यभावाद् 'आम्प्रत्ययवत्–' इति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः । न चात्र 'कृञ् च–' इति चकारेणैवानुप्रयोगोऽन्यस्यापीति ज्ञायत इति शङ्क्यम्, धातोराम् स्यात्, अनुप्रयुज्यते च लिट्परः कृञ् इत्यर्थसमर्पकतया तस्योपक्षीणत्वात् । **अभेदान्वय इति** । सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः । एवं च एधांचक्रे एधांबभूव इत्यादौ

कृञस्तु क्रियाफले परगामिनि परस्मैपदे प्राप्ते । २२४० आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । ( १—३—६३ ) आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् । इह पूर्ववद् इत्यनुवर्त्य

---

भेदेनान्वय इत्यन्तेन । सामान्यविशेषयोरभेदान्वयस्य न्याय्यत्वादिति भावः । कृञ इव भ्वस्त्योरपि क्रियासामान्यवाचित्वाद् धातूनामनेकार्थत्वादिति ज्ञेयम् । ननु 'कृभ्वस्तियोगे' इत्यस्य 'कृञो द्वितीय—' इत्यस्य च सूत्रस्य मध्ये 'अभिविधौ संपदा च' इति पठितम् । एवं च कृञ्प्रत्याहारे संपदोऽपि कुतो न ग्रहणमित्यत आह संपदिस्त्विति । अनन्वितार्थत्वादिति । सिद्धस्य वस्तुनो रूपान्तरापत्तिः सम्पदेरर्थः । एधादिधातोस्त्वाम्प्रकृतिभूतस्य वृद्ध्यादिरर्थः । तयोरुभयोरपि विशेषरूपत्वेन सामान्यविशेषभावेन अभेदान्वयासंभवादित्यर्थः । अत एव 'कृभ्वस्तीनां ग्रहणम्' इति भाष्यं संगच्छत इति भावः । ननु 'आम्प्रत्ययवत्—' इति कृञ आत्मनेपदविधायकसूत्रं वक्ष्यमाणं व्यर्थम् । 'स्वरितञितः' इत्येव तत्सिद्धेरित्याशङ्क्याह कृञस्त्विति । आम्प्रत्ययवत्कृञः । 'अनुदात्तङितः—' इत्यत आत्मनेपदमित्यनुवर्तते । तत्राम्प्रत्ययस्यात्मनेपदाभावादाह आम् प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरिति । तस्य अन्यपदार्थस्य गुणा विशेषणानि वर्तिपदार्थरूपाणि तेषां संविज्ञानं क्रियान्वयितया ज्ञानं न विद्यते यस्य बहुव्रीहेः सः अतद्गुणसंविज्ञानः । यथा चित्रगुमानयेति । अत्र हि पुरुषस्यैवान्यपदार्थस्य क्रियान्वयः । न तु चित्राणां गवामपि । तथा च प्रकृते आम्प्रत्ययविनिर्मुक्त आम्प्रत्ययप्रकृतिभूत एधादिधातुरेव आम्प्रत्ययशब्देन लभ्यत इति भावः । आम्प्रत्ययवदिति तृतीयान्ताद्वतिः । अनुप्रयुज्यत इत्यनुप्रयोगः । कर्मणि घञ् । पञ्चम्यर्थे षष्ठी, तदाह आम्प्रकृत्येत्यादिना । आम्प्रकृतेर्भवितुं योग्यं यदात्मनेपदं तद् अनुप्रयुज्यमानात् कृञोऽपि स्यादिति यावत् । अत्र न प्रत्याहारग्रहणम् । 'अनुप्रयोगस्येत्येव सिद्धे कृञ्ग्रहणादिह न प्रत्याहारग्रहणम्'

---

एककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत् । अत्राहुः—यदाहि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते घटं चक्रे राज्यं चकारेति तदा नियमेन सकर्मकत्वम् । यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते जुहवांचकारेत्यादौ तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम् । अतएवानुप्रयुज्यमानाद्भवतेः सकर्मकत्वात्कर्मणि लिट् । तथा च माघः—'तस्यातपत्रं बिभरांबभूवे' इति, श्रीहर्षश्च 'तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे' इति । अत्रेदमवधेयम्—जुहाव जुहवांचकार जुहवांबभूव इत्यादौ केवलो होमो गम्यते इतरत्र तु होमरूपा क्रियेति बोधः । फले तु न कश्चिद्विशेषः, घटमानय द्रव्यंघटमानयेत्यत्र यथा । एवं चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति । अनन्वितेति । संपद्यर्थस्याम्प्रकृत्यर्थस्य चाभेदान्वयो न संभवति, उभयोरपि विशेषरूपत्वादिति भावः । आम्प्रत्ययवत् । आम्प्रत्ययान्तस्यात्मनेपदाभावादाह अतद्गुण

वाक्यभेदेन संबध्यते । पूर्ववदेवात्मनेपदं न तु तद्विपरीतमिति । तेन कर्तृगेऽपि फले इन्दांचकारेत्यादौ न तङ् । २२४१ लिटस्तझयोरेशिरेच् । ( ३—४—८१ ) लिडादेशयोस्तझयोः एश् इरेच् एतौ स्तः । एकारोच्चारणं ज्ञापकं 'तङादेशानां टेरेत्वं न' इति । तेन डारोरसां न । कृ ए इति स्थिते । २२४२ असंयोगाल्लिट्कित् । ( १—२—५ ) असंयोगात्परोऽपिल्लिट् कित्स्यात् । 'क्ङिति च' ( सू २२१७ )

---

इति भाष्यम् । परगामिन्यपि क्रियाफले कृञ्धातोरात्मनेपदार्थोऽयमारम्भः । इन्दांचकारेत्यादौ तु परगामिनि क्रियाफलेनानेनात्मनेपदम् । आम्प्रकृतेः 'इदि परमैश्वर्ये' इति धातोरात्मनेपदाभावाद् तस्य परस्मैपदित्वात् । एतदर्थमेव आम्प्रत्ययवदित्युपात्तम् । नन्विन्दांचकारेत्यादौ मास्त्वनेन सूत्रेण परगामिनि क्रियाफले आत्मनेपदम् । आत्मगामिनि तु क्रियाफले 'स्वरितञितः—' इत्यात्मनेपदं दुर्वारम् । अस्य सूत्रस्य एधांचक्र इत्यादौ परगामिनि क्रियाफले आत्मनेपदस्याप्राप्तस्य विधान एव समर्थतया आत्मगामिनि क्रियाफले 'स्वरितञितः । इति प्राप्तस्यात्मनेपदस्य निवारणे सामर्थ्याभावादित्यत आह इहेति । इह 'आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य' इति सूत्रे 'पूर्ववत् सनः' इति पूर्वसूत्रात् पूर्ववदित्यनुवर्त्य आम्प्रत्ययवत् कृञोऽनुप्रयोगस्येत्येकं वाक्यम्, पूर्ववत् कृञोऽनुप्रयोगस्येति अन्यद्वाक्यमिति वाक्यद्वयं संपाद्यम् । तत्र पूर्ववदिति तृतीयान्तद्वतिः । पूर्वेण पूर्वप्रयुक्तेन एधादिधातुना तुल्यमित्यर्थः । तत्र वाक्यद्वयस्य समानार्थकत्वे वैयर्थ्याद् द्वितीयं वाक्यं नियमार्थं संपद्यते । पूर्ववदेव आत्मनेपदं न तु तद्विपरीतमिति । एवं च पूर्ववाक्येन एधांचक्रे इत्यादौ कृञः परगामिन्यपि क्रियाफले आत्मनेपदविधिः, द्वितीयवाक्येन तु इन्दांचकारेत्यादौ कर्तृगामिनि क्रियाफले 'स्वरितञितः—' इत्यात्मनेपदस्य निवृत्तिः फलति, तदाह तेनेति । द्वितीयवाक्येनेत्यर्थः । न तङिति । न आत्मनेपदमित्यर्थः । एवं चानुप्रयुज्यमानात्कृञो लिटस्तङि प्रथमपुरुषैकवचने तादेशे एधान् कृ त इति स्थिते । लिटस्तझयोरेशि । ननु लिटस्तझयोरिशिरिजित्येवास्तु । आदेशयोरेकारोच्चारणं व्यर्थम्, 'टित आत्मनेपदानाम्—' इत्येतेनैव सिद्धेरित्यत आह एकारोच्चारणमिति । ज्ञापनस्य फलमाह तेन डारोरसां नेति । डा रौ रस् एषां लुडादेशभूतात्मनेपदादेशानां टेरेत्वं नेत्यर्थः । वस्तुतस्तु परत्वादेत्वे कृते पुनः प्रसङ्गविज्ञानेन डादिषु कृतेषु लक्ष्ये लक्षणस्येति न्यायाद् एत्वंनेति 'लुटः प्रथमस्य—' इति सूत्रभाष्ये स्पष्टम् । कृ ए इति स्थित इति । तकाराकारसंघातस्य एकारः शित्त्वात् सर्वादेश इति भावः । असंयोगाल्लिट् । अपिदिति । 'सार्वधातुकमपित्' इत्यतस्तदनुवृत्तेरिति भावः । 'सार्वधातुकमपित्' इति

---

इति । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानादिति । तृतीयान्ताद्वतिः । अनुप्रयोगस्येत्यत्र कर्मणि घञिति भावः । 'अनुदात्तङित—'इत्यतोऽनुवर्तनादाह आत्मनेपदं स्यादिति । एवमप्राप्तस्य विधानेऽपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह वाक्यभेदेनेति । अत्र च प्रमाणमाम्प्रत्ययवदिति वचनमेव । अन्यथा पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञ आनः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन 'आम्प्रत्ययवत्—' इत्यनेन । लिटस्तझयोः । एशिति शकारकरणमकारविशिष्ट-

इति निषेधात् 'सार्वधातुकार्धधातुकयोः' (सू २१६८) इति गुणो न । द्वित्वात्परत्वाद्यणि प्राप्ते । **२२४३ द्विर्वचनेऽचि** । (१—१—५९) द्वित्वनिमित्ते ऽचि परे अच आदेशो न स्याद् द्वित्वे कर्तव्ये । **२२४४ उरत्** । (७—४—६६)

ङित्त्वं तु नात्र प्रवर्तते । लिडादेशानामार्धधातुकत्वादिति बोध्यम् । कित्त्वस्य फलमाह **किङति चेति** । **द्वित्वादिति** । कृ ए इति स्थिते लिटि धातोरिति द्वित्वात् परत्वाद् 'इको यणचि' इति ऋकारस्य यणादेशे रेफे प्राप्ते सतीत्यर्थः । कृते तु यणि एकाच्त्वाभावाद् 'लिटि धातोः—' इति द्वित्वं न स्यादिति भावः । **द्विर्वचनेऽचि** । द्विरुच्यते येन परनिमित्तेन तद् द्विर्वचनं द्वित्वनिमित्तमिति यावत् । अचीत्यस्य विशेषणमिदम् । 'अचः परस्मिन्—' इत्यतः अच इति 'स्थानिवदादेशः—'इत्यत आदेश इति 'न पदान्त—' इत्यतो नेति चानुवर्तते । द्विर्वचन इत्यावर्तते । एवं च द्वित्वे कर्तव्ये सतीत्यपि लभ्यते, तदाह **द्वित्वनिमित्ते अचीत्यादिना** । द्वित्वे कर्तव्ये सतीत्युक्तेः कृते द्वित्वे चक्रे इत्यादौ यणादयो भवन्ति । अन्यथा तु न स्युः । द्वित्व-

तकारस्यादेशत्वाय । **असंयोगात्** । असंयोगादिति किम्,ममन्थे । अत्र नलोपो न । **द्विर्वचनेऽचि** । अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य तन्निमित्ते लक्षणा स्वीक्रियते । यद्वा उच्यत इति वचनम्, द्विर्वचनं यस्मिन्नचि तद् द्विर्वचनम् । अथवा द्विर्वचनमस्मिन्नस्तीत्यर्श-आद्यच्, तदेतदाह **द्वित्वनिमित्तेऽचीति** । इह 'अचः परस्मिन्—' इत्यतोऽच इति, स्थानिवदादेशः—' इत्यस्मादादेश इति 'न पदान्त—' इत्यतो नेति चानुवर्तते तदाह **अच आदेशो न स्यादिति** । यद्यपीह वृत्त्यादौ अजादेशः स्थानिवत्स्यादिति रूपातिदेशपक्षः स्वीकृतः, फलं चोभयत्र तुल्यम्, तथाप्यादेशनिषेधपक्षेऽपि भाष्यारूढ इति स एवात्र स्वीकृतः, किं च आदेशमङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात् । 'न पदान्त—' इति निषेधानन्तरं पाठोऽप्येवं सत्यनुगृहीत इति श्रेयानयं पक्षः इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयापि व्याचष्टे **द्वित्वे कर्तव्य इति** । कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः । द्वित्वनिमित्ते किम्, दुद्यूषतीत्यत्र द्वित्वात्परत्वादूठि कृते यदि यः पूर्वमेव द्वित्वं स्यात् तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्माभूदिति द्वित्वनिमित्त इत्युक्तम् । नह्यूठ् द्वित्वनिमित्तम् । अचीति किम्, जेघ्रीयते । देध्मीयते । शाशय्यते इह 'ई घ्राध्मोः' इति ईकारः, 'अयङ् यि क्ङिति' इत्ययङा-देशश्च निषिध्येत, स माभूदिति प्राञ्चः । अन्ये त्वाहुः—अचीति व्यर्थ घ्रीय्ध्मीय्शय्य इति द्वितीयाजवधिकस्यैकाचः कार्यतया यङो द्वित्वनिमित्तत्वाभावादिति । अचः किम्, असूषुपत । इह 'स्वापेश्चङि' इति यत्सम्प्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत । न च द्वित्वे कृते पुनः संप्रसारणेन स्वापेरवयवत्वादिरूपादभ्यासे तदुत्तरखण्डे च उकारश्रवणं भवेदिति वाच्यम्, परस्य संप्रसारणे कृते यून इत्यत्रेव 'न संप्रसारणे—' इति पूर्वस्य यणः संप्रसारणनिषेधात् स्यादेतत्—चक्रतुरित्यत्र अच आदेशस्य निषेधाप्रवृत्त्या यण् स्यादेव । असौ द्वित्वनिमित्तत्वेऽप्यकारस्यातथात्वात् । नच 'द्विर्वचनेऽचि' इत्यस्य

अभ्यासऋवर्णस्यात्स्यात्प्रत्यये परे। रपरत्वम् । 'हलादिः शेषः' (सू २१७९)।

निमित्तस्य अचः सत्त्वात्। 'द्वित्वनिमित्ते' इति किम्? दुद्यूषति। दिव् धातोः सनि द्वित्वात्परत्वाद् ऊठि कृते द्वित्वात्प्राग्यण् भवत्येव। तथा च द्यू इत्यस्य द्वित्वे दुद्यूषतीति सिध्यति। द्वित्वे कर्तव्ये यणो निषेधे तु दिद्यूषतीत्यभ्यासे इकार एव श्रूयेत। न तूकारः। द्वित्वनिमित्त इत्युक्तौ तु ऊठि परे द्वित्वात् प्राग् यणो न निषेधः। ऊठो द्वित्वनिमित्तत्वाभावात् 'अचि' इति किम्? जेघ्रीयते। अत्र घ्राधातोर्यङि द्वित्वात् प्राग् 'ई घ्राध्मोः' इति ईकारादेशो न निषिध्यते। ईत्वस्य द्वित्वनिमित्तयङ्निमित्तकत्वेऽपि द्वित्वनिमित्ताज्निमित्तकत्वाभावात्। 'अचः' किम्? असूषुपत्। इह स्वापेश्चङि द्वित्वात् प्राक् 'स्वापेश्चङि' इति वकारस्य सम्प्रसारणं न निषिध्यते। तस्याजादेशत्वाभावात्। ततश्च कृते सम्प्रसारणे सुप् इत्यस्य द्वित्वे अभ्यासे उकारस्य श्रवणं सम्भवति। सम्प्रसारणे निषिद्धे तु स्वप् इत्यस्य अभ्यासे उकारो न श्रूयेत। एवं च प्रकृते यणादेशात् प्राग् 'लिटि धातोः—' इति द्वित्वे कृ कृ ए इति स्थिते—उरत्। उः अत इति छेदः ऋइत्यस्य उरिति षष्ठ्येकवचनम्। अत्र 'लोपोऽभ्यासस्य' इत्यस्मादभ्यासस्येत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम्। तद्वशात् प्रत्यये परत इति लभ्यते। प्रत्यये परत एव अङ्गसंज्ञाविधानात्, तदाह **अभ्यासऋवर्णस्येत्यादिना। रपरत्वमिति।** अभ्यासऋवर्णादेशस्याकारस्य 'उरण्रपरः' इति रपरत्वमित्यर्थः। तथा च कर् कृ ए इति स्थिते। हलादिः शेष इति। रेफस्य निवृत्तिरिति भावः।

---

वैयर्थ्यम, चक्र इत्यादौ सावकाशत्वात्। तथा चैकाच्त्वाभावाद् 'लिटि धातोः—' इतीह द्वित्वं न स्यादिति चेत्। मैवम, इह द्वित्वनिमित्तशब्देन साक्षाद्वा समुदायघटकतया वा यद् द्वित्वप्रयोजकं लक्ष्यानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च 'ठस्येकः' इति सूत्रे कैयटे स्पष्टम्। तथा च ऊर्णोतेः सनि 'सनीवन्त—' इतीट्पक्षे 'विभाषोर्णोः' इति ङित्त्वविरहे ऊर्णुविषतीति सिद्धम्। सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्तव्ये निषेधात्। अत एवाहुस्तद्भावभावितामात्रेणेह निमित्तत्वमिति। एवं च द्वित्वनिमित्तघटकतया सनि इडागमोऽस्तुसोऽकारश्च द्वित्वनिमित्तमिति स्थितम्। नन्वेवम् ऋधातोः सनि 'स्मिपूङ्रञ्ज्वशां सनि' इति इटि कृते इस्शब्दनिमित्तकस्य गुणस्य 'द्विर्वचनेऽचि' इति निषेधे 'अजादेर्द्वितीयस्य' इति द्वित्वप्रसङ्गादरिरिषतीति न सिध्येत्। रिस्शब्दस्य द्वित्वे तु यद्यपि सिध्यति, तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेत्। अत्राहुः—गुणे रपरे कृते रिस्शब्दस्यैव द्वित्वम्। न च द्वित्वनिमित्ते ह्यचि गुणस्य निषेधः। इस्शब्दस्तु नेह निमित्तं कार्यित्वात्। न हि कार्यी निमित्ततयाऽऽश्रीयते, 'स्थण्डिलाच्छयितरि व्रते' इति ज्ञापकात्। अन्यथा शीङो ङित्त्वेन 'क्ङिति च' इति गुणनिषेधाच्छयितरीति रूपस्यासिद्ध्यापत्तेः। न च क्ङिति ङिति परे गुणवृद्धी नेति व्याख्यायामुक्तेऽर्थे शयितरीति न ज्ञापकमिति वाच्यम्, तद्व्याख्यायां छिन्नं भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य 'क्ङिति च' इति सूत्र एवोपपादितत्वात्। न चैवं कार्यिणो

'प्रत्यये' किम्—वव्रश्च। २२४५ कुहोश्चुः । ( ७—४—६२ ) अभ्यासकवर्ग· हकारयोश्चवर्गादेशः स्यात् । एधांचक्रे एधांचक्राते एधांचक्रिरे । २२४६

---

प्रत्यये किमिति। अङ्गेनैव प्रत्ययस्याक्षिप्तत्वात् प्रत्यये परत इति किमर्थमित्यर्थः। वव्रश्चेति। 'ओव्रश्चू छेदने', लिटि णल् द्वित्वं 'लिट्यभ्यासस्य—' इति अभ्यासरेफस्य सम्प्रसारणम् ऋकारः। उरत्। रपरत्वम्। हलादिः शेषः। वव्रश्चेति रूपम्। अत्र अभ्यास-ऋवर्णस्य रेफस्थानिकस्य सम्प्रसारणस्य य उरदत्वसम्पन्नः अकारः, तस्य 'अचः परस्मिन्—' इति स्थानिवत्त्वेन सम्प्रसारणतया तस्मिन् परे वकारस्य 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधान्न सम्प्रसारणमिति स्थितिः। 'उरत्' इत्यत्र प्रत्यये परत इत्यनुक्तौ तु सम्प्रससारणभूतऋकारस्थानिकस्य अकारस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाप्रसक्तेः साम्प्ररणत्वाभावात्तस्मिन् परतो 'न सम्प्रसारणे सम्प्रसारणम्'इति निषेधो न स्यादिति भावः। एवं च क क्र ए इति स्थिते कुहोश्चुः। कु ह् इत्यनयोर्द्वन्द्वात्षष्ठीद्विवचनम्। 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते, तदाह अभ्यासेति। यद्यपि स्थानिनां कवर्गीयाणां हकारस्य च षट्त्वात् चवर्गीयाणां पञ्चत्वान्न यथासंख्यम्, नापि स्थानत आन्तर्यम्, कण्ठतालुस्थानभेदात्। आभ्यन्तरप्रयत्नसाम्यं तु कवर्गचवर्गयोरविशिष्टम्। हकारचवर्गयोस्तु नास्त्येव तत्। अतो वाह्यप्रयत्नत एवान्तर्यमिह व्यवस्थापकमाश्रयणीयम्। तत्र प्रथमस्य कवर्गीयस्य प्रथम एव चवर्गीयो भवति, अघोषश्वासविवराल्पप्राणप्रयत्नसाम्यात्। न तु द्वितीयः, महाप्राणत्वात्। नापि तृतीयपञ्चमौ, घोषसंवारनादप्रयत्नत्वात्। नापि चतुर्थः, घोषसंवारनादमहाप्राणप्रयत्नत्वात्। तथा द्वितीयस्य कवर्गीयस्य द्वितीय एव चवर्गीयो भवति, अघोषश्वासविवारमहाप्राणप्रयत्नत्वात्। नतु प्रथमः, अल्पप्राणत्वात्। नापि तृतीयपञ्चमौ, घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। नापि चतुर्थः, घोषसंवारनादप्रयत्नत्वात्। तथा तृतीयस्य कवर्गीयस्य तृतीय एव चवर्गीयो भवति। घोषसंवारनादाल्पप्राणप्रयत्नत्वात्। न तु प्रथमः, अघोषश्वासविवारप्रयत्नत्वात्। अत एव न द्वितीयोऽपि, महाप्राणप्रयत्नत्वाच्च। नापि चतुर्थः, महाप्राणत्वात्। नापि पञ्चमः, घोषसंवारनादाल्पप्राणसाम्येऽपि अनुनासिकतया भेदात्। तथा चतुर्थस्य कवर्गीयस्य चतुर्थ एव चवर्गीयो भवति, घोषसंवारनादमहाप्राणप्रयत्नत्वात्। न तु प्रथमः अघोषश्वासविवाराल्पप्राणप्रयत्नत्वात्। नापि द्वितीयः,अघोषविवारश्वासप्रयत्नत्वात्। नापि तृतीयपञ्चमौ, अल्पप्राणत्वात्। पञ्चमस्य तु कवर्गीयस्य अनुनासिकत्वाद् ञकार एव। हकारस्य तु घोषसंवारनादमहाप्राणवतः तादृशो वर्गचतुर्थ एव झकार इति विवेकः। प्रकृते तु क क्र ए इति स्थिते अभ्यासककारस्य चकारे ऋकारस्य यणि रेफः। तदाह एधांचक्र इति। एककर्तृका भूतानद्यतनपरोक्षा वृद्धिरूपा क्रियेत्यर्थः। एधांचक्र इति। कृञो लिट आतामि टेरेत्वम्। 'द्विर्वचनेऽचि' इति यणि निषिद्धे

---

निमित्तत्वानाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्तयोर्गुणावादेशयोरनिषेधादूर्णुनविषती· त्यपि न स्यादिति वाच्यम्, मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात्। ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपं कार्यमनुभवति, न तु सन्। अरिरिपती·

एकाच उपदेशेऽनुदात्तात्। ( ७—२—१० ) उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येट् न स्यात् । उपदेशे इत्युभयान्वयि । 'एकाच' इति किम्—यङ्लुग्व्यावृत्तिर्यथा स्यात् । स्मरन्ति हि—

---

क्रु इत्यस्य द्वित्वे उरदत्वम् । हलादिः शेषः । चर्त्वम् । यण् । न च आतामित्यस्य द्वित्वनिमित्तत्वेऽपि आकारस्याचो द्वित्वनिमित्तत्वाभावात् कथमिह 'द्विर्वचनेऽचि' इति यण्निषेध इति वाच्यम्' साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्वनिमित्तशब्देन विवक्षितत्वादिति भावः । एधांचक्रिर इति । झस्य इरेच् । क्रु इत्यस्य द्वित्वादि पूर्ववत् । अथ लिटि थासः से भावे क्रु इत्यस्य द्वित्वादौ एधां चक्रृ से इति स्थिते आर्धधातुकस्येड्वलादेरिति इडागमे प्राप्ते एकाच उपदेशेऽनुदात्तात् । 'अत इद्धातोः' इत्यत धातोरित्यनुवर्तते । 'नेड्वशिकृति' इत्यतो नेति च । तदाह उपदेशे यो धातुरेकाजिति । एकः अच् यस्येति बहुव्रीहिः । आर्धधातुकस्येति । यद्यपीदं न श्रुतम्, नाप्यनुवृत्तिलभ्यम्, तथाप्यार्थिकमिदम्, आर्धधातुकस्यैवेटः प्राप्तेः । वृत्तिग्रन्थे तु आर्धधातुकस्येति नोपात्तम् । ननु 'एकाच उपदेशेऽनुदात्ताद्' इत्यत्र यदि उपदेशे इत्येतदेकाच इत्यत्रान्वेति तदा कर्तुमित्यत्र इण्निषेधो न स्यात् । कृञ्धातोरूदृदन्तैरित्यादिना अनुदात्तत्वस्य वक्ष्यमाणत्वेऽपि तुमुन्प्रत्यये कृते 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वात् । यदि तु उपदेशे इत्येतद् अनुदात्तादित्यनेनान्वेति । तदा यद्यपि नायं दोषः, कृते तुमुन्प्रत्यये उदात्तत्वेऽपि धातूपदेशकाले अनुदात्तत्वेन तत्र इण्निषेधस्य निर्बाधत्वात् । तथापि एधांचकृषे इत्यादौ इण्निषेधो न स्यात् । द्वित्वे कृते अनेकाच्त्वादित्यत आह उपदेश इत्युभयान्वयीति । 'उपदेशे' इत्येतद 'एकाच्' इत्यत्र 'अनुदात्तात्' इत्यत्र चान्वेति । मध्यमणिन्यायादिति भावः । ननु ऊदृदन्तैरित्यादिना परिगणितानामनुदात्तोपदेशधातूनामेकाच्त्वाव्यभिचारादेकाज्ग्रहणं मास्तु । उपदेशेऽनुदात्तादित्येवास्तु । एतावतैव कर्तुं चकृष इत्यादाविण्निषेधसिद्धेरिति पृच्छति एकाचः किमिति । यङ्लुग्व्यावृत्तिरिति । यङ्लुकि चर्करितेत्यादौ इण्निषेधव्यावृत्तये एकाज्ग्रहणमित्यर्थः । ननु कृतेऽप्येकाज्ग्रहणे कथं यङ्लुग्व्यावृत्तिः । कृते द्वित्वे अनेकाच्त्वेऽपि धातूपदेशे एकाच्त्वादित्यत आह स्मरन्ति हीति । प्राचीनाचार्या निबध्नन्तीत्यर्थः । श्तिपा शपेत्यादेरुदाहरणानि यङ्लुङ्निरूपणे स्पष्टीभविष्यन्ति । नन्विह एकाज्ग्रहणाद्यङ्लुकि इण्निषेधस्य व्यावृत्तावपि श्तिवादिनिर्दिष्टानां यङ्लुकि व्यावृत्तिः प्राचीनाचार्यसंमताऽपि

---

त्यत्र तु रिस्शब्दः कार्यभागिति वैषम्यादिति । उभयान्वयीति । मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः । तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्नषेधः फलम् । नित्स्वरेण संप्रत्युदात्तत्वात् । पिपक्षति दिभिक्षतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम् । द्वित्वे कृते अनेकाच्त्वात् । नन्वेकाच इत्युक्ते ह्युपदेशपदेनाप्यन्वयः स्वीकर्तव्यस्तदेव मास्तु उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरिति शङ्कते एकाचः किमिति । पिपक्षतीत्यादाविव यङ्लुक्यपीण्निषेधः स्यादेवेत्याशङ्कायामाह स्मरन्ति

'श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥' इति ।

एतच्चेहैवैकाज्ग्रहणेन ज्ञाप्यते । 'अचः' इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सिद्धे एकग्रहणसामर्थ्यादनेकाच्कोपदेशो व्यावर्त्यते । तेन वधेर्हन्त्युप-

---

पाणिनेरसंमतैवेत्यत आह एतच्चेति । एतत् श्तिपाशपेति श्लोकसिद्धं सर्वमपि, इह सूत्रे एकाज्ग्रहणेनैव एकदेशानुमत्या ज्ञाप्यत इत्यर्थः । ननु 'हनो वध लिङि' 'लुङि च' इति हनधातोर्वधादेशे कृते अवधीदित्यत्र इडागमो न स्यात्, । वधादेशे कृते अनेकाच्त्वेऽपि धातूपदेशे हन्तेरेकाच्त्वादित्यत आह अच इत्येवैकत्वेत्यादि व्यावर्त्यत इत्यन्तम् । 'एकाच उपदेशेऽनुदात्तात्' इत्यत्र हि एकग्रहणमपनीयाच इत्युक्तेऽपि एकाच्कादिति लभ्यते । एकवचनोपात्तस्यैकत्वस्य त्यागे प्रमाणाभावात् न चैवं सति एकत्वविशिष्टादचः परस्येत्येव लभ्येत, नत्वेकाच्कादिति बहुव्रीह्यर्थ इति वाच्यम्, अनुदात्तोपदेशपरिगणने शक्लृपचिमुच्यादीनां परिगणनसामर्थ्येन अच इत्यस्य मत्वर्थलक्षणामाश्रित्य एकाज्वतो ग्रहणसंभवात् तदेवमच इत्यनेनैव एकाच्कादिति

---

हीति । श्तिपेत्यादि । श्तिपा यथा—स्यतिहन्तियातिवातिद्रातीत्यादि । तेन प्रन्यजङ्घनीदित्यादौ 'नेर्गद–' इति णत्वं न । शपा यथा–भरेति । तेन बिभर्तेः भरतेः (यङ्लुगन्तात्) सनि बिभरिषतीत्यत्र 'सनीवन्तर्ध–' इतीड्विकल्पो न, किंतु नित्यमेवेट् । 'एकाच–' इति निषेधाप्रवृत्तेः । अनुबन्धेन निर्देशो द्विधा स्वरूपेणेत्संज्ञकत्वेन च । स्वरूपेण यथा—'शीङः सार्वधातुके गुणः' 'दीङो युडचि–' इति । शेशीतः । देदीतः । तसि क्तप्रत्यये चेमे क्रमेणोदाहरणे । इत्संज्ञकत्वेन यथा—'अनुदात्तङितः–' इति । तेन स्पर्धशीङादिभ्यः 'अनुदात्तङित–' इत्यात्मनेपदं न । पास्पर्धीति । शेशयीति । गणेन यथा—वेभिदीति । 'रुदादिभ्यः–' इति वलम् न । एकाच्ग्रहणं प्रकृतसूत्रे । तेन बेभेदिता चेच्छेदितेत्यादाविण्णिषेधो न । एतच्चेति । न च श्तिपाशपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम्, एकादेशानुमतिद्वारा सर्वत्र ज्ञापनस्य 'उपपदमतिङ्' इत्यादौ दृष्टत्वात् । अतएव तत्र 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सिद्धमित्युक्तम् । अनन्यार्थैः स्यतिहन्तिभरेत्यादिभिः श्तिप्शबादिभिरेव ज्ञापनसंभवाच्च । 'अपरस्पराः–' इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या 'लुम्पेदवश्यमः कृत्ये' इत्यादिपूर्वाचार्यश्लोको ज्ञापित इति तु तत्रैवावोचाम । मनोरमायां त्वेकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषया ज्ञापनस्य 'गतिकारकोपपदानाम्–' इत्यादौ दृष्टत्वादित्युक्तम्, तदयुक्तमिति नव्याः । 'गतिकारकोपपदानाम्–' इत्याद्येव हि पूर्वाचार्याणां परिभाषा, न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति । तद्वत इति । न च मत्वर्थलक्षणायां मानाभावः वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । न चेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकानां वसतिशक्लित्यादिपाठस्त्वनार्षत्वान्न मानमिति शङ्क्यम्, पाणिनिना पठितानामेवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया संगृहीतत्वात् । अन्यथा एकः अच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेऽप्यनुदात्तपाठस्य परिभ्रष्टत्वाद् वसतिशक्लित्यादयोऽनुदात्ताः, न तु भ्वेधादय इति निर्धारणं न स्यात् । एकग्रहणेति

देशे एकाचोऽपि न निषेधः । आदेशोपदेशेऽनेकाच्कत्वात् । अनुदात्तास्त्वनुपदमेव संग्रहीष्यन्ते । एधांचकृषे एधांचकाथे । २२५७ इणः षीध्वंलुङ्लिटां धोऽङ्गात् । (८—३—७८) इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । एधांचकृढ्वे । एधांचक्रे एधांचकृवहे एधांचकृमहे । एधांबभूव ।

सिद्धे यदेकग्रहणं करोति तत्सामर्थ्यादुपदेशे सर्वत्र एकाजेव, न तु कस्मिंश्चिदप्युपदेशे अनेकाजित्यर्थकल्पनया कदाचिदनेकाच्कोपदेशवानुव्यावर्त्यत इत्यर्थः । तेनेति । उपदेशे सर्वत्र एकाजेवेत्यर्थलाभेन, हन्त्युपदेशे—हनिति स्यात्युपदेशे—एकाचोऽपि सतो हनिति धातोरादेशस्य वधेः परस्य इण्निषेधो नेत्यर्थः । कुत इत्यत आह आदेशोपदेश इति । अवधीदित्यत्र 'अतो हलादेर्लघोः' इति वृद्धिनिवृत्तये हनो वधादेशस्य अदन्तताया भाष्ये उक्तत्वादिति भावः । ननु के ते अनुदात्ता धातव इत्यत आह अनुदात्तास्त्वनुपदमेवेति । पदस्य पश्चादनुपदम्, पदमात्रे अतीते सतीत्यर्थः । अनन्तरमेवेति यावत् । एधांचकृष इति । इडभावे प्रत्ययावयवत्वात् षत्वम् । एधांचक्राथ इति । लिट आथामादेशः । टेरेत्वम् । द्वित्वादि पूर्ववत् । लिटो ध्वमादेशे टेरेत्वे द्वित्वादौ एधांचकृध्वे इति स्थिते इणः षीध्वंलुङ्लिटाम् । षीध्वं लुङ् लिट् एषां द्वन्द्वः । 'धः' इति षष्ठ्येकवचनम् । इण इत्यङ्गविशेषणम् । तदन्तविधिः । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्, तदाह इणन्तादित्यादिना । धकारस्य ढकारो मूर्धन्यः । श्वासनादसंवारमहाप्राणप्रयत्नसाम्यात्, तदाह एधांचकृढ्व इति । उत्तमपुरुषैकवचने इटि एत्वे पूर्ववद् द्वित्वादौ कृते रूपमाह एधांचक्र इति । एधांचकृवह इति । लिटो वहिभावे एत्वे द्वित्वादि पूर्ववद् । एवं लिटो महिभावे द्वित्वादि पूर्ववत् । सर्वत्र 'असंयोगाल्लिट्कित्' इति कित्त्वाद् गुणाभावः । अथ भूधातोः लिडन्तस्यानुप्रयोगे उदाहरति एधांबभूवेति । एधांचक्र इत्यनेन

नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्यादिति चेत् । अत्राहुः—एकाच्वदनेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः, किं तु वस्तुगत्यैवैकाज्ग्रहणम्, तच्चैकग्रहणं विनैव लभ्यत इत्यदोष इति । वधेरिति । यस्तु तद्व्यावृत्तयेऽनिट्कारिकास्वदन्तपर्युदास उक्तो व्याघ्रभूतिना स एव प्राचाऽनुसृतः । 'अदन्तदन्तस्तुल्ग्युशीङ्गुक्षुश्वेर्डीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः' इति । स चादन्तपर्युदास व्यर्थोऽपि अतः । सूत्राननुगुणत्वात् । तथापि—'सर्वे सर्वपदादेशाः' इति न्यायेन कृ इत्यादेः करिष्यादिरादेशस्तस्य यथा स्यात्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेऽपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदाससामर्थ्यादिति चेत् । न, सूत्रकारेणाऽपर्युक्तत्वादिति भावः । इणः षीध्वम् । 'इण्कोः' इत्यधिकारेऽपि पुनरिण्ग्रहणं कवर्गात्परस्य मा भूदित्येतदर्थम् । तेनेह न—पक्षीध्वम् । अङ्गात्परेषामिति । विहितानामित्युक्तौ तु उपो लुङि उदिढ्ढ्वमित्यत्राव्याप्तिः स्यात्, लिहदुहनहां तु ढत्वधत्वघत्वेषु लिक्षीध्वं धुक्षीध्वं नत्सीध्वमित्यत्रातिव्याप्तिश्च स्यादिति बोध्यम् । अङ्गात् किम्, परिवेविषीध्वम् । अर्थवतः षीध्वमित्यस्य ग्रहणात् कृषीढ्वमित्यादावेव भवेद् नत्वत्र, तथाप्यर्थवद्-

अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि 'कृस्चानुप्रयुज्यते' इति 'कृभु—' इति वा ब्रूयात् । २२४८ अत आदेः । ( ७—४—७० ) अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः । एधामास एधामासतुरित्यादि । एधिता एधितारौ एधितारः । एधितासे एधितासाथे । २२४९ धि च । ( ८—२—२५ ) धादौ

---

समानार्थकम् । अनुप्रयुज्यमानस्य भूधातोः क्रियासामान्यार्थकत्वात् । नन्वस्तेरनुप्रयोगे लिडादेशस्यार्धधातुकत्वाद् अस्तेर्भूरित्यार्धधातुके विहितो भूभावः कुतो न स्यादित्यत आह अनुप्रयोगेति । 'कृञ्चानुप्रयुज्यते—' इत्यत्र प्रत्याहारमाश्रित्य कृभ्वस्तीनामनुप्रयोगविधिसामर्थ्यादस्धातोर्भूभावो नेत्यर्थः । तदेवोपपादयति अन्यथेति । अनुप्रयुज्यमानस्यास्तेर्भूभावाभ्युपगमे 'कृञ्चानुप्रयुज्यते—' इत्यनुप्रयोगविधौ 'कृस्चानुप्रयुज्यते—' इति वा 'कृभुवानुप्रयुज्यते—' इति वा ब्रूयात् । तावता एधांबभूवेति सिद्धेरित्यर्थः । यद्यपि कृञित्युक्तौ लाघवमस्ति । तथापि एकस्यैव भवतेरधिकस्य लाभाय कृञिति प्रत्याहारक्लेशो न कर्तव्य इति भावः । अत एव 'अत उत्सार्वधातुके' इति सूत्रभाष्येऽनुप्रयोगे भूभावेन अस्तेरबाधनमिति भाष्यं सङ्गच्छते । ततश्च अनुप्रयुज्यमानादस्धातोर्लिटि भूभावनिवृत्तौ णलि एधाम् अस् अ इति स्थिते द्वित्वे हलादिशेषे अ अस् इति स्थिते सवर्णदीर्घं बाधित्वा 'अतो गुणे' इति पररूपे प्राप्ते अत आदेः । 'अत्र लोपः—' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'दीर्घ इणः—' इत्यतो दीर्घ इति च, तदाह अभ्यासस्येति । अत्र यद्वक्तव्यं तन्नामधातुप्रक्रियायाम् अ इवाचरति अतीत्यादिग्रन्थस्य व्याख्यानावसरे वक्ष्यते । एधामासेति । नचात्रानुप्रयुज्यमानाभ्यामस्तिभूभ्यामाम्प्रत्ययवदित्यात्मनेपदं शङ्क्यम्, तत्र कृञ्ग्रहणेन प्रत्याहारग्रहणाभावस्य भाष्ये उक्तत्वात् । एधामासतुरित्यादीति । एधामासुः । एधामासिथ एधामासथुः एधामास । एधामास एधामासिव एधामासिम । इति लिट्प्रक्रिया । एधितेति । लुटः तादेशे एध् त इति स्थिते शबपवादस्तास् इट् । 'लुटः प्रथमस्य—' इति डा टिलोपः, एधितेति रूपम् । 'दीधीवेवीटाम्' इति लघूपधगुणो न । एधिताराविति । लुट्, तास्, इट्, आतामित्यस्य रौभावः । 'रि च' इति सलोपः । एधितार इति । झस्य रस्, आताम, तास्, इट्, 'रि च' इति सलोपः, रुत्वविसर्गौ । एधितास इति । थासः से, तास्, इट्, 'तासस्त्योः—' इति सलोपः । एधितासाथ इति । आथाम्, टेरेत्वम्, तास्, इट् । अथ श्वमि टरेत्वे तासि इटि

---

ग्रहणपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन 'अनिनस्मन्ग्रहणानि—' इति सिद्धम् । एधांबभूवेत्यादि । 'आम्प्रत्ययवत्—' इति सूत्रे कृञ्ग्रहणादनुप्रयोगान्तरे तङ् नेति 'शेषात्कर्तरि—' इति परस्मैपदमेव, भावकर्मणोस्तु स्यादेव एधांबभूवे ईक्षांबभूवे इति । अस्तेस्तु भावकर्मणोस्तङि कृते एशि इटि च रूपे विप्रतिपद्येते । तथाहि—उभयत्रापि 'ह एति' इति हादेशे कृते एधामाहे ईक्षामाहे इति केचित् । तासिसाहचर्यादिट्येव हत्वं न त्वेशीत्यन्ये । तत्साहचर्यादेव सार्वधातुक एव एति हत्वम् । तथा च कर्मव्यतिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेऽपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे । कृभ्वितीति । यद्यपि कृन् इत्युक्तौ लाघवमस्ति, तथापि धातुद्वयस्यैव लाभार्थं

प्रत्यये परे सलोपः स्यात् । एधिताध्वे । २२५० ह एति । ( ७—४—५२ ) तासस्त्योः सस्य हः स्यादेति परे । एधिताहे एधितास्वहे एधितास्महे । एधिष्यते एधिष्येते एधिष्यन्ते । एधिष्यसे एधिष्येथे एधिष्यध्वे । एधिष्ये एधिष्यावहे एधिष्यामहे । २२५१ आमेतः । ( ३—४—९० ) लोट एकारस्याम्स्यात् । एधताम् एधेताम् एधन्ताम् । २२५२ सवाभ्यां वामौ । ( ३—४—९१ ) सकारवकाराभ्यां परस्य लोडेतः क्रमाद् व अम् एतौ स्तः । एधस्व एधेथाम्

---

एधितास् ध्वे इति स्थिते । धि च । 'सस्त्यार्धधातुके' इत्यतः स इत्यनुवर्तते । 'तासस्त्योः—' इत्यतो लोप इति । अङ्गाक्षिप्तप्रत्ययो धीत्यनेन विशेष्यते । तदादिविधिः, तदाह धातादिविति । तासः सलोपे एधिताध्वे इति रूपम् । अथ लुट इडादेशे एत्वे तासि इटि एधितास् ए इति स्थिते ह एति । ह इति प्रथमान्तम् । अकार उच्चारणार्थः । 'सस्यार्धधातुके' इत्यतः स इति 'तासस्त्योर्लोपः' इत्यतः तासस्त्योरिति चानुवर्तते, तदाह तासस्त्योरिति । तासः सस्य हकारे एधिताहे इति रूपम् । एधितास्वहे इति । लुटो वहिमावः, टेरेत्वम्, तास्, इट्, । एवम् एधितास्महे इति । तत्र महिभावो विशेषः । इति लुट्प्रक्रिया । एधिष्यत इति । लृटः तादेशे टेरेत्वम् । 'स्यतासी—' इति शवपवादः स्यः, इट्, प्रत्ययावयवत्वात् षत्वम् । एधिष्येते इति । आताम्, टेरेत्वम्, स्यः, इट्, 'आतो ङितः' इत्याकारस्य इय्, 'लोपो व्योः—' इति यलोपः, 'आद्गुणः' षत्वम् । एधिष्यन्ते इति । झस्य टेरेत्वम्, झकारस्य अन्तादेशः, स्यः, इट्, पररूपम् षत्वम् । थासादावपि लटीव सुयोजमिति मत्वा रूपाणि न प्रदर्शितानि । तत्र थासः से, स्यः, इट्, षत्वम्, एधिष्यसे इति रूपम् । एधिष्येते इतिवदाथामि एधिष्येथे इति रूपम् । ध्वम् एत्वे, स्यः, इट् षत्वम्, एधिष्यध्वे इति रूपम् । इट एत्वे, स्यः, इडागमः, षत्वम्, 'अतो गुणे' इति पररूपम्, एधिष्ये इति रूपम् । वहिमह्योष्टेरेत्वम्, स्यः इट् अतो दीर्घः, एधिष्यावहे एधिष्यामहे इति रूपे इति लृट्प्रक्रिया । आमेतः । 'आम्' 'एतः' इति च्छेदः । 'लोटो लङ्वत्' इत्यतो लोट इत्यनुवर्तते, तदाह लोट एकारस्येति । लोडादेशावयवस्य एकारस्येत्यर्थः । एधतामिति । लोटः तादेशे टेः एत्वे आमादेशे शपि रूपम् । एधेतामिति । आताम् । टेरेत्वे शप् 'सार्वधातुकमपित्' इति ङित्त्वाद् 'आतो ङितः' इत्याकारस्य इय्, गुणः, यकारलोपः, 'आमेतः' इत्येकारस्य आम् । एधन्तामिति । झस्य टेरेत्वे शपि झकारस्य अन्तादेशे एकारस्य आम् । अथ लोटः थासः सेभावे शपि एधसे इति स्थिते । सवाभ्याम् । सश्च वश्च सवौ । ताभ्यामिति विग्रहः । अकारावुच्चारणार्थौ । वश्च अम् च वामौ । 'लोटो लङ्वत्' इत्यस्माद् लोट इति 'आमेतः' इत्यस्मादेत इति चानुवर्तते, तदाह सकारेति । 'आमेतः' इत्यस्यापवादः । एधस्वेति । एधसे इत्यत्र एकारस्य व इति वकाराकारसंघात आदेशः । एधेथा-

---

प्रश्लेषाश्रयणे क्लेश इति भावः । पररूपापवाद इति । अपवाद इत्ययं ग्रन्थो नामधातुप्रक्रियास्थः स्वग्रन्थेन सह विरुध्यते । तत्र हि अ इवाचरति अति । प्रत्यय-ग्रहणमपनीय कार्यनेकाज् इत्युक्तेर्नाम् । औ । अनुः । उः । द्वित्वम् 'अतो गुणे',

एधिषीयास्ताम् एधिषीरन् । एधिषीष्ठाः एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय एधिषीवहि एधिषीमहि । ऐधिष्ट ऐधिषाताम् । २२५८ आत्मनेपदेष्वनतः । ( ७-१-५ ) अनकारात्परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्' ( सू २२४७ ) । ऐधिढ्वम् । इड्भिन्न एव इणिह गृह्यत इति मते तु ऐधिध्वम् । ढधयोर्वस्य नस्य

---

सुटोरिति । लक्ष्यभेदात्पुनः प्रवृत्तिरिति भावः । युगपदेवोभयोः षत्वमित्यन्ये । एधिषीष्टेति । आशिषि लिङः तादेशः । आर्धधातुकत्वाद् न शप्, सीयुट्, तकारस्य सुट्, सीयुटस्सकारात् प्रागिडागमः, यलोपः, सीयुटः सुटश्च सकारस्य षत्वम्, तकारस्य ष्टुत्वेन टकारः । एधिषीयास्तामिति । आताम्, सीयुट् । आकारादुपरि तकारात्प्राक् सुट् । सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । एधिषीरन्निति । 'झस्य रन्' । सीयुट्, इडागमः, यकारलोपः, षत्वम् । एधिषीष्ठा इति । थास्, सीयुट्, थकारस्य सुट्, सीयुटः प्रागिट्, सकारद्वयस्य षत्वम् । थकारस्य ष्टुत्वेन ठकारः, रुत्वविसर्गौ । एधिषीयास्थामिति । आथाम्, सीयुट् । आकारादुपरि थकारात् प्राक् सुट्, सीयुटः प्रागिट् । तत उत्तरस्य सकारस्य षत्वम् । एधिषीध्वमिति । ध्वम्, सीयुट्, यलोपः, सीयुटः प्रागिट्, षत्वम् । इणः परत्वेऽपि इण्णन्तादङ्गात्परत्वं नास्ति । इटः प्रत्ययभक्तत्वात् । ततश्च 'इणः षीध्वम्–' इति ढत्वं न भवति । एधिषीयेति । इटः अत्, सीयुट्, इट् षत्वम् । एधिषीवहि एधिषीमहीति । वहिमह्योः सीयुट् इट् षत्वम् । इत्याशीर्लिङ्प्रक्रिया । ऐधिष्टेति । लुङः तादेशः, च्लिः, सिच्, इट्, धातोराट्, वृद्धिः, षत्वम्, ष्टुत्वम् । ऐधिषातामिति । आताम्, च्लिः, सिच्, इट्, आट्, वृद्धिः षत्वम् । अथ झस्य आदेर्झकारस्य 'झोऽन्तः' इत्यन्तादेशे प्राप्ते आत्मनेपदेषु । 'झोऽन्त' इत्यतो झ इति षष्ठ्यन्तमनुवर्तते । आत्मनेपदेष्विति षष्ठ्यर्थे सप्तमी । आत्मनेपदावयवस्य झकारस्येति लभ्यते । 'अदभ्यस्तात्' इत्यतः अदित्यनुवर्तते । न अत् अनत्, तस्मादिति विग्रहः तदाह अनकारादित्यादिना । ऐधिषतेति । आत्मनेपदावयवझकारस्य अत् इत्यादेशः, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम् । ऐधिष्ठा इति । थास्, च्लिः, सिच्, इट्, आट्, वृद्धिः, षत्वम्, थकारस्य ष्टुत्वेन ठकारः, रुत्वविसर्गौ । ऐधिषाथामिति । आथाम्, च्लिः, सिच्, इट् आट्, वृद्धिः, षत्वम् । अथ ध्वमो धस्य ढत्वं स्मारयति इणः षीध्वमिति ऐधिढ्वमिति । ध्वम्, च्लिः, सिच्, इट् अट्, वृद्धिः, 'धि च' इति सस्य लोपः । 'इणः षीध्वम्–' इति धकारस्य ढत्वम् । इटो लुप्तसिज्भक्ततया सिजन्ताङ्गान्तर्भूतत्वेन इडन्तस्य इण्णन्ताङ्गत्वादिति भावः । इड्भिन्न एवेति । उत्तरसूत्रे 'विभाषेटः' इत्यत्र इड्ग्रहणात् पूर्वसूत्रे 'इणः

---

मिति स्थितस्य गतिमाहुः । सलोप इति । 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन । एधेयातामिति । सीयुटः सलोपे आद्गुणः । एधिषीध्वमिति । इणः परत्वेऽपि इण्णन्तादङ्गात्परत्वाभावाद् 'इणः षीध्वम्–' इति ढत्वं न भवति । आत्मने । 'झोऽन्तः' इत्यतो झ इति 'अदभ्यस्तात्' इत्यस्माद् अदिति चानुवर्तते । तदाह झस्या-

च द्वित्वविकल्पात्षोडश रूपाणि । ऐधिषि ऐधिष्वहि ऐधिष्महि । ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त ऐधिष्यथाः ऐधिष्येथाम् ऐधिष्यध्वम् । ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि । उदात्तत्वाद्धलादेरिट् । प्रसङ्गादनुदात्ताः संगृह्यन्ते—

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।

---

पीध्वम्–' इत्यत्र इङ्भिन्न एव इण् गृह्यत इति केचिदाहुः । तन्मते तु प्रकृते इटः परत्वाद् धकारस्य ढत्वाभावे ऐधिध्वमित्येव रूपमित्यर्थः । इदं तु मतान्तरं भाष्यानारूढमिति सूचयितुं तुशब्दः । **ढधयोरिति** । मतभेदमाश्रित्येदम् । तत्र ढत्वाभावपक्षे धकारस्य 'अनचि च' इति द्वित्वविकल्पाद् द्विधमेकधमिति रूपद्वयम् । एवं ढत्वे द्विढम् एकढमिति रूपद्वयम् । रूपचतुष्टयेऽपि 'यणो मयो द्वे वाच्ये' इत्यत्र मय इति पञ्चमीमाश्रित्य वकारस्य द्वित्वविकल्पादेकवकाराणि द्विवकाराणि च प्रागुक्तानि चत्वारि रूपाणि भवन्ति । तथा च अष्टौ रूपाणि संपन्नानि । मकारस्य द्वित्वविकल्पादेतान्यष्टौ रूपाणि एकमकाराणि द्विककाराणि चेति षोडश रूपाणि संपन्नानीत्यर्थः । **ऐधिषीति** । लुङ इडादेशः, च्लिः, सिच्, इडागमः, आट्, वृद्धिः । वहिमह्योस्तु च्लेः सिचि इडागमे आटि वृद्धि ऐधिष्वहि ऐधिष्महीतिरूपे । इति लुङ्प्रक्रिया । **ऐधिष्यतेति** । लृङः तादेशः, स्यः, इट्, आट्, वृद्धिः, षत्वम् । **ऐधिष्येतामिति** । आतां स्यः, इट्, आकारस्य इय्, आद्गुणः, यलोपः, आट्, वृद्धिः, षत्वम् । **ऐधिष्यन्तेति** । झावयवझकारस्यान्तादेशः, स्यः, इट्, आट् वृद्धिः, षत्वम् । **ऐधिष्यथा इति** । थास्, स्यः, इट्, आट्, वृद्धिः, रुत्वविसर्गौ । **ऐधिष्येथामिति** । आथाम्, स्यः इट्, आकारस्य इय्, 'आद्गुणः,' यलोपः, आट्, वृद्धिः, षत्वम् । **ऐधिष्यध्वमिति** ध्वम्, स्यः, इट्, आट्, वृद्धिः, षत्वम् । **ऐधिष्य इति** । इडादेशः, स्यः, इडागमः, षत्वम्, आद्गुणः । वहिमह्योस्तु स्यः, इट्, अतो दीर्घः, आट्, वृद्धिः षत्वम् । ऐधिष्यावहि ऐधिष्यामहि इति रूपे । नन्वेधधातोरनुदात्तेत्त्वाद् एकाच उपदेशेऽनुदात्तात्, इतीण्निषेधः कुतो न स्यादित्यत आह **उदात्तत्वादिति** । एधधातुर्यद्यपि अनुदात्तेत् तथापि अनुदात्तस्येतो लोपे सति परिशिष्टो धातुर्नानुदात्त इति भावः । ननु कतिपये धातवः पाणिनिना अनुदात्ता उच्चरिता इति कथमिदानीन्तनैरवगन्तव्यमित्यत आह **प्रसङ्गादिति** । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । पाणिनिपठितानामनुदात्तधातूनां तदानींतनशिष्यपरम्परया आनुनासिक्यवदिदानीं ज्ञानं संभवतीति भावः । **ऊदृदन्तैरिति** । अजन्तेषु धातुषु ऊदन्तैश्च ॠदन्तैश्च धातुभिः विना यु रु

---

स्स्यादिति । आत्मनेपदेषु किम्, अदन्ति । सुन्वन्ति । अनतः किम्, एधन्ते । प्लवन्ते इङ्भिन्न एवेणिति । 'विभाषेटः' इति इटो विशिष्यग्रहणाद्गोबलीवर्दन्यायेन कैश्चिदिङ्भिन्न एवेणिह गृह्यत इति भावः । **ऊदृदन्तैरिति** । ऊदृदन्तैर्विना यौत्यादिभिर्विना वृङ्वृञ्भ्यां च विना अन्ये ये एकाचोऽजन्तास्ते निहताः । अनुदात्ता इत्यर्थः । तथा च दाता धाता चेता स्तोतेत्यादिषु इण् न भवति । ऊदन्ता भूलूप्रभृतयः । ॠदन्ताः कृतॄप्रभृतयः । 'यु मिश्रणादौ' । 'रु शब्दे,' 'रुङ् गतिरेषणयोः' इत्युभयोर्ग्रहणम्,

वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥
शक्लृपच्मुच्रिच्वच्विच्सिच्प्रच्छित्यज्निजिर्भजः ।

---

क्ष्णु शीङ् स्नु नु क्षु श्वि डीङ् श्रि एतैश्च धातुभिर्विना वृङ् वृञ् आभ्यां च विना अन्ये एकाचः अजन्तधातवो निहता अनुदात्ताः स्मृताः । पाणिनिशिष्यपरम्परया ज्ञाता इत्यर्थः । अथ हलन्तेषु अनुदात्तान् धातून् परिगणयति शक्लृ पच मुचिति । शक्लृ पच् मुच् रिच् वच् विच् सिच् प्रच्छि त्यज् निजिर् भज् एषां द्वन्द्वः । तत्र कान्तेषु शक्लृ इत्येकः । लृकार इत् । भाष्ये तु अनुबन्धरहितः पाठो दृश्यते । चान्तेषु पच् मुच् रिच् वच् विच् सिच् इति षट् । अत्र 'डुपचष्' इत्यस्यैव ग्रहणं प्रसिद्धत्वात् । न तु 'पचि व्यक्तीकरणे' इत्यस्येत्याहुः । 'मुच्लृ मोक्षणे' इत्यस्यैव ग्रहणम्, न तु 'मुचि कल्कने' इति भौवादिकस्य । अविशेषात्सर्वस्येत्यन्ये । छान्तेषु प्रच्छ् एकः प्रच्छेत्यकार उच्चारणार्थः । णिजिरित्यत्र इर इत्संज्ञा वक्ष्यते । भञ्ज् भुजित्यादि सृज इत्यन्तमेकं पदम् । जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् विज् स्वञ्ज् सृज् इति पञ्चदश । अदक्षुदित्यादि नुद इत्यन्तमेकं पदम् । तत्र तुदेत्यकार उच्चारणार्थः पद्यभिदित्येकं पदम् । समाहारद्वन्द्वः । पद्येति श्यना निर्देशः । विद्यतिरिति श्यना निर्देशः । विनदिति श्नमा निर्देशः । शद्लदीत्यादि बुध्यतीत्यन्तमेकं पदम् । समाहारद्वन्द्वः । सदि स्कन्दि हदि क्षुधि इति इका निर्देशः । स्विद्यति बुध्यतीति श्तिपा श्यन्विकरणयोर्निदेशः । ततश्च दान्तेषु अद्

---

निरनुबन्धपरिभाषया, 'लुग्विकरणाऽलुग्विकरणयोः—' इति परिभाषया वा । न च साहचर्यात्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम्, तस्यानित्यत्वात् । 'क्ष्णु तेजने' । 'शीङ् स्वप्ने' । 'ष्णु प्रस्रवणे' । 'णु स्तुतौ' । 'टुक्षु शब्दे' । 'टुओश्वि गतिवृद्ध्योः' 'डीङ् विहायसा गतौ' । 'श्रिञ् सेवायाम्' । 'वृङ् संभक्तौ' । 'वृञ् वरणे' । नन्वेतद्भिन्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत् । मैवम्, 'ऊर्णोतेर्णुवद्भावो वाच्यः' इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः । तेन ऊर्णोनूयते इत्यत्र तु 'धातोरेकाचः—' इति यङ् । ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्याऽमोऽभावश्च सिध्यति । उक्तं च भाष्ये—'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात्' इति । 'विभाषा गुणेऽस्त्रियाम्' इति हेतावियं पञ्चमी । हेतुरिह फलम् । एतच्च कैयटे स्पष्टम् । उपग्रहः प्रतिषेधः । इट्प्रतिषेधार्थमित्यर्थः । एवं च णुवद्भावेनैकाच्त्वात् 'श्र्युकः किति' इति निषेधप्रवृत्तेः ऊर्णुत इत्यादि सिध्यति । 'एकाच उपदेशे—' इतीण्निषेधस्तु न प्रवर्तते, णुवद्भावेनैकाच्त्वेऽप्यनुदात्तत्वभावात्, ऊर्णुवातोर्णुवातोश्चोदात्तत्वात्, तथा चोर्णविता और्णवीदित्याद्यपि सिद्धम् । 'वसतिशक्लृभ्यः' इति प्राचो ग्रन्थस्थं पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह शक्लृ इति । कान्त एकः । चान्तेषु पचमुचरिचवचविचसिचः षट् । 'डुपचष् पाके' 'पचि व्यक्तीकरणे' द्वावपि पचित्यनेन गृह्येते । 'मुच्लृ मोक्षणे' । रिचित्यनेन 'रिचिर् विरेके' 'रिच वियोजनसंपर्चनयोः' इति यौजादिकश्च गृह्यते । वचित्यनेन तु 'वच परिभाषणे' ब्रुवो वचिरपि । वन्नियौजादिकोऽपि गृह्यते । 'विचिर् पृथग्भावे' । 'षिच क्षरणे' ।

भञ्जभुज्भ्रस्ज्मस्जियजयुजरुज्रञ्ज्विजिर्स्वञ्जिसञ्ज्सृजः ॥
अद्क्षुद्खिद्छिद्तुदिनुदः पद्यभिद्विद्यतिर्विनद् ;
शद्सदी स्विद्यति स्कन्दिहदी क्रुध् क्षुधिबुध्यती ॥
बन्धिर्युधिरुधी राधिव्यध्शुधः साधिसिध्यती ।
मन्यहन्नाप्क्षिप्छुपितप्तिपस्तृप्यतिदृप्यती ।
लिप्लुप्वप्शप्स्वप्सृपियभ्रभ्लभ्गम्नम्यमो रमिः ।
क्रुशिर्दंशिदिशिदृश्मृश्रिश् लिश्विश्स्पृशः कृपिः ॥
त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्यतयो घसिः ।

---

क्षुद् खिद् छिद् तुद् नुद् पद् ( श्यन्विकरणः ) भिद् विद् ( श्यन्विकरणः ) विद् ( श्नम्विकरणः ) शद् सद् स्विद् ( श्यन्विकरणः ) स्कन्द हद् इति पञ्चदश । बन्धिरिति इका निर्देशः। युधिरुधी इत्येकं पदम्, इका निर्देशः। राधिव्यध्शुध इत्येकं पदम्। राधीति इका निर्देशः । साधिसिध्यती इति द्वन्द्वः । साधीति इका निर्देशः । ततश्च धान्तेषु क्रुध् क्षुध् बुध् ( श्यन्विकरणः ) बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध् ( श्यन्विकरणः ) इत्येकादश । मन्येत्यादि तिप इत्यन्तमेकं पदम् । मन्येति श्यना निर्देशः । छुपीति इका निर्देशः । तृप्यति-दृप्यती इति द्वन्द्वः श्यना निर्देशः । लिवित्यादि यम इत्यन्तमेकं पदम् । सृपीति इका निर्देशः । रमिरिति भिन्नं पदम्, इका निर्देशः । तथा च नान्तेषु मन् हन्निति द्वौ । मनिः श्यन्विकरणः । पान्तेषु आप् क्षिप् छुप् तप् तृप् दृप् लिप् वप् शप् स्वप् सृप् इति त्रयोदश । भान्तेषु यभ् रभ् लभ् इति त्रयः । मान्तेषु गम् नम् यम् रम् इति चत्वारः । क्रुशिरित्यादि स्पृश इत्यन्तमेकं पदम् । दृशिरिति च इरित् । क्रुशि दिशि दंशीति इका निर्देशः । तथा च शान्तेषु क्रुश् दंश् दृश् दिश् मृश् रिश् रुश् लिश् विश् स्पृश इत्येते दश । कृपिरिति पृथक्पदम्, इका निर्देशः । त्विषित्यादि श्लिष्यतय इत्यन्तमेकं पदम्, पुष्येति श्यना निर्देशः, श्लिष्यतीति श्यन्विकरणस्य श्तिपा

---

छान्तेषु प्रच्छ्येकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्व-ञ्जिसञ्ज्सृजः पञ्चदश । भुजित्यनेन 'भुज पालनाभ्यवहारयोः' 'भुजो कौटिल्ये' इति च गृह्यते । युजित्यनेन 'युजिर् योगे' । 'युज समाधौ' इति च गृह्यते । केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजित्येतद् 'युजिर् योगे' इत्यस्यैकदेशोच्चारणमित्याहुस्तन्मते 'युज समाधौ' सेट् । सृजित्यनेन तु 'सृज विसर्गे' दिवादिस्तुदादिश्च गृह्यते । दान्तेषु अद्क्षुद्खिद्छिद्तुद्नुद्पद्यभि-द्विद्यतिर्विनद्शद्स्विद्यस्कन्दहदः पञ्चदश। खिदित्यनेन 'खिद दैन्ये' खिद्यतिः, खिन्दतिः खिन्तिश्च गृह्यते । विद्यतीति । 'विद सत्तायाम्' । विनदिति । 'विद विचारणे' । धान्तेषु क्रुध्क्षुध्बुध्यव्बन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्यतय एकादश । रुधित्यनेन 'रुधिर् आवरणे' । 'अनो रुध कामे' इति दिवादिश्च गृह्यते । नान्तेषु मन्यहनौ द्वौ । 'मन ज्ञाने' दिवादिः । पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्-लुप्वप्शप्स्वप्वप्सृपस्त्रयोदश । क्षिवित्यनेन 'क्षिप प्रेरणे' क्षिप्यतिः, क्षिपतिश्च गृह्यते । 'छुप स्पर्शे' । तपित्यनेन 'तप संतापे' 'तप ऐश्वर्ये' दिवादिः 'तप

वसतिर्दह्दिहिदुहो नह् मिह् रुह् लिह् वहिस्तथा ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम् ।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु ॥
तृपद्दपी तौ वारयितुं श्यना निर्देश आदृतः ।
किं च—स्विद्यपद्यौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना ॥

---

निर्देशः । तथा च षान्तेषु कृष् त्विष् तुष् द्विष् दुष् पुष् (श्यन्विकरणः) पिष् वि॰ शिष् शुष् श्लिष् (श्यन्विकरणः) इत्येकादश । घसिरिति पृथक्पदम् । इकानिर्देशः वसतिरिति पृथक्पदं श्तिपा निर्देशः । सान्तेषु घस् वस् इति द्वौ । दहदिहिदुह इति द्वन्द्वः दिहीति इका निर्देशः । नह् मिह् रुह् लिह् इति समाहारद्वन्द्वः । वहिरिति पृथक्पदम्, इका निर्देशः । तथेति चकारपर्यायः । हान्तेषु दह् दिह् दुह् नह् मिह् रुह् लिह् वह् इत्यष्टौ । द्व्यधिकं शतमिति । भाष्ये मृषेः । षान्तेषु पाठस्तु लेखकप्रमादकृत इति भावः । अथ पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह तुदादाविति । यौ तृपद्दपी तुदादौ चुरादौ च मतान्त॰ रीयत्वेन धातुपाठे स्थितौ तौ अनुदात्तेभ्यो वारयितुं श्यना निर्देशः अभ्युपगत इत्यर्थः *अत एव 'शे मुचादीनाम्' इति सूत्रभाष्ये तृपितो दृपित इत्युदाहृतं सङ्गच्छत इति भावः ।*

---

दाहे' इत्यपि णिजभावपक्षे गृह्यते । 'तिपृ क्षरणे' । तृप्यतिदृप्यत्योर्वेट्कत्वेऽपि, 'अनुदात्तस्य चर्दुपधस्य–' इत्यमर्थोऽयं पाठः । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । 'रिश् रुश् हिंसायाम्' । लिशि॰ त्यनेन 'लिश् अल्पीभावे' दिवादिः, 'लिश गतौ' तुदादिश्च गृह्यते । षान्तेषु कृष्त्विष्तुष्द्विष्दुष्॰ पुष्यपिष्विष्शिष्शुष्श्लिष्य एकादश । कृषिति भौवादिकतौदादिकौ गृह्येते । विषित्यनेन 'विष्लृ व्याप्तौ, तिष्विष्मिषिति दण्डकस्थोऽपि गृह्यते । शिषित्यनेन तु 'शिष्लृ विशेषणे' कष खष शिषेति दण्डकस्थश्च गृह्यते । विषिति 'विष्लृ व्याप्तौ' इति जौहोत्यादिक एव गृह्यते न तु दण्डकस्थः । शिषित्यनेनापि 'शिष्लृ विशेषणे' इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः । सान्तेषु घस्लृवसती द्वौ । 'घस्लृ अदने' 'लुङ्सनोर्घस्लृ' इत्यस्ते॰ रादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम् । हान्तेषु दह्दिह्दुह्सिह्नह्रुह्लिह्वहयोऽष्टौ । दुहित्यनेन दुहिरिति, भौवादिको न गृह्यते, किं तु 'दुह प्रपूरणे' इति आदादिक एवेति प्राञ्चः । इह मनोरमायां संग्रहश्लोक उक्तः—'कचच्छजा दधनपा भमशाः पसहाः क्रमात् । कचका णणटाः खण्डो गघजाष्टखजाः स्मृता' इति । तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातव उत्तरार्धोपात्तकादिक्रमेण ये वर्णास्तत्संख्यका बोध्या इत्यर्थः । अत एव कान्त एकः, चान्ताः षट् , छान्त एकः, जान्ताः पञ्चदशेत्यादि व्याख्यातम् । क इत्येकस्य, च इति षण्णाम्, ण इति पञ्चदशानां संज्ञेत्याद्यभ्युपगमात् । पान्तेषु द्वयोः श्यना निर्देशस्य फलमाह तुदादाविति । तृपद्दपी मतभेदेन तुदादौ स्थितौ । चुरादौ तु तृपिः सर्वमतेन स्थितः, दृपिस्त्वेकीयमतेनेति विवेकः । अतएव वक्ष्यति— 'तृप तृम्फ तृप्तौ' । द्वावपि द्वितीयान्तावित्यन्ये । 'दृप दृम्फ उत्क्लेशे' । प्रथमः प्रथ॰

वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ।
निजिर्विजिर्शक्लृ इति सानुबन्धा अमी तथा ॥
विन्दतिश्चान्द्रदौगादिरिष्टो भाष्येऽपि दृश्यते ।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥
रञ्जिमस्जी अदिपदी [1]नुद क्षुध् शुषिपुषी शिषिः ।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः ॥

स्पर्ध ३ संघर्षे । संघर्षः पराभिभवेच्छा । धात्वर्थेनोपसंग्रहादकर्मकः । स्पर्धते ।

---

किं चेति । अन्यदपि वक्ष्यत इत्यर्थः । **अन्यनिवृत्तय इति** । विकरणान्तरनिवृत्तय इत्यर्थः । तच्चाग्रे पदार्थधातुकनिरूपणे स्पष्टीभविष्यति । **अमी तथेति** । उक्तानुबन्धरहितानां व्यावृत्तय इत्यर्थः । एतदपि तत्तदार्धधातुकनिरूपणे स्पष्टीभविष्यति । **विन्दतिरिति** । 'विद्लृ लाभे' इति तौदादिकः । चान्द्रदौर्गादिव्याकरणसम्मतः । **भाष्येऽपि दृश्यत इति** । विन्दतिविनत्तिविद्यतीति तत्र पाठादिति भावः । **एनमिति** । विन्दतिमित्यर्थः । **नेह पेठुरिति** । तथापि भाष्यप्रामाण्यादस्यानिट्कत्वमिति भावः रञ्जिमस्जी इत्येकं पदम् । नुद क्षुध् इति पृथक्कृते पदे । शुषिपुषी इत्येकं पदम् । शिषिरित्यनन्तरम् इत्येते इति शेषः । **नवेहेति** । नव धातवो भाष्यानुक्ता अपि इहानुदात्तेषु परिगणिता इत्यर्थः । कुत इत्यत आह **व्याघ्रभूत्यादिसम्मतेरिति** । भाष्ये त्वेभ्यो नवभ्योऽन्येषां परिगणनं नवानामप्येषामुपलक्षणमिति भावः । तेन रक्तं रागात्, तदस्मिन्नन्नं प्रायेण, क्तोऽकृतमितप्रतिपन्नाः, शुष्कधृष्टौ, क्तेन नञ्विशिष्टेनेत्यादिसौत्रप्रयोगाः—नुन्नः, मग्नः, पुष्टः, मङ्क्त्वा, मङ्क्तव्यमित्यादिभाष्यप्रयोगाश्चात्र लिङ्गम् । इत्यनिट्कारिकाः । **स्पर्ध संघर्ष इति** ।

---

मान्तः, द्वितीयो द्वितीयान्त इत्येके इति च तुदादौ । चुरादौ तु 'तृप तृप्तौ' । 'तृप दृप संदीपने' इत्येके इति च । **अन्यनिवृत्तय इति** । निवर्तनीयास्तु 'ञिष्विदा स्नेहनमोचनयोः' । 'पद स्थैर्ये' । 'पिध गत्याम्' । 'पिधू शास्त्रे माङ्गल्ये च' । 'बुधिर् बोधने' इति भौवादिकाः । 'मनु अवबोधने' तानादिकः । 'पुष पुष्टौ' भौवादिकः क्रैयादिकश्च । 'श्लिष दाहे' भौवादिकः । 'वस आच्छादने' आदादिकः । एते अनुदात्तत्वराहित्यात् सेटः । 'युञ् बन्धने' क्रैयादिकोऽयमनुदात्त इत्यनिट् । श्यना निर्देशेन संग्राह्यास्तु 'ञिष्विदा गात्रप्रक्षरणे' । 'पद गतौ' । 'षिधु संराद्धौ' । 'बुध अवगमने' । 'मन ज्ञाने' । 'पुष पुष्टौ' । 'श्लिष आलिङ्गने' । 'वस निवासे' । एतेऽनिटः । 'यु मिश्रणामिश्रणयोः' अयं सेट् । **अमी तथेति** । 'णिजिर् शुद्धौ' । 'ओविजी भयचलनयोः' । 'शक मर्षणे' इत्येषां क्रमेण आदादिकतौदादिदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः । विन्दतिरिति 'विद्लृ लाभे' । **इष्ट इति** । अनिट्त्वेनेति शेषः । **भाष्यानुक्ता इति** । भाष्यकृताऽनुक्ताः, न तु प्रत्याख्याता इति नास्तीह तद्विरोधः । ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात् 'शुष्कधृष्टौ' 'क्तेन नञ्विशिष्टे-

---

१ अत्र 'नुद' इति पाठो बालमनोरमानुरोधेन । परन्तु 'तुद' इति बहुसम्मतः पाठः ।

२२५९ शपूर्वाः खयः ( ७—४—६१ ) अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते। 'हलादिः शेषः' ( सू २१७९ ) इत्यस्यापवादः। पस्पर्धे। स्पर्धिता। स्पर्धिष्यते। स्पर्धताम्। अस्पर्धत। स्पर्धेत। स्पर्धिषीष्ट। अस्पर्धिष्ट। अस्पर्धिष्यत। गाधृ

---

वर्तते इति शेषः। **पराभिभवेति**। परस्याभिभवः पराजयः। तद्विषयकेच्छेत्यर्थः। नन्वत्रेच्छायां पराभिभवस्य कर्मतया स्पर्धधातोः सकर्मकत्वाद् देवदत्तो यज्ञदत्तं स्पर्धयतीत्यादौ 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम्—' इत्यकर्मककार्यं कथमित्यत आह **धात्वर्थेनोपसंग्रहादकर्मक इति**। धात्वर्थबहिर्भूतकर्मकत्वमेव सकर्मकत्वमिति 'सुप आत्मनः क्यच्' इति सूत्रभाष्ये प्रपञ्चितत्वादिति भावः। नचैवं सति पदव्यवस्थायां 'स्पर्धायामाङः' इत्यत्र कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थ इति मूलग्रन्थविरोध इति वाच्यम्, तत्र स्पर्धेरभिभवपूर्वकाह्वाने वृत्तेरित्यलम्। **स्पर्धत इति**। कत्थन्ताः षट्त्रिंशदनुदात्तेत इत्युक्तेरात्मनेपदम्। एधधातुवद् लटि रूपाणीति भावः। धातोरिजादित्वाभावाद् 'इजादेश्च—' इति लिट्याम् न। अत एव नानुप्रयोगोऽपि। किन्तु लिटस्तादेशे 'लिटस्तझयोः—' इति तस्यैशि 'लिटि धातोः—' इति द्वित्वे 'हलादिः शेषः' इत्यभ्यासे प्रथमहल्व्यतिरिक्तहलां निवृत्तौ सस्पर्धे इति प्राप्ते। **शर्पूर्वाः खयः। अभ्यासस्येति**। 'अत्र लोपोऽभ्यासस्य' इत्यतस्तदनुवृत्तेरिति भावः। 'शर्पूर्वाः—' इत्यत्र शर् पूर्वो येभ्य इत्यतद्गुणसंविज्ञानो बहुव्रीहिः। तेन शर् न शिष्यते। **शिष्यन्त इति**। 'हलादिः शेषः' इत्यतः शेष इत्यनुवृत्तं कर्मणि घञन्तं बहुवचनान्ततया विपरिणम्यत इति भावः। तथा च प्रकृते अभ्यासे खय् पकारः शिष्यते। 'न न्द्राः संयोगादयः' इति रेफस्य द्वित्वनिषेधो न शङ्क्यः। द्वितीयैकाजवयवस्यैव तन्निषेधात्, तदाह **पस्पर्ध इति**। नच वव्रश्चेत्यत्राभ्यासे चकार एव शिष्येतेति वाच्यम्, 'हलादिः शेष' इत्यतो हि आदिरित्यप्यनुवर्तते। शर्व्यतिरिक्तवर्णापेक्षया धात्वादिभूता इत्यर्थः। पस्पर्धाते पस्पर्धिरे, पस्पर्धिषे पस्पर्धाथे पस्पर्धिध्वे, पस्पर्धे पस्पर्धिवहे पस्पर्धिमहे, इति लिटि रूपाणि सुगमानि। **स्पर्धितेति**। लुटि एधधातुवद् रूपाणि सुगमानीति भावः। **स्पर्धिष्यत इति**। लृटि एधधातुवद्रूपाणीति भावः। **स्पर्धतामिति**। लोटि एधिवद्रूपपाणीति भावः। **अस्पर्धतेति**। लङि एधिवद्रूपाणीति भावः। हलादित्वादडेव न त्वाडिति विशेषः। **स्पर्धेतेति**। विधिलिङि एधिवद्रूपाणि। **स्पर्धिषीष्टेति**। आशिषि लिङि एधिवद्रूपाणि। **अस्पर्धिष्टेति**। लुङि एधिवद्रूपाणि। अडागमः, न त्वाड् इति विशेषः। **अस्पर्धिष्यतेति**।

---

नानञ्' इत्यादि सौत्रप्रयोगादत्तु प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यं नेयमिति भावः। **अकर्मक इति**। अत्र केचित्—अभिभवेच्छा धात्वर्थस्तथा च स्पर्धार्थकस्य सकर्मकता दृश्यते 'आह्वास्त मेरावमरावतीं या' इति उदाहरिष्यते च 'स्पर्धायामाङः' इत्यत्र स्वयमेव 'कृष्णश्चाणूरमाह्वयते स्पर्धत इत्यर्थः' इति। श्रीहर्षोऽपि प्रायुङ्क्त—'तन्नासत्ययुगान्तं वा त्रेधा स्पर्धितुमर्हति' इति। अतोऽस्य सकर्मकत्वं न्याय्यमित्याहुः। **शर्पूर्वाः**। अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः। तेन शरो न शेषः किं तु खयामेव। इह स्पर्ध इत्यत्र रेफस्यापि द्वित्वं भवति, द्वितीयस्यैकाचः

४ प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते । जगाधे । बाधृ ५ लोडने । लोडनं प्रतिघातः । बाधते । नाथृ ६ नाधृ ७ याच्ञोपतापैश्वर्याशीःषु । 'आशिषि नाथ इति वाच्यम्' । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र नाथति । नाधते । दध ८ धारणे । दधते । २२६० **अत एकहल्मध्येऽनादेशादेर्लिटि ।** (६-४-१२०) लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्याकारस्यैकारः स्यादभ्यासलोपश्च किति लिटि । २२६१ **थलि च सेटि ।** (६-४-१२१) प्रागुक्तं स्यात् । आदेशश्चेह वैरूप्यसंपादक एवाश्रीयते, शसिददोः

लुङि एधिवद्रूपाणि । अडागमो विशेषः । न त्वाट् । **गाधृ प्रतिष्ठेति ।** चतुर्थान्तो धातुः । ऋकारो 'नाग्लोपिशास्वृदिताम्' इति निषेधार्थः । अजगाधत् । प्रतिष्ठा आधारे स्थितिः । ग्रन्थो ग्रन्थनं रचनम् । **जगाध इति ।** लिटि द्वित्वादि । अभ्यासस्य ह्रस्वः, चुत्वम् । **बाधृ इति ।** प्रतिघातः पीडनम् । **नाथृ नाधृ इति ।** द्वितीय चतुर्थान्तौ धातू । उपतापो ज्वरप्रयुक्ता पीडा । आशीराशासनम् । द्वितीयान्तस्य नाथृधातोर्विशेषमाह **आशिषि नाथ इति ।** अत्र नाथ इति षष्ठी । 'अनुदात्तङित-' इत्यत आत्मनेपदमित्यनुवर्तते । अनुदात्तेत्त्वादेव सिद्धे नियमार्थमिदं वार्तिकम् । तदाह **अस्याशिष्येवेति ।** आशासनार्थवृत्तेरेव नाथधातोरात्मनेपदम् । याच्ञाद्यर्थवृत्तेस्तु 'शेषात् कर्तरि-' इति परस्मैपदमेवेत्यर्थः । **नाथत इति ।** आशास्ते इत्यर्थः । **अन्यत्रेति ।** याच्ञाद्यर्थे विद्यमानस्येत्यर्थः । अथ चतुर्थान्तस्य विद्यमानस्येत्यर्थः । अथ चतुर्थान्तस्य नाधधातोरुदाहरति **नाधत इति ।** **दधेति ।** चतुर्थान्तोऽयम् । तस्य लटि एधिवद्रूपाणि सिद्धवत्कृत्य लिटस्तादेशे तस्यैशि द्वित्वे दध् दध् ए इति स्थिते । **अत एकहल्मध्ये ।** आदेशः आदिर्यस्येति बहुव्रीहिः । 'अङ्गस्य' इत्यधिकृतम् अन्यपदार्थः । लिटीति निमित्तसप्तमी अनादेशादेरित्यस्यैकदेशे आदेशेऽन्वेति । लिटि परे निमित्ते य आदेशः स आदिर्यस्य न भवति तथाविधस्याङ्गस्येति लभ्यते । अङ्गस्येत्यवयवषष्ठी । तथा च तथाविधाङ्गावयवस्याऽत इति लभ्यते । एकशब्दः असहायवाची । 'एकेमुख्यान्यकेवलाः' इत्यमरः । एकौ असंयुक्तौ हलौ एकहलौ, तयोर्मध्य एकहल्मध्यः, तत्रेति विग्रहः । अत इत्यस्यैव विशेषणमिदम् । 'घ्वसोरेद्धौ-' इत्यत एदिति अभ्यासलोप इति चानुवर्तते । 'गमहन-' इत्यतः कितीत्यनुवर्तते, न तु ङितीति, लिडादेशानां ङित्त्वासंभवात् । लिटीत्येत्वविधौ परनिमित्तं च । आवृत्त्या उभयार्थलाभः, तदाह **लिण्निमित्तेत्यादिना ।** **थलि च ।** प्रागुक्तमिति । 'अत एकहल्मध्ये-' इति यत् प्रागुक्तं एत्वादि तत् सेटि थलि च स्यादित्यर्थः । थलः कित्त्वाभावात् पूर्वसूत्रेणाप्राप्तौ वचनम् । ननु देधे पेततुरित्यादौ

संबन्धिरेफस्यैव 'नन्द्राः-' इति निषेधादिति बोध्यम् । **गाधृ ।** ऋकारो 'नाग्लोपिशास्वृदिताम्' इति निषेधार्थः । अजगाधत् । आस्पदं स्थापनम् अवस्थानं वा । प्रतिष्ठा एकत्र स्थापनं संदर्भो वा ग्रन्थः । **नाथृ नाधृ ।** उपतापो रोगः । अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह **आशिष्येवेति ।** **अत एकहल्मध्ये ।** एकशब्दोऽत्रासहायवचनः । एकयोर्हलोर्मध्य इत्यर्थः । तद्व्याचष्टे असंयुक्तेति । इष्टानुरोधेन लिटीत्यावर्त्य आदेशविशेषणमेत्वस्य निमित्तं च क्रियत इत्याह **लिण्निमित्तेति ।**

प्रतिषेधवचनाज्ज्ञापकात्। तेन प्रकृतिजश्चरां तेषु सत्स्वपि एत्वाभ्यासलोपौ स्त एव। देधे देधाते देधिरे। 'अतः' किम्—दिदिवतुः। 'तपरः' किम्—ररासे। 'एक—इत्यादि' किम्—तत्सरतुः। 'अनादेशादेः' किम्—चकणतुः। लिटा आदेशविशेषणादिह स्यादेव—नेमिथ, सेहे॥ स्कुदि ९ आप्रवणे। आप्रवण-

---

'अभ्यासे चर्च' इति जशां चरां च जशि चरि च लिण्निमित्तादेशादित्वात् कथमेत्वाभ्यासलोपावित्यत आह आदेशश्चेति। इह 'अत एकहल्मध्ये–' इति सूत्रे आदेशशब्देन स्थान्यपेक्षया विरूप एवादेशो विवक्षितः। तथा च तथाविधादेशादेरेव एत्वाभ्यासलोपौ न भवतः स्थानिसरूपादेशादेस्तु न पर्युदास इत्यर्थः। शसिदद्योरिति। 'न शसददवादिगुणानाम्' इति शसिदद्योरेत्वाभ्यासलोपयोः प्रतिषेध उच्यते। यदीह यथाकथंचिदादेशादेः पर्युदासः स्यात्, तर्हि शसिदद्योरभ्यासे शकारदकारयोश्चर्जशोः शकारदकारादेशे सति आदेशादित्वादेव एत्वाभ्यासलोपयोः अभावसिद्धौ 'न शसदद्वा–' इति तत्प्रतिषेधोऽनर्थकः स्यात्। अतो वैरूप्यसंपादकादेशादेरेव पर्युदासो विज्ञायत इत्यर्थः। तेनेति। स्थानिसरूपादेशादेः पर्युदासाभावादित्यनेनेत्यर्थः। सत्स्वपीति। देधे पेततुरित्यादौ दकाराद्यादेशेषु सत्स्वपीत्यर्थः। देध इति। दध् दध् ए इति स्थिते दकारादकारस्य एत्वेऽभ्यासलोपे च रूपम्। 'असंयोगाल्लिट् कित्' इति कित्त्वमिह बोध्यम्। देधिर इति। देधिषे देधाथे देधिध्वे, देधे देधिवहे देधिमहे इति रूपाणि संभवन्तीति भावः। दिदिवतुरिति। दिव्धातोरतुसि द्वित्वे हलोर्मध्ये अतोऽभावादेत्वाभ्यासलोपौ नेति भावः। तपरः किमिति। अत इति तपरकरणं किमर्थमित्यर्थः। ररासे इति। 'रास शब्दे' भ्वादिरात्मनेपदी। अत्र हल्मध्यस्थावर्णस्य ह्रस्वत्वाभावादेत्वाभ्यासलोपौ नेति भावः। एकेत्यादि किमिति। एकहल्मध्यस्थस्येति किमर्थमित्यर्थः। तत्सरतुरिति। 'त्सर छद्म गतौ'। लिटोऽतुसि द्वित्वे अभ्यासाकारस्य नासंयुक्तहल्मध्यस्थत्वमिति भावः। चकणतुरिति। 'कण शब्दे'। लिटोऽतुसि द्वित्वे 'कुहोश्चुः' इति ककारस्य चुत्वेन चकारः। तथा च वैरूप्यसंपादकादेशादित्वादेत्वाभ्यासलोपौ नेति भावः। अथ लिण्निमित्तादेशादिकमित्यत्र लिण्निमित्तेत्यस्य प्रयोजनमाह लिटेति। नेमिथेति। 'णमु प्रह्वत्वे शब्दे च'। 'णो नः' इति नत्वम्। थलि इटि द्वित्वे नत्वसंपन्ननकारादेशादित्वेऽपि नत्वस्य लिण्निमित्तकत्वाभावाल्लिण्निमित्तकादेशादित्वाभावादेत्वाभ्यासलोपौ निर्बाधाविति भावः। सेह इति। 'षह मर्षणे'। 'धात्वादेः षः सः' इति सत्वे लिटि द्वित्वे सत्वसंपन्नसकारादेशादित्वेऽपि सत्वस्य लिण्निमित्तकत्वाभावाद् लिण्निमित्तकादेशादित्वविरहादेत्वाभ्यासलोपौ निर्बाधाविति भावः। दधिता। दधिष्यते। दधताम्। अदधत। दधेत। दधिषीष्ट। अदधिष्ट। अदधिष्यत।

---

किति लिटीति। यद्यपि 'गमहन—' इति सूत्रे क्ङितीति वर्तते तथापि प्रयोजनाभावाद् ङितीत्येतन्नानुवर्तते, इति भावः। किति किम्, ननाद। लिटि किम्, पापच्यात्। चकणतुरिति। न चैवमपि बभणतुरित्यत्र 'अभ्यासे चर्च' इत्यस्यासिद्धत्वाभ्यासलोपौ स्त एवेति वाच्यम्, फलभजग्रहणेन एत्वविधिं प्रति तत्

मुत्प्लवनमुद्धरणं च। २२६२ **इदितो नुम्धातोः।** (७—१—५८) स्कुन्दते। चुस्कुन्दे। श्विदि १० श्वैत्ये। अकर्मकः। श्विन्दते। शिश्विन्दे। वदि ११ अभिवादनस्तुत्योः। वन्दते। ववन्दे। भदि १२ कल्याणे सुखे च। भन्दते। बभन्दे। मदि १३ स्तुतिमोदमदस्वप्नकान्तिगतिपु। मन्दते। ममन्दे। स्पदि १४ किञ्चिच्चलने। स्पन्दते। पस्पन्दे। क्लिदि १५ परिदेवने। शोक इत्यर्थः। सकर्मकः। क्लिन्दते चैत्रम्। चिक्लिन्दे। मुद १६ हर्षे। मोदते। दद १७ दाने। ददते। २२६३ **न शसददवादिगुणानाम्।** (६-४-१२६) शसेर्ददेर्वकारा-

---

**स्कुदीति।** उत्प्लवनमुत्प्लुत्य गमनम्। **इदितः।** इद् ह्रस्व इकारः, इत् इत्संज्ञकः यस्य स इदित्, तस्येति विग्रहः। इत्संज्ञकेदन्तधातोरित्यर्थः। तेन चक्षिङादौ न दोपः। नुमि मकार इत्। उकार उच्चारणार्थः। मित्त्वादन्त्यादचः परः। **स्कुन्दत इति।** 'नश्चापदान्तस्य—' इत्यनुस्वारः परसवर्णः। **चुस्कुन्द इति।** लिटि द्वित्वे 'शर्पूर्वाः खयः' इत्यभ्यासे ककारः शिष्यते। 'कुहोश्चुः' इति तस्य कुत्वेन चकारः। **श्विदीति।** श्वैत्यं श्वैत्यकरणम्। **अकर्मक इति।** श्वैत्यस्य धात्वर्थोपसंग्रहादिति भावः। ततश्च श्विन्दयति देवदत्तं इत्यादौ 'गतिबुद्धिप्रत्यवसान—' इत्यादिना अकर्मककार्यं द्वितीया भवति। श्वेतीभवनं वा श्वैत्यम्। **श्विन्दत इति।** श्वेतीभवतीत्यर्थः। इदित्वान्नुम्। अनुस्वारपरसवर्णौ। **शिश्विन्द इति।** नुमि कृते गुरुमत्त्वेऽपि इजादित्वाभावादाम् नेति भावः। **वदीति।** अभिवदनम् आशीर्वादः, तत्कारणभूतो व्यापारः प्रणामादिरभिवादनम्। **वन्दत इति।** इदित्वान्नुम्। **भदीति।** कल्याणं शुभक्रिया, सुखं सुखीभावः। **भन्दत इति।** इदित्वान्नुम्। **बभन्द इति।** अभ्यासे भकारस्य जश्भावेन बकारः। **मदीति।** मोदः सन्तोपः। मदो गर्वः। **ममन्द इति।** इदित्त्वान्नुम्। **ममन्द इति।** नुमि सति संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ नेति भावः **स्पदीति।** अकर्मकः। **स्पन्दत इति।** इदित्त्वान्नुम्। **पस्पन्द इति।** 'शर्पूर्वाः खयः' इत्यभ्यासे पकारः शिष्यते। **क्लिदीति।** परिदेवनशब्दं व्याचष्टे **शोक इति।** स्मृत्वा क्लेशः शोकः, तदाह **सकर्मक इति।** **क्लिन्दते चैत्रमिति।** अतीतं चैत्रं स्मृत्वा क्लिश्नातीत्यर्थः। इदित्त्वान्नुम्। **चिक्लिन्द इति।** अभ्यासे ककारस्य चुत्वेन च इति भावः। **मुदेति।** हर्षस्तुष्टिः। **मोदत इति।** शपि लघूपधगुणः। **मुमुद इति।** 'असंयोगाल्लिट्कित्' इति कित्त्वान्न गुणः। **ददेति।** न ममेति त्यागो दानम्, न तु द्रव्यत्यागः, तथा सति धात्वर्थोपसंग्रहादकर्मकत्वापत्तेः। **न शसदद।** शस दद वादि गुण एषां द्वन्द्वः। अवयवषष्ठी। गुणशब्देन विहित एव गुणोऽत्र गुणशब्देन विवक्षितः, अन्यथा शसिददिग्रहणवैयर्थ्यात्। 'अत एकहल्मध्ये—' इत्यस्माद् अत

---

सूत्रस्य सिद्धत्वज्ञापनात्। एवं चादेशश्चेह वैरूप्यसंपादक एव गृह्यत इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक्। **मदि स्तुतीति।** मोदः संतोपः। मदो गर्वः। स्वप्न आलस्यम्। **न शसदद।** 'शसु हिंसायाम्' दन्त्यान्तः। सूत्रेऽवयवावयविभावः पष्ठयर्थः। तथा च—शसददवादीनां योऽकार इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वा-

दीनां गुणशब्देन भावितस्य च योऽकारस्तस्यैत्वाभ्यासलोपौ न। ददद दददाते दददिरे। ष्वद १८ स्वर्द १९ आस्वादने। अयमनुभवे सकर्मकः। रुचावकर्मकः। २२६४ धात्वादेः षः सः। (६-१-६४) धातोरादेः षस्य सः स्यात्। 'सात्पदाद्योः' (सू २१२३) इति षत्वनिषेधः। अनुस्वदते। सस्वदे। स्वर्दते। सस्वर्दे। उर्द २० माने क्रीडायां च। २२६५ उपधायां च। ( ८-२-७८ ) धातोरुपधाभूतयोः रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। ऊर्दते।

---

इति, 'श्वसोरद्धौ-' इत्यत एदिति, अभ्यासलोप इति चानुवर्तते, तदाह शसेरित्यादिना। गुणशब्देनेति किम्? पेचे। अत्र पचेरकारस्य गुणत्वेऽपि गुणशब्देन विहितत्वाभावान्नायं निषेधः। पृधातोः पपरतुरिति तु गुणस्योदाहरणम्, गुणशब्देन विहितो यः अर् तदवयवत्वादकारस्येति बोध्यम्। दद्द इति। ददेर्लिटस्तादेशस्य एशि द्वित्वे 'अत एकहल्मध्ये-' इति प्राप्तावेत्वाभ्यासलोपौ न भवतः। ष्वद् स्वर्देति। आस्वादनम् अनुभवः। प्रीतिविषयीभावात्मिका रुचिर्वा, तदाह अयमिति। प्रत्येकाभिप्रायमेकवचनम्। धात्वादेः। ष इति षष्ठ्यन्तम्, तदाह धातोरादेः षस्य सः स्यादिति। षकारस्य सः स्यादित्यर्थः। धातुग्रहणं किम्? षट्। अत्र धात्वादित्वाभावान्न सकारः। आदिग्रहणं किम्? लषति। न चैवमपि षकारीयतीत्यादौ सुब्धात्वादेरपि षस्य सकारः स्यादिति वाच्यम्, आदेच उपदेश इत्यनुवृत्तेः। एवं षडित्यादावपि उपदेशग्रहणानुवृत्त्यैव व्यावृत्तिसिद्धेर्धातुग्रहणं भाष्ये प्रत्याख्यातम्। ननु धातुपाठे स्वद स्वर्देत्येवं सकार एव उपदिश्यताम्। एवं च 'धात्वादेः षः सः' इत्यपि मास्तु इति चेन्मैवम्, ण्यन्ताद् लुङि असिष्वददित्यत्र षकारश्रवणार्थकत्वाद् धातुपाठे सकारस्यैवोपदेशे तु असिष्वददित्यत्र सकारस्य आदेशसकारत्वाभावेन षत्वासंभवात्। नन्वेवं सति अनुस्वदत इत्यत्रादेशसकारत्वात् षत्वापत्तिरित्यत आह सात्पदाद्योरिति। सस्वद इति। लिटि द्वित्वे संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ नेति भावः। उर्देति। चकारादास्वादनेऽपीति केचित्। उपधायां च। 'सिपि धातोः-' इत्यतो धातोरिति, 'र्वोरुपधायाः-' इत्यतो र्वोरिक इति, 'हलि च' इत्यतो हलीति चानुवर्तते। उपधयोरित्यर्थे उपधायामित्यार्षम् तदाह धातोरित्यादि। ऊर्दत इति। अत्र धातोः रेफ-

---

द्वनिबन्धना षष्ठी न संभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे गुणशब्देन भावितस्येति। भावितत्वं च साक्षात्परम्परासाधारणम्। तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः। दद्द इति। शशसतुः। शशसुः। ववमतुः। ववमुरित्यादावपि निषेधो बोध्यः। ष्वद स्वर्द। अयमिति। प्रत्येकाभिप्रायेणोक्तमित्याहुः। सकर्मक इति। स्वदस्व हव्यानि। हव्यान्यनुभवेत्यर्थः। अकर्मक इति। 'अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा' इति श्रीहर्षः। न रोचत इत्यर्थः। धात्वादेः। धातुग्रहणं किम्, षट् षड्। आदेः किम्, लषति। उपधायां च।

ऊर्दाञ्चक्रे । कुर्द २१ खुर्द २२ गुर्द २३ गुद २४ क्रीडायामेव । कूर्दते । चुकूर्दे । खूर्दते । गूर्दते । गोदते । जुगुदे । पूद २५ क्षरणे । सूदते । सुपूदे ।

---

वान्तत्वाभावाद् 'र्वोरुपधायाः—' 'हलि च' इत्यस्य चाप्राप्तौ उपधायां चेत्यारम्भः । धातोरित्यभावे पदाधिकारस्थत्वात् पदस्य उपधाभूतयोरित्यर्थः स्यात् । ततश्च क्विबन्ते ऊर्द इत्यत्रैव स्याद् ऊर्दत इत्यादौ न स्यात् । 'रेफवकारयोः' किम् ? पुष्यति । हल्परयोः किम् ? चिरिणोति । 'इकः' किम् ? नर्दति । ऊर्दाञ्चक्र इति । इजादित्वादाम् । 'कृञ्चानुप्रयुज्यते—' इत्यनुप्रयोगः । कुर्देति । गुदेत्यपि पृथग्धातुः क्रीडायामेवेत्यर्थनिर्देशः । एवकारस्तु इतोऽन्यत्र धात्वर्थनिर्देशस्य उपलक्षणत्वं ज्ञापयति कूर्दत इति । 'उपधायां च' इति दीर्घः । चुकूर्दे इति । 'कुहोश्चुः' इति चुत्वम् । खूर्दत इति । 'उपधायां च' इति दीर्घः । एवं गूर्द इति । गोदत इति । शपि लघूपधगुणः । जुगुद इति । 'असंयोगात्' इति कित्वान्न गुणः । पूदेति । क्षरणं प्रस्रवणम् । सूदत इति । प्रस्रवतीत्यर्थः । 'धात्वादेः—' इति षस्य सः अलघूपधत्वान्न गुणः । सुपूद इति । 'धात्वादेः—' इति षस्य सत्वे लिटि द्वित्वादौ इणः परस्यादेशसकारत्वात् षत्वम् । यदि धातुपाठे सकारस्यैव पाठः, तर्हि इहादेशसकारत्वाभावात् षत्वं न स्यात् । षोपदेशे तु षस्य सत्वे सति आदेशसकारत्वात् षत्वं सूपपादमिति भावः । ननु धातुपाठे के धातवः षादयः पठिताः, के वा सादयः, पाणिनिकृतषोपदेशपाठस्य इदानीं परिभ्रष्टत्वादित्याशङ्क्य पाणिनीयपरम्परा-

---

'सिपि धातोः—' इत्यतो धातोरित्यनुवर्तते । 'र्वोरुपधायाः—' इत्यतो र्वोरिको दीर्घ इति । 'हलि च' इत्यतो हलीति च, तदाह धातोरित्यादि । धातोः किम्, ऊङ्गतः । कुरुः कुर्वौ कुर्व इत्यत्रेको दीर्घो मा भूत् । न चात्र रेफस्य प्रातिपदिकोपधात्वेऽपि पदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यम्, पदस्येत्यनुवृत्तौ तु कूर्दते खूर्दत इत्याद्यसिद्धिप्रसङ्गात् । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकाराद् 'अचः परस्मिन्—' इति स्थानिवत्त्वस्य निषेधाभ्युपगमेऽपि कार्यकालपक्षे 'असिद्धं बहिरङ्गम्—' इति परिभाषायाः प्रवृत्तेर्बहिरङ्गस्य यणोऽसिद्धत्वात् कुर्वौ कुर्व इत्यत्र 'उपधायां च' इति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यन्तावश्यकता, पदस्येत्यनुवृत्त्या कूर्दत इत्यादौ दीर्घः सिद्ध्यत्येवेत्याहुः । रेफवकारयोः किम्, 'पुष्प विकसने' पुष्प्यति । हल्परयोः किम्, चिरिणोति जिरिणोति । इकः किम्, अर्वते । नर्दति । ननु 'हलि च' इत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिद्ध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत्, अत्राहुः—'हलि च' इत्यत्र धातुग्रहणमनुवर्तनीयमेव, अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात् । तथा च 'उपधायां च' इति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात्, किं तु रेफवान्तयोरेव धात्वोः 'हलि च' इति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति । सूदत इति । स्रवतीत्यर्थः । ननु स्वदेतिवत् स्वद सूदेति दन्त्यादय एव धातवः पठ्यन्ताम्,षोपदेशान् पठित्वा सत्वविधौ गौरवात् । मैवम् तथाहि सति ण्यन्ताच्चङि असिष्वदत् असूषुदत् इत्यादौ लिटि सुषूदे सिषेवेत्यादौ च 'आदेश-

सेक्सृप्सृस्तॄसृजस्तृस्त्यान्ये दन्त्याजन्तषादयः ।
एकाचः षोपदेशाः स्युः ष्वष्क्स्विद्स्वद्स्वञ्जस्वप्स्मिङः ॥

दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि । ष्वष्कादीनां पृथग्ग्रहणाज्ज्ञाप

---

सिद्धान् षोपदेशान् पठति सेगिति श्लोकेन । दन्त्याजन्तषादय एकाचः षोपदेशाः स्युरित्यन्वयः । दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, तथाविध षः षकार आदिर्येषां ते दन्त्याजन्तषादयः । दन्त्यपरकः अच्परकश्च यः षकारः तदादय एकाचे धातव इदानीं कृतसत्वाः सकारादित्वेन परिदृश्यमाना अपि षकारादित्वेन पाणिनिना उपदिष्टाः प्रत्येतव्या इत्यर्थः । सादय इति पाठेऽप्येवमेव व्याख्येयम् । 'अज्दन्त्यपराः षादय षोपदेशाः' इति भाष्यम् । षूद क्षरणे इत्यादयः अच्परकषोपदेशाः । ष्ठा गतिनिवृत्तावित्यादयस्तु दन्त्यपरकषोपदेशाः । 'दन्त्याजन्त' इति किम् ? 'ष्कुदि आप्रवणे' । चुस्कुन्दे । अत्र सकारो न दन्त्यपरकः नाप्यच्परकः । 'एकाचः' किम् ? सोसूत्र्यते । सूत्र वेष्टने, चुरादिरजन्तः अनेकाच् । यद्यप्येकाच इति भाष्ये न दृश्यते, तथापि यङ्विधौ 'सोसूच्यते' इति भाष्यं तत्र मानमिति बोध्यम् । एवं च 'षाध संसिद्धौ' इत्यादौ सकारपाठस्यैव दृश्यमानत्वेऽपि षोपदेशत्वमेव । ननु 'सेकृ गतौ' 'सृप्लृ गतौ' 'सृ गतौ' 'सृज विसर्गे' एते चत्वारः अच्परकसादयः । 'स्तृञ् आच्छादने', ऋदन्तः श्नुविकरणः । 'स्तॄञ् आच्छादने' ॠदन्तः श्नाविकरणः, 'स्त्यै शब्दसंघातयोः' एते त्रयो दन्त्यपरकसादयः । एतेषां सप्तानामपि षोपदेशत्वं स्यादित्यतिव्याप्तिमाशङ्क्य तद्भिन्नत्वं विशेषणमाह सेक् सृप् सृ स्तृ सृज स्तॄ स्त्यान्य इति । स्त्यैधातोः कृतात्वस्य निर्देशः श्लोके समावेशार्थः । स्त्यैइत्यैकारान्तस्य निर्देशे स्त्यायन्य इत्येकस्याक्षरस्याधिक्यापत्तेः । नन्वेवमपि 'ष्वष्क गतौ' 'ञिष्विदा गात्रप्रस्रवणे' 'ष्वद आस्वादने' 'ष्वञ्ज परिष्वङ्गे' 'ञिष्वप् शयने' 'ष्मिङ् ईषद्धसने' इत्येतेषु सकारस्य दन्त्यपरत्वाभावाद् अच्परकत्वाभावाच्च षोपदेशेष्वसंग्रहः स्यादित्यव्याप्तिमाशङ्क्य तानपि संगृह्णाति ष्वष्क स्विद् स्वन् स्वञ्ज स्वप् स्मिङ इति । अपीति शेषः । ननु 'स्वृ शब्दोपतापयोः' इत्यादीनामपि दन्त्यवकारपरकत्वात् । षोपदेशत्वं स्यादित्यत आह दन्त्यः केवलदन्त्य इति । कुत इत्यत आह ष्वष्कादीनामिति । अन्यथा दन्त्यपरकत्वादेव

---

प्रत्यययोः' इति षत्वं न स्याद् । इणः परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः, स च पाठ इदानीं परिभ्रष्टः । साधादिषु साधिपाठस्यैव दृश्यमानत्वात् अतो लक्षणामुखेन तान्व्यवस्थापयति सेगित्यादि । दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्यान्तसादयोऽजन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः । दन्त्ये त्यादि किम्, चुस्कुन्दे । एकाचः किम्, सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ । उक्तलक्षणस्यातिव्याप्तिं वारयितुमाह सेगिति । 'सेकृ गतौ' । 'सृप्लृ गतौ' ।

गात् । ह्लाद २६ अव्यक्ते शब्दे । ह्लादते । जह्लादे । ह्लादी २७ सुखे च । चादव्यक्ते शब्दे । ह्लादते । स्वाद २८ आस्वादने । स्वादते । पर्द २९ कुत्सिते शब्दे । पर्दते । यती ३० प्रयत्ने । यतते । येते । युतृ ३१ जुतृ ३२ भासने । योतते । युयुते । जोतते । जुजुते । वियृ ३३ वेथृ ३४ याचने । विविथे । विवेथे । श्रथि ३५ शैथिल्ये । श्रन्थते । ग्रथि ३६ कौटिल्ये । ग्रन्थते । कत्थ ३७ श्लाघायाम् । कत्थते । एवादयोऽनुदात्तेतो गताः ।

अथाष्टात्रिंशत्तवर्गीयान्ताः परस्मैपदिनः । अत ३८ सातत्यगमने । अतति । 'अत आदेः' ( सू २२४८ ) । आत आततुः आतुः । लङि आतित्

---

सेद्धे ष्वष्कादिग्रहणं व्यर्थं स्यादिति भावः । यद्यपि ष्वष्कतिरत्र भाष्ये न दृश्यते तथापि 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधः' इति वार्तिकात्तल्लाभ इति भावः । ह्लादेति । रेफवानयम् । अव्यक्तशब्दः अमनुष्यवाक् । जह्लाद इति । अभ्यासस्य ह्रस्वः, चुत्वम् । ह्लादीति । लकारवानयम् । 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थमीत्त्वम् । स्वादेति । केवलदन्त्यपरकत्वाभावान्नायं षोपदेशः । असिस्वदत् । पर्देति । गुदरव इत्यर्थः । यतीति । ईदित्त्वमिण्णिषेधार्थम् । येत इति । 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । युतृ जुतृ इति । ऋदित्त्वं 'नाग्लोपिशास्वृदिताम्' इत्याद्यर्थम् । योतत इति । शपि लघूपधगुणः । युयुत इति । 'असंयोगात्–' इति कित्त्वान्न गुणः । वियृ वेथृ इति । द्वितीयान्ताविमौ । ननु वियृ इत्येवास्तु, लघूपधगुणे सति वेथत इत्यस्याविशिष्टत्वादित्यत आह विविथे विवेथ इति । वेथृधातोर्विवेथे इति रूपम् । वियृधातोस्तु 'असंयोगात्–' इति कित्त्वाद् गुणाभावे विविथ इति रूपमिति भावः । श्रथीति । द्वितीयान्तः । शैथिल्यं स्रंसनम् । श्रन्थत इति इदित्त्वान्नुम् । ग्रथीति । द्वितीयान्तः । कौटिल्यं वक्रीभवनम् । ग्रन्थत इति । कत्थेति । अविद्यमानगुणज्ञापनं श्लाघा । अथाष्टात्रिंशदिति । अष्टौ च त्रिंशदिति द्वन्द्वः, अष्टाधिका त्रिंशदिति वा । 'द्व्यष्टनः संख्यायाम्–' इत्यात्वम् । अष्टत्रिंशदिति पाठे तु अष्टेति पृथक्पदम् । परस्मैपदिन इति । अनुदात्तस्वरितङ्ञित्त्वाभावात् 'शेषात् कर्तरि–' इति परस्मैपदिन एवेति भावः । आतेति । सातत्यगमनं संततगमनम् । लिटि णलि द्वित्वे हलादि शेषे अ अत् अ इति स्थिते पररूपे प्राप्ते आह अत आदेरिति । इति दीर्घ इति शेषः । तथा च अभ्यासाकारस्य दीर्घे सति सवर्णदीर्घः, तदाह आतेति । अकारस्य

---

'स्रु गतौ' 'स्तृञ् आच्छादने' । 'सृज विसर्गे' । 'स्तृञ् आच्छादने' । 'स्त्यै शब्दसंघातयोः' । एभ्योऽन्ये । पूर्वेण केषांचिदसंग्रहादाह ष्वष्केति । । 'ष्वष्क गतौ' । 'ष्विदा गात्रप्रक्षरणे' । 'स्वद आस्वादने' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । 'स्मिङ् ईषद्धसने' । एते षोपदेशा इत्यन्वयः । 'स्वाद आस्वादने' इत्यादावतिव्याप्तिमाशङ्क्याह दन्त्यः केवलदन्त्य इति । तथा च असिस्वददित्यादौ षत्वं नेति भावः । ह्लादी सुखे च । चादव्यक्ते शब्दे । ईकारः 'श्वीदितो निष्ठायाम्' इतीण्णिषेधार्थः ।

---

१ अन्यत्र पुस्तकेषु मूल एवायं पाठो दृश्यते ।

ई त् इति स्थिते। २२६६ इट ईटि। ( ८—२—२८ ) इटः परस्य सस्य लोपः स्यादीटि परे। 'सिज्लोप एकादेशे सिद्धो वाच्यः'। आतीत् आतिष्टाम् आतिषुः २२६७ वदव्रजहलन्तस्याचः। ( ७—२—३ ) वदेर्व्रजेर्हलन्तस्य चाङ्गस्याचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु। इति प्राप्ते। २२६८ नेटि। ( ७—२—४ ) इडादौ सिचि प्रागुक्तं न स्यात्। मा भवानतीत् अतिष्टाम् अतिषुः। चिती ३९

हल्मध्यस्थत्वाभावादेत्वाभ्यासलोपौ न। लुङीति। अतधातोर्लुङस्तिपि 'इतश्च' इति इकारलोपे, च्लेः सिचि, तस्य इडागमे 'अस्तिसिचोऽपृक्ते' इति ईडागमे आटि वृद्धौ आतिस् ई त् इति स्थिते सतीत्यर्थः। इट ईटि। इट इति पञ्चमी। 'रात्सस्य' इत्यतः सस्येति 'संयोगान्तस्य—' इत्यतो लोप इति चानुवर्तते, तदाह इटः परस्येति। एवं च आति स् ई त् इति स्थिते सकारस्य लोपे आति ई त् इति स्थिते सवर्णदीर्घे आतीदिति रूपं वक्ष्यति। तत्र सलोपस्यासिद्धत्वात् कथं सवर्णदीर्घ इत्यत आह सिज्लोप एकादेशे सिद्धो वक्तव्य इति। आतिष्टामिति। लुङस्तस्। तस्य ताम्। च्लेः सिच्। तस्य इटि आटि वृद्धौ षत्वम्। अपृक्तत्वाभावेन ईडभावात् सलोपो न। आतिषुरिति। लुङो झिः। च्लेः सिच्। जुस्, इट्, आट्, वृद्धिः, षत्वम्, रुत्वविसर्गौ। आतीः आतिष्टम् आतिष्ट। आतिषम् आतिष्व आतिष्म। अत्र वृद्धिमाशङ्कितुमाह वदव्रज। वद व्रज हलन्तः, एषां समाहारद्वन्द्वात् षष्ठ्येकवचनम् 'अङ्गस्य' इत्यधिकृतम् 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते। तदाह वदेरित्यादिना। हलन्तत्वादेव सिद्धे वदव्रजग्रहणं तु अवादीदव्राजीदित्यत्र 'अतो हलादेर्लघोः' इति वृद्धिविकल्पबाधनार्थम्। नेटि प्रागुक्तं नेति। 'वदव्रजहलन्तस्याचः' इत्युक्तं नेत्यर्थः। तत्र वदव्रजयोर्विशिष्य विधानाद् हलन्तलक्षणाया एव वृद्धेर्निषेधोऽयम्। हलन्तलक्षणा वृद्धिस्तु अधाक्षीदित्यादावनिडादौ सिचि चरितार्था। नन्वतीदित्यादौ अकारस्य वृद्धौ सत्यामसत्यां च आट एकादेशे सति रूपे विशेषाभावात् किं तन्निषेधेनेत्याशङ्क्याह मा भवानतीदिति। माङ्योगे आडभावे सति वृद्धिनिषेधः सफल

प्रह्लन्नः, प्रह्लन्नवान्। इह 'ह्लादो निष्ठायाम्' इत्युपधाह्रस्वः। श्लाघायामिति। अविद्यमानगुणसम्बन्धज्ञापनं श्लाघा। आततुरिति। हल्मध्यस्थत्वाभावादेत्वं न। इट ईटि। 'संयोगान्तस्य लोपः' इत्यतो लोप इति 'रात्सस्य' इत्यतः सस्येति चानुवर्तते, तदाह लोपः स्यादिति। इटः किम्, अहार्षीत्। ईटि किम्, आतिष्टाम्। आतिषुः। सिज्लोप इति। अत्र वदन्ति—सलोप इति वक्तव्ये सिज्ग्रहणं 'झलो झलि' इत्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम्। तेनेह न—सोमसुत्। स्तोता। द्विष्टराम्। द्विष्टमाम्। 'घि च' इति सूत्रे तु वामनमते सिचो लोपः। भाष्यमते तु सस्येति भेदो बोध्य इति। वदव्रज। अवादीत्। अव्राजीत्। 'अतो हलादेः—' इति विकल्पं बाधित्वा अनेन नित्यं वृद्धिः। हलन्तस्योदाहरणमपाक्षीत्, अयाक्षीत्। तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। 'हलोऽच' इत्युक्ते त्वकन्ताङ्गस्य हलः स्थाने वृद्धिरिति कदाचिदाशङ्क्येत। अच इति तु इक्परिभाषाया अनुपस्थानार्थम्। अन्यथा अभैत्सीदित्यत्र स्यान्न त्वपाक्षीदित्यादौ। नेटि। प्रागुक्तं नेति।

संज्ञाने। चेतति। चिचेत। अचेतीत्। अचेतिष्टाम्। अचेतिषुः। च्युतिर् ४० आसेचने। आसेचनमार्द्रीकरणम्। आङीषदर्थेऽभिव्याप्तौ च। 'इर इत्संज्ञा वाच्या'। च्योतयति। चुच्योत।

२२६६ इरितो वा। (३-१-५७) इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदे परे। अच्युतत्, अच्योतीत्। श्च्युतिर् ४१ क्षरणे। श्च्योतति। चुश्च्योत। अश्च्युतत्, अश्च्योतीत्। यकाररहितोऽप्ययम्। श्चोतति। मन्थ ४२ विलोडने। विलोडनं प्रतिघातः। मन्थति। ममन्थ। यासुटः 'किदाशिषि' ( सू २२१६ ) इति कित्वाद् 'अनिदिताम्—' ( सू ४१५ ) इति नलोपः। मथ्यात्। कुथि ४३ पुथि ४४ लुथि ४५ मथि ४६ हिंसासंक्ले-

---

इति भावः। **चितीति**। ईदित्त्वं 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थम्। **चेततीति**। शपि लघूपधगुणः। **चिचेतेति**। तिबादेशणलः पित्त्वेन 'असंयोगात्—' इति कित्त्वस्याप्रवृत्तेः न गुणनिषेधः। चिचिततुरित्यादौ तु कित्त्वान्न गुणः। **अचेतीदिति**। 'इट ईटि' इति सलोपः **अचेतिष्टामिति**। अपृक्तत्वाभावादीडभावान्न सिज्लोपः। 'नेटि' इति निषेधान्न हलन्तलक्षणा वृद्धिः। **च्युतिरिति**। अत्र इकारस्य रेफस्य च प्रत्येकमित्संज्ञायामिदित्त्वान्नुमि प्राप्ते आह **इर इत्संज्ञेति**। तथा च इर् इति समुदायस्य इत्संज्ञकत्वादिदित्त्वाभावान्न नुमिति भावः। **च्योततीति**। लघूपधगुणः। **चुच्योतेति**। णलः पित्त्वेन कित्त्वाभावान्न गुणनिषेध इति भावः। चुच्युततुरित्यादौ तु कित्वान्न गुणः। लुङि च्लेः सिचि प्राप्ते। **इरितो वा**। 'धातोरेकाचः—' इत्यतो धातोरिति 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्यः—' इत्यतः अङिति 'पुषादिद्युतादि—' इत्यतः परस्मैपदेष्विति चानुवर्तते, तदाह **इरितो धातोरित्यादिना**। **अच्युतदिति**। अङि सति ङित्त्वान्न गुणः। अच्युतताम् अच्युतन्। अच्युतः अच्युततम् अच्युतत। अच्युतम् अच्युताव अच्युताम। अङभावे त्वाह **अच्योतीदिति**। 'इट ईटि' इति सिज्लोपः। अच्योतिष्टामित्यादि। **श्च्युतिरिति**। च्युतिवद्रूपाणि। **चुश्च्योतेति**। 'शर्पूर्वाः—' इति चकारः शिष्यते। **यकाररहितोऽपीति**। 'मधुश्चुतं घृतमिव सुपूतम्' इत्यादौ तथा दर्शनादिति भावः। **मन्थेति**। विलोडनमास्फालनम्। **मन्थतीत्यादि**। सुगमम्। आशीर्लिङि विशेषमाह **यासुट इति**। **कुथीति**। चत्वारोऽपि द्विती-

---

हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः, किंतु हलन्तलक्षणाया एव वृद्धेर्निषेधः, तस्या अनिणादौ सिचि चरितार्थत्वात्। अमुमेवार्थं मनसि निधाय क्वचित् पुस्तकेषु हलन्तलक्षणा वृद्धिर्नेत्येव पठ्यते। **इर इत्संज्ञेति**। इकारस्य 'उपदेशेऽजनुनासिकः—' इति, रेफस्य तु 'हलन्त्यम्' इति प्रत्येकमित्संज्ञायाम् 'इदित—' इति नुम् स्यादिति भावः। एतस्य वैयर्थ्यं 'चक्षिङ् व्यक्तायां वाचि' इत्यत्र स्फुटीभविष्यति। **चुश्च्योतेति**। 'शरपूर्वाः खयः'। **यकाररहितोऽप्ययमिति**। तथा च प्रयुज्यते 'मधुश्च्युतं घृतमिव सुपूतम्' इति। **मन्थ**। अयं क्र्यादावपि। 'षिध गत्याम्'। अयमुदिदिति केचित्। तत्तु सिध्यतिबुध्यत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम्। उदित्त्वे तु 'उदितो वा' इति क्त्वायामिड्-

-शनयोः। इदित्त्वान्नलोपो न । कुन्थ्यात् । पुन्थ्यात् । लुन्थ्यात् । मन्थ्यात् । षिध ४७ गत्याम् । सेधति । सिषेध । सेधिता । असेधीत् । 'सात्पदाद्योः' ( सू २१२३ ) इति षत्वनिषेधे प्राप्ते । २२७० उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् । ( ८—३—६५ ) उपसर्गस्थान्निमित्तादेषां सस्य षः स्यात् । २२७१ सदिरप्रतेः। ( ८—३—६६ ) प्रतिभिन्नादुपसर्गात्सदेः सस्य षः स्यात् । २२७२ स्तन्भेः। ( ८—३—६७ ) सौत्रस्य सस्य षः

---

यान्ताः । इदित्त्वान्नुमि कुन्थतीत्यादि सुगमम् । आशीर्लिङि यासुटः कित्त्वेऽपि इदित्त्वेन 'अनिदिताम्–' इति पर्युदासाद् नलोपो नेत्याह इदित्त्वादिति। कुन्थ्यादिति । पुन्थ्यात् लुन्थ्यात् एतदर्थमेव मन्थधातोः पृथक् मथीति निर्देशः । षिध गत्यामिति । अच्परकषकारादित्वात् षोपदेशोऽयम् । ततश्च 'धात्वादेः–' इति सः । तदाह सेधतीति । सिषेधेति । आदेशसकारत्वात् षत्वम् । अनिट्सु श्यन्विकरणस्यैव सिधेर्ग्रहणात् सेट्कोयम् । असेधीदिति । 'इट ईटि' इति सिज्लोपः । 'नेटि' इति निषेधाद् न हलन्तलक्षणा वृद्धिः । असेधिष्टामित्यादि । अथ निषेधतीत्यादौ 'उपसर्गात्सुनोति–' इति षत्वं वक्ष्यति । तत्किमर्थम् 'आदेशप्रत्यययोः' इत्येव सिद्धेरित्याशङ्क्याह सात्पदाद्योरिति । उपसर्गात्सुनोति । उपसर्गस्थादिति । उपसर्गशब्द उपसर्गस्थे लाक्षणिक इति भावः । निमित्तादिति । इण् रूपादित्यर्थः । 'इण्कोः' इत्यधिकारेऽपि कोरिति नात्र संबध्यते, असंभवात् । सस्येति । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तत इति भावः । षः स्यादिति । 'अपदान्तस्य मूर्धन्यः' इत्यधिकारादिति भावः । अत्र सुनोतीत्यादिः श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थं इति प्राञ्चः । स्पष्टार्थ इति प्रौढमनोरमायाम् । सेनयेति णिजन्तो नामधातुः । सेधतीति शपा निर्देशात् सिध्यतेर्न ग्रहणम् । अभिषुणोतीत्याद्युदाहरणम् । प्रकृते निषेधतीत्याद्यर्थमिह सूत्रोपन्यासः । प्रसङ्गादाह सदिरप्रतेः । उपसर्गादिति । उपसर्गस्थादिणः परस्येत्यर्थः । सदिरिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह सदेः सस्येति । निषीदतीत्युदाहरणम् । स्तन्भेः । नकारोपधनिर्देशस्य प्रयोजनमाह सौत्रस्येति । 'स्तन्भुस्तुन्भु—' इति सूत्रनिर्दिष्टस्य नोपधस्येत्यर्थः ।

---

विकल्पान्निष्ठायामिण् न स्यात, 'यस्य विभाषा' इति निषेधात् । सिषेधेति । 'आदेशप्रत्यययोः' इति षत्वम् । उपसर्गात् । 'सुनोति सुवति–' इत्यादि श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेन अभिसोपवीतीत्यादौ षत्वं नेति प्राञ्चः । स्थादिष्वेवाभ्यासस्य षत्वं न सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम् । सेनयेति णिजन्तो नामधातुः । सेनयाऽभियाति अभिषेणयति । सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहणं न तु सिध्यतेः, परिसिध्यति । गृहा दारा इत्यत्रेव तात्स्थ्यात्ताच्छब्द्यमित्याह उपसर्गस्थादिति । निमित्तादिति । इण्रूपात् । कवर्गस्तु नेह सम्बध्यते, असम्भवात् । न च निःषुणोति निःषेधति निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वात् सस्य षत्वं न स्यादिति शङ्क्यम्, षत्वविधौ 'नुम्विसर्जनीयशर्व्यवायेऽपि' इत्यधिकारात् । इणन्तादुपसर्गादिति व्याख्याने

स्यात् । योगविभाग उत्तरार्थः । किं च अप्रतेः इति नानुवर्तते । 'बाहुप्रतिष्टम्भविवृद्धमन्युः' इति । २२७३ अवाच्चालम्बनाविदूर्ययोः । (८—३—६८) अवात्स्तन्भेरेतयोरर्थयोः षत्वं स्यात् । २२७४ वेश्च स्वनो भोजने । (८—३—६९) व्यवाभ्यां स्वनतेः सस्य षः स्याद्भोजने ।

स हि प्रतिपदोक्तः । 'ष्टभि प्रतिबन्धे' इत्यस्य तु धातोरिदित्त्वान्नुमि लाक्षणिकत्वान्न ग्रहणम् । तेन विस्तम्भत इत्यादौ न षत्वम् । 'उदःस्थास्तम्भोः—' इति सूत्रे तु मोपधग्रहणादुभयोरपि ग्रहणम्, मकारस्य उभयत्रापि लाक्षणिकत्वात् । ननु 'सदि, स्तन्भ्योरप्रतेः' इत्येकमेव सूत्रं कुतो न कृतमित्यत आह योगविभाग उत्तरार्थ इति । 'अवाच्चालम्बनाविदूर्ययोः' इत्युत्तरसूत्रे सदेरननुवृत्त्यर्थं इत्यर्थः । ननु सदेरस्वरितत्वादालम्बनाविदूर्ययोर्वृत्त्यभावादेव च अनुवृत्त्यभावः सिद्ध इत्यस्वारस्यादाह किं चेति । नानुवर्तत इति । 'स्तन्भेः' इत्यत्र अप्रतेरित्यस्य अनुवृत्तिर्नेष्टा । एकसूत्रत्वे तु अप्रतेरित्यस्य स्तन्भिनाऽपि संबन्धः स्यादिति भावः । अप्रतेरित्यस्य स्तन्भावनन्वयो वृद्धप्रयोगानुगत इत्याह बाहुप्रतिष्टम्भेति । अवाच्च । आलम्बनं च आविदूर्यं चेति द्वन्द्वात्सप्तमीद्विवचनम् । एतयोरिति । आलम्बनादूर्ययोरर्थयोर्विद्यमानस्य अवात्परस्य स्तन्भेरित्यन्वयः । अपूर्वविधिरयम्, इणः परत्वाभावादप्राप्तेः । आलम्बने यथा—यष्टिमवष्टभ्य तिष्ठतीति । आक्षिप्येत्यर्थः । आविदूर्यं

तु स्यादेवात्राव्याप्तिः । 'दुरः षत्वणत्वयोः—' इत्युपसर्गत्वप्रतिषेधाद् दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक् । मूर्धन्यादेशे फलितमाह सस्य षः स्यादिति । स्यादिषु 'प्राक् सितात्—' इत्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे सदिरप्रतेः । अप्रतेः किम्, प्रतिसीदति । षष्ठ्यर्थे प्रथमेत्याह सदेरिति । स्तन्भेः सौत्रस्येति । 'स्तन्भुस्तुन्भु—' इति सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु 'ष्टभि प्रतिबन्धे' इत्यस्येति भावः । एवं 'जृस्तन्भु—'इत्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम् । एतच्च 'लक्षणप्रतिपदोक्त—' परिभाषया लभ्यते । सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः । इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः । तेन विस्तम्भते इत्यादौ षत्वं न । 'उदःस्थास्तम्भोः—' इति सूत्रे मकारोपधग्रहणेनोभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यम्, मकारस्योभयत्रापि लाक्षणिकत्वात् । उत्तरार्थ इति । उत्तरसूत्रे स्तन्भेरेवानुवृत्त्यर्थ इति भावः । ननु 'सदिस्तन्भ्योः' इति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात्कथंचिदनुवृत्तिर्भविष्यतीत्यत आह किं चेति । नानुवर्तत इति । तथा च 'स्तन्भेः' इत्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः । अवाच्च । चकारश्चिन्त्यप्रयोजन इत्याहुः । आलम्बनमाश्रयणम् । यथा यष्टिमवष्टभ्य आस्ते । तामाश्रित्य तिष्ठतीत्यर्थः । आविदूर्यं सामीप्यम् । तच्च प्रयोगोपाधिः । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । एतयोः किम्, अवस्तब्धो वृषलः शीतेन । केचिदिह अविदूरशब्दात्स्वार्थे ष्यञ् । आविदूर्यमनतिदूरम् । ईषददूरमित्यर्थः । तथा च अविदूरशब्दात् 'न नञ्पूर्वात्तत्पुरुषात्' इति निषेधे प्राप्ते अतएव निपातनाद्भावे प्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत

२२७५ परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। (८—३—७०) परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति। २२७६ प्राक्सितादड्व्यवायेऽपि। (८—३—६३) 'सेवसित—' (सू २२७५) इत्यत्र सितशब्दात् प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्। २२७७ स्थादिष्वभ्यासेन चाभ्यासस्य। (८—३—६४) प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्।

---

सामीप्यम्। अवष्टब्धा गौः। निरुद्धा सती समीपे आस्त इत्यर्थः। वेश्च। अवादित्यनुकर्षणार्थश्चकारः, तदाह व्यवाभ्यामिति। विष्वणति। अवष्वणति। सशब्दं भुङ्क्ते इत्यर्थः। 'अट्कुप्वाङ्—' इति णत्वम्। परिनिविभ्यः। सेवेत्यकार उच्चारणार्थः। 'षेवृ सेवायाम्' इति धातोर्ग्रहणम्। परिषेवते। विषेवते। निषेवते। सितेत्यनेन 'षिञ् बन्धने' इति क्तान्तस्य ग्रहणम्। अस्यैव धातोः एरजन्तो वा पचाद्यजन्तो वा सयशब्दः। विषितः विषयः। 'षिवु तन्तुसन्ताने'। परिषीव्यति। 'षह मर्षणे' परिषहते। सुट् आगमः। परिष्करोतिस्तुस्वञ्जोः 'उपसर्गात् सुनोति—' इत्येव सिद्धे 'सिवादीनां वा—' इति विकल्पार्थं पुनर्वचनम्। प्राक्सितात्। सुनोत्यादय इति। 'उपसर्गात्सुनोति—' इत्यादिसूत्रोपात्ता इति शेषः। तेषामिति। पञ्चदशानामित्यर्थः। न्यषेधदिति। अकारेण व्यवहितत्वादिणः परत्वाभावादप्राप्तौ वचनम्। अभ्यषुणोदित्यप्युदाहार्यम्। स्थादिषु। अभ्यासेनेति तृतीयान्तम्। प्राक्सितादित्यनुवर्तते, तदाह प्राक्सितादिति। 'उपसर्गात्सुनोति—' इति सूत्रे स्थाधातुमारभ्य 'परिनिविभ्यः सेवसिता—' इत्यत्र सितशब्दात्प्राग् ये धातव उपात्ताः तेषु दशस्वित्यर्थः। निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहितत्वेन उपसर्गात्परत्वाभावादप्राप्तौ वचनम्। ननु निषिषेधेत्यादौ अभ्यासस्यसकारस्य 'उपसर्गात्सुनोति—' इत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह एषामेवेति। अभ्यासस्यसकारस्य चेत् षत्वं तर्हि स्थादिदशानामेवेत्यर्थः। एवं च 'पू

---

इत्याहुः। वेश्च। विष्वणति। सशब्दं भुङ्क्त इत्यर्थः। 'अट्कुप्वाङ्' इति णत्वम्। एवमवष्वणति। व्यष्वणत्। विषष्वाण। 'स्थादिष्वभ्यासेन—' इति षत्वम्। भोजने किम्, विस्वनति वीणा। परिनिविभ्यः। सेवेत्यत्र अकार उच्चारणार्थः। न च यङ्लुग्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यम्, वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति वक्ष्यमाणत्वात्। 'षेवृ सेवायाम्' परिषेवते। 'षिञ् बन्धने', क्तान्तः सितशब्दः, एरजन्तः पचाद्यन्तो वा सयशब्दः। विषितः। विषयः। प्रत्ययविशिष्टग्रहणं किम्, विसोनोति। 'षिवु तन्तुसन्ताने, परिषीव्यति। 'षह मर्षणे' परिषहते। सुडागमः, परिष्करोति, विष्करोति। स्तुस्वञ्जोः 'उपसर्गात्सुनोति—' इत्येव सिद्धे परिनिविभ्यः परयोरेतयोः 'सिवादीनां वाड्व्यवायेऽपि' इति विकल्पार्थं पुनर्वचनम्। प्राक्सितात्। 'उपसर्गात्सुनोति—' इत्यादिना विहितं षत्वम्-अड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानम्। तेषामिति। पञ्चदशानामित्यर्थः। अभ्यषुणोदित्यादीन्युदाहर्तव्यानि। स्थादिषु। इह द्वे वाक्ये, आद्यं षत्वविध्यर्थं

नेषिषेव । निषिषिवतुः । २२७८ सेधतेर्गतौ । (८—३—११३) गत्यर्थस्य सेधतेः त्वं न स्यात् । गङ्गां विसेधति । षिधू ४८ शास्त्रे माङ्गल्ये च । शास्त्रं शासनम् । २२७९ स्वरतिसूतिसूयतिधूञूदितो वा । (७—२—४४) स्वरत्यादेरूदितश्च

रेणे' अभिसुसूषति । अत्राभ्यासस्य न षत्वम् । अभ्यासात्परस्य तु सस्य 'स्तौतिण्योरेव—' ति नियमान्न षत्वम् । सेधतेः । न षत्वमिति । 'न रपर—' इत्यतो नेत्यनुवृत्तेरिति भावः । गङ्गां विसेधतीति । गच्छतीत्यर्थः । इह 'उपसर्गात्सुनोति—' इति षत्वं न भवति । अनन्तरस्येति न्यायेन 'उपसर्गात्सुनोति—' इत्यस्यैवायं निषेधः, न त्वादेशप्रत्यययो-रित्यस्यापि । तेन सिषेधेत्यादौ आदेशप्रत्यययोरिति षत्वं भवत्येव । षिधू इति । ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह शास्त्रं शासन-मिति । माङ्गल्यं तु शुभकर्म । 'षिध गत्याम्' इतिवदस्यापि रूपाणि । तत्र वलादावार्ध-धातुके नित्यमिटि प्राप्ते । स्वरति । 'आर्धधातुकस्येड्वलादेः' इत्यनुवर्तते । स्वरति सूति सूयति धूञ् ऊदित् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । फलितमाह स्वरत्यादेरिति । स्वरतीति स्वृधातोः शपा निर्देशः । सूतीति सूयतीति च लुग्विकरणस्य श्यन्विकरणस्य च सूधातोर्निर्देशः । एवं च 'षू प्रेरणे' इति तौदादिकस्य न ग्रहणम् । 'धूञ् कम्पने' स्वादिः क्र्यादिश्च । अकारानुबन्धनिर्देशाद् 'धू विधूनने' इत्यस्य न ग्रहणम् । 'इट्सनि वा' इत्यतो वेत्यनुवर्तमाने वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थमिति भाष्यम् । एवं च थलि

द्वितीयं तु नियमार्थमित्याशयेनाह व्यवायेऽपीति, षत्वमेषामेव चेति । स्यादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः । तत्फलं तु 'षू प्रेरणे' अभिसुसूषति । अत्रोक्तनियमादभ्या-ससकारस्य न षत्वम्, द्वितीयस्य तु 'स्तौतिण्योः' इति नियमान्न भवति । अभिसिषास-तीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तूक्तनियमान्नेति बोध्यम् । स्यादेतत्— निषिषेवेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोति—' इत्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेश-प्रत्यययोः' इत्यनेनेति किमाद्यवाक्येन । अत्राहुः—फलत्रयार्थमाद्यं वाक्यम्, अशोपदेशार्थम् । तथाहि— सेनया अभियातुमिच्छति अभिषिषेणयिषति । अवर्णान्ताभ्यासार्थम् च—'अवासिसं गोत्रभिदोऽधितष्ठौ' । षणि प्रतिप्रसवार्थं च—अभिषिषिक्षति । 'षिच क्षरणे' । 'स्तौतिण्योरेव-' इति नियमात् प्रभृते सनि निवर्तितमपि षत्वमुपसर्गमाश्रित्यात्र भवतीति । सेधतेर्गतौ । श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेधः, तेनोपसर्गमाश्रित्य षत्वं भवत्येव । विसेधतीति । न च सेधेति शपा निर्देशाद्यङ्लुकि 'उपसर्गात्सुनोति—' इति षत्वं न भवेदिति शङ्क्यम्, दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात् । अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक् । षिधू शास्त्रे । माङ्गल्यं मङ्गलक्रिया । स्वार्थे ष्यञ् । स्वरतिसूति । 'स्वृ शब्दोपतापयोः' भ्वादिः । ननु 'स्वरतिसूधूञूदितो वा' इति सूत्र्यतां किमनेन सूतिसूयत्योः पृथग्ग्रहणेन । मैवम्, तथाहि सति निरनुबन्धक-परिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः । न चैवं षूङ् इति पठ्यतामिति वाच्यम्, 'लुग्विकरणाऽलुग्विकरणयोः—' इति परिभाषया

परस्य वलादेरार्धधातुकस्येड्वा स्यात्। २२८० झषस्तथोर्धोऽधः। (८—२—४० ) झषः परयोस्तथोर्धः स्यान्न तु दधातेः। जश्त्वम्। सिषेद्ध—सिषेधिथ। सेद्धा, सेधिता। सेत्स्यति, सेधिष्यति। असैत्सीत्। २२८१ झलो झलि। (८—२—२६ ) झलः परस्य सस्य लोपः स्याज्झलि। असैद्धाम् असैत्सुः। असैत्सीः असैद्धम् असैद्ध। असैत्सम् असैत्स्व असैत्स्म। पक्षे असेधीत् असेधिष्टामित्यादि। खादृ ४९ भक्षणे। ऋकार इत्। खादति। चखाद। खद

---

इडभावपक्षे द्वित्वादौ सिसेध् थ इति स्थिते। झषस्तथो। झष इति पञ्चमी। तश्च थ् चेति द्वन्द्वः। तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते। धः इति प्रथमैकवचनम्। अकार उच्चारणार्थः। धकार इति लभ्यते। अध इति षष्ठ्यन्तम्। धाधातुभिन्नस्येति लभ्यते। तदाह झषः परयोरिति। जश्त्वमिति। सिसेध् ध इति स्थिते 'झलां जश् झशि' इति प्रथमधकारस्य दकारे सिषेद्धेति रूपमित्यर्थः। सिषिधिव–सिषिध्व, सिषिधिम–सिषिध्म। क्रादिनियमस्तु नेड्वशीति प्रक्रमान्नञ्प्रापितस्यैवाभावस्य निवर्तकः, नतु विभाषादिप्रापितस्यापि, अनन्तरस्येति न्यायात्। इट्पक्षे आह सिषेधिथेति। सेद्धेति। लुट्, तास्, इडभावः, डा, टिलोपः, गुण, धत्वम् जश्त्वम्। सेद्धारौ सेद्धार इत्यादि। सेधितेति। इट्पक्षे रूपम्। सेत्स्यति सेधिष्यतीति। लृटि स्यः, इड्विकल्पः। असैत्सीदिति। लुङस्तिप, इकारलोपः, च्लिः, सिच्, इडभावः, 'अस्तिसिचः–' इति ईट, 'वदव्रज–' इति वृद्धिः। धकारस्य चर्त्वम्। असैध् स तामिति स्थिते, अपृक्तत्वाभावादीडभावाच्च 'इट ईटि' इति सिचो लोपे अप्राप्ते। झलो झलि। झल इति पञ्चमी। 'संयोगान्तस्य–' इत्यतो लोप इति, 'रात्सस्य' इत्यतः सस्येति चानुवर्तते, तदाह झलः परस्य सस्य लोपः स्यादिति। असैद्धामिति। असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम्। पक्ष इति। इट्पक्ष इत्यर्थः। असेधीदिति। 'इट ईटि' इति सलोपः। 'नेटि' इति वृद्धिप्रतिषेधः। लघूपधगुणः। खादृ इति। अत्र ऋदित्वं 'नाग्लोपि-'इत्याद्यर्थमित्यभिप्रेत्याह ऋकार इदिति।

---

अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात्। अस्याश्च परिभाषायाः सूतिसूयत्योःपृथग्ग्रहणमेव ज्ञापकमित्याहुः। 'धूञ् कम्पने' स्वादिः क्र्यादिश्च। सानुबन्धनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः। 'इट् सनि वा' इत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम्। अन्यथा लिङ्सिज्विशिष्टं वापदमत्रापि लिङ्सिचोरेव विकल्पं कुर्यात् पुनर्वाग्रहणे तु वलाद्यार्धधातुकमात्रस्य विकल्पः सिद्ध इति भावः। झषस्तथोः। अध इति किम्, धत्तः। असैत्सीदिति। 'अस्तिसिचः–' इति ईडागमः। 'वदव्रज–' इति वृद्धिः ततश्चर्त्वम्। झलो झलि। 'संयोगान्तस्य–' इत्यतो लोप इति, 'रात्सस्य' इत्यतः सस्येति चानुवर्तते तदाह सस्य लोपः स्यादिति। पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसम्बन्धित्वे लोपोऽयम्। तेन सोमसुत्स्थानमित्यत्र न भवति। झलः किम्, अनैष्टाम्। झलि किम्, असैत्सीत्। असेधीदिति। 'नेटि' इति वृद्धिप्रतिषेधः

५० स्थैर्ये हिंसायां च । चाद्भक्षणे । स्थैर्येऽकर्मकः खदति । २२८२ अत उपधायाः । (७-२-११६) उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । चखाद । २२८३ णलुत्तमो वा । (७-१-९१) उत्तमो णल्वा णित्स्यात् । चखाद, चखद । २२८४ अतो हलादेर्लघोः । (७-२-७) हलादेर्लघोरकारस्येडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात् । अखादीत्, अखदीत् । वद ५१ स्थैर्ये । पवर्गीयादिः । वदति । ववाद । वेदतुः । वेदिथ । ववाद, ववद । अवादीत्, अवदीत् । गद ५२ व्यक्तायां वाचि । गदति ।

---

खदेति । स्थैर्यं स्थिरीभवनम् । णलि अजन्तत्वाभावाद् 'अचो ञ्णिति' इति वृद्धेरप्राप्तौ । अत उपधायाः । वृद्धिः स्यादिति । 'मृजेर्वृद्धिः' इत्यतः तदनुवृत्तेरिति भावः । ञिति णिति चेति । 'अचो ञ्णिति' इत्यतः तदनुवृत्तेरिति भावः । चखादेति । एत्वाभ्यासलोपौ तु नात्र भवतः । पित्त्वे अकित्त्वाद् आदेशादित्वात् तदपेक्षया वृद्धेः परत्वाच्च । णलुत्तमः । णित् स्यादिति । 'गोतो णित्' इत्यतस्तदनुवृत्तेरिति भावः । चखाद चखदेति । णित्त्वे उपधावृद्धिः । तदभावे न । अतो हलादेः । 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते । 'नेटि' ,इत्यस्मादिटीति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषेति च । तदाह हलादेरिति । हलाद्यङ्गावयवस्येत्यर्थः । आदिग्रहणं स्पष्टार्थम्, हलः परस्येत्येव सिद्धेः । अखादीत् अखदीत् इति । वृद्धौ तदभावे च 'इट ईटि' इति सिज्लोपः । अखादिष्टाम्, अखदिष्टा-मित्यादि । वदेति । स्थैर्यं स्थिरीभवनम् । पवर्गीयादिरिति । पवर्गतृतीयादिरित्यर्थः । नतु दन्त्योष्ठ्यादिरिति भावः । ववादेति । 'अत उपधायाः' इति वृद्धिः । वेदतुरिति । अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाभावादेत्त्वाभ्यासलोपाविति भावः । ववादेत्यत्र तु पित्त्वेन कित्त्वाभावादेत्त्वाभ्यासलोपौ न । वेदिथेति । अकित्त्वेपि 'थलि च सेटि' इत्येत्वाभ्यासलोपौ वेदथुः वेद । अथ उत्तमपुरुषणलि 'णलुत्तमो वा' इति णित्त्व-विकल्पादुपधावृद्धिविकल्प इत्याह ववाद ववदेति । वेदिव वेदिम । अवादीत्, अवदीत् इति । 'अतो हलादेः—' इति वृद्धिविकल्पः । गदेति ।

---

गुणः । खाद्द भक्षणे । ऋकार इदिति । तेन 'नाग्लोपि—' इति निषेधे अच खादत् । अत उप । अतः किम्, तुतोद । उपधायाः किम्, गणयति । इह अतो लोपं बाधित्वा परत्वाद् वृद्धिः स्यात् । अतो हलादेः । इह 'सिचि वृद्धिः—' इति सूत्रमनुवर्तते । 'नेटि' इति सूत्रादिटि इति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहणं च तदाह इडादावित्यादि । अतः किम्, अदेवीत् । हलादेः किम्, मा भवानतीत्, अटीत् । लघोः किम्, अगर्दीत्, अरक्षीत् । इडादौ किम्, अपाक्षीत् । परस्मैपदे किम्, अयतिष्ट, अयतिषाताम् । अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधानम्—' इति न्यायेन यद्येकवर्णव्यवधान-मेवाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्याभावाल्लघोरिति शक्यमकर्तुमित्याहुः । तपर-करणं स्पष्टार्थम् । पवर्गीयादिरिति । दन्त्योष्ठ्यादित्वे तु 'न शसदद—' इत्येत्वा-

२२८५ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ( ८-४-१७ ) उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु प्रणिगदति । जगाद । रद ५३ विलेखने । विलेखनं भेदनम् । रराद । णद ५ अव्यक्ते शब्दे । २२८६ णो नः । ( ६—१—६५ ) धातोरादेर्णस्य नः स्यात् नदति । 'णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ।' नाटेर्दीर्घाहस्य पर्युदासाद्घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेः नृनन्द्योश्च केचिण्णोपदेशता

---

व्यक्तवाङ् मनुष्यकृतशब्दप्रयोगः । जगादेति । चुत्वजश्त्वे । उपधावृद्धिः । वैरूप्यापादकादेशादित्वादेत्वाभ्यासलोपौ न । जगदतुः जगदुरित्यादि । नेर्गद । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि—' इत्यत उपसर्गादिति च । तच्च उपसर्गस्थे लाक्षणिकम् तदाह उपसर्गस्थादिति । श्तिपा शपा च निर्देशा यङ्लुङ्निवृत्त्यर्थाः । प्रणिगदतीति भिन्नपदस्थत्वादप्राप्तौ वचनम् । रदेति । णलि उपधावृद्धिमभिप्रेत्याह ररादेति । रेदतुरित्यादि । अरादीत्, अरदीत् णदेति । अव्यक्तशब्दः अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः णो नः । ण इति षष्ठ्यन्तम् । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनादाह धातोरादेरिति तेन अणतीत्यादौ न नत्वम् । नः स्यादिति । नकारः स्यादित्यर्थः । नदतीति । मेधादिरिति शेषः । 'णो नः' इति नत्वस्यानैमित्तकतया लिण्निमित्तादेशादित्वाभावादेत्वाभ्यासलोपौ स्त एव—नेदतुरित्यादि । अथ 'नृत्नर्द्नन्द्नक्क्नाट्नाथृनाधृनृवर्जम् णोपदेशाः' इति भाष्यश्लोकार्धेन सङ्गृह्णाति णोपदेशास्त्विति । 'नर्द शब्दे' 'नट अवस्कन्दने' चुरादिः । नाथृ नाधृ याच्ञादौ । द्वितीयचतुर्थान्तौ । 'टु नदि समृद्धौ' । 'नक्क नाशने' । 'नॄ नये' 'नृती गात्रविक्षेपे' । एभ्योऽष्टभ्योऽन्ये णकारादिधातव इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसंपन्ननकारादितया णोपदेशाः प्रत्येतव्या इत्यर्थः । नाटीति ण्यन्तस्य प्रयोजनमाह नाटेरिति । घटादिरिति । 'नट नृत्तौ' इति घटादिपठित इत्यर्थः । तत्फलं घटादौ वक्ष्यते । मतान्तरमाह तवर्गेति । तवर्गचतुर्थान्तनाधधातोः नृनन्द्योश्च णोपदेशेषु पर्युदासाभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहु-

---

भ्यासलोपनिषेधाद् वेदतुः वेदिथेत्यादि न सिध्येदिति भावः । नेर्गदनद । गदादीनां चतुर्णा शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजगादीति, प्रनितानदीति, प्रनिसासेति, प्रनिजङ्घ्नीति इत्यादौ णत्वं न । घुशब्देन घुसंज्ञका दाधादयः षड् गृह्यन्ते । डुदाञ् प्रणिददाति । दाण् प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते । धेट् प्रणिधयति । डुधाञ् प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणम् । घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात् । णो नः । धातोरिति । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव नेह अणति । णोपदेशान्पर्युदासमुखेनाह णोपदेशास्त्विति । 'नर्द शब्दे' । 'नट अवस्यन्दने' चुरादिः । यस्तु नट नृत्ताविति घटादिः, स नेह गृह्यते, नाटीति दीर्घनिर्देशात् 'नाथृ नाधृ याच्ञादौ' । 'टुनदि समृद्धौ' 'नक्क नाशने' । 'नॄ नये' । 'नृती गात्रविक्षेपे' । एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः । तवर्गेति । तेषां मते पञ्चभ्यो

ाहुः। २२८७ उपसर्गादसमासेऽपि णोपदेशस्य। (८—४—१४) उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि। प्रणदति। प्रणिनदति। अर्द ५५ गतौ [1]याचने च। 'अत आदेः' (सू २२४८) २२८८ तस्मान्नुड् द्विहलः। (७—४—७१) द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट् स्यात्। आनर्द। आर्दीत्। नर्द ५६ गर्द ५७ शब्दे। णोपदेशत्वाभावान्न णः। प्रनर्दति। गर्दति। जगर्द। तर्द ५८ हिंसायाम्। तर्दति। कर्द ५९ कुत्सिते शब्दे। कुत्सिते कौक्षे। कर्दति। खर्द ६० दन्दशूके। दंशनहिंसादि रूपायां दन्दशूकक्रियायामित्यर्थः। खर्दति। चखर्द। अति ६१ अदि ६२ बन्धने। अन्तति। आनन्त। अन्दति। आनन्द। इदि ६३ परमैश्वर्ये। इन्दति।

---

रित्यर्थः। अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम्। भाष्यविरोधोऽत्रारुचिबीजम्। ननु णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते। नकार एवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह उपसर्गात्। 'रषाभ्यां नो णः' इत्यविकृतम्। तदाह उपसर्गस्थादिति। 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवृत्तेरसमासे न स्यादित्यसमासग्रहणम्। तथा सति प्रणाम इत्यादौ समासे न स्यादित्यपिग्रहणम्, तदाह समासे असमासेऽपीति। णस्योपदेशो यस्मिन्निति विग्रहः। प्रणदतीति। भिन्नपदत्वादप्राप्तिः। प्रणिनदतीति। 'नेर्गद–' इति णत्वम्। नचात्र 'उपसर्गादसमासे–' इति धातुनकारस्य णत्वं शङ्क्यम्, अट्कुप्वाङ्भिन्नेन व्यवधानात्। अर्दति। 'उपधायां च' इत्यत्र इक इत्यनुवर्तनाद् अर्दतीत्यादौ न दीर्घः। लिटि णलि द्वित्वे हलादिशेषे 'अत आदेः' इत्यभ्यासाकारस्य दीर्घे आ अर्देति स्थिते तस्मान्नुट्। द्वौ हलौ यस्य तस्येति विग्रहः। तच्छब्देन 'अत आदेः' इति कृतदीर्घः परामृश्यते, तदाह दीर्घीभूतादिति। टकार इत्, उकार उच्चारणार्थः। टित्त्वादाद्यवयवः, तदाह आनर्देति। आर्दीदिति। 'इट ईटि' इति सिज्लोपः। नर्देत्यादि स्पष्टम्। कर्देति। कुत्सितविशेषो विवक्षित इत्याह कुत्सिते कौक्ष इति। कुक्षिभवे इत्यर्थः। खर्देति। दन्दशूको दंशनस्वभावः सर्पः। 'दन्दशूको विलेशयः' इत्यमरः। ननु सर्पस्य क्रियात्वाभावात् कथं धात्वर्थत्वमित्यत आह दंशनेति। अति अदीति। इदित्त्वान्नुम्, तदाह अन्ततीति। आनन्तेति। 'अत आदेः' इति दीर्घः। 'तस्मान्नुड्द्विहलः' इति नुट्। एवम् अन्दति। आनन्देति। नुट्। आन्दीत्। इदीति। परमैश्वर्यं परमेश्वरीभवनम्।

---

भिन्ना णोपदेशाः। उपसर्गाद्। 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणम्, कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम्। प्रणिनदतीति। 'नेर्गद–' इति णत्वम्। धातुनकारस्य तु 'उपसर्गादसमास–' इति णत्वं न भवत्यडादिभिन्नेन व्यवधानात्। तस्मात् तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह दीर्घीभूतादिति। खर्द दन्दशूके। दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न संगच्छत इत्यत आह दन्दशूकक्रियायामिति। दन्दशूककर्तृकायामित्यर्थः। आन-

---

[1] 'निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि' इति पञ्चमे रघुवंशे।

२२७५ परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । ( ८—३—७० ) परिनिविभ्यः परेषामेषां सस्य षः स्यात् । निषेधति । २२७६ प्राक्सितादड्व्यवायेऽपि । ( ८—३—६३ ) 'सेवसित—'( सू २२७५ ) इत्यत्र सितशब्दात् प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् । न्यषेधीत् । न्यषेधिष्यत् । २२७७ स्थादिष्वभ्यासेन चाभ्यासस्य । ( ८—३—६४ ) प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात् । एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम् ।

---

सामीप्यम् । अवष्टब्धा गौः । निरुद्धा सती समीपे आस्त इत्यर्थः । वेश्च । अवादित्यनुकर्षणार्थश्चकारः, तदाह व्यवाभ्यामिति । विश्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । 'अट्कुप्वाङ्—' इति णत्वम् । परिनिविभ्यः । सेवेत्यकार उच्चारणार्थः । 'षेवृ सेवायाम्' इति धातोर्ग्रहणम् । परिषेवते । विषेवते । निषेवते । सितेत्यनेन 'षिञ् बन्धने' इति क्तान्तस्य ग्रहणम् । अस्यैव धातोः एरजन्तो वा पचाद्यजन्तो वा सयशब्दः । विषितः विषयः । 'षिवु तन्तुसन्ताने' । परिषीव्यति । 'षह मर्षणे' परिषहते । सुट् आगमः । परिष्करोतिस्तुस्वञ्जोः 'उपसर्गात् सुनोति–' इत्येव सिद्धे 'सिवादीनां वा–' इति विकल्पार्थं पुनर्वचनम् । प्राक्सितात् । सुनोत्यादय इति । 'उपसर्गात्सुनोति–' इत्यादिसूत्रोपात्ता इति शेषः । तेषामिति । पञ्चदशानामित्यर्थः । न्यषेधदिति । अकारेण व्यवहितत्वादिणः परत्वाभावादप्राप्तौ वचनम् । अभ्यषुणोदित्यप्युदाहार्यम् । स्थादिषु । अभ्यासेनेति तृतीयान्तम् । प्राक्सितादित्यनुवर्तते, तदाह प्राक्सितादिति । 'उपसर्गात्सुनोति—' इति सूत्रे स्थाधातुमारभ्य 'परिनिविभ्यः सेवसिता—' इत्यत्र सितशब्दात्प्राग् ये धातव उपात्ताः तेषु दशस्वित्यर्थः । निषिषेधेत्यादौ अभ्यासात्परस्य सस्य अभ्यासव्यवहितत्वेन उपसर्गात्परत्वाभावादप्राप्तौ वचनम् । ननु निषिषेधेत्यादौ अभ्यासस्यसकारस्य 'उपसर्गात्सुनोति—' इत्यनेनैव सिद्धत्वादभ्यासस्येति व्यर्थमित्याशङ्क्य नियमार्थमित्याह एषामेवेति । अभ्यासस्यसकारस्य चेत् षत्वं तर्हि स्थादिदशानामेवेत्यर्थः । एवं च 'पू

---

इत्याहुः । वेश्च । विष्वणति । सशब्दं भुङ्क्त इत्यर्थः । 'अट्कुप्वाङ्' इति णत्वम् । एवमवष्वणति । व्यष्वणत् । विषष्वाण । 'स्थादिष्वभ्यासेन–' इति षत्वम् । भोजने किम्, विस्वनति वीणा । परिनिविभ्यः । सेवेत्यत्र अकार उच्चारणार्थः । न च यङ्लुग्निवृत्तये शपा निर्देश एवास्त्विति शङ्क्यम्, वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति वक्ष्यमाणत्वात् । 'षेवृ सेवायाम्' परिषेवते । 'षिञ् बन्धने', क्तान्तः सितशब्दः, एरजन्तः पचाद्यन्तो वा सयशब्दः । विषितः । विषयः । प्रत्ययविशिष्टग्रहणं किम्, विसोनोति । 'षिवु तन्तुसन्ताने, परिषीव्यति । 'षह मर्षणे' परिषहते । सुडागमः, परिष्करोति, विष्करोति । स्तुस्वञ्जोः 'उपसर्गात्सुनोति–' इत्येव सिद्धे परिनिविभ्यः परयोरेतयोः 'सिवादीनां वाड्व्यवायेऽपि' इति विकल्पार्थं पुनर्वचनम् । प्राक्सितात् । 'उपसर्गात्सुनोति–' इत्यादिना विहितं षत्वमड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्दस्योपादानम् । तेषामिति । पञ्चदशानामित्यर्थः । अभ्यषुणोदित्यादीन्युदाहर्तव्यानि । स्थादिषु । इह द्वे वाक्ये, आद्यं षत्वविध्यर्थं

निषिषेव। निषिषिवतुः। २२७८ सेधतेर्गतौ। (८—३—११३) गत्यर्थस्य सेधतेः षत्वं न स्यात्। गङ्गां विसेधति। षिधू ४८ शास्त्रे माङ्गल्ये च। शास्त्रं शासनम्। २२७९ स्वरतिसूतिसूयतिधूञूदितो वा। (७—२—४४) स्वरत्यादेरूदितश्च

---

प्रेरणे' अभिसुसूपति। अत्राभ्यासस्य न षत्वम्। अभ्यासात्परस्य तु सस्य 'स्तौतिण्योरेव—' इति नियमान्न षत्वम्। सेधतेः। न षत्वमिति। 'न रपर—' इत्यतो नेत्यनुवृत्तेरिति भावः। गङ्गां विसेधतीति। गच्छतीत्यर्थः। इह 'उपसर्गात्सुनोति—' इति षत्वं न भवति। अनन्तरस्येति न्यायेन 'उपसर्गात्सुनोति—' इत्यस्यैवायं निषेधः, न त्वादेशप्रत्यययो-रित्यस्यापि। तेन सिषेधेत्यादौ आदेशप्रत्यययोरिति षत्वं भवत्येव। षिधू इति। ननु वाक्यसङ्घविशेषात्मकस्य शास्त्रस्य अक्रियारूपत्वात्कथं धात्वर्थत्वमित्यत आह शास्त्रं शासन-मिति। माङ्गल्यं तु शुभकर्म। 'षिध गत्याम्' इतिवदस्यापि रूपाणि। तत्र वलादावार्ध-धातुके नित्यमिटि प्राप्ते। स्वरति। 'आर्धधातुकस्येड्वलादेः' इत्यनुवर्तते। स्वरति सूति सूयति धूञ् ऊदित् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम्। फलितमाह स्वरत्यादेरिति। स्वरतीति स्वृधातोः शपा निर्देशः। सूतीति सूयतीति च लुग्विकरणस्य श्यन्विकरणस्य च सूधातोर्निर्देशः। एवं च 'षू प्रेरणे' इति तौदादिकस्य न ग्रहणम्। 'धूञ् कम्पने' स्वादिः क्र्यादिश्च। अकारानुबन्धनिर्देशाद् 'धू विधूनने' इत्यस्य न ग्रहणम्। 'इट्सनि वा' इत्यतो वेत्यनुवर्तमाने वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थमिति भाष्यम्। एवं च थलि

---

द्वितीयं तु नियमार्थमित्याशयेनाह व्यवायेऽपीति, षत्वमेषामेव चेति। स्यादीनां दशानामेवाभ्यासस्य षत्वमित्यर्थः। तत्फलं तु 'षू प्रेरणे' अभिसुसूषति। अत्रोक्तनियमादभ्या-ससकारस्य न षत्वम्, द्वितीयस्य तु 'स्तौतिण्योः' इति नियमान्न भवति। अभिसिषास-तीत्यत्र तु षणोऽभावादभ्यासात्परस्य षत्वं पूर्वस्य तूक्तनियमान्नेति बोध्यम्। स्यादेतत्— निषिषेवेत्यादौ अभ्यासस्य 'उपसर्गात्सुनोति—' इत्यनेन सिद्धम्, अभ्यासात्परस्य तु 'आदेश-प्रत्यययोः' इत्यनेनेति किमाद्यवाक्येन। अत्राहुः—फलत्रयार्थमाद्यं वाक्यम्, अशोपदेशार्थम्। तथाहि— सेनया अभियातुमिच्छति अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थम् च—'अर्धासनं गोत्रभिदोऽधितष्ठौ'। षणि प्रतिप्रसवार्थं च—अभिषिषिक्षति। 'षिच क्षरणे'। 'स्तौतिण्योरेव-' इति नियमात् षभूते सनि निवर्तितमपि षत्वमुपसर्गमाश्रित्यात्र भवतीति। सेधतेर्गतौ। श्तिपा निर्देशादगत्यर्थादस्माद्यङ्लुकि न निषेधः, तेनोपसर्गमाश्रित्य षत्वं भवत्येव। विसेधतीति। न च सेधेति शपा निर्देशाद्यङ्कि 'उपसर्गात्सुनोति—' इति षत्वं न भवेदिति शङ्क्यम्, दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात्। अन्यथा सेधतेरिति श्तिपा निर्देशस्य वैयर्थ्यापत्तेरिति दिक्। षिधू शास्त्रे। माङ्गल्यं मङ्गलक्रिया। स्वार्थे ष्यञ्। स्वरतिसूति। 'स्वृ शब्दोपतापयोः' भ्वादिः। ननु 'स्वरतिसूधूञूदितो वा' इति सूत्र्यतां किमनेन सूतिसूयत्योः पृथग्ग्रहणेन। मैवम्, तथाहि सति निरनुबन्धक-परिभाषया 'षू प्रेरणे' इति तौदादिकस्यैव ग्रहणं स्यान्न त्वादादिकदैवादिकयोरेतयोः। न चैवं पूङ् इति पठ्यतामिति वाच्यम्, 'लुग्विकरणाऽलुग्विकरणयोः—' इति परिभाषया

परस्य वलादेरार्धधातुकस्येड्वा स्यात्। २२८० झषस्तथोर्धोऽधः। (८—२—४०) झषः परयोस्तथोर्धः स्यान्न तु दधातेः। जश्त्वम्। सिषेद्ध—सिषेधिथ। सेद्धा, सेधिता। सेत्स्यति, सेधिष्यति। असैत्सीत्। २२८१ झलो झलि। (८—२—२६) झलः परस्य सस्य लोपः स्याज्झलि। असैद्धाम् असैत्सुः। असैत्सीः असैद्धम् असैद्ध। असैत्सम् असैत्स्व असैत्स्म। पक्षे असेधीत् असेधिष्टामित्यादि। खाद्द ४९ भक्षणे। ऋकार इत्। खादति। चखाद। खद

---

इडभावपक्षे द्वित्वादौ सिसेध् थ इति स्थिते। झषस्तथो। झष इति पञ्चमी। तश्च थ् चेति द्वन्द्वः। तकारादकार उच्चारणार्थः। तकारथकारयोरिति लभ्यते। धः इति प्रथमैकवचनम्। अकार उच्चारणार्थः। धकार इति लभ्यते। अध इति षष्ठ्यन्तम्। धाधातुभिन्नस्येति लभ्यते। तदाह झषः परयोरिति। जश्त्वमिति। सिसेध् ध इति स्थिते 'झलां जश् झशि' इति प्रथमधकारस्य दकारे सिषेद्धेति रूपमित्यर्थः। सिषिधिव—सिषिध्व, सिषिधिम—सिषिध्म। क्रादिनियमस्तु नेड्वशीति प्रक्रमान्नप्रापितस्यैवाभावस्य निवर्तकः, नतु विभाषादिप्रापितस्यापि, अनन्तरस्येति न्यायात्। इट्पक्षे आह सिषेधिथेति। सेद्धेति। लुट्, तास्, इडभावः, डा, टिलोपः, गुण, धत्वम् जश्त्वम्। सेद्धारौ सेद्धार इत्यादि। सेधितेति। इट्पक्षे रूपम्। सेत्स्यति सेधिष्यतीति। लृटि स्यः, इड्विकल्पः। असैत्सीदिति। लुङ्स्तिप, इकारलोपः, च्लिः, सिच्, इडभावः, 'अस्तिसिचः—' इति ईट, 'वदव्रज—' इति वृद्धिः। धकारस्य चर्त्वम्। असैध् स तामिति स्थिते, अपृक्तत्वाभावादीडभावाच्च 'इट ईटि' इति सिचो लोपे अप्राप्ते। झलो झलि। झल इति पञ्चमी। 'संगान्तस्य—' इत्यतो लोप इति, 'रात्सस्य' इत्यतः सस्येति चानुवर्तते, तदाह झलः परस्य सस्य लोपः स्यादिति। असैद्धामिति। असैध् स् तामिति स्थिते सलोपे धत्वे जश्त्वे च रूपम्। पक्ष इति। इट्पक्ष इत्यर्थः। असेधीदिति। 'इट ईटि' इति सलोपः। 'नेटि' इति वृद्धिप्रतिषेधः। लघूपधगुणः। खाद्द इति। अत्र ऋदित्वं 'नाग्लोपि-'इत्याद्यर्थमित्यभिप्रेत्याह ऋकार इदिति।

---

अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात्। अस्याश्च परिभाषायाः सूतिसूयत्योःपृथग्ग्रहणमेव ज्ञापकमित्याहुः। 'धूञ् कम्पने' स्वादिः क्र्यादिश्च। सानुबन्धनिर्देशो 'धू विधूनने' इत्यस्य निवृत्त्यर्थः। 'इट् सनि वा' इत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम्। अन्यथा लिङ्सिज्विशिष्टं वापदमत्रापि लिङ्सिचोरेव विकल्पं कुर्यात् पुनर्वाग्रहणे तु वलाद्यार्धधातुकमात्रस्य विकल्पः सिद्ध इति भावः। झषस्तथोः। अध इति किम्, धत्तः। असैत्सीदिति। 'अस्तिसिचः—' इति ईडागमः। 'वदव्रज—' इति वृद्धिः ततश्चर्त्वम्। झलो झलि। 'संयोगान्तस्य—' इत्यतो लोप इति, 'रात्सस्य' इत्यतः सस्येति चानुवर्तते तदाह सस्य लोपः स्यादिति। पदस्येत्यधिकारात्प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसम्बन्धित्वे लोपोऽयम्। तेन सोमसुत्स्थानमित्यत्र न भवति। झलः किम्, अनैष्टाम्। झलि किम्, असैत्सीत्। असेधीदिति। 'नेटि' इति वृद्धिप्रतिषेधः

५० स्थैर्ये हिंसायां च। चाद्भक्षणे। स्थैर्येऽकर्मकः खदति। २२८२ अत उपधायाः। (७-२-११६) उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। चखाद। २२८३ णलुत्तमो वा। (७-१-९१) उत्तमो णल्वा णित्स्यात्। चखाद, चखद। २२८४ अतो हलादेर्लघोः। (७-२-७) हलादेर्लघोरकारस्येडादौ परस्मैपदपरे सिचि वृद्धिर्वा स्यात्। अखादीत्, अखदीत्। वद ५१ स्थैर्ये। पवर्गीयादिः। वदति। ववाद। वेदतुः। वेदिथ। ववाद, ववद। अवादीत्, अवदीत्। गद ५२ व्यक्तायां वाचि। गदति।

---

खदेति। स्थैर्यं स्थिरीभवनम्। णलि अजन्तत्वाभावाद् 'अचो ञ्णिति' इति वृद्धेरप्राप्तौ। अत उपधायाः। वृद्धिः स्यादिति। 'मृजेर्वृद्धिः' इत्यतः तदनुवृत्तेरिति भावः। ञिति णिति चेति। 'अचो ञ्णिति' इत्यतः तदनुवृत्तेरिति भावः। चखादेति। एत्वाभ्यासलोपौ तु नात्र भवतः। पित्त्वे अकित्त्वाद् आदेशादित्वात् तदपेक्षया वृद्धेः परत्वाच्च। णलुत्तमः। णित् स्यादिति। 'गोतो णित्' इत्यतस्तदनुवृत्तेरिति भावः। चखाद चखदेति। णित्त्वे उपधावृद्धिः। तदभावे न। अतो हलादेः। 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवर्तते। 'नेटि' इत्यस्मादिटीति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषेति च। तदाह हलादेरिति। हलाद्यङ्गावयवस्येत्यर्थः। आदिग्रहणं स्पष्टार्थम्, हलः परस्येत्येव सिद्धेः। अखादीत् अखदीत् इति। वृद्धौ तदभावे च 'इट ईटि' इति सिज्लोपः। अखादिष्टाम्, अखदिष्टा-मित्यादि। वदेति। स्थैर्यं स्थिरीभवनम्। पवर्गीयादिरिति। पवर्गतृतीयादिरित्यर्थः। ननु दन्त्योष्ठ्यादिरिति भावः। ववादेति। 'अत उपधायाः' इति वृद्धिः। वेदतुरिति। अभ्यासजश्त्वेन आदेशादित्वेऽपि जश्त्वस्य वैरूप्यापादकत्वाभावादेत्त्वाभ्यासलोपाविति भावः। ववादेत्यत्र तु पित्त्वेन कित्त्वाभावादेत्त्वाभ्यासलोपौ न। वेदिथेति। अकित्त्वेपि 'थलि च सेटि' इत्येत्वाभ्यासलोपौ वेदथुः वेद। अथ उत्तमपुरुषणलि 'णलुत्तमो वा' इति णित्त्व-विकल्पादुपधावृद्धिविकल्प इत्याह ववाद ववदेति। वेदिव वेदिम। अवादीत्, अवदीत् इति। 'अतो हलादेः—' इति वृद्धिविकल्पः। गदेति।

---

गुणः। खादृ भक्षणे। ऋकार इदिति। तेन 'नाग्लोपि—' इति निषेधे अच खादत्। अत उप। अतः किम्, तुतोद। उपधायाः किम्, गणयति। इह अतो लोपं बाधित्वा परत्वाद् वृद्धिः स्यात्। अतो हलादेः। इह 'सिचि वृद्धिः—' इति सूत्रमनुवर्तते। 'नेटि' इति सूत्रादिटि इति 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहणं च तदाह इडादावित्यादि। अतः किम्, अदेवीत्। हलादेः किम्, मा भवानतीत्, अटीत्। लघोः किम्, अगदीत्, अरक्षीत्। इडादौ किम्, अपाक्षीत्। परस्मैपदे किम्, अयतिष्ट, अयतिषाताम्। अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय 'येन नाव्यवधानम्—' इति न्यायेन यद्येकवर्णव्यवधान-मेवाश्रीयते तदा त्वरक्षीदित्यत्रापि प्रसक्त्याभावाल्लघोरिति शक्यमकर्तुमित्याहुः। तपर-करणं स्पष्टार्थम्। पवर्गीयादिरिति। दन्त्योष्ठ्यादित्वे तु 'न शसदद—' इत्येत्वा-

२२८५ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ( ८-४-१७ ) उपसर्गस्थान्निमित्तात्परस्य नेर्णः स्याद्गदादिषु । प्रणिगदति । जगाद । रद ५३ विलेखने । विलेखनं भेदनम् । रराद । णद ५४ अव्यक्ते शब्दे । २२८६ णो नः । ( ६—१—६५ ) धातोरादेर्णस्य नः स्यात् । नदति । 'णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्द्नक्कनॄनृतः ।' नाटेर्दीर्घाहिंस्य पर्युदासाद्घटादिर्णोपदेश एव । तवर्गचतुर्थान्तनाधतेः नृनन्द्योश्च केचिण्णोपदेशता-

---

व्यक्तवाङ् मनुष्यकृतशब्दप्रयोगः । जगादेति । चुत्वजश्त्वे । उपधावृद्धिः । वैरूप्यापादकादेशादित्वादेत्वाभ्यासलोपौ न । जगदतुः जगदुरित्यादि । नेर्गद । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि—' इत्यत उपसर्गादिति च । तच्च उपसर्गस्थे लाक्षणिकम्, तदाह उपसर्गस्थादिति । श्तिपा शपा च निर्देशा यङ्लुङ्निवृत्त्यर्थाः । प्रणिगदतीति । भिन्नपदस्थत्वादप्राप्तौ वचनम् । रदेति । णलि उपधावृद्धिमभिप्रेत्याह ररादेति । रेदतुरित्यादि । अरादीत्, अरदीत् णदेति । अव्यक्तशब्दः अमनुष्यपशुपक्ष्यादिकृतशब्दप्रयोगः । णो नः । ण इति षष्ठ्यन्तम् । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनादाह धातोरादेरिति । तेन अणतीत्यादौ न नत्वम् । नः स्यादिति । नकारः स्यादित्यर्थः । नदतीति । मेघादिरिति शेषः । 'णो नः' इति नत्वस्यानैमित्तकतया लिण्निमित्तादेशादित्वाभावादेत्वाभ्यासलोपौ स्त एव—नेदतुरित्यादि । अथ 'नृतनर्द्नन्द्नक्क्नाट्नाथृनाधृनॄवर्जम् णोपदेशाः' इति भाष्यं श्लोकार्धेन सङ्गृह्णाति णोपदेशास्त्विति । 'नर्द शब्दे' 'नट अवस्कन्दने' चुरादिः । नाथृ नाधृ याच्ञादौ । द्वितीयचतुर्थान्तौ । 'टु नदि समृद्धौ' । 'नक्क नाशने' । 'नॄ नये' 'नृती गात्रविक्षेपे' । एभ्योऽष्टभ्योऽन्ये णकारादिधातव इदानीं नकारादित्वेन दृश्यमाना अपि नत्वसंपन्ननकारादितया णोपदेशाः प्रत्येतव्या इत्यर्थः । नाटीति ण्यन्तस्य प्रयोजनमाह नाटेरिति । घटादिरिति । 'नट नृत्तौ' इति घटादिपठित इत्यर्थः । तत्फलं घटादौ वक्ष्यते । मतान्तरमाह तवर्गेति । तवर्गचतुर्थान्तनाधधातोः नृनन्द्योश्च णोपदेशेषु पर्युदासाभावमङ्गीकृत्य तेषामपि णोपदेशत्वमाहु-

---

भ्यासलोपनिषेधाद् वेदतुः वेदिथेत्यादि न सिध्येदिति भावः । नेर्गदनद । गदादीदां चतुर्णां शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः । तेन प्रनिजगादीति, प्रनिनानदीति, प्रनिसासेति, प्रनिजङ्घ्नीति इत्यादौ णत्वं न । घुशब्देन घुसंज्ञका दाधादयः षड् गृह्यन्ते । डुदाञ् प्रणिददाति । दाण् प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते । धेट् प्रणिधयति । डुधाञ् प्रणिदधाति । माशब्देन मेङ्माङोरेव ग्रहणम् । घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात् । णो नः । धातोरिति । 'धात्वादेः षः सः' इत्यतोऽनुवर्तनाद्धात्वादेरित्येव नेह अणति । णोपदेशान्पर्युदासमुखेनाह णोपदेशास्त्विति । 'नर्द शब्दे' । 'नट अवस्यन्दने' चुरादिः । यस्तु नट नृत्ताविति घटादिः, स नेह गृह्यते, नाटीति दीर्घनिर्देशात् 'नाथृ नाधृ याच्ञादौ' । 'टुनदि समृद्धौ' 'नक्क नाशने' । 'नॄ नये' । 'नृती गात्रविक्षेपे' । एभ्योऽष्टाभ्यो भिन्ना इत्यर्थः । तवर्गेति । तेषां मते पञ्चभ्यो

माहुः । २२८७ उपसर्गादसमासेऽपि णोपदेशस्य । (८—४—१४) उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात्समासेऽसमासेऽपि । प्रणदति । प्रणिनदति । अर्द ५५ गतौ [1]याचने च । 'अत आदेः' ( सू २२४८ ) २२८८ तस्मान्नुड् द्विहलः । (७—४—७१) द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट् स्यात् । आनर्द । आर्दीत् । नर्द ५६ गर्द ५७ शब्दे । णोपदेशत्वाभावान्न णः । प्रनर्दति । गर्दति । जगर्द । तर्द ५८ हिंसायाम् । तर्दति । कर्द ५९ कुत्सिते शब्दे । कुत्सिते कौक्षे । कर्दति । खर्द ६० दन्दशूके । दंशनहिंसादि रूपायां दन्दशूकक्रियायामित्यर्थः । खर्दति । चखर्द । अति ६१ अदि ६२ बन्धने । अन्तति । आनन्त । अन्दति । आनन्द । इदि ६३ परमैश्वर्ये । इन्दति ।

---

रित्यर्थः । अत्र मते पञ्चभ्यो भिन्ना णोपदेशा इति फलितम् । भाष्यविरोधोऽत्रारुचिबीजम् । ननु णकारमुपदिश्य तस्य किमर्थं नकारो विधीयते । नकार एवोपदिश्यतामित्याशङ्क्य तत्प्रयोजनमाह **उपसर्गात्** । 'रषाभ्यां नो णः' इत्यविकृतम् । तदाह **उपसर्गस्थादिति** । 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवृत्तेरसमासे न स्यादित्यसमासग्रहणम् । तथा सति प्रणाम इत्यादौ समासे न स्यादित्यपिग्रहणम्, तदाह **समासे असमासेऽपीति** । णस्योपदेशो यस्मिन्निति विग्रहः । **प्रणदतीति** । भिन्नपदत्वादप्राप्तिः । **प्रणिनदतीति** । 'नेर्गद—' इति णत्वम् । नचात्र 'उपसर्गादसमासे—' इति धातुनकारस्य णत्वं शङ्क्यम्, अट्कुप्वाङ्भिन्नेन व्यवधानात् । **अर्देति** । 'उपधायां च' इत्यत्र इक इत्यनुवर्तनाद् अर्दतीत्यादौ न दीर्घः । लिटि णलि द्वित्वे हलादिशेषे 'अत आदेः' इत्यभ्यासाकारस्य दीर्घे आ अर्द इति स्थिते **तस्मान्नुट्** । द्वौ हलौ यस्य तस्येति विग्रहः । तच्छब्देन 'अत आदेः' इति कृतदीर्घः परामृश्यते, तदाह **दीर्घीभूतादिति** । टकार इत्, उकार उच्चारणार्थः । टित्त्वादाद्यवयवः, तदाह **आनर्देति** । **आर्दीदिति** । 'इट ईटि' इति सिज्लोपः । नर्देत्यादि स्पष्टम् । **कर्देति** । कुत्सितविशेषो विवक्षित इत्याह **कुत्सिते कौक्ष इति** । कुक्षिभवे इत्यर्थः । **खर्देति** । दन्दशूको दंशनस्वभावः सर्पः । 'दन्दशूको बिलेशयः' इत्यमरः । ननु सर्पस्य क्रियात्वाभावात् कथं धात्वर्थत्वमित्यत आह **दंशनेति** । **अति अदीति** । इदित्त्वान्नुम्, तदाह **अन्ततीति** । **आनन्तेति** । 'अत आदेः' इति दीर्घः । 'तस्मान्नुड्द्विहलः' इति नुट् । एवम् अन्दति । **आनन्देति** । नुट् । आन्दीत् । **इदीति** । परमैश्वर्यं परमेश्वरीभवनम् ।

---

भिन्ना णोपदेशाः । **उपसर्गाद्** । 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणम्, कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम् । **प्रणिनदतीति** । 'नेर्गद—' इति णत्वम् । धातुनकारस्य तु 'उपसर्गादसमास—' इति णत्वं न भवत्यडादिभिन्नेन व्यवधानात् । तस्मात् तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह **दीर्घीभूतादिति** । **खर्द** दन्दशूके । दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न संगच्छत इत्यत आह **दन्दशूकक्रियायामिति** । दन्दशूककर्तृकायामित्यर्थः । आन-

---

१ 'निर्गलिताम्बुगर्भं शरद्घनं नार्दति चातकोऽपि' इति पञ्चमे रघुवंशे ।

इन्दांचकार । विदि ६४ अवयवे । पवर्गतृतीयादिः । विन्दति । अवयवं करोतीत्यर्थः । भिदि इति पाठान्तरम् । गडि ६५ वदनैकदेशे । गण्डति । अन्तत्यादयः पञ्चैते न तिङ्विषया इति काश्यपः । अन्ये तु तिङमपीच्छन्ति । णिदि ६६ कुत्सायाम् । निन्दति प्रणिन्दति । टुनदि ६७ समृद्धौ । २२८६ आदिर्ञिटुडवः । ( १—३—५ ) उपदेशे धातोराद्या एते इतः स्युः । नन्दति । इदित्त्वान्नलोपो न । नन्द्यात् । चदि ६८ आह्लादे । चचन्द । त्रदि ६९ चेष्टायाम् । त्रन्दति । तत्रन्द । कदि ७० क्रदि ७१ क्लदि ७२ आह्वाने रोदने च । चकन्द । चक्रन्द । चक्लन्द । क्लिदि ७३ परिदेवने । चिक्लिन्द । शुन्ध ७४ शुद्धौ । शुन्धति । शुशुन्ध । नलोपः शुध्यात् ।

---

इन्दतीति । इदित्त्वान्नुम् । इन्दांचकारेति । 'इजादेश्च–' इत्याम् । बिदीति । इदित्त्वान्नुमित्याह विन्दतीति । नन्ववयवस्य अक्रियारूपत्वात् कथं धात्वर्थत्वमित्यत आह अवयवं करोतीत्यर्थ इति । अविन्दीत् । अविन्दिष्टामित्यादि । पाठान्तरमिति । पवर्गीयचतुर्थादिरित्यर्थः । गडीति । वदनैकदेश इति । तत्क्रियायामित्यर्थः । गण्डति । अगण्डीत् । अन्तत्यादय इति । अति अदि बन्धने, इदि परमैश्वर्ये, विदि अवयवे, गडि वदनैकदेशे इति पञ्च धातवः तिङ्प्रकृतयो न भवन्तीति काश्यपमतमित्यर्थः अन्य इति । काश्यपादन्ये मुनयः तिङमपि एभ्य इच्छन्तीत्यर्थः । णिदीति । इदित्त्वान्नुम् णोपदेशत्वाद् णस्य नत्वम्, तदाह निन्दतीति । प्रणिन्दतीति । 'उपसर्गादसमासेऽपि–' इति णत्वम् । टुनदीति । समृद्धिः प्रजापश्वादिसम्पत्तिः । आदिः । 'भूवादयो धातवः' इत्यस्माद् धातव इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'उपदेशेऽजनुनासिकः–' इत्यस्माद् उपदेश इति, इदिति चानुवर्तते । आदिरिति इदिति च बहुत्वे एकवचनम्, तदाह उपदेश इति । टुवित्करणं 'ट्वितोऽथुच्' इत्येतदर्थम् । नन्दतीति । इदित्त्वान्नुम् । इदित्त्वादिति । आशीर्लिङि यासुटः कित्वेऽपि इदित्त्वाद् 'अनिदिताम्–' इति नलोपो नेत्यर्थः । नन्द्यादिति । अन्त्याद् अन्द्यादित्यस्याप्युपलक्षणम् । चदीति । इदित्त्वान्नुमित्याह चन्दतीति । त्रदीति । अदुपधोऽयम् । इदित्त्वान्नुमित्याह त्रन्दतीति । कदि क्लदीति । अदुपधौ । क्लिदि परिदेवन इति । अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । शुन्ध शुद्धाविति । अकर्मकोऽयम् । शुन्धतीति । शुचिर्भवतीत्यर्थः । ननु शुधीत्येवमिदिदेवायं कुतो न पठित इत्यत आह नलोप इति । आशीर्लिङि 'अनिदिताम्–' इति नलोपे शुध्यादिति रूपमिष्टम् ।

---

न्तेति । इदित्त्वान्नुम्, 'तस्मान्नुड् द्विहल–' इति नुट् । वदनैकदेश इति । तत्क्रियायामित्यर्थः । 'आदिर्ञिटुडवः' । उपदेशेऽजनुनासिक–' इत्यतोऽनुवर्तनादाह उपदेश इति । उपदेशे किम्, ञिकारीयति । ञिष्वप्, 'ञीतः क्तः सुप्तः' । 'ट्वितोऽथुच्', नन्दथुः । 'ड्वितः क्त्रि': कृत्रिमम् । क्लिदि परिदेवने । अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः । क्रियाफलस्य कर्तृगामित्वेऽपि परस्मैपदार्थं स्वरितेत्स्वयं

अथ कवर्गीयान्ता अनुदात्तेतो द्विचत्वारिंशत् । शीकृ ७५ सेचने तालव्यादिः । दन्त्यादिरित्येके । शीकते । शिशीके । लोकृ ७६ दर्शने । लोकते । लुलोके । श्लोकृ ७७ संघाते । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । द्रेकृ ७८ ध्रेकृ ७९ शब्दनोत्साहयोः । उत्साहो वृद्धिरौद्धत्यं च । 'एच इग्घ्रस्वादेशे' इति ह्रस्वः । दिद्रेके । दिध्रेके । रेकृ ८० शङ्कायाम् । रेकते । सेकृ ८१ स्रेकृ ८२ स्रकि ८३ श्रकि ८४ श्लकि ८५ गतौ । त्रयो दन्त्यादयः द्वौ तालव्यादी । अषोपदेशत्वान्न षः । सिसेके । शकि ८६ शङ्कायाम् । शङ्कते । शशङ्के । अकि ८७ लक्षणे । अङ्कते । आनङ्के । वकि ८८ कौटिल्ये । वङ्कते । मकि ८९ मण्डने । मङ्कते । कक ९० लौल्ये । लौल्यं गर्वश्चापल्यं च । ककते । चकके । कुक ९१ वृक ९२ आदाने । कोकते । चुकुके । वर्कते । ववृके । 'ऋदुपधेभ्यो लिटः कित्त्वं

---

इदित्त्वे तु नलोपो न स्यादिति भावः । अथ कवर्गीयान्ता इत्यादि लोकृ इत्यन्तम् । स्पष्टम् । श्लोकृ इति । संघातशब्दं व्याचष्टे ग्रन्थ इति । ननु वाक्यसमुदायात्मकस्य ग्रन्थस्य अक्रियात्वात् कथं धात्वर्थत्वमित्याशङ्क्याह स चेहेति । ग्रन्थनं ग्रन्थः—संघीभावः संघीकरणं वा तत्र संघीभवनं संघनिष्ठम्, संघीकरणं तु संघीकर्तृनिष्ठम् । तत्र संघीभवनार्थकत्वे अकर्मकः संघीकरणार्थत्वे सकर्मक इत्यर्थः । श्लोकत इति । संघीभवतीत्यर्थः, संघीकरोतीति वा । द्रेकृ ध्रेकृ इति । शब्दनं शब्दः । एच इति । लिट एशि द्वित्वे हलादिशेषे देद्रेक ए इति स्थिते अभ्यासे एकारस्य ह्रस्वो भवन् 'एच इग्घ्रस्वादेशे' इति इकारो भवतीत्यर्थः । दिध्रेक इति । अभ्यासे धकारस्य जश्त्वेन दकारः एकारस्य तु ह्रस्व इकारः । रेकृ इति । शङ्का संशयः आक्षेपो वा । 'शीकृ सेचने' इत्यारभ्य एतत्पर्यन्ता ऋदितः । सेकृ इति । आद्यौ इकारमध्यौ ऋदितौ । इतरे त्रय अदुपधा इदितः । त्रय इति । पञ्चसु आद्यात्त्रय इत्यर्थः । अपोपदेशत्वादिति । सेकृधातोः पर्युदासान्न षोपदेशत्वम् । द्वितीयतृतीययोस्तु दन्त्याच्परकसादित्वाभावान्न षोपदेशत्वम् । ततश्च सकारस्यादेशसकारत्वाभावान्न षत्वमिति भावः । एच इग्घ्रस्वादेश इत्यभिप्रेत्याह सिसेक इत्यादि । सस्रङ्के इत्यादावविदित्त्वान्नुम् । शकीति । इदित्त्वान्नुमित्याह शङ्कत इति । शशङ्क इति । अकीति । लक्षणं चिह्नीकरणम् । अङ्कत इति । इदित्त्वान्नुम् । आनङ्क इति । 'तस्मान्नुड्द्विहलः' इति नुट् । 'वकि कौटिल्ये' इत्यादि स्पष्टम् । कुक वृकेति । द्वितीयः ऋदुपधः । शपि लघूपधगुणं मत्वा आह कोकत इति । चुकुक इति । 'असंयोगात्–' इति कित्त्वाद् न लघूपधगुणः । अभ्यासे चुत्वम् । लघूपधगुणे रपरत्वं मत्वाह वर्कत इति । लिटि 'असंयोगात्–' इति कित्त्वान्न गुण इति मत्वाह ववृक इति । उरदत्वं 'हलादिश्शेषः' । ननु कित्त्वात् परत्वाद् गुणः स्यात्, कृते गुणे रपरत्वे संयोगात्परत्वेन कित्त्वस्या-

---

न पठितः । शुन्ध शुद्धौ । अयं शौचकर्मणि युधादौ माङ्गलिकः । इयतिरक्तस्तवर्गीयान्तस्तदनुरोधेन कतिचित् तवर्गीयान्ताः पठिताः । इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह

गुणात्पूर्वविप्रतिषेधेन।' चक ९३ तृप्तौ प्रतिघाते च। चकते। चेके। ककि ९४ वकि ९५ श्वकि ९६ त्रकि ९७ ढौकृ ९८ त्रौकृ ९९ [1]ष्वष्क १०० वस्क १०१ मस्क १०२ टिकृ १०३ टीकृ १०४ तिकृ १०५ तीकृ १०६ रघि १०७ लघि १०८ गत्यर्थाः। कङ्कते। डुढौके। तुत्रौके। 'सुब्धातुष्ठिवुष्वष्कतीनां सत्त्वप्रतिषेधो वक्तव्यः।'ष्वष्कते। पष्वष्के। अत्र तृतीयो दन्त्यादिरित्येके। टेकते। टीकते। एवं तेकते। तीकते। लघिर्भोजननिवृत्तावपि। अघि १०९ वघि ११० मघि १११ गत्याक्षेपे। आक्षेपो निन्दा। गतौ गत्यारम्भे च इत्यन्ये। अङ्घते। आनङ्घे। वङ्घते। मङ्घते। मघि कैतवे च। राघृ ११२लाघृ ११३द्राघृ ११४सामर्थ्ये। राघते। लाघते। ध्राघृ इत्यपि केचित्। द्राघृ आयामे च। आयामो दैर्घ्यम्। द्राघते। श्लाघृ ११५ कत्थने। श्लाघते।

---

प्रवृत्त्या अनित्यत्वादित्यत आह **ऋदुपधेभ्यो लिटःकित्त्वं गुणात् पूर्वविप्रतिषेधेनेति**। **चकेति**। तृप्तावकर्मकः। प्रतिघाते सकर्मकः। एत्वाभ्यासलोपौ मत्वाह **चेक इति**। **ककीति**। एते पञ्चदश धातवः। आद्याश्चत्वार इदितः। द्वितीयो वकारादिः। तृतीयस्तालव्यादिः। पञ्चमषष्ठौ दशमाद्याश्चत्वारश्च ऋदितः। दशमद्वादशौ इदुपधौ। रघिलघी इदितौ चतुर्थान्तौ। कङ्कत इत्यादाविदित्वान्नुम्। **डुढौके तुत्रौक इति**। अभ्यासे ढस्य जश्त्वेन डकार ओकारस्य ह्रस्व उकारः। अथ ष्वष्कधातोः षोपदेशपरिगणनाद् 'धात्वादेः–' इति सत्वे प्राप्ते आह **सुब्धात्विति षष्वष्क इति**। संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न, संयोगात्परत्वेन लिटः कित्त्वाभावाच्च। **तृतीय इति**। तथा च स्वष्कत इति रूपम्। केवलदन्त्यपरकसादित्वाभावेन षोपदेशत्वाभावः **टेकत इति**। लघूपधगुणः। **टीकत इति**। दीर्घोपधत्वान्न गुणः। **एवं तेकते तीकत इति**। रङ्घते लङ्घते। इदित्वान्नुम्। **लघिभोजननिवृत्तावपीति**। निवृत्तिः विमुखीभवनम्। लङ्घते न भुङ्क्ते इत्यर्थः। **अघीति**। त्रयोऽपि चतुर्थान्ता इदितः। **आनङ्घ इति**। 'तस्मान्नुड्द्विहलः' इति नुट्। **वङ्घत इति**। इदित्वान्नुम्। लिटि तु ववङ्घे इति रूपम्। वादित्वात्संयुक्तहल्मध्यस्थत्वात् संयोगात्परत्वेन लिटः कित्वाभावाच्च एत्वाभ्यासलोपौ न। **मघि कैतवे चेति**। कैतवं वञ्चना। **राघृ इति**। त्रयोऽपि ऋदितः। सामर्थ्यं कार्यक्षमीभवनम्। **द्राघृ इत्यपीति**। चतुर्थादिमपि केचित् पठन्तीत्यर्थः। **द्राघृ इति**। आयामो दीर्घीभवनम्। **श्लाघृ कत्थन इति**। कत्थनं स्तुतिः। शीकृ इत्यादयो द्विचत्वारिंशदात्मनेपदिनो गताः।

---

अथेत्यादि। **चुकुक इति**। परमपि गुणं बाधित्वा नित्यत्वाद् 'असंयोगात्–' इति कित्वम्। **सुब्धात्वित्यादि**। सुब्धातोरुदाहरणानि। षड् दन्ता अस्य षोडन्, तमाचष्टे णिचि टिलोपः षोडयति। एवं षण्ढं करोत्याचष्टे वा षण्ढयति। षण्ढीयतीत्यत्र षण्ढशब्दात् क्यचि ईत्वं बोध्यम्। एतच्च वार्तिकं भाष्ये प्रत्याख्यातम्। तथाहि 'धात्वादेः–' इति सूत्रे उपदेश इति वर्तते। न च सुब्धातूनामुपदेशोऽस्ति।

---

१ 'ष्वक' इति क्वचित् पाठः।

अथ परस्मैपदिनः पञ्चाशत् । फक्क ११६ नीचैर्गतौ । नीचैर्गतिर्मन्दगमनमसद्व्यवहारश्च । फक्कति । पफक्क । तक ११७ हसने । तकति । तकि ११८ कृच्छ्रजीवने । तङ्कति । बुक्क ११९ भषणे । भषणं श्वरवः । बुक्कति । कख १२० हसने । प्रनिकखति । ओखृ १२१ राखृ १२२ लाखृ १२३ द्राखृ १२४ ध्राखृ १२५ शोषणालमर्थयोः । ओखति । ओखांचकार । शाखृ १२६ श्लाखृ १२७ व्याप्तौ । शाखति । उख १२८ उखि १२९ वख १३० वखि १३१ मख १३२ मखि १३३ णख १३४ णखि १३५ रख १३६ रखि १३७ लख १३८ लखि १३९ इख १४० इखि १४१ ईखि १४२ वल्ग १४३ रगि १४४ लगि १४५ अगि १४६ वगि १४७ मगि १४८ तगि १४९ त्वगि १५० श्रगि १५१ श्लगि १५२ इगि १५३ रिगि १५४ लिगि १५५ गत्यर्थाः । द्वितीयान्ताः पञ्चदश । तृतीयास्तास्त्रयोदश । इह खान्तेषु रिख त्रख त्रिखि शिखि इत्यपि चतुरः केचित् पठन्ति । ओखति । २२९० **अभ्यासस्याऽसवर्णे** । ( ६—४—७८ ) इवर्णोवर्णान्तस्य अभ्यासस्येयङुवङौ स्तोऽसवर्णेऽचि । उवोख । संनिपातपरिभाषया

---

फक्क नीचैरित्यादि स्पष्टम् । प्रनिकखतीति । 'शेषे विभाषा—' इत्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः । **ओखृ इति** । अलमर्थो भूषणक्रिया पर्याप्तिः, वारणं वा । ओखति । ओखांचकार । **शाखृ श्लाखृ इति** । श्लाघृ इति चतुर्थान्ति आत्मनेपदेषु गतः । **उख उखीति** । **पञ्चदशेति** । ईखि इत्यन्ता इति शेषः । **त्रयोदशेति** । वल्गादय इति शेषः । तत्र इदित्त्वान्नुम् । आशीर्लिङि नलोपाभावश्च । **पठन्तीति** । तेषां मते खान्ता एकोनविंशतिरिति बोध्यम् । **ओखतीति** । शपि लघूपधगुणः । लिटि णलः पित्त्वेन कित्त्वाभावात् प्राप्तस्यापि लघूपधगुणस्य 'द्विर्वचनेऽचि' इति निषिद्धतया गुरुमत्त्वाभावादामभावे सति पूर्वं द्वित्वे कृते हलादिशेषे पश्चाद् 'वार्णादाङ्गं बलीयः' इति परिभाषया अन्तरङ्गमपि सवर्णदीर्घं बाधित्वा लघूपधगुणे कृते उ ओख् अ इति स्थिते, उवर्णस्य यणि प्राप्ते अभ्यासस्य । 'अचि श्नुधातु—' इत्यतः अचीति, य्वोरियङुवङाविति चानुवर्तते । इश्च उश्च यू, तयोरिति विग्रहः । अभ्यासविशेषणमिदं तदन्तविधिः, तदाह

---

ष्ठिवुष्वष्कती तु यकारादी । 'लोपो व्योः—' इति यलोपः । **प्रनिकखतीति** । 'शेषे विभाषा—' इत्यत्र अकखादाविति पर्युदासान्नेर्णत्वं नेति भावः । **असवर्णेऽचीति** । असवर्णे किम्' ऊखतुः । अचि किम्, इयाज, उवाय । **उवोखेति** । 'द्विर्वचनेऽचि' इति निषेधात्पूर्वं द्वित्वं पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ् । एवमियेपेत्यत्रेयङ् । असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोऽत्र न स्थानिवदिति बोध्यम् । **संनिपातपरिभाषयेति** । आमि सति लिट्परत्वं धातोर्न सिध्येदिति भावः । अन्ये तु—'इजादेः—' इति सूत्रे गुरुमानिति नित्ययोगे मतुप् । ततश्च नित्यं यो गुरुमान् 'एध वृद्धौ' इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः । ऊखतुरित्यत्र कित्त्वाद् गुणाभावे 'अभ्यासस्यासवर्णे' उवङ् न भवति । ननु इयेष उवोखेत्यत्राप्यन्तरङ्गत्वात्सवर्णदीर्घे कृतेऽच्परत्वाभावादियङुवङौ न स्त इतीष्टरूपासिद्धेः किं तत्रा-

'इजादेः—' (सू २२३७) इत्याम् न। ऊखतुः। ऊखुः। इह सवर्णदीर्घस्याभ्यासग्रहणेन ग्रहणाद्ध्रस्वः प्राप्तो न भवति। सकृत्प्रवृत्तत्वात्। आङ्गत्वाद्धि पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वे कृते ततो दीर्घः। 'वार्णादाङ्गं बलीयः' इति न्यायात् परत्वाच्च। उङ्खति। ववाख। ववखतुः। वङ्खति। मेखतुः। ( मङ्खति। ममङ्ख।

---

इवर्णोवर्णान्तस्येति। ङित्त्वादन्तादेशौ। उवोखेति। 'अचि श्नुधातु—' इत्यस्य तु नात्र प्राप्तिः, अजादौ प्रत्यये परत एव तत्प्रवृत्तेः, अभ्यासस्य अङ्गत्वाभावाच्च। ननु द्वित्वे कृते लघूपधगुणे सति इजादिगुरुमत्त्वादाम् स्यादित्यत आह संनिपातेति। णलि परे विहितगुणसंपन्नमिजादिगुरुमत्त्वमाश्रित्य आमं गुणो न प्रवर्तयति, आमि सति धातोर्णल्परकत्वव्याघाताद्िति भावः। ऊखतुरिति। अपित्त्वेन कित्त्वाद् लघूपधगुणाभावे द्वित्वे हलादिशेषे सवर्णपरकत्वादभ्यासस्यासवर्ण इति इयङभावे सवर्णदीर्घे रूपमिति भावः। ननु उखतुरित्यत्र ऊकारस्य सवर्णदीर्घसंपन्नस्य एकादेशतया पूर्वान्तत्वेनाभ्याससंबन्धित्वाद् 'ह्रस्वः' इत्यभ्यासस्याचो विधीयमानो ह्रस्वःप्राप्नोतीत्याशङ्कते इह सवर्णदीर्घस्य अभ्यासग्रहणेन ग्रहणाद्ध्रस्वःप्राप्त इति। अथ परिहरति न भवतीति। कुत इत्यत आह सकृत्प्रवृत्तत्वादिति। तदेवोपपादयति अङ्गत्वादिति। उ उखतुरिति स्थिते पर्जन्यवल्लक्षणप्रवृत्त्या अभ्यासह्रस्वे सवर्णदीर्घः ऊखतुरिति स्थितिः। तत्र ऊकारस्य पुनरभ्यासह्रस्वो न भवति। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति न्यायादित्यर्थः। ( ननु[1] वर्णमात्रापेक्षत्वेन अन्तरङ्गतया प्रथमं सवर्णदीर्घ एव स्यादिति ह्रस्वस्य प्रथमं प्रवृत्तिर्दुरुपपादेत्यत आह वार्णादिति। तथा चानया परिभाषया बहिरङ्गोऽपि ह्रस्व एव प्रथमं प्रवर्तत इति भावः। परत्वाच्चेति। नन्विदमनुपपन्नम्, उक्तरीत्या अन्तरङ्गं सवर्णदीर्घं प्रति ह्रस्वस्य परत्वकथनानौचित्यादिति चेद् न, परत्वादित्यपरकालप्राप्तिकत्वादित्यर्थात्। अभ्यासविकारेषु परस्परं बाध्यबाधकभावाभावेन युगपदेव ) हलादिशेषे ह्रस्वे च कृते पश्चात्प्रवर्तमानस्य सवर्णदीर्घस्य पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमिति

---

सवर्णग्रहणेनेति चेत्। अत्राहुः—'वार्णादाङ्गं बलीयः' इति परिभाषाज्ञापनार्थमेवासवर्णग्रहणं कृतम्। तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति। तथा किरोतेर्घञि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति। न चैवं सिवेरौणादिके नप्रत्यये स्योन इत्यत्र 'छ्वोः शूड्—' इत्यूठि कृते लघूपधगुणं बाधित्वा यण् न स्यादिति वाच्यम्, समानाश्रय एव वार्णादाङ्गस्य बलीयस्त्वात्। इह तु निमित्तभेदेन व्याश्रयत्वमिति। अभ्यासग्रहणेनेति। पूर्वस्यान्तवत्त्वेनेत्यर्थः। पर्जन्यवल्लक्षणेति। उपयोगानुपयोगाविचारेण प्रवर्तमानं शास्त्रं ह्रस्वस्थानेऽपि ह्रस्वं प्रवर्तयतीत्यर्थः तथा चैकस्मिँल्लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः। आङ्गं बलीय इति। नन्वत्र ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात्समानाश्रयत्वाभावो कथमाङ्गस्य बलीयस्त्वमिति चेत्। सत्यम्, इष्टानुरोधेन स्थानिनमादाय क्वचित्समानाश्रयत्वाभ्युपगमात्। अत एवोङ्शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति। उवङः प्राक् सवर्ण-

---

१ कोष्ठान्तर्गतः पाठः 'क' पुस्तके नास्ति।

नखति। नङ्खति। रखति। रेखतुः। रङ्खति। एखति। इङ्खति। ईङ्खति। वल्गति। रङ्गति। लङ्गति। अङ्गति। वङ्गति। मङ्गति। तङ्गति। त्वङ्गति। श्रङ्गति। श्लङ्गति। इङ्गति। रिङ्गति। लिङ्गति। रेखति। त्रखति। त्रिङ्खति। शिङ्खति)। त्वगि कम्पने च। युगि १५६ जुगि १५७ बुगि १५८ वर्जने। युङ्गति। घघ १५९ हसने। घघति। जघाघ। मघि १६० मण्डने। मङ्घति। शिघि १६१ आघ्राणे। शिङ्घति।

---

न्यायेन बहिरङ्गत्वादित्यलम् उङ्खतीति। इदित्त्वान्नुम्। ववाखेति। वखधातोर्णलि उपधावृद्धिः। ववखतुरिति। वादित्वादेत्त्वाभ्यासलोपौ न। वङ्खतीति। वखिधातोरित्त्वान्नुम्, ववङ्ख। मेखतुरिति। एत्त्वाभ्यासलोपौ। मङ्खतीति। मखिधातोरिदित्त्वान्नुम् ममङ्खेति। संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपौ न नखति नङ्खतीति। 'णो नः' इति नत्वम्। रखतीति। णलि तु उपधावृद्धिः, रराख। अतुसादावेत्वाभ्यासलोपौ। रेखतुरित्यादि। रङ्खतीति। इदित्त्वान्नुम्। ररङ्ख। एखतीति। इखधातोः शपि लघूपधगुणः। इयेख। ईखतुः। इङ्खतीति। इदित्त्वान्नुम्, इङ्खांचकार। ईङ्खतीति। अलघूपधत्वान्न गुण ईखांचकार। वल्गतीति। लिटि ववल्ग ववल्गतुः। रङ्गति लङ्गतीति। ररङ्गतुः। अङ्गतीति। लिटि आनङ्ग। वङ्गतीति। लिटि ववङ्ग ववङ्गतुः। मङ्गतीति। लिटि ममङ्ग ममङ्गतुः। तङ्गतीति। लिटि ततङ्ग ततङ्गतुः। त्वङ्गतीति। लिटि तत्वङ्ग तत्वङ्गतुः। श्रङ्गतीति। लिटि शश्रङ्ग शश्रङ्गतुः। श्लङ्गतीति। लिटि शश्लङ्ग शश्लङ्गतुः। इङ्गतीति। लिटि इङ्गांचकार। रिङ्गतीति। लिटि रिरिङ्ग रिरिङ्गतुः। लिङ्गतीति। लिटि लिलिङ्ग लिलिङ्गतुः। अथ खान्तेषु रिखादिचतुर्णां मतान्तरसिद्धानामुदाहरणमाह रेखतीति। शपि लघूपधगुणः। रिरेख रिरिखतुः। त्रखतीति। लिटि तत्राख तत्रखतुः। त्रिङ्खतीति। लिटि तित्रिङ्ख तित्रिङ्खतुः। शिङ्खतीति। लिटि शिशिङ्ख। शिशिङ्खतुः। त्वगि कम्पने चेति। चाद्गतौ। त्वङ्गति तत्वङ्ग। युगीति। त्रयोऽपि इदितः। युङ्गति बुङ्गति जुङ्गति। घघ हसने इति। घघति णलि उपधावृद्धिः जघाघ जघघतुः। लिण्निमित्तादेशादित्वादेत्त्वाभ्यासलोपौ न। मघि मण्डन इति। इदित्त्वानुमित्याह मङ्घतीति। ममङ्घ ममङ्घतुः। शिघि आघ्राण इति। शिङ्घति शिशिङ्घ। फक्कादयः पञ्चाशद्गताः।

---

दीर्घं प्रवृत्तौ तन्न सिध्येदिति दिक्। परत्वाच्चेति। आपाततोऽयं हेतुः, ह्रस्वस्याङ्गत्वेन बहिरङ्गत्वादन्तरङ्गं सवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात् उङ्खतीति। इदित्त्वान्नुम्। लिट उङ्खांचकार। आशिषि उख्यात्। ववखतुरिति। वादित्वादेत्त्वाभ्यासलोपौ न। एखति। इङ्खति, इङ्खांचकार। ईङ्खति, ईङ्खाञ्चकार। इङ्गति, इङ्गांचकार। त्वगि कम्पन इति। अयं 'उख उखि' इति दण्डके गतौ पठितस्य गतिविशेषे वृत्तिं बोधयितुं पठ्यते। अतएवानतिप्रयोजनत्वाद्बहुषु पुस्तकेषु न पठितः। सेवने चेति। 'यं पूरवो वृत्रहणं सचन्ते' इत्यादौ सेवन्ते इत्यभियुक्तैर्व्याख्यातत्वात्। स्वरितेत्सु पच

अथ चवर्गीयान्ताः । तत्रानुदात्तेत एकविंशतिः । वर्च १६२ दीप्तौ । वर्चते । षच १६३ सेचने सेवने च । सचते । सेचे । सचिता । लोचृ १६४ दर्शने । लोचते । लुलोचे । शच १६५ व्यक्तायां वाचि । शेचे । श्वच १६६ श्वचि १६७ गतौ । श्वचते । श्वञ्चते । कच १६८ बन्धने । कचते । कचि १६९ काचि १७० दीप्तिबन्धनयोः । चकञ्चे । चकाञ्चे । मच १७१ मुचि १७२ कल्कने । कल्कनं दम्भः शाठ्यं च । कथनम् इत्यन्ये । मेचे । मुमुञ्चे । मचि १७३ धारणोच्छ्रायपूजनेषु । ममञ्चे । पचि १७४ व्यक्तीकरणे । पञ्चते । ष्टुच १७५ प्रसादे । स्तोचते । तुष्टुचे । ऋज १७६ गतिस्थानार्जनोपार्जनेषु । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनृजे । ऋजि १७७ भृजी १७८ भर्जने । ऋञ्जते । 'उपसर्गादृति—' (सू ७४) इति वृद्धिः । प्रार्ञ्जते । ऋञ्जांचक्रे । आर्जिष्ट । भर्जते । बभृजे । अभर्जिष्ट । एजृ १७९ ब्रेजृ

---

वर्च दीप्ताविति । दीप्तिः प्रकाशः । षच सेचन इति । अच्परकसादित्वात् षोपदेशोऽयम् । स्वरितेत्सु 'षच समवाये' इति वक्ष्यते । सेच इति । सत्वस्य लिण्निमित्तत्वाभावादादेशादित्वेऽति एत्वाभ्यासलोपौ । दम्भः शाठ्यं चेति । परविस्रम्भार्थं धर्माद्याचरणं दम्भः कापट्यापरपर्यायः । 'कपटोऽस्त्री व्याजदम्भोपधयः' इत्यमरः । शाठ्यं कुटिलीभावः । 'निकृतस्त्वनृजुः शठः' इत्यमरः । पचिव्यक्तीकरण इति । 'पचि विस्तारे' इति चुरादौ वक्ष्यते । ष्टुच प्रसाद इति । ष्टुत्वसंपन्नः टकारः । ततश्च दन्त्यपरकसादित्वात् षोपदेशोऽयम् । स्तोचत इति । षस्य सत्वे सति ष्टुत्वंनिवर्तत इति भावः । तुष्टुच इति । 'शर्पूर्वाः खयः' इति तकारशेषः । आदेशसकारत्वाद् षत्वम् । ऋज गतीति । अर्जनं संपादनम् । उपार्जनं सेवनम् । अर्जत इति । शपि लघूपधगुणो रपरत्वम् । नुड् विधाविति । वार्तिकमिदम् । आनृज इति । लिटः 'असंयोगात्—' इति कित्त्वाद् गुणाभावे द्वित्वे उरदत्वे रपरत्वे हलादिशेषे 'अत आदेः' इति दीर्घे नुडिति भावः । ऋजि भृजी इति । ऋदुपधौ द्वौ । आद्य इदित् । द्वितीयस्य ईदित्त्वात् । 'श्वीदितोनिष्ठायाम्' इति नेट् । इदित्त्वान्नुम् । अनुस्वारपरसवर्णौ ऋञ्जांचक्र इति । नुमि सति 'संयोगे गुरु' इति ऋकारस्य गुरुत्वाद् 'इजादेश्च—' इत्याम् । ऋञ्जिषीष्ट । ऋञ्जिष्यते । ऋञ्जताम् । आर्ञ्जत ऋञ्जेत ऋञ्जिषीष्ट । अथ लुङि रूपं दर्शयति आर्ञ्जिष्टेति । लुङः तादेशः, च्लिः, सिच्, इट्, लघूपधत्वाभावान्न गुणः । आट्

---

समवाय इति वक्ष्यते । लोचृ । ऋदित्वाद् 'नाग्लोपि—' इति ह्रस्वनिषेधः अलुलोचत् । 'पचि व्यक्तीकरणे' । 'पचि विस्तारवचने' इति चुरादौ । ऋज गति । अर्जनं प्राधान्येन, उपार्जनं तु प्रासङ्गिकम् । नुड्विधावित्यादि । 'नुड्विधिलादेशविनामेषु तु प्रतिषिधेयम्' इति वचनान्नुडादिविधिषु वर्णैकदेशस्य वर्णत्वेन ग्रहणादिति भावः । यद्वा द्विहल्ग्रहणं भाष्यादौ प्रत्याख्यायते । न च आट आटतुरित्यत्रातिप्रसङ्गः । 'अश्नोतेश्च—', इत्यनेन अवर्णोपधस्य यदि भवति तर्ह्यश्नोतेरेवेति नियमात्सिद्धमिष्टमित्यन्यत्र विस्तरः । ऋजीभृजी । भर्जनं जलं विना तण्डुलादेः संतापविशेषः ।

१८० भ्राजृ १८१ दीप्तौ। एजांचक्रे। ईज १८२ गतिकुत्सनयोः। ईजांचक्रे।

अथ द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः। शुच १८३ शोके। शोचति। कुच १८४ शब्दे तारे। कोचति। कुञ्च १८५ क्रुञ्च १८६ कौटिल्याल्पीभावयोः। 'अनिदिताम्–' ( सू ४१५ ) इति नलोपः। कुच्यात्। क्रुञ्च्यात्। लुञ्च १८७ अपनयने। लुच्यात्। अञ्चु १८८ गतिपूजनयोः। अच्यात्। गतौ नलोपः। पूजायां तु अञ्च्यात्। वञ्चु १८९ चञ्चु १९० तञ्चु १९१ त्वञ्चु १९२ म्रुञ्च १९३ म्लुञ्चु १९४ म्रुचु १९५ म्लुचु १९६ गत्यर्थाः। वच्यात्। चच्यात्।

---

वृद्धिः, षत्वम्, ष्टुत्वम्, लृङि आर्क्षिष्यत। भर्जत इति। शपि लघूपधगुणः, रपरत्वम्। भर्जिता। भर्जिष्यते। भर्जताम्। अभर्जत। भर्जेत। भर्जिषीष्ट। लुङि रूपमाह अभर्जिष्टेति। लुङस्तादेशः, च्लिः, सिच्, इट्, गुणः, रपरत्वम्, अडागमः षत्वं ष्टुत्वम्। लृङि अभर्जिष्यत। एजृ भ्रेजृ भ्राजृ इति। आद्ययोः, ऋदित्वम् 'नाग्लोपि–' इत्यर्थम्। तृतीयस्य तु अकारेत्कत्वेऽप्यात्मनेपदं सिध्यति। ऋदित्त्वस्य न किञ्चित्फलमस्ति। न च 'नाग्लोपि–' इति चङ्परे णौ उपधाह्रस्वः फलं भवितुमर्हति, 'भ्राजभास–' इत्यादिना तत्र उपधाह्रस्वविकल्पस्य वक्ष्यमाणत्वात्। ईज गतीति। अलघूपधत्वान्न गुणः। ईजते। ईजांचक्र इति। 'इजादेश्च–' इत्याम्। वर्चादय एकविंशतिर्वृत्ताः। द्विसप्ततिरिति। चवर्गीयान्ता इति शेषः। शुच शोक इति। स्मृत्वा क्लेशः शोकः। शोचतीति। वियुक्तं पित्रादिकं स्मृत्वा क्लिश्नातीत्यर्थः। कुच शब्द इति। शब्दनं शब्दः। चकोच चकुचतुः। अकोचीत्। कुञ्चक्रुञ्चेति। उभावपि चवर्गपञ्चमोपधौ। कुञ्चतौ अनुस्वारपरसवर्णसंपन्नस्य नकारस्यानिकनकारस्य धातुपाठे निर्देशः। धातुपाठे 'नकारजावनुस्वारपञ्चमौ' इत्यभियुक्तवादात्, तदाह अनिदितामिति। अनुस्वारपरसवर्णयोरसिद्धतया नकारस्य सत्त्वेन आशीर्लिङि 'अनिदिताम्–' इति लोपे कुच्यादिति रूपमित्यर्थः। लिटि तु चुकुञ्च चुकुञ्चतुः इत्यादौ पित्त्वेन संयोगात्परत्वेन च कित्त्वाभावान्नलोपो न भवति। क्रुञ्चधातुस्तु स्वाभाविकञकारोपध एव। न त्वनुस्वारपरसवर्णसंपन्नञकारोपध इति 'परेश्च घाङ्कयोः' इति सूत्रे भाष्यकैयटयोः स्थितम्। अतस्तस्याशीर्लिङि अनिदितामिति नलोपस्य न प्रसक्तिरित्यभिप्रेत्योदाहरति क्रुञ्च्यादिति। ञकाररहितपाठस्तु प्रामादिक इति शब्देन्दुशेखरे स्थितम्। लुञ्चेति। अयमपि योपधः। अनुस्वारपरसवर्णसंपन्नस्य नकारस्य निर्देशः। तथा च आशीर्लिङि अनिदितामिति नलोपः, तदाह लुच्यादिति। एवमञ्चुधातोरपि द्रष्टव्यम्। पूजायां त्विति। 'नाञ्चेः पूजायाम्' इति निषेधादिति भावः वञ्चु चञ्चु तञ्चु इति। आद्याः षड् नोपधाः। अनुस्वारपरसवर्णाभ्यां नकारनिर्देशः। तथा च तेषामाशीर्लिङि अनिदितामिति नलोपः। तदाह वच्यादिति। लुङि अम्रुञ्चीत् अम्लुञ्चीदिति

---

इदित्त्वात् 'श्वीदितो निष्ठायाम्' इति नेट्। भृक्तः। भृक्तवान्। एजृ भ्रेजृ भ्राजृ। भ्राजेर्ऋदित्यकरणमनुदात्तेत्त्वमात्रफलम्। 'भ्राजभा—' इत्यादिना चङ्परे णौ उपधाह्रस्वस्य विकल्पितत्वात्। अविभ्रजत्, अबभ्राजत्। परस्मैपदिन इति। चवर्गी-

त्रुच्यात् । त्वच्यात् । अम्रुञ्चीत् । अम्लुञ्चीत् । २२९१ जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । (३—१—५८) एभ्यश्च्लेरङ् वा स्यात् । अम्रुचत्, अम्रोचीत्, अम्लोचीत् । ग्रुचु १९७ ग्लुचु १९८ कुजु १९९ खुजु २०० स्तेयकरणे । जुग्रोच । अग्रुचत्, अग्रोचीत् । जुग्लोच । अग्लुचत्, अग्लोचीत् । अकोजीत् । अखोजीत् । ग्लुञ्चु २०१ षस्ज २०२ गतौ । लुङि अङ् वा । अग्लुचत्, अग्लुञ्चीत । सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः, सज्जति अयमात्मनेपद्यपि, सज्जते । गुजि २०३ अव्यक्ते शब्दे । गुञ्जति । गुञ्ज्यात् अर्च २०४ पूजायाम् । आनर्च । म्लेच्छ २०५ अव्यक्ते शब्दे । अस्फुटेऽपशब्दे चेत्यर्थः । म्लेच्छति । मिम्लेच्छ । लछ २०६ लाछि २०७ लक्षणे । ललच्छ । ललाञ्छ । वाछि २०८ इच्छायाम् । वाञ्छति । आछि २०९ आयामे । आञ्छति । 'अत आदेः' ( सू २२४८ ) इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरि-

---

नोपधयो रूपम् । सिज्लोपः । जृस्तम्भु । 'च्लेः सिच्' इत्यतः च्लेरिति, 'अस्यतिवक्तिख्यातिभ्यः—' इत्यतः अङिति, 'इरितो वा' इत्यत वेति चानुवर्तते । तदाह एभ्यश्च्लेरङ् वेति । जृष् वयोहानौ', स्तम्भुः 'सौत्रो धातुः, 'म्रुचुम्लुचु गत्यर्थौ', 'ग्रुचु ग्लुचु स्तेयकरणे' 'ग्लुञ्चु गतौ' इत्येतेभ्य इत्यर्थः । अम्रुचदिति । च्लेरङि सति ङित्वान्न लघूपधगुणः । अम्रोचीदिति । अङभावे 'इट ईटि' इति सिज्लोपः । ग्रुचु ग्लुचु इति । 'जृस्तम्भु—' इति अङ् वेत्याह अग्रुचत्, अग्रोचीदिति । आद्यस्य रूपे । अथ द्वितीयस्य अङ्विकल्पमुदाहरति अग्लुचत, अग्लोचीदिति । अङि सति ङित्वान्न लघूपधगुणः । अङभावे सिज्लोपः । ग्लुञ्च षस्जेति । आद्यो नोपधः, द्वितीयस्तु षोपदेशः, अच्परकसादित्वात् । तत्र आद्यस्य लुङि विशेषमाह अङ् वेति । 'जृस्तम्भु—' इत्यनेनेति शेषः । ग्लुचुग्लुञ्च्वोः पृथग्ग्रहणसामर्थ्याद् नलोपो नेति वृत्तिकृत् । अग्लुञ्चत् । सस्येति । धात्वादेः सत्वे सस्ज् इति स्थिते द्वितीयस्य सकारस्य श्चुत्वेन शकार इत्यर्थः । तस्येति । शकारस्य 'झलां जश् झशि' इति जकार इत्यर्थः । गुजीति । इदित्वादाशीर्लिङि नलोपो नेत्याह गुञ्ज्यादिति । अर्चेति । लिटि 'तस्मान्नुड्द्विहलः' इति नुटं मत्वाह आनर्चेति । म्लेच्छेत्यादि स्पष्टम् । लुकि लञ्छतीति रूपम् । ललञ्छ ललञ्छतुः । आञ्छीति । लिटि णलि द्वित्वे हलादिशेषे अभ्यासह्रस्वे अ आञ्छ् अ इति स्थिते 'अत आदेः' इति दीर्घे 'तस्मान्नुड्द्विहलः' इति च नुटमाशङ्क्याह अत आद् रिति । तत्र हि दीर्घस्याकारस्य दीर्घविधौ प्रयोजनाभावादेव ह्रस्वाकारस्य दीर्घ इति सिद्धौ अत इति तपरकरणं स्वाभाविकस्यैव ह्रस्वाकारस्य

---

यान्ताः परस्मैपदिनः । पूजायां त्विति । 'नाञ्चेः पूजायाम्' इति निषेधादिति भावः । जृस्तम्भु । स्तम्भुः सौत्रः । अजरत्, अजारीत् । अस्तभत्, अस्तम्भीत् । अश्वत् । अश्वताम् । अश्वन् । अश्वयीत् । 'विभाषा धेट्श्व्योः' इति चङि अशिश्वियत् । 'अर्च पूजायाम् । अयं पूजादौ स्वरितेत् । इह पाठस्तु कर्तृगेऽपि फले परस्मैपदार्थः ।

ग्रहार्थम्, तेन दीर्घाभावान्न नुट्, आञ्छ। तपरकरणं मुखसुखार्थमिति मते तु नुट्, आनाञ्छ। ह्रीच्छ २१० लज्जायाम्। जिह्रीच्छ। हुर्च्छा २११ कौटिल्ये। कौटिल्यमपसरणम् इति मैत्रेयः। 'उपधायां च' (सू २२६५) इति दीर्घः। हूर्च्छति। मुर्छा २१२ मोहसमुच्छ्राययोः। मूर्छति। स्फुर्छा २१३ विस्तृतौ। स्फूर्छति। युच्छ २१४ प्रमादे। युच्छति। उछि २१५ उञ्छे। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्।' इति यादवः। उञ्छति। उञ्छांचकार। उच्छी २१६ विवासे। विवासः समाप्तिः। प्रायेणायं विपूर्वः। व्युच्छति। धृज २१७ धृजि २१८ ध्रज २१९ ध्रजि २२० ध्वज २२१ ध्वजि २२२ गतौ। धर्जति। धृञ्जति। ध्रजति। ध्रञ्जति। ध्वञ्जति। कूज २२३ अव्यक्ते शब्दे। चुकूज। अर्ज २२४ षर्ज २२५ अर्जने। अर्जति। आनर्ज। सर्जति। ससर्ज। गर्ज २२६ शब्दे। गर्जति। तर्ज २१७ भर्त्सने। तर्जति। ततर्ज। कर्ज २२८ व्यथने। चकर्ज। खर्ज २२९ पूजने च। चखर्ज। अज २३० गतिक्षेपणयोः। अजति। ।२२९२ अजेर्व्यघञपोः। (२—४—५६) अजेर्वी इत्ययमादेशः

परिग्रहार्थमित्यर्थः। ततः किमित्यत आह तेनेति। 'अत आदेः' इति दीर्घविधौ स्वाभाविकह्रस्वाकारस्यैव ग्रहणेन 'अत आदेः' इति दीर्घस्याभावान्न नुडित्यर्थः। आञ्छेति। द्वित्वे हलादिशेषे अभ्यासह्रस्वे सवर्णदीर्घ इति भावः। मुखसुखार्थमिति। तथा च ह्रस्वस्थानिकदीर्घाकारादपि परस्य नुड् भवत्येवेति भावः। ह्रीच्छ लज्जायामित्यादि स्पष्टम्। युच्छ प्रमाद इति। यकारादिरुदुपधोऽयम्। युच्छतीति। अन्तरङ्गत्वात् 'छे च' इति तुकि लघूपधत्वाभावाद् न गुणः। युयुच्छ। युयुच्छतुः। उछि उञ्छ इति। अयमप्युदुपधः। उञ्छतीति। इदित्त्वान्नुमि अलघूपधत्वान्न गुणः। उञ्छाञ्चकारेति। नुमि कृते 'संयोगे गुरुः' इत्युकारस्य गुरुत्वाद् 'इजादेश्च—' इत्यामिति भावः। धृजेति। आद्यौ ऋदुपधौ। इतरे चत्वारः अदुपधाः। द्वितीयचतुर्थषष्ठा इदितः। धर्जतीति। शपि लघूपधगुणो रपरत्वम्। दधर्ज दधृजतुः। धृज्यात्। अधर्जीत्। धृञ्जतीति। इदित्त्वान्नुम्। दधृञ्ज। इदित्त्वान्नलोपो न धृञ्ज्यात्। अधर्जीत्। ध्रजतीति। णलि दध्राज। दध्रजतुः। अध्राजीत्, अध्रजीत। ध्रञ्जतीति। अदुपधोऽयम्। दध्रञ्ज। [1]इदित्त्वान्नलोपो न, दध्रञ्जतुः। ध्वजतीति। दध्वाज। ध्वञ्जतीति। दध्वञ्ज। कूज अव्यक्त इति। स्पष्टम्। सर्जतीत्यत्र षोपदेशत्वात् सत्वम्। अज गतीति। लटि अजतीत्यादि

दीर्घाभावादिति। स्वाभाविकह्रस्वस्थानिकदीर्घाभावादित्यर्थः। मुखसुखार्थमिति। कृतह्रस्वस्थानिकदीर्घाकारात्परस्यापि नुड् भवत्येवेति भावः। 'युच्छ प्रमादे'। युच्छतीति। अन्तरङ्गत्वात् 'छे च' इति तुकि लघूपधत्वाभावान्न गुणः। न च वार्णादाङ्गं बलीय इति वाच्यम्, आङ्गवार्णयोर्युगपत्प्रवृत्तावेव आङ्गस्य बलीयस्त्वात्। न च युच्छेति चकारछकारावुच्चार्येतां किमनेन तुग्विधिनेति शङ्क्यम्, बहुषु धातुरूपेषु चकारच्छकारयोरुच्चारणे गौरवात्, 'छे च' इत्यस्य शिवच्छायेत्यादावावश्यकत्वाच्च।

१ संयोगात् परत्वात् कित्त्वाभावादित्युचितम्।

स्यादार्धधातुकविषये घञमपं च वर्जयित्वा। 'वलादावार्धधातुके वेष्यते' विवाय विव्यतुः विव्युः। अत्र वकारस्य हल्परत्वाद् 'उपधायां च' (सू २२६५) इति दीर्घे प्राप्ते 'अचः परस्मिन्–' (सू ५०) इति स्थानिवद्भावेनाच्परकत्वम्। न च 'न पदान्त—' (सू ५१) इति निषेधः। 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इत्युक्तेः। थलि 'एकाच:—(सू २२४६) इतीण्निषेधे प्राप्ते।

---

सिद्धवत्कृत्य लिटि विशेषमाह **अजेर्व्यघञपोः**। वी इति दीर्घान्तं लुप्तप्रथमाकम्। 'आर्धधातुके' इत्यधिकृतम्। विषयसप्तम्येषा, न तु परसप्तमी। व्याख्यानात् तदाह **आर्धधातुकविषय इत्यादि**। अजेरिति इका निर्देशः, अजधातोरित्यर्थः। आर्धधातुक इति परसप्तम्याश्रयेण तु वेवीयत इति न स्यात्, वीभावात्प्राग् अजादित्वाद् यङसंभवात्। विषयसप्तम्याश्रयणे तु यङि विवक्षिते वीभावे सति हलादित्वाद्यङ् निर्बाधः। 'अघञपोः' किम्? घञि समाजः। 'समुदोरजः पशुषु' इत्यपि समजः। अत्र अघञोरिति न वक्तव्यम् 'वा लिटि' इत्यतो वेत्यनुवर्तते। व्यवस्थितविभाषेयम्। घञि अपि च न भवति। ल्युटि वलादावार्धधातुके च विकल्पः। अन्यत्र तु आर्धधातुके नित्यमिति भाष्यकैयटयोः स्थितम्, यदाह **वलादावार्धधातुके वेष्यत इति**। उक्तव्यवस्थितविभाषोपलक्षणमिदम्। **विवायेति**। लिटो णलि विवक्षिते वीभावे सति णलि द्वित्वे अभ्यासह्रस्वे 'अचो ञ्णिति' इति वृद्धौ आयादेश इति भावः। **विव्यतुरिति**। वीभावे सति अतुसि द्वित्वे अभ्यासह्रस्वे 'असंयोगात्—' इति कित्वाद् गुणाभावे इयङपवादे 'एरनेकाचः–' इति यणि रूपम्। एवम् उसि विव्युरिति रूपम्। ननु विव्यतुः विव्युरित्यत्र द्वितीयवकारस्य यकारात्मकहल्परकत्वाद् 'उपधायां च' इति इकारस्य दीर्घः स्यादित्याशङ्क्य ईकारस्थानिकस्य यकारस्य 'अचः परस्मिन्—' इति स्थानिवत्त्वेन द्वितीयवकारस्य हल्परकत्वाभावात् तस्मिन्वकारे परे इकारस्य न दीर्घ इति परिहरति **अत्र वकारस्येत्यादि अच्परकत्वमित्यन्तम्**। ननु दीर्घ इति 'न पदान्त—' इति निषेधात्कथमिह यकारस्य स्थानिवत्त्वमित्याशङ्क्य निराकरोति **न च न पदान्तेति निषेध इति**। शङ्क्य इति शेषः। कुत इत्यत आह **स्वरदीर्घेति**। **इत्युक्तेरिति**। वार्तिककृतेति शेषः। **थलि एकाच इति**। अजधातोरनुदात्तोपदेशानन्तर्भवेऽपि वी इति तदादेशोऽनुदात्तः अजन्तेषु ऊदृदन्तादिचतुर्दशभिन्नधातूनामनुदात्तत्वाभ्युप-

---

**अजेर्व्य**। वी इति च्छेदः। तेन संवीतः संवीतिरित्यादि सिध्यति। **आर्धधातुकविषय इति**। तेन वीभावोत्तरं यङि वेवीयते इत्यादि सिध्यति, परसप्तम्यां तु हलादित्वाभावाद्यङ् न स्यादिति भावः। यङ्लुक् तु अस्मान्न भवति। लुका यङोऽपहारे आर्धधातुकविषयत्वाभावान्नार्धधातुकाभिव्यक्तिरिति वीभावस्यैवाप्रसक्तेः। एतच्च 'न लुमता—' इति सूत्रे कैयटे स्पष्टम्। अघञपोः किम्। समाजः। 'समुदोरजः पशुषु' इत्यप्। समजः। उदजः। **विव्यतुरिति**। 'एरनेकाचः–' इति यण् **लोपाजादेश एवेति**। एतच्च 'न पदान्त—' इति सूत्र एवास्माभिरुपपादितम्। **एकाच इतीति**। अजेरुदात्तत्वेऽपि वीभावोऽनुदात्तः, ऊदृदन्तादिभिन्ना एकाचोऽजन्ताः,

२२९३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि । ( ७—२—१३ ) एभ्यो लिट इण्न स्यात् । क्रादीनां चतुर्णां ग्रहणं नियमार्थम् । प्रकृत्याश्रयः प्रत्ययाश्रयो वा यावानिण्निषेधः स लिटि चेत्तर्हि क्रादिभ्य एव नान्येभ्य इति । ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् ।

---

गमादिति भावः । कृसृ । कृ सृ भृ वृ स्तु द्रु स्रु श्रु इत्यष्टानां समाहारद्वन्द्वात्पञ्चमी । लिटीति षष्ठ्यर्थे सप्तमी । 'नेड्वशिकृति' इत्यतो नेति इडिति चानुवर्तते । तदाह एभ्य इति । ननु 'एकाच उपदेशेऽनुदात्तात्' इति श्र्युकःकिति'इति च सिद्धे किमर्थमिदं सूत्रमित्यत आह क्रादीनामिति । कृ सृ भृ वृ इत्येतेषामित्यर्थः । नियमस्वरूपमाह प्रकृत्याश्रय इत्यादि । कृ सृ भृ इत्येषां त्रयाणाम् अनुदात्तोपदेशान्तर्भूतानाम् 'एकाच उपदेशे—' इति यः प्रकृत्याश्रयो निषेधः, यश्च वृधातोः 'श्र्युकः किति' इति प्रत्ययाश्रयो निषेधः, तदुभयमपि यदि लिटि स्यात् तर्हि कृसृभृवृ इत्येभ्य एव परस्य लिटो भवति, न तु तदन्येभ्यः परस्येत्यर्थः । तेन बिभिदिव बिभिदिमेत्यादौ 'एकाच उपदेशे—' इति निषेधः, बभूविव बभूविमेत्यादौ 'श्र्युकः किति' इति निषेधश्च न भवति । अथ स्तुद्रुस्रुश्रुवां ग्रहणस्य प्रयोजनमाह तत इति । अन्येषामिति शेषः । चतुर्णामिति । ग्रहणमिति शेषः । ततः तेभ्यः कृसृभृवृ इत्येभ्यः अन्येषां स्तुद्रुस्रुश्रुवां ग्रहणं थलि तुष्टोथ दुद्रोथ सुस्रोथ शुश्रोथ इत्यत्र 'ऋतो भारद्वाजस्य' इति वक्ष्यमाणेन ऋदन्तस्यैव थलि नेट्, अन्यस्य तु स्यादेवेति नियमेन

---

सर्वेऽप्यनुदात्ता इत्यभ्युपगमात् । कृसृभृ । 'डुकृञ् करणे' । 'कृञ् हिंसायाम्' । इह निरनुबन्धग्रहणादेकानुबन्धद्व्यनुबन्धयोरुभयोर्ग्रहणम् । एवमग्रेऽपि 'भृञ् भरणे', 'डुभृञ् धारणपोषणयोः' इत्युभयोर्ग्रहणम् । 'सृ गतौ' । 'वृङ् संभक्तौ' । 'वृञ् वरणे' । इह निरनुबन्धकग्रहणाद्भिन्नानुबन्धयोर्ग्रहणम् । कृ सृ भृ एषामनुदात्तत्वाद्, एकाच उपदेश—' इति प्रकृत्याश्रये निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् 'श्र्युकः किति' इति प्रत्ययाश्रये निषेधे प्राप्ते नियमोऽयमित्याह क्रादीनां चतुर्णामिति । इह स्तुद्रुवादीनां चतुर्णां ग्रहणस्य भारद्वाजनियमप्रापितनिषेधोऽपि प्रयोजनमिति बोधयितुमष्टानां ग्रहणमिति नोक्तम् । इण्निषेध इति । 'नेड्वशि—' इति प्रक्रमात्तत्प्रापादितस्यैवाभावस्य नियमो न तु विभाषावललभ्यस्यापि । 'अनन्तरस्य—' इति न्यायादपि संनिहितस्यैव नियम उचितः । तेन सिषेविथ, सिषेद्ध । सिषिविव, सिषिव्व इत्याद्युभयं भवति । नान्येभ्य इति । तेन पेचिव, बभूविवेत्यादि सिद्धम् । न चैवं क्रादिनियमेनैव 'नेड् वशि कृति' इति निषेधस्याप्यप्रवृत्तौ सेदिवान् जक्षिवानित्यादि सिध्यत्येवेति 'वस्वेकाजाद्घसाम्' इतीड्विधानं किमर्थमिति शङ्क्यम्, तस्य नियमार्थत्वेन व्याख्यास्यमानत्वात् । अन्यथा बभृवानित्यत्रापीडागमः स्यादिति । नन्विह क्रादिभ्यश्चेदिण् न स्यात्तर्हि लिट्येवेति विपरीतनियमः किं न स्यात् । तथा च कर्ता अकार्षीदित्यादाविडागमः स्यादिति चेत् । मैवम्, 'कृते ग्रन्थे' 'तमवोष्टो भृतः—' 'परिवृतो रथः' इत्यादिनिर्देशविरोधापत्तेः । वमादिष्विति । आदिशब्देन सेव्वेर्वाहिमहीनां ग्रहणम् । तुष्टुवे, तष्टुध्वे, तष्टुवहे तष्टुमहे इत्यादि । स्यादेतत्—अस्तु प्रकृत्या-

२२९४ अचस्तास्वत्थल्यनिटो नित्यम् । ( ७—२—६१ ) उपदेशेऽजन्तो य धातुः तासौ नित्यानिट् ततः परस्य थल इण्न स्यात् । २२९५ उपदेशेऽत्वतः

प्राप्तस्य इटो निषेधार्थम् । तथा तुष्टुव तुष्टुमेत्यादौ 'कृसृभृवृ—' इत्युक्तेन क्रादिम एव परस्य लिट इण्निषेधः, अन्येभ्यस्तु परस्य इट् स्यादेवेति नियमेन प्राप्तस्य इट निषेधार्थं चेत्यर्थः। तदेवम् अजेः थलि वीभावे 'एकाचः–' इति निषेधाभावादिडागम निर्बाध इति स्थितम् । अथ तस्य थलि इडागमस्य भारद्वाजनियमाद्विकल्पं वक्ष्य तदुपयोगित्वेन सूत्रद्वयमुपन्यस्यति । अचस्तास्वत् । अधातोस्थलोऽभावाद्धातोरि लभ्यते। अच इति तद्विशेषणम् । तदन्तविधिः । 'उपदेशेऽत्वतः' इत्युत्तरसूत्रादुपदेश इत्यप कृष्यत इति 'ऋतो भारद्वाजस्य' इति सूत्रभाष्ये स्थितम् । उपदेशे अजन्तादित्यन्वयः । अनि इति बहुव्रीहिः पञ्चमी । नित्यमिड्विहीनादित्यन्वयः । 'तासि च क्लृपः' इत्यतस्तासीत्यनु वर्तते । तासौ नित्यमनिट इत्यन्वयः । थलीति षष्ठ्यर्थे सप्तमी । 'गमेरिट् परस्मैपदेषु' इत्यत इडिति, 'न वृद्भ्यश्चतुर्भ्यः' इत्यतो नेति चानुवर्तते । तास्वदिति सप्तम्यन्ताद् वतिः । तदा उपदेशे योऽजन्त इत्यादि इण्न स्यादित्यन्तम् । तास्वदिति शेषः । यथा तासि ने तथा थल्यपि नेड् इत्यर्थः । चिचेथ जुहोथेत्याद्युदाहरणम् । अत्र क्रादिनियमप्राप्त इण

श्रयनिषेधस्य नियमः,प्रत्ययाश्रयस्य तु न संभवति । वृग्रहणस्य ववर्थेत्यत्राप्राप्तनिषेधप्रापकत्वात् न ह्यत्र प्रत्ययाश्रयो निषेधः प्राप्नोति थलोऽकित्त्वात् । नापि प्रकृत्याश्रयः, वृञ उदात्तत्वात् न चैवमपि वृङो नियमार्थत्वमस्त्विति वाच्यम्, तस्य विशिष्याग्रहणात् । यद्यपि विशिष्य ग्रहणं वृञोऽपि नास्ति, तथाप्यप्राप्तनिषेधप्राप्तिफलकत्वाद् वृ इति वृञ एव ग्रहणं भवेत विधिनियमयोर्विधिरेव ज्यायानिति न्यायात् । एवं च बभूविवेत्यादौ 'श्र्युकः किति'इतीण्निषेधं दुर्वार इति चेत् । अत्राहुः—'बभूथाततन्थजगृभ्मववर्थे–' इति सूत्रेण छन्दसि ववर्थेति निपात नाद्भाषायां वृञस्थल इटः स्वीकर्तव्यतया वृग्रहणस्य थल्विषयत्वायोगाद्वमादीनां च कित्वे नियमस्य सुस्थत्वादिति । अचस्तास्वत् । उत्तरसूत्रादुपदेश इत्यपकृष्यते, तच्चाजन्तस्य विशेषणमित्याह उपदेशेऽजन्त इति । धातुरित्याक्षेपाल्लभ्यते । न ह्यधातोस्थल् संभवति नित्यग्रहणमनिटो विशेषणम् । क्व नित्यमनिडित्यपेक्षायां संनिधानात्तासावेवेति विज्ञायते 'तासि च क्लृपः' इति सन्निहितं वाऽनुवर्तते । 'न वृद्भ्यः–' इत्यस्मान्नेत्यनुवर्तते, तदाह तासौ नित्यानिट्, ततः परस्येति । तासाविव तास्वदिति सप्तम्यन्ताद्वतिः । यथा तासै न भवति एवं थल्यपीत्यर्थः । अच इति किम् बिभेदिथ । रुरोदिथ । उपदेशे इति किम्, जहर्थ । इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजन्तत्वाभावादेतस्याप्रवृत्ताविट् प्रसज्येतेत्युपदेशे इत्युक्तम् । थलीति किम्, पपिव पपिम । नित्यमनिटः किम्, सस्वरिथ, सस्वर्थ । नायं तासौ नित्यमनिट् । 'स्वरतिसूति—' इति विकल्पि तेट्त्वात् । इह तासीति नेति चानुवृत्त्यैवेष्टसिद्धेस्तास्वदित्येतन्नातीवोपयुज्यत इति केचित् । अन्ये तु—यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेध इत्ये·

( ७-२-६२ ) उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् ।
२२९६ ऋतो भारद्वाजस्य । ( ७-२-६३ ) तासौ नित्यानिटा ऋदन्तादेव थलो नेड् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः—

भवति । 'अजन्तात्' किम् ? बिभेदिथ । 'उपदेशे' इति किम् ? ह्वृञ् जहर्थ । इह गुणे रपरत्वे अजन्तत्वाभावादिण्निषेधो न स्यादित्युपदेशग्रहणम् । नित्यग्रहणं किम् स्वृ गतौ, सस्वरिथ । स्वरतिसूतीति तासौ विकल्पितेट्कत्वान्न निषेधः । 'तासौ' किम् ? लूत्वा लुलविथ । 'थलः' किम् ? पपिव पपिम । इह तासीत्यनुवृत्त्यैव सिद्धेः 'तास्वत्' इति नातीवोपयुज्यत इति केचित् । वस्तुतस्तु यस्तासौ विद्यते तस्मादेव परस्य थल इण्निषेधार्थं तास्वदित्यावश्यकम् । तेन 'लिट्यन्यतरस्याम्' इत्यदो घस्लभावे जघसिथेत्यत्र न निषेधः, घसस्तासावभावादिति 'अद भक्षणे' इति धातौ मूल एव वक्ष्यते । यस्तासावस्ति अनिट् चेति भाष्यम् । 'एवं वेञो वयादेशेऽपि । उपदेशेऽत्वतः । अत्वत इति च्छेदः । अत्-ह्रस्वाकारः सः अस्य अस्तीति अत्वान् 'तसौ मत्वर्थे' इति भत्वान्न जश्त्वम् । अच इति वर्जं पूर्वसूत्रम्, तत्र यदनुवृत्तं तदप्यनुवर्तते, तदाह उपदेशे अकारवत इति । शक्लृ शशक्थ, पच पपक्थेत्युदाहरणम् । अत्र क्रादिनियमप्राप्त इण्न भवति । 'उपदेशे' किम् ? 'कृप विलेखने', चकर्पिथ । 'अत्वतः' इति किम् ? बिभेदिथ । 'तपरः' किम् ? रराधिथ । 'तासौ' किम् ? जग्रहिथ । जिघृक्षतीत्यत्र 'सनि ग्रहगुहोश्च' इति सनि नित्यमनिट्, न तु तासौ । नित्येति किम् ? अञ्ज, आनञ्जिथ । ऊदित्त्वात्तासौ वेडिति भाष्यम् । चक्रमिथेत्यप्युदाहरणम्, 'स्नुक्रमोः—' इति नियमेनात्मनेपदे तासावनिट्कत्वेऽपि परस्मैपदे सेट्कत्वात् । ऋतो भारद्वाजस्य । तासौ नित्यमनिट इति, थलीति, नेति, इडिति चानुवर्तते । भारद्वाजस्य मते ऋदन्ताद्धातोः परस्य थलो नेडिति फलितम् । ह्वृञ्धृञादौ 'अचस्तास्वत्—' इत्येव सिद्धम् । अतो नियमार्थमिदमित्याह ऋदन्तादेव थलो नेडिति । अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः । तदाह अन्यस्य स्यादेवेति । ऋदन्तभिन्नात्परस्य थल इट्स्यादेवेत्यर्थः । तथा च

तल्लाभार्थं तत् । तेन उवयिथ, जघसिथेत्यत्र न निषेध इत्याहुः । उपदेशेऽत्वतः । पपक्थ । इयष्ठ । उपदेशे किम्, कर्ष्टा, चकर्पिथ । अकारवदिति किम्, भेत्ता, बिभेदिथ । तपरकरणं किम्, राद्धा रराधिथ । तासौ किम्, जिघृक्षति, जग्रहिथ । 'सनि ग्रहगुहोश्च' इति सनि नित्यमनिट् । क्रान्तः । चक्रमिथ । उदित्त्वेन क्त्वायां वेट्कत्वाद् 'यस्य विभाषा' इति निष्ठायां नेट् । नित्यानिटः किम्, अङ्क्ता, अञ्जिता, आनञ्जिथ । किं च नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति । नहि क्रमिस्तासौ नित्यानिट्, 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति परस्मैपदे सेट्कत्वात् । ऋतो भारद्वाजस्य । तपरकरणात्कगप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु ह्वृञ्वृञादिषु 'अचस्तास्वत्—' इत्येव सिद्धम्, वृञ्वृङौ तु यद्यपि सेटौ तथापि वृङः थलेव नास्ति आत्मनेपदित्वात्, वृञस्तु छन्दसि 'ववर्थ' इति निपातनाद्ववरिथेति भाषाया-



१ एतद् वाक्यं क्वचिन्नास्ति ।

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

न च स्तुद्रुस्रुश्रुवामपि थलि विकल्पः शङ्क्यः, 'अचस्तास्वत्–' ( सू २२९४ ) इति 'उपदेशेऽत्वतः' ( सू २२९५ ) इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः, 'अनन्तरस्य—' इति न्यायात् । विवयिथ, विवेथ,

---

ऋदन्तभिन्नाद्धातोः परस्य थलो नेण्निवृत्तिरिति भारद्वाजमते फलतीति न वैयर्थ्यमिति भावः । तथा च अनृदन्ताद्धातोः परस्य थलो भारद्वाजमते इट् । मतान्तरे तु अचस्तास्वदिति उपदेशेऽत्वत इति च तत्र नेडिति विकल्पः फलतीति भावः । तद्यथा पपिथ, पपाथ । पेचिथ, पपक्थ । अयमत्रेति । 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' इति 'अचस्तास्वत्थल्यनिटो नित्यम्' इति 'उपदेशेऽत्वतः' इति 'ऋतो भारद्वाजस्य' इति च सूत्रचतुष्टयस्य विपयाणां संग्रहो वक्ष्यत इत्यर्थः । अजन्त इति । यो धातुः ऋदन्तभिन्नाजन्तो ह्रस्वाकारवान् वा तासौ नित्यानिट् सोऽयं थलि विकल्पितेट्क इति पूर्वार्धस्यार्थः । 'अत्र ईदृग्' इत्यस्य तासौ नित्यानिडित्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् स थलि नित्यानिडित्यर्थः । 'अचस्तास्वदिति–' पाणिनिमते 'ऋतो भारद्वाजस्य' इति भारद्वाजमतेऽपि तस्य अनित्कत्वादिति भावः । क्राद्यन्य इति । क्राद्यष्टभ्योऽन्यो धातुः लिटि नित्यं सेडित्यर्थः । क्राद्यष्टभ्य एव परस्य लिटि नेडिति 'कृसृभृवृ–' इति सूत्रेण नियमितत्वादिति भावः । नन्वत्र क्राद्यन्य इत्युक्त्या क्रादीनाम् अष्टानां लिटि नित्यानिट्कत्वमवगतम् । तदनुपपन्नम्, स्तुद्रुस्रुश्रुवाम् ऋदन्तभिन्नत्वे तेभ्यस्थलि अचस्तास्वदिति निषेधस्य भारद्वाजमते अप्रवृत्त्या इड्विकल्पस्य दुर्वारत्वात् । नचैवं सति 'कृसृभृवृ–' इति सूत्रे स्तुद्रुस्रुश्रुग्रहणमनर्थकमिति वाच्यम् । तुष्टुव तुष्टुमेत्यादौ वमादिषु क्रादिनियमप्राप्तस्य इटो निवृत्त्या नारिर्थत्वादित्याशङ्क्य निराकरोति न च स्तुद्रुस्रुश्रुवामपि थलि विकल्पः शङ्क्य इति । कुत इत्यत आह अचस्तास्वदिति । ऋदन्तादेव परस्य थल इण्निषेधः, अनृदन्तात्परस्य तु थल इण्निषेधो नेति भारद्वाजोयं मतम् । अयं च इण्निषेधस्य निषेधः 'अचस्तास्वत्–' इति 'उपदेशेऽत्वतः' इति च सूत्रद्वयप्राप्तस्यैव इण्निषेधस्य पक्षे निवर्तकः । न तु क्रादिसूत्रप्राप्तस्य इट् प्रतिषेधस्यापीत्यर्थः । कुत इत्यत आह अनन्तरस्येति

---

मिटा भाष्यम् । तस्मान्नियमोऽयमित्याह ऋदन्तादेवेति । जघर्थ । दघर्थ । अन्यस्य स्यादेवेति । एवं च भारद्वाजमते स्यादन्यमते न स्यादिति विकल्पः फलितः । पपिथ, पपाथ पेचिथ, पपक्थ । इयजिथ, इयष्ट । अकारवानिति । ह्रस्वाकारवानित्यर्थः । ईदृगिति यस्तास्यनिट् स ऋदन्तः थलि नित्यानिड् भवतीत्यर्थः । ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाज नियमादिट् स्यात् । न चैवं क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यम्, तत्पठनस्य वमादिष्विणनिवृत्त्यर्थतया सफलत्वात् । अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याः न चेति । योगद्वयेति । क्रादियोगप्रापितस्य तु न निवर्तक इति भावः । कुत इत्याकाङ्क्षायामाह अनन्तरस्येति । न चैवम् 'उपदेशेऽत्वतः' इत्यस्यैव बाधः स्यादिति वाच्यम्

आजिथ विव्यथुः विव्य । विवाय-विवय विव्यिव विव्यिम । वेता, अजिता । वेष्यति, अजिष्यति । अजतु । आजत् । अजेत् । वीयात् । २२६७ सिचि वृद्धिः परस्मैपदेषु । ( ७-२-१ ) इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे

'अचस्तास्वत्-' इति 'उपदेशेऽत्वतः' इति 'ऋतो भारद्वाजस्य' इति च सूत्रक्रमः । 'कृसृभृवृ-' इति सूत्रं तु ततः प्राग्बहुव्यवहितमिति भावः । किंच 'नेड् वशि कृति' इत्यादिप्रतिषेधकाण्डोत्तरम् 'आर्धधातुकस्येड्वलादेः' इति विधिकाण्डारम्भसामर्थ्यादपि स्तुद्रुस्रुश्रुवामिण्निषेधो भारद्वाजनियमं बाधत इति 'नेड् वशि कृति' इत्यत्र 'वस्वेकाजाद्घसाम्' इत्यत्र च भाष्ये स्पष्टम् । ततश्च प्रकृते अजेस्थलि वीभावे तस्य अजन्तत्वात्तासौ नित्यानिट्त्वाच्च इड्विकल्प इति सिद्धम् तदाह **विवयिथ विवेथेति** । सिवादेशस्य थलः पित्वाद् 'असंयोगात्-' इति कित्वाभावाद् गुणः । इट्पक्षे अयादेशः । **आजथेति** । 'वलादावार्धतुके वेष्यते' इति वीभावाभावपक्षे अजधातोरनुदात्तोपदेशबहिर्भूतत्वादिट्, द्वित्वम्, हलादिशेषः, 'अत आदेः' इति सवर्णदीर्घः । **विव्यथुरिति** । अथुसि वीभावे द्वित्वे अभ्यासह्रस्वे 'असंयोगात्-' इति कित्वाद् गुणाभावे इयङपवादे 'एरनेकाचः-' इति यणि रूपम् । **विव्येति** । थस्य अकारे वीभावादि । **विवाय, विवयेति** । 'णलुत्तमो वा' इति णित्वविकल्पाद् वृद्धिविकल्पः । **विव्यिव विव्यिमेति** । 'क्राद्यन्यो लिटि सेड् भवेत्' इति नित्यमिटि यण् । **वेता अजितेति** । लुटि तासि वीभावविकल्पः **वेष्यति अजिष्यतीति** । लृटि स्ये वीभावविकल्पः । **वीयादिति** । आशीर्लिङादेशस्य आर्धधातुकत्वाद् वीभावः । अथ लुङि सिचि वीभावे 'सार्वधातुकार्धधातुकयोः' इत गुणे प्राप्ते । **सिचि वृद्धिः । इगन्तस्येति** । वृद्धिश्रुत्या इक इत्युपस्थितम् 'अङ्गस्य' इत्यधि-

अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधस्तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात् । ननु तर्हि 'अचस्तास्वत्-' इत्यस्यैव बाधोऽस्तु, तत्कथं योगद्वयप्रापितस्येत्युक्तम् । अत्राहुः--उपदेशेऽचस्तास्वदित्येवं सूत्रे बाधोऽपि तास्वत्थलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिसंभवे अत्वत इति सूत्रे उपदेशपदस्य, अच इति पूर्वसूत्रे तु तास्वत्थलीत्यादेश्चाकरणादुभयोः समानयोगक्षेम इति ज्ञायते । तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते । यदि तु 'उपदेशेऽत्वतोऽचस्तास्वत्थल्यनिटो नित्यम्' इति एको योगः स्वीक्रियते, तदात्र नास्त्येव शङ्कालेशोऽपीति बोध्यमिति । अन्ये तु व्याचक्षते—'अचस्तास्वत्-' इति सूत्रानन्तरमेव 'ऋतो भारद्वाजस्य' इति पठनीयम्, द्वयोरनन्तरमस्यारम्भादिह तास्वत्थल्यनिटो नित्यं तासीयनुवर्त्य योऽयं तासि नित्यानिटस्थलि इण्निषेधः स भारद्वाजमते ऋकारान्तस्यैवेति व्याख्यायते । अनेन सर्वेष्टसिद्धिः । यद्वा क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि बाधकमस्तु, पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेत्येतदर्थो हि स आरम्भः । अमुमेवार्थं सिद्धवत्कृत्य ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थमिति मूलेऽप्युपनिबद्धमिति । **विव्यिव विव्यिमेति** । क्रादिनियमान्नित्यमिट् । **सिचि** ।

परे सिचि । अवैषीत्, आजीत् । अवेष्यत्, आजिष्यत् । तेज २३१ पालने । तेजति । खज २३२ मन्थे । खजति । खजि २३३ गतिवैकल्ये । खञ्जति । एजृ २३४ कम्पने । एजांचकार । टु ओ स्फूर्जा २३५ वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । क्षि २३६ क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय चिक्षियतुः चिक्षियुः । चिक्षयिथ, चिक्षेथ चिक्षियिव चिक्षियिम । क्षेता । २२९८ **अकृत्सार्वधातुकयोर्दीर्घः ।** ( ७—४—२५ ) अजन्तस्याङ्गस्य दीर्घः स्याद्यादौ

---

कृतस्य विशेषणम्, तदन्तविधिरिति भावः । एवं च अकोषीदित्यादौ व्यञ्जनस्य न वृद्धिः । **अवैषीदिति** । लुङस्तिप्, इकारलोपः, सिचि वीभावः, 'एकाच—' इति इण्निषेधः, वृद्धिः, अडागमः, षत्वम् । **आजीदिति** । सिज्लोपः । 'वदव्रज—' इति हलन्तलक्षणायां वृद्धौ 'नेटि' इति निषिद्धायामाडागमे 'आटश्च' इति वृद्धिः । लृङि अवेष्यत्, आजिष्यत् । **तेज पालन इत्यादि** । स्पष्टम् । **एजृ कम्पन इति** । दीप्तौ त्वात्मनेपदी गतः । **टु ओ स्फूर्जेति** । 'आदिर्ञिटुडवः' इति टुरित् । उपदेशेऽनुनासिकत्वादोकार अकारश्च इत् । 'ट्वितोऽथुच्' इत्यथुच्, 'ओदितश्च' इति निष्ठानत्वम्, 'ओदितश्च' इति निष्ठायामिण्निषेधश्च तत्फलानि । 'उपधायां च' इति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घ ऊकारः पठितः । तेन हुर्छतीत्यादौ न दीर्घ इत्याहुः । **स्फूर्जतीति** । लिटि पुस्फूर्ज, अस्फूर्जीत् । **क्षि क्षय इति** । क्षयो नाशः । **अन्तर्भावितण्यर्थ इति** । नाशनार्थक इत्यर्थः । अजन्तेष्वेवास्य पाठो युक्तः । **क्षयतीति** । नश्यतीत्यर्थः, नाशयतीति वा । शपि गुणे अयादेशः । **चिक्षायेति** । णलि वृद्धिः आयादेशः । **चिक्षियतुरिति** । 'असंयोगात्—' इति कित्त्वान्न गुणः । इयङ् । **चिक्षयिथ,चिक्षेथेति** । पित्त्वेन कित्त्वाभावाद् गुणः । अजन्तत्वात्तासौ नित्यानिट्त्वाच्च भारद्वाजनियमात्थलि वेट् । इट्पक्षे अयादेशः । चिक्षियथुः,चिक्षिय । चिक्षाय,चिक्षय । वस्मसोस्तु क्रादिनियमाद् नित्यमिट् । तदाह **चिक्षियिव चिक्षियिमेति** । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशीर्लिङि विशेषमाह **अकृत्सार्वधातुकयोः** । 'अङ्गस्य' इत्यधिकृतम् । 'अयङ् यि क्ङिति' इत्यतो यीति सप्तम्यन्तमनुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणम्, तदादिविधिः । दीर्घश्रुत्या अच इत्युपस्थितमङ्गविशेषणम्, तदन्तविधिः तदाह **अजन्तस्येत्यादिना** । 'अकृत्सार्वधातुकयोः' इति किम् ? प्रकृत्य । तुकं बाधित्वा परत्वाद्दीर्घो न । चिनुयात्, सार्वधातु-

---

वृद्धिः । 'इको गुणवृद्धी' इति परिभाषास्थानादाह इगन्तेति । परस्मैपदेष्विति किम्, अवविष्ट, अधोष्ट । सिचि किम्, एति । विभर्ति । गुणं बाधित्वा वृद्धिः स्यात् । खज मन्थे । कजेति केचित्पठन्ति । एजृ कम्पने । दीप्तौ त्वात्मनेपदी गतः । टुओस्फूर्जा । 'ट्वितोऽथुच्' । स्फूर्जथुः । 'ओदितश्च' इति निष्ठानत्वार्थमोकारः । स्फूर्णः । स्फूर्णवान् । आकारस्तु 'आदितश्च' इति निष्ठायामिटो निषेधार्थः, 'विभाषा भावादिकर्मणोः' इति विकल्पार्थश्च, स्फूर्णं स्फूर्जितमनेनेत्यादि । 'उपधायां च' इति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घोपदेशः, तेन हुर्च्छति मुर्च्छति इत्यपि भवतीति केचित् । क्षि क्षये । अजन्तेष्वस्य पाठो युक्तः । 'क्षि' निवासगत्योः' इति तुदादौ । अकृत्सार्व ।

प्रत्यये परे, नतु कृत्सार्वधातुकयोः। क्षीयात्। अक्षैपीत्। क्षीज २३७ अव्यक्ते शब्दे। कूजिना सहायं पठितुं युक्तः। चिक्षीज। लज २३८ लजि २३९ [1]भर्त्सने। लाज २४० लाजि २४१ [2]भर्जने च। जज २४२ जजि २४३ युद्धे। तुज २४४ हिंसायाम्। तोजति। तुतोज। तुजि २४५ पालने। गज २४६ गजि २४७ गृज २४८ गृजि २४९ मुज २५० मुजि २५१ शब्दार्थाः। गज मदने च। वज २५२ व्रज २५३ गतौ। ववजतुः। 'वदव्रज–' ( सू २२६७ ) इति वृद्धिः, अव्राजीत्।

अथ टवर्गीयान्ताः शाड्न्ता अनुदात्तेतः षट्त्रिंशत्। अट्ट २५४ अतिक्रमहिंसयोः। दोपधोऽयम्। तोपध इत्यन्ये। अट्टते। आनट्टे। वेष्ट

---

कत्वान्न दीर्घः। क्षीजेति। ईदुपधः। कूजिनेति। 'कूज अव्यक्ते शब्दे' इत्यनुपदमेव पठितम्। तत्रैव'कूज क्षीज अव्यक्ते शब्दे'इति पठितुं युक्तमित्यर्थः अर्थैक्यादिति भावः। **लज लजि भर्त्सन इति**। 'भर्त्सनं त्वपवादगीः'इत्यमरः। द्वितीय इदित्। आशीर्लिङि लज्यात्, लञ्ज्यात्। **लाज लाजि भर्जन इति**। आदुपधौ। द्वितीय इदित्। **जज जजीत्यादि**। स्पष्टम्। **वव्रजेति**। आद्यस्य असंयुक्तहल्मध्यस्थाकारवत्त्वेपि 'न शसददवादिगुणानाम्' इत्येत्त्वाभ्यासलोपौ नेत्याह **ववजतुरिति**। अवाजीत्, अवजीत्। द्वितीयस्य तु संयुक्तहल्मध्यस्थाकारवत्त्वादेवैत्वाभ्यासलोपयोर्न प्रसक्तिः। अव्राजीदित्यत्र 'अतो हलादेः—'इति वृद्धिविकल्पमाशङ्क्याह **वदव्रजेति वृद्धिरिति**। हलन्तत्वादेव सिद्धे व्रजग्रहणस्य 'अतो हलादेः—' इति विकल्पनिरासार्थत्वादिति भावः। शुचादयो द्विसप्ततिर्वृत्ताः।

**शाड्न्ता इति**। शाडृ श्लाघायामित्यन्ता इत्यर्थः। शाड्यन्ता इति क्वचित्पाठः। **अट्टेति**। तवर्गतृतीयोपधोऽयम्। चर्त्वष्टुत्वाभ्यां टोपधनिर्देशः, तदाह **दोपधोऽयमिति**। तथा च अट्टधातोः सनि इटि स इति स्थिते ष्टुत्व-

---

दीर्घग्रहणेन 'अचश्च' इति परिभाषोपस्थानादाह **अजन्तेति**। **यादौ प्रत्यय इति**। 'अयङ् यि क्ङिति' इत्यतो यीत्यनुवर्त्य अङ्गाक्षिप्तप्रत्ययस्तेन विशेष्यते, विशेषणेन तदादिविधिः, 'यस्मिन्विधि—' इति परिभाषोपस्थानादिति भावः। **न त्विति**। कृद्यकारे प्रकृत्य, प्रहृत्य, उच्चैःकृत्य। तुकं बाधित्वा परत्वाद् दीर्घः स्यात्। तुग्विधिस्तु अग्निचित् सोमसुत् इत्यादौ। चरितार्थः। ल्यपः पित्त्वमप्यनुदात्तार्थतया चरितार्थमित्याहुः। सार्वधातुकयकारे तु चिनुयात्, सुनुयात्। **कूजिनेति**। अर्थैक्यादेकत्र पाठ उचित इति भावः। **लज लजि**। लज्यात्। लञ्ज्यात्। 'लज प्रकाशने' इति कथादौ। **भर्त्सने चेति**। चाद् भर्जने। **तुजि पालने**। भाषार्थोऽयं युजादौ। **गज गजि**। 'गञ्जा तु मदिरागृहम्' **गज मदने च**। मदनं मदः चित्तविकारः। **वज व्रज**। वादित्वादेत्वाभ्यासलोपौ न। ववजतुः। वव्रजतुः। **शाड्यन्ता इति**। शाडृ श्लाघायामित्यन्ता इत्यर्थः। **दोपधोऽयमिति**। तथा च चर्त्वे ष्टुत्वशास्त्रस्यासिद्धत्वाद् 'न न्द्राः—' इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य

---

१ 'भर्जने' इति तत्त्वबोधिनीकारः।
२ 'भर्त्सने' इति तत्त्वबोधिनीकारः।

२५५ वेष्टने । विवेष्टे । चेष्ट २५६ चेष्टायाम् । अचेष्टिष्ट । गोष्ट २५७ लोष्ट २५८ संघाते । जुगोष्टे । लुलोष्टे । घट्ट २५९ चलने । जघट्टे । स्फुट २६० विकसने । स्फोटते । पुस्फुटे । अठि २६१ गतौ । अण्ठते । आनण्ठे । वठि २६२ एकचर्यायाम् । ववण्ठे । मठि २६३ कठि २६४ शोके । शोक इह आध्यानम् । मण्ठते । मुठि २६५ पालने । मुण्ठते । हेठ २६६ विवाधायाम् । विवाधा शाठ्यम् । जिहेठे । एठ २६७ च । एठांचक्रे । हिडि २६८ गत्यनादरयोः । हिण्डते । जिहिण्डे । हुडि २६९ संघाते । जुहुण्डे । कुडि २७० दाहे । चुकुण्डे । वडि २७१ विभाजने । मडि २७२ च । ववण्डे । भडि २७३ परिभाषणे । परिहासः सनिन्दोपालम्भश्च परिभाषणम् । बभण्डे । पिडि २७४ संघाते । पिपिण्डे । मुडि २७५ मार्जने । मार्जनं शुद्धिर्न्यग्भावश्च । मुण्डते । तुडि २७६ तोडने । तोडनं दारणं हिंसनं च । तुण्डते । हुडि २७७ वरणे । वरणं स्वीकारः । हरणे इत्येके । हुण्डते । चडि २७८ कोपे । चण्डते । शडि २७९ रुजायां संघाते च । शण्डते । तडि २८० ताडने । तण्डते । पडि २८१ गतौ । पण्डते । कडि २८२ मदे । कण्डते । खडि २८३ मन्थे । हेडृ २८४ होडृ २८५

---

चर्त्वयोरसिद्धत्वाद् 'अजादेर्द्वितीयस्य' इति प्रवर्तमानं द्वित्वं 'नन्द्राःसंयोगादयः' इति दकारं विहाय टिस् इत्यस्य भवति । ततो हलादिशेषे दकारस्य ष्टुत्वचर्त्वयोः अट्टिटिषत इतीष्टं सिध्यति । स्वाभाविकमूर्धन्योपधत्वे नन्द्रा इति निषेधाभावात् टकारद्वयसहितस्यैव द्वित्वे हलादिशेषेण द्वितीयटकारस्य निवृत्तौ अटिट्टिषते इत्यनिष्टं प्रसज्येतेति भावः । तोपध इत्यन्य इति । ष्टुत्वेन टोपधनिर्देश इति भावः । अस्मिन्पक्षे सनि द्वित्वे कर्तव्ये ष्टुत्वस्यासिद्धत्वेऽपि 'नन्द्राः–' इति निषेधाभावात्तकारविशिष्टस्य ततृटि स् इत्यस्य द्वित्वे हलादिशेषेण टकारस्य निवृत्त्या अतिट्टिषते इति रूपमिति भावः । आनट्ट इति । इह 'नन्द्राः–' इति निषेधो न तत्र द्वितीयस्यैकाच इत्यनुवृत्तेः । घट्ट गताविति । अयं चुरादावपि । स्फुट विकसन इति । अयं कुटादावपि । अठि गताविति । लिटि नुमि द्वित्वे हलादिशेषे 'अत आदेः' इति दीर्घे 'तस्मान्नुड्द्विहलः' इति नुडिति मत्वाह आनण्ठ इति । वठि एकचर्यायामिति । असहायचर्यायामित्यर्थः । मडि चेति । विभाजन इत्यनुपज्यते । मडि भूषायामिति परस्मैपदिषु

---

द्वित्वे पश्चाद्दकारस्य ष्टुत्वे चर्त्वे च अट्टिटिषते अट्टिटदित्यादि सिध्यति । टोपधत्वे तु अटिट्टिषते आटिट्टदिति स्यादिति भावः । तोपध इति । अस्मिंस्तु पक्षे अतिट्टिषते आतिट्टदित्यादि बोध्यम् । हलादिशेषेण टकारनिवृत्तौ तन्निमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः । मनोरमायां तु 'पूर्वत्रासिद्धीयमद्विर्वचने' इति ष्टुत्वस्यासिद्धत्वाभावाट्टकारद्वयसहितस्य द्वित्वे हलादिशेषे अट्टिटिषते आट्टिटदित्यादि सिध्यतीत्युक्तम् । 'निमित्तापाये नैमित्तिकस्याप्यपायः' त्वनित्यमिति तदाशयः । आनट्ट इति । इह 'न न्द्राः–' इति निषेधो न । तत्र द्वितीयस्येत्यनुवर्तनाद् द्वितीयैकाच एव नदराणां निषेधात् । घट्ट चलने । अयं चुरादावपि । स्फुट । अयं कुटादावपि । आनण्ठ इति । 'तस्मान्नुड् द्विहलः' इति नुट् । वण्ठत इति । सहायं विना

अनादरे। जिहेडे। जुहोडे। वाडृ २८६ आप्लाव्ये। वशादिः। आप्लाव्यमाप्लवः। वाडते। द्राडृ २८७ ध्राडृ २८८ विशरणे। द्राडते। शाडृ २८९ श्लाघायाम्। शाडते।

अथ गड्यन्ताः परस्मैपदिनः। शौटृ २९० गर्वे। शौटति। शुशौट। यौटृ २९१ बन्धे। यौटति। म्लेटृ २९२ म्रेडृ २९३ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति। म्रेडति। कटे २९४ वर्षावरणयोः। चटे इत्येके। सिचि 'अतो हलादेर्लघोः (सू २२८४) इति वृद्धौ प्राप्तायाम्। २२९९ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्। (७—२—५) हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत्। अट २९५ पट २९६ गतौ। आट आटतुः आटुः। पपाट

---

वक्ष्यते। शाडृ श्लाघायामिति। डलयोरैक्यात् शालते इति काश्यपः। इत्यट्टादयः षट्त्रिंशद्गताः।

अथ गड्यन्ता इति। गडि वदनैकदेश इत्यन्ता इत्यर्थः। म्लेटृ म्रेडृ इति टान्तमध्य इति। एदुपधौ। नाथतिवदिति। टवर्गतृतीयान्त इत्यर्थः। ननु टान्तेष्वस्य कथं पाठः, चुड्ड भावकरण इत्यारभ्यानुक्रम्यमाणेष्वेवास्य पठितुं युक्तत्वादित्यत आह टान्तमध्य इति। नाथतिवदिति। एध वृद्धावित्यारभ्यानुक्रान्तेषु तवर्गचतुर्थान्तेषु यथा नाथृ नाधृ याच्ञेति तवर्गद्वितीयान्तस्यापि अर्थसाम्यात्पाठः, तद्वदित्यर्थः। कट इति। कण्ठ्यादिः। चट इति। तालव्यादिः। आद्यस्य लिटि अभ्यासस्य चुत्वमित्याह चकाटेति। चकटतुः। द्वितीयस्य चेटतुः, वैरूप्यापादकादेशादित्वाभावादेत्त्वाभ्यासलोपौ। प्राप्तायामिति। हलन्तलक्षणाया नित्यवृद्धेः 'नेटि' इति निषेधाद् 'अतोहलादेः—' इति वैकल्पिकवृद्धौ प्राप्तायामित्यर्थः। ह्म्यन्त। ह्म्यन्त क्षण श्वस जागृ णि श्वि एदित एषां द्वन्द्वात्षष्ठी ह् म् य् इत्येते वर्णा येषामन्ते ते ह्म्यन्ताः, तदाह हमयान्तस्येति। क्षणादेरिति। आदिना श्वस जागृ इत्यनयोर्ग्रहणम्। ण्यन्तस्येति। प्रत्ययग्रहणपरिभाषया णिग्रहणेन तदन्तग्रहणमति भावः। श्वयतेरिति। श्विधातोरित्यर्थः। एदितइति। एत् इत यस्येति विग्रहः। वृद्धिर्न स्यादिति। 'सिचि वृद्धिः—' इत्यतो 'नेटि' इत्यतश्च तदनुवृत्तेरिति भावः। इडादौ सिचीति। 'सिचि वृद्धिः—' इत्यतः सिचीति 'नेटि'

---

चरतीत्यर्थः। मडि च। पृथक्पाठादयं वेष्टनेऽपीत्याहुः। मडि भूषायामित्यग्रे परस्मैपदिषु। भडि। 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम्' इत्यमरः। शडि। 'शण्डोऽसुरपुरोहितः'। द्राडृ। विशरणमवयवविभागः। शाडृ। डलयोरैक्यात् शालते इति काश्यपः। शौटृ गर्वे। अस्योणादिषु ईरन्वक्ष्यते। 'तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यति' इति कल्पतरुः। कटे। ह्म्यन्तक्षण। अग्रहीत्। टुवम्। अवमीत्। हय गतौ अहयीत्। क्षणु। हिंसायाम्। अक्षणीत्। श्वस प्राणने। अश्वसीत्। जागृ निद्राक्षये। अजागरीत्। ण्यन्ते छन्दसि 'नोनयतिध्वनयति—' इत्यादिना चङि निषिद्धे औनयीदिति उदाहरणम्। टुओश्वि। अश्वयीत्।

पेटतुः पेटुः । रट २९७ परिभाषणे । रराट । लट २९८ बाल्ये । ललाट । शट २९९ रुजाविशरणगत्यवसादनेषु । शशाट । वट ३०० वेष्टने । ववाट ववटतुः ववटुः । ववटिथ । किट ३०१ खिट ३०२ त्रासे । केटति । खेटति । शिट ३०३ षिट ३०४ अनादरे । शेटति । सेटति । सिषेट । जट ३०५ झट ३०६ संघाते । भट ३०७ भृतौ । तट ३०८ उच्छ्राये । खट ३०९ काङ्क्षायाम् । णट ३१० नृत्तौ । पिट ३११ शब्दसंघातयोः । हट ३१२ दीप्तौ । षट ३१३ अवयवे । लुट ३१४ विलोडने । डान्तोऽयमित्येके । चिट ३१५ परप्रेष्ये । विट ३१६ शब्दे । बिट ३१७ आक्रोशे । वशादिः । हिट इत्येके । इट ३१८ किट ३१९ कटी ३२० गतौ । एटति । केटति । कटति । ईकारः 'श्वीदितो निष्ठायाम्' (सू ३०३९) इतीण्निषेधार्थः । केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति । अन्ये तु इ ई इति प्रश्लिष्य, अयति । इयाय इयतुः इयुः । इययिथ,

---

इत्यत इटीति चानुवर्तत इति भावः । अकटीदिति । एदित्वान्न वृद्धिः । अट पटेति । 'अत आदेः' इति दीर्घं मत्वा आह आटेति । पेटतुरिति । एत्त्वाभ्यासलोपौ । वट वेष्टने । ववटतुरिति । 'न शसददवादिगुणानाम्' इति निषेधः । ववटिथेति । अत्र 'थलि च सेटि' इति प्राप्तस्य 'न शसदद–' इति निषेधः । किट खिट त्रास इति । यद्यपि 'इट किट कटी गतौ' इति अग्रे किटधातुः पठ्यते, तथाप्यर्थभेदात् पुनरिह पाठः । खिट त्रासे किट गतौ चेति पठितुं युक्तम् । शिट पिटेति । आद्यस्तालव्यादिः, द्वितीयस्तु षोपदेशः । जट झटेति । आद्यस्य अवैरूप्यापादकादेशादित्वादेत्त्वाभ्यासलोपौ, द्वितीयस्य तु न । जेटतुः । जझटतुः । णट नृत्ताविति । णोपदेशः । चुरादेरेव नाटेः पर्युदासादयं णोपदेश एव । प्रणटति । इट किट कटी गताविति । कटे वर्षावरणयोरिति कटिः पूर्वमेदित्पठितः, इह ईदित्पठ्यते । एदित्त्वाभावाद् 'ह्मयन्त—' इति वृद्धिनिषेधो न भवति । अकटीत्, अकाटीत् । ननु तर्हि कटेत्येव कुतो न पठ्यत इत्यत आह ईकार इति । केचित्त्विति । कटि इति ह्रस्वान्तपाठं मत्वा इदित्त्वान्नुमि कृते अनुस्वारे परसवर्णे च कण्टतीति वदन्तीत्यर्थः । अन्ये इति । उदाहरन्तीत्यन्वयः । प्रश्लिष्येति । कटि इत्यनन्तरम् इ ई धातुद्वयं सवर्णदीर्घेण प्रश्लिष्य निर्दिष्टमिति भावः ।

---

इडादौ सिचीति । इडादौ किम्, दह भस्मीकरणे अधाक्षीत् । किटखिट । इट किटेति । किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् । खट । जट झट । जेटतुः । जझटतुः । इह त्वादेशादित्वादेत्वाभ्यासलोपौ न । खट । 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्' । खट्वा । नृत्तौ । प्रणटति । णोपदेशपर्युदासे नाटीति सवृद्धिकनिर्देशेन 'नट अवस्यन्दने' इति चौरादिकस्यैव ग्रहणा-दयं णोपदेश एव । हट दीप्तौ । हाटकं सुवर्णम् । 'संज्ञायां च' इति ण्वुल् बाहुलकादक्रिया-मपि । शट । पचाद्यजन्ताट्टाप् । 'सटा जटाकेसरयोः' । चिट । 'सर्वधातुभ्यः–' इति औणादिक इन् । चेटिः । 'कृदिकाराद्–' इति ङीप्, चेटी । विट । इगुपधलक्षणः कः । विटः इयायेति । द्वित्वे कृते णलि वृद्धौ सत्यामायादेशः । 'अभ्यासस्यासवर्णे' इति इयङ्

इयेथ। इय। इयाय, इयय। दीर्घस्य तु 'इजादेश्च–' ( सू २२३७ ) इत्यामि अयांचकारेत्यादि उदाहरन्ति। मडि ३२१ भूषायाम्। कुडि ३२२ वैकल्ये। कुण्डति। कुण्डत इति तु दाहे गतम्। मुड ३२३ प्रुड ३२४ मर्दने। चुडि ३२५ अल्पीभावे। ...

अयतीति। इधातोर्लटि शपि गुणे अयादेशः। इयायेति। णलि द्वित्वे वृद्धौ आयादेशे 'अभ्यासस्याऽसवर्णे' इति इयङ्। इयतुरिति। इकारोऽत्र ह्रस्वः। तथाहि—इ अतुसिति स्थिते कित्त्वाद् गुणाभावे 'द्विर्वचनेऽचि' इति निषेधाद्यणभावे इ इत्यस्य द्वित्वे इ इ अतुसिति स्थिते सवर्णपरकत्वादभ्यासस्य इयङभावे सति 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घं बाधित्वा 'एरनेकाच–' इत्युत्तरखण्डस्य यणि इयतुरिति रूपम्। इधातोर्भारद्वाजनियमात्थलि वेट्। तत्र इट्पक्षे रूपमाह इययिथेति। थलि द्वित्वे इटि पित्त्वेन कित्त्वाभावाद् गुणे अयादेशे अभ्यासस्य इयङ्। नच 'अचः परस्मिन्–' इति गुणस्य स्थानिवत्त्वेन असवर्णपरत्वाभावात् कथमभ्यासस्य इयङिति वाच्यम्, असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वाप्रसक्तेः। एवं णलि इयासेत्यत्रापि वृद्धेर्न स्थानिवत्त्वम्। थलि इडभावपक्षे रूपमाह इयेथेति। थलि द्वित्वे गुणे अभ्यासस्येयङ्। अथुसि इयथुः। इयेति। थस्य अकारादेशे द्वित्वे उत्तरखण्डस्य 'एरनेकाचः'—इति यणि रूपम्। 'णलुत्तमो वा' इति णित्त्वपक्षे आह इयायेति। द्वित्वे पित्त्वेन कित्त्वाभावाद् वृद्धौ आयादेशे अभ्यासस्य इयङ्। णित्त्वाभावे आह इययेति। द्वित्वे पित्त्वेन कित्त्वाभावाद् गुणे अयादेशे अभ्यासस्य इयङ्। वसि मसि च क्रादिनियमान्नित्यमिटि द्वित्वे उत्तरखण्डस्य 'एरनेकाच–' इति यणि इयिव इयिमेति रूपम्। एता। एष्यति। अयतु। आयतु। अयेत्। आशीर्लिङि तु 'अकृत्सार्वधातुकयोः–' इति दीर्घाद् ईयात्। सिचि वृद्धिः ऐषीत्। ऐष्यत्। दीर्घस्य त्वियति। दीर्घस्य ईधातोरित्यर्थः। तस्य लिटं वर्जयित्वा लडादिषु पूर्ववत्। लिटि विशेषमाह अयाञ्चकारेति। ईधातोरामि गुणे अयादेशः अनुप्रयोगश्च। कुडि वैकल्य

---

ईयतुरिति। द्वित्वे कृते 'एरनेकाच–' इति यणं बाधित्वा अन्तरङ्गत्वात्सवर्णदीर्घः। ततः 'अचि श्नुधातु–' इतीयङ्। एकादेशस्ये पूर्वान्तत्वेन अभ्यासग्रहणेन ग्रहणात्। 'अभ्यासस्यासवर्णे' इत्यनेनेत्येके। केचित्तु—'वार्णादाङ्गं बलीयः' इति दीर्घं बाधित्वा यण्। न चेह समानाश्रयत्वं नेति वाच्यम्, अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयोः समानाश्रयत्वात्। अतएव ईयतुरित्यत्र 'इणो यण्' इति यणि ततो 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घो विधीयते। अन्यथा सूत्रमिदं निर्विषयं स्यात्, अभ्यासाभावादित्याहुः स्यादेतत्—णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः। स्मिन्कर्तव्ये 'अचः परस्मिन्–' इति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधादिति चेत्। मैवम्, असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः। ननु नास्ति सामर्थ्यम्। इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेत्। अत्राहुः—न ह्येकमुदाहरणं योगारम्भं प्रयोजयति। अन्यथा हि 'अभ्यासस्यातौ' इति ब्रूयात्। एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय, थलि एथ, इट्पक्षे तु अयिथेति स्यादित्याशङ्कापि न कार्या। 'अभ्यासस्यासवर्णे' इत्यस्य वैयर्थ्यापत्तेरिति।

भावे । मुडि ३२६ खण्डने । मुण्डति । पुडि च इत्येके । पुण्डति । रुटि ३२७ लुटि ३२८ स्तेये । रुण्टति । लुण्टति । रुठि लुठि इत्येके । रुडि । लुडि इत्यपरे । स्फुटिर् ३२९ विशरणे । इरित्त्वादङ्वा । अस्फुटत्, अस्फोटीत् । स्फुटि इत्यपि केचित् । इदित्त्वान्नुम् । स्फुण्टति । पठ ३३० व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत्, अपाठीत् । वठ ३३१ स्थौल्ये । ववठतुः । ववठिथ । मठ ३३२ मदनिवासयोः । कठ ३३३ कृच्छ्रजीवने । रट ३३४ परिभाषणे । रठ इत्येके । हठ ३३५ प्लुतिशठत्वयोः । बलात्कारे इत्येके । हठति । जहाठ । रुठ ३३६ लुठ ३३७ उठ ३३८ उपघाते । ओठति । ऊठ इत्येके । ऊठति । ऊठांचकार । पिठ ३३९ हिंसासंक्लेशनयोः । शठ ३४० कैतवे च । शुठ ३४१ प्रतिघाते । शोठति । शुठि इति स्वामी । शुण्ठति । कुठि ३४२ च । कुण्ठति । लुठि ३४३ आलस्ये प्रतिघाते च । शुठि ३४४ शोषणे । रुठि ३४५ लुठि ३४६ गतौ । चुड्ड ३४७ भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । अड्ड ३४८ अभियोगे । अड्डति । आनड्ड । कड्ड ३४९ कार्कश्ये । कड्डति । चुड्डादयस्त्रयो दोपधाः । तेन क्विपि चुत् अत् कत् इत्यादि । क्रीडृ ३५० विहारे । चिक्रीड । तुडृ ३५१ तोडने । तोडति । तुतोड । तूडृ इत्येके । हुडृ ३५२ हूडृ ३५३ होडृ ३५४ गतौ । हुड्यात् । हूड्यात् होड्यात् । रौडृ ३५५ अनादरे । रोडृ ३५६ लोडृ ३५७ उन्मादे । अड ३५८ उद्यमे । अडति । आड आडतुः आडुः । लड ३५९ विलासे । लडति । लडयोर्लरयोश्चैकत्वस्मरणाल्ललतीति स्वाम्यादयः । कड ३६० मदे । कडति । कडि इत्येके । कण्डति । गडि ३६१ वदनैकदेशे । गण्डति । इति टवर्गीयान्ताः ।

---

इति । वैकल्यम् अविवेक इत्याहुः अपूर्णभावो वा । मुड प्रुड मर्द न इत्यादि । स्पष्टम् । पठधातोर्लिटि अतुसादौ किति एत्वाभ्यासलोपौ, तदाह पेठतुरिति । पेठिथेति । पित्त्वेन अकित्त्वेऽपि 'थलि च सेटि' इत्येत्वाभ्यासलोपौ, । अपठीत्, अपाठीदिति । 'अतो हलादेर्लघोः' इति वृद्धिविकल्पः । वठ स्थौल्य इति स्थौल्यं स्थूलीभवनम् । 'न शसददवादिगुणानाम्' इत्येत्वाभ्यासलोपनिषेध इति मत्वा आह ववठतुः, ववठिथेति । दोपधा इति । प्रकृतेन डोपधनिर्देश इति भावः । चुदिति । चुड्ड धातोः क्विपि हल्ङ्यादिना सुलोपे द्वितीयस्य डस्य संयोगान्तलोपे ष्टुत्वनिवृत्तौ 'वावसाने' इति चर्त्वे चुत् इति रूपम् अदिति । अड्डधातोः क्विपि पूर्ववद् रूपम् । कदिति । कड्डधातोः क्विपि रूपम् । इत्यादीति । आदिना जश्त्वेन चुदित्यादिसंग्रहः । एकत्वस्मरणादिति । शिक्षादाविति शेषः । गडि वदनेति । तवर्गान्तेषु गडीति गतम् । परस्मैपदिनः शौटृ गर्व इत्यादयो गताः ।

---

एता । एष्यति । 'अकृत्सार्व–' इति दीर्घः । ईयात् । ऐपीत् कुडि । वैकल्यमविवेकः । तुडृ । तोडनं दारणं हिंसनं च । रोडृ लोडृ । उन्मादश्चित्तविभ्रमः । गडि वदनैकदेशे । टवर्गीयप्रकरणादिह पाठस्सूचितः । मन्तव्यादिषु तु 'पञ्चैते न

अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुर्स्त्रिंशत् । तिपृ ३६२ तेपृ ३६३ ष्टिपृ ३६४ ष्टेपृ ३६५ क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादिनियमादिट् । तितिपिषे । तेप्ता । तेप्स्यते । २३०० लिङ्सिचावात्मनेपदेषु । ( १-२-११ ) इक्समीपाद्धलः परौ झलादी लिङात्मनेपदपरः सिचेत्येतौ कितौ स्तः । कित्त्वान्न गुणः । तिप्सीष्ट तिप्सीयास्ताम् तिप्सीरन् । लुङि 'झलो झलि' ( सू २२८१) इति सलोपः । अतिप्त अतिप्साताम् अतिप्सत । तेपते । तितेपे । तेपिता । तिष्टिपे तिष्टिपाते तिष्टिपिरे । तिष्टेपे तिष्टेपाते तिष्टेपिरे । तेपृ कम्पने च । ग्लेपृ ३६६ दैन्ये ।

---

तिपृ इति । प्रथमतृतीयाविदुपधौ । द्वितीयचतुर्थौ एदुपधौ । तृतीयचतुर्थौ षोपदेशौ च, तकारस्य ष्टुत्वेन टकारस्य निर्दिष्टतया दन्त्यपरकसादित्वात् । आद्य इति । तिपृधातुरित्यर्थः, भाष्यादौ अनुदात्तोपदेशेष्वस्य पाठादिति भावः । बभ्रामेति । भाष्यविरुद्धत्वादिति भावः । आद्यस्योदाहरति तेपत इति । शपि लघूपधगुणः । तितिप इति । 'असंयोगात्–' इति कित्त्वान्न गुणः । अथ तितिपिष इत्यत्र 'एकाच उपदेशे—' इति निषेधमाशङ्क्याह क्रादिनियमादिति । तेप्स्यत इति । लोडादौ तु तेपताम्, अतेपत, तेपेत । अथाशीर्लिङि सीयुटि सुटि तिप्सीष्टेति रूपं वक्ष्यति । तत्र लघूपधगुणे प्राप्ते । लिङ् । 'इको झल्' इति, 'हलन्ताच्च' इति च सूत्रमनुवर्तते । 'असंयोगात्—' इत्यतः किदिति च इक इति सामीप्ये षष्ठी हलि अन्वेति, तदाह इक्समीपादित्यादिना । आत्मनेपदपरकत्वं सिच एव विशेषणम् न तु लिङः, लिङादेशस्यात्मनेपदस्य लिङः परत्वासंभवात् । 'इकः' किम् ? वह्वक्षीष्ट । सति तु कित्त्वे 'वचिस्वपि–' इति संप्रसारणं स्यात् । आत्मनेपदेषु किम् ? अद्राक्षीत् । इह कित्त्वे सति 'सृजिदृशोर्झल्यमकिति' इत्यम् न स्यात् । अतिप्तेति । लुङस्तादेशे, च्लेः, सिच् । 'झलो झलि' इति लोपः आत्मनेपदपरकत्वेन सिचः कित्त्वाद् न लघूपधगुणः । अथ तेपृधातोरेदुपधत्वस्य प्रयोजनमाह तितेप इति । इदुदुपधत्वे तु कित्वाद् गुणो न स्यादिति भावः । सेट्कोऽयमिति सूचयति तेपितेति । तेपिषीष्ट । अतेपिष्ट । ष्टिपृधातोस्तु 'धात्वादेः षः सः' इति सत्वे ष्टुत्वनिवृत्त्या लटि स्तेपत इति रूपं सिद्धवत्कृत्य लिटि रूपमाह तिष्टिप इति । 'शर्पूर्वाः खयः' इति तकारः शिष्यते, पकारस्य निवृत्तौ ष्टुत्वनिवृत्तेः कित्त्वान्न गुणः । तिष्टेप इति । ष्टेपृधातोः रूपम् । तेपृ कम्पने चेति । चात्क्षरणे ।

---

तिङ्विषयाः' इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तः । तिपृ तेपृ । लिङ्सिचावात्मनेपदेषु । 'इको झल' 'हलन्ताच्च' इति वर्तते । 'असंयोगाल्लिट् कित्' इत्यतः किदिति च, तदाह इक्समीपादित्यादि । इकः किम्, यक्षीष्ट । सति कित्वे संप्रसारणं स्यात् । आत्मनेपदेति किम्, अद्राक्षीत् । कित्त्वे सति 'सृजिदृशोर्झल्यमकिति इत्यत् न स्यात् । आत्मनेपदपरत्वं सिच एव विशेषणं न तु लिङस्थानिकस्यात्मनेपदस्य, लिङः परत्वासंभवात् । तेपृ कम्पने च । चकारात्क्षरणार्थस्य लाभादस्य

ग्लेपते । टुवेपृ ३६७ कम्पने । वेपते । केपृ ३६८ गेपृ ३६९ ग्लेपृ ३७० च । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह । ग्लेपेरर्थभेदात्पुनः पाठः । मेपृ ३७१ रेपृ ३७२ लेपृ ३७२ गतौ । त्रपूष् ३७४ लज्जायाम् । त्रपते । २३०१ तॄफलभजत्रपश्च । ( ६—४—१२२ ) एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे त्रेपाते त्रेपिरे ऊदित्वादिड्वा । त्रपिता, त्रप्ता । त्रपिषीष्ट, त्रप्सीष्ट । कपि ३७५ चलने । कम्पते । चम्पते । रबि ३७६ लबि ३७७ अबि ३७८ शब्दे । ररम्बे । ललम्बे । लबि ३७९ अवस्रंसने च । कबृ ३८० वर्णे । चकबे । क्लीबृ ३८१ अधाष्टर्ये । चिक्लीबे । क्षीबृ ३८२ मदे । क्षीबते । शीभृ ३८३ कत्थने । शीभते । चीभृ ३८४ च । रेभृ ३८५ शब्दे । रिरेभे । अभिरभी क्वचित्पठ्येते । अम्भते । रम्भते । ष्टभि ३८६ स्कभि ३८७ प्रतिबन्धे । स्कम्भते । नुम्यनुस्वारः उत्तम्भते । 'उदः स्थास्तम्भोः—' ( सू ११८ )

---

वस्तुतस्तु चकारेण क्षरणार्थस्य लाभात् पूर्वत्रास्य पाठस्त्यक्तुं शक्यः । केचित्तु देपृ इति वर्गतृतीयादि पठन्ति । चात्कम्पने गतौ चेति । अनुक्तसमुच्चयार्थश्चकार इति भावः । एतच्च टुवेपृ केपृ गेपृ ग्लेपृ कम्पन इत्येव सिद्धे पृथक्पाठाल्लभ्यते । अर्थभेदादिति । 'ग्लेपृ दैन्ये' इति पूर्वं पठितम् । इह तु अर्थभेदात् पुनः पाठः । अन्यथा ग्लेपृ दैन्ये कम्पने गतौ चेति गौरवं स्यादिति भावः । त्रपूषिति । ऊकारः षकारश्च इत् । अदुपधः । संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपयोरप्राप्तावाह तॄफल । 'अत एकहल्मध्ये—' इत्यतः अत इति लिटीति चानुवर्तते । 'घ्वसोः—' इत्यत एदिति अभ्यासलोपश्चेति च 'गमहन—' इत्यस्मात् कितीति, 'थलि च सेटि' इति सूत्रं च, तदाह एषामिति । गुणशब्देन भाविताकारत्वाद्विरूपादेशादित्वादेकहल्मध्यस्थत्वाभावाच्चाप्राप्ते विधिरयम् । आनम्ब इति । द्विहल्त्वान्नुट् । ष्टभि स्कभीति । आद्यः षोपदेशः, ष्टुत्वेन तकारस्य टकारनिर्देशेन दन्त्यपरकसादित्वात्, ततः षस्य सत्वे ष्टुत्वस्य निवृत्तिः, तदाह स्तम्भत इति । नुम्यनु-

---

पूर्वत्र पाठस्त्यक्तुं शक्यः । केचित्तु तिपृ तेपृ इति पठन्ति । टुवेपृ । वेपथुः । केपृ गेपृ ग्लेपृ च । योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते, तदाह चात्कम्पने । गतौ चेति । योगविभागसामर्थ्यादेवार्थद्वयलाभे चकारो व्यर्थ इत्यन्ये । पुनः पाठ इति । दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः । तॄफल । तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात् त्रपतेस्त्वेकहल्मध्यस्थत्वाभावादप्राप्ते विधिरयम् । तेरतुः, तेरुः । फेलतुः, फेलुः । भेजतुः, भेजुः । अबि शब्दे । अस्माद् 'गुरोश्च हलः' इति अप्रत्यये अम्बाशब्दः । तिस्रः अम्बा अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ 'शेषाद्विभाषा' इति कप्रत्यये त्र्यम्बक इत्येके । केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विगृह्णन्ति । अभिरभी इति । 'सर्वधातुभ्योऽसुन्' इत्यधिकारे 'उदके नुम्भौ च' इति वक्ष्यमाणत्वाद् धात्वन्तरेणापि अम्भः-शब्दोः सिध्यतीति बोध्यम् । अम्भस्तोयम्, तस्यापत्यमाम्भिः भीष्मः । 'अम्भसो

इति पूर्वसवर्णः। विस्तम्भते। 'स्तन्भेः' ( सू २२७२ ) इति षत्वं तु न भवति। श्नुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात्। तद्बीजं तु—'स्थास्तम्भोः—' ( सू ११८ ) इति पवर्गीयोपधपाठः, 'स्तन्भे.' ( सू २२७२ ) इति तवर्गीयोपधपाठश्चेति माधवः। केचिदस्य टकार औपदेशिक इत्याहुः, तन्मते विष्टम्भते, ष्टम्भते, टष्टम्भे। जभी ३८८ जृभि ३८९ गात्रविनामे।

२३०२ रधिजभोरचि। (७—१—६१) एतयोर्नुमागमः स्यादचि। जम्भते। जजम्भे। जम्भिता। अजम्भिष्ट। जृम्भते। जजृम्भे। शल्भ ३९० कत्थने। शशल्भे। वल्भ ३९१ भोजने। दन्त्योष्ठ्यादिः। ववल्भे। गल्भ ३९२ धार्ष्ट्ये। गल्भते। श्रम्भु ३९३ प्रमादे। तालव्यादिर्दन्त्यादिश्च। श्रम्भते। स्रम्भते वा। ष्टुभु ३९४ स्तम्भे। स्तोभते। विष्टोभते। तुष्टुभे। व्यष्टोभिष्ट।

---

स्वार इति। इदित्त्वान्नुमि 'नश्चापदान्तस्य—' इति तस्यानुस्वारः। 'अनुस्वारस्य ययि—' इति तस्य परसवर्णो मकारः। ष्टम्भं इत्येव पाठे तु प्रतिपदोक्तत्वाद् 'उदः स्था—' इत्यत्र अस्यैव ग्रहणं स्यादिति भावः। पूर्वसवर्ण इति। सकारस्य थकारः तस्य 'खरि च' इति चर्त्वे तकार इत्यर्थः। अत्र यद्वक्तव्यं तत् 'उदःस्थास्तम्भोः—' इत्यत्र हल्सन्धौ प्रपञ्चितम्। विस्तम्भत इति। सात्पदाद्योरिति षत्वनिषेध इति भावः। नन्वेवमपि 'स्तन्भेः' इति षत्वं कुतो न स्यादित्यत आह स्तन्भेरिति षत्वं तु न भवतीति। कुत इत्यत आह श्नुविधाविति। 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च' इति सूत्रे निर्दिष्टस्यैव प्रतिपदोक्तस्य षत्वविधौ ग्रहणादित्यर्थः। नन्वेवं सति 'उदःस्थास्तम्भोः—इति पूर्वसवर्णविधावपि सौत्रस्यैव ग्रहणं स्यादित्यत आह तद्बीजं त्विति। षत्वविधौ सौत्रस्यैव ग्रहणम्, पूर्वसवर्णविधौ तु तदन्यस्यापीत्यत्र प्रमाणमित्यर्थः। ननु पूर्वसवर्णविधौ मोपधस्य, षत्वविधौ तु नोपधस्य पाठ इत्यत्र किं प्रमाणमित्यत आह इति माधव इति। पाणिनिशिष्यपरम्परैव तत्र प्रमाणमिति भावः। लिटि 'शर्पूर्वाः खयः'इति षकारस्य निवृत्तौ ष्टुत्वनिवृत्त्या तकारः शिष्यते। तस्तम्भे। टकार औपदेशिक इति। स्वाभाविक एव टकारो न तु ष्टुत्वसंपन्न इत्यर्थः। तन्मते विष्टम्भत इति। तथा च षकारस्यापि स्वाभाविकत्वात् षत्वविधौ स्तन्भेरेव ग्रहणेऽपि षकारो निर्बाध इति भावः। टष्टम्भ इति। 'शर्पूर्वाः—' इति टकार एव शिष्यत इति भावः। जभी जृभि गात्रविनाम इति। गात्रस्य विनामः वक्रभावः। आद्य ईदित्। द्वितीय इदित्। आद्यस्य ईदित्त्वं 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थम्। रधिजभोः। 'रध हिंसायाम्' इति श्यन्विकरणस्य चतुर्थान्तस्य इका निर्देशः। 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते, तदाह एतयोरिति। अनिदित्त्वाद् नुम्विधिः। जम्भत इति। शपि नुम्। जम्भितेत्यादावपि अच्परकत्वान्नुम्। 'अचि' किम्? रद्धा, जब्धम्। श्रम्भु इति। अकारमध्यः ष्टुभु स्तम्भ इति। ष्टुत्वेन तकारस्य टः। षोपदेशोऽयम्।

---

लोपश्च' इति वाह्लादिपाठादिनि सलोपः। तद्बीजं त्विति। पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः। रधिजभोरचि। रन्धयति। परापि वृद्धिर्नित्येन नुमा

'कास्यनेकाज्ग्रहणं कर्तव्यम्' । सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः । २३०७ आर्धधातुके । ( ६—४—४६ ) इत्यधिकृत्य । २३०८ अतो लोपः । ( ६—४—४८ ) आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य

स्यात्, आर्धधातुकोपदेशकाले अदन्तत्वाभावादिति भावः । तथा च लिटि आयप्रत्ययस्य विकल्पः स्थितः । तत्र आयप्रत्ययपक्षे आह कास्प्रत्ययात् । आम् अमन्त्रे इति च्छेदः । 'चकासृ दीप्तौ' 'जागृ निद्राक्षये' इत्यादिभ्योऽपि लिटि आमिष्यते, तदर्थमाह कास्यनेकाजिति । ननु यद्यस्मिन् वार्तिके सूत्रस्थं प्रत्ययग्रहणमपि संबध्यते । तदा कासधातोश्च अनेकाचश्च प्रत्ययान्ताच्चेति लभ्यते । ततश्च अ इवाचरति अति क्विबन्ताल्लडादयः । लिटि औ अतुरित्यादीष्टं न सिध्येत्, प्रत्ययान्तत्वेन आमः प्रसङ्गात् । यदि तु कासधातोश्च अनेकाचः प्रत्ययान्ताच्चेति व्याख्यायेत, तदा चकासृजागृआदिभ्यो न स्यादित्यत आह प्रत्ययग्रहणमपनीयेति । तथा च कासधातोरनेकाचश्च आमित्येतावदेव लभ्यत इति नोक्तदोषद्वयमिति भावः । वस्तुतस्तु अ इवाचरति अतीत्यादि नास्त्येवेति सुब्धातुनिरूपणे वक्ष्यते । तथा च गोपाय आमिति स्थितम् । अतो लोपः । 'अनुदात्तोपदेशवनति—' इत्यत उपदेशग्रहणमनुवर्तते । 'आर्धधातुके' इत्यधिकृतम् । तदिह आवर्तते । एकमुपदेशे अन्वेति । द्वितीयं तु लोपे परनिमित्तम्, तदाह आर्धधातुकोपदेश इत्यादिना । 'आर्धधातुकोपदेशे' इति किम् ? अय वय[1] गतौ, आभ्यां क्विपि, 'लोपो व्योः—' इति लोपे, 'ह्रस्वस्य पिति—' इति तुकि, अपृक्तलोपे अत् वत् इतीष्यते । अत्र यलोपे सति अतो लोपो न भवति, आर्धधातुकोपदेशकाले धातोर्यकारान्तत्वात् । 'आर्धधातुकोपदेशे' इत्यत्र आर्धधातुकग्रहणाभावे चिकीर्षितमित्यत्र अल्लोपो न स्यात् सन उपदेशकाले नकारान्तत्वात् । आर्धधातुकग्रहणे तु न दोषः, अनुबन्धविनिर्मुक्तात् सन्प्रत्ययादेव क्तप्रत्ययस्य आर्धधातुकस्योत्पत्तेः । 'आर्धधातुके परे' इति किम् ? कथयति । चुरादाव-

कोपदेशकाले यददन्तमित्यनुपदं वक्ष्यमाणं न संगच्छेतेति भावः । अन्ये तु 'गुपू रक्षणे' इत्यस्मात् क्तिनि पश्चादाय्प्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत, विवक्षायामित्युक्ते तु आय्प्रत्यये कृते क्तिनं बाधित्वा 'अप्रत्ययात्' इत्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः । कास्प्रत्यया । अमन्त्रेति किम्, कृष्णो नोनाव । अच्छन्दसीति तु नोक्तम् । मन्त्रभिन्ने छन्दसि आम इष्टत्वात् । यथा 'पुत्रमामन्त्रयामास', प्रत्ययान्तत्वादाम् । 'अथ ह शुनःशेप ईक्षांचक्रे', 'इजादेश्च—' इत्याम् । इह चुलुम्पचकासृदरिद्रादिभ्य आमोऽप्राप्तौ 'कास्यनेकाच—' इति वार्तिकमारभ्यते । प्रत्ययग्रहणमपनीयेति । अन्यथा अ इवाचरति अति । अस्य लिटि औ अतुरित्यादि वक्ष्यमाणं न सिध्येदिति भावः । अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीयेत्यनुक्त्या प्रत्ययान्तादेकाचोप्याम् भवत्येव । अ इवाचरति इत्याचारे क्विपि लिटि आंचकार आंचक्रतुरित्यादीत्याहुः । अतो लोपः । 'अनुदात्तोपदेश—' इति सूत्रादुपदेश इत्यनुवर्तते, तदाह आर्धधातुकोपदेशेत्यादि । उपदेशे इति किम्, अय पय गतौ ।

1 'पय' इति तत्त्वबोधिन्याम् ।

लोपः स्यादार्धधातुके परे। गोपायांचकार, गोपायांबभूव, गोपायामास। जुगोप जुगुपतुः। ऊदित्त्वाद्वेट्। जुगोपिथ, जुगोप्थ। गोपायिता, गोपिता, गोप्ता। गोपाय्यात्, गुप्यात्। अगोपायीत्, अगोपीत्, अगौप्सीत्। धूप ३९६ संतापे। धूपायति। धूपायांचकार, दुधूप। धूपायितासि, धूपितासि। जप ३९७ जल्प ३९८ व्यक्तायां वाचि। जप मानसे च। चप ३९९ सान्त्वने। षप ४०० समवाये। समवायः संबन्धः सम्यगवबोधो वा। सपति। रप ४०१ लप ४०२ व्यक्तायां वाचि। चुप ४०३ मन्दायां गतौ। चोपति। चुचोप। चोपिता। तुप ४०४ तुम्प ४०५ त्रुप ४०६ त्रुम्प ४०७ तुफ ४०८ तुम्फ ४०९ त्रुफ ४१० त्रुम्फ ४११ हिंसार्थाः। तोपति। तुतोप। तुम्पति। तुतुम्प। तुतुम्पतुः। संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न। 'किदाशिषि' (सू २२१६) इति कित्त्वान्नलोपः। तुप्यात्। 'प्रात्तुम्पतौ गवि कर्तरि' इति पारस्करादिगणे

---

दन्तोऽयम्। अत्र उपधावृद्धिर्न भवति, 'अचः परस्मिन्—' इत्यल्लोपस्य स्थानिवत्त्वात्। आर्धधातुके पर इत्यनुक्तौ तु अल्लोपस्य परनिमित्तकत्वाभावात् स्थानिवत्त्वं न स्यात्। तथा च प्रकृते गोपाय आमिति स्थिते अतो लोपे गोपायामिति सिध्यति। यद्यपि सवर्णदीर्घेणाप्येतत्सिद्धम्, तथापि न्याय्यत्वादतो लोप उपन्यस्तः। आयप्रत्ययाभावपक्षे आह **जुगोपेति**। पित्त्वेन कित्त्वाभावाल्लघूपधगुणः। **जुगुपतुरिति**। कित्त्वान्न गुणः। **ऊदित्त्वाद्वेडिति**। थलादाविति शेषः। जुगुपिव, जुगुप्व। जुगुपिम, जुगुप्म। क्रादिनियमस्तु नञ्प्राप्तस्यैवाभावस्य, नतु विभाषादिलभ्यस्येति पिधू शास्त्र इत्यत्रोक्तम्। **गोपायितेति**। लुटि आयप्रत्ययपक्षे नित्यमिट् आयप्रत्ययाभावपक्षे इड्विकल्पः। ऊदित्त्वस्य केवले चरितार्थत्वात्, तदाह **गोपिता, गोप्तेति**। गोपायिष्यति, गोपिष्यति, गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। आशीर्लिङि आयप्रत्ययपक्षे अतो लोपे रूपमाह **गोपाय्यादिति**। आयप्रत्ययाभावे आह **गुप्यादिति**। लुङि **अगोपायीदिति**। आयप्रत्ययाभावपक्षे इटि रूपमाह **अगोपायीदिति**। 'इट ईटि' इति सिज्लोपः। 'नेटि' इति हलन्तलक्षणवृद्धेर्निषेधः। इडभावे तु इटः परत्वाभावात् न सिज्लोप इत्याह **अगौप्सीदिति**। 'वदव्रज—' इति वृद्धिः। अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत्। **धूप संताप इति**। 'गुपूधूप—' इत्यायः। आर्धधातुके तद्विकल्पः **षप समवाय इति**। षोपदेशोऽयम्। **चुप मन्दायामिति**। चवर्गप्रथमादिरयम् चवर्गद्वितीयादिस्त्वनिट्कः। **तुप तुम्पेति**। अष्टावप्युदुपधाः तृतीयचतुर्थौ सप्तमाष्टमौ च रेफवान्त इति मूले स्पष्टीभविष्यति। तुतुम्पतुरित्यत्र नलोपमाशङ्क्याह **संयोगादिति**। आशीर्लिङि विशेषमाह **किदाशिपीति**। **प्रात्तुम्पताविति**।

---

भाभ्यां क्विप्यपि 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन' इति वार्तिकाद् 'लोपो व्योः—' इति यलोपे 'अतो लोपः' इति लोपो माभूत्। अत्, पत्। इह 'ह्रस्वस्य पिति—' इति तुक्। आर्धधातुके पर इति किम्, कथयति। वृद्धौ कर्तव्यायां 'अचः परस्मिन्—' इति स्थानिवत्त्वं यथा स्यात्। **गोपायामिति**। नन्विह आयप्रत्ययस्यादन्तत्तामाश्रित्य

पाठात्सुट्। प्रस्तुम्पति गौः। श्तिपा निर्देशाद्यङ्लुकि न, प्रतोतुम्पीति। त्रोपति। त्रुम्पति। तोफति। तुम्फति। त्रोफति। त्रुम्फति। इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः। अन्ये सरेफाः। आद्याश्चत्वारः प्रथमान्ताः ततो द्वितीयान्ताः। अष्टावप्युकारवन्तः। पर्प ४१२ रफ ४१३ रफि ४१५ पर्व ४१६ लर्व ४१७ वर्व ४१८ मर्व ४१९ कर्व ४२० खर्व ४२१ गर्व ४२२ शर्व ४२३ षर्व ४२४ चर्व ४२५ गतौ। आद्यः प्रथमान्तः। ततो द्वौ द्वितीयान्तौ। तत एकादश तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः। पर्पति। पपर्प। रफति। रम्फति। अर्वति। आनर्व। पर्वति। लर्वति। वर्वति। पवर्गीयादिरम्। मर्वति। कर्वति। खर्वति। गर्वति। शर्वति। सर्वति। चर्वति। कुवि ४२६ आच्छादने। कुम्वति। लुवि ४२७ तुवि ४२८ अर्दने। लुम्वति। तुम्वति। चुवि ४२९ वक्त्रसंयोगे। चुम्वति। षृभु ४३० षृम्भु ४३१ हिंसार्थौ। सर्भति। ससर्भ। सर्भिता। सृम्भति सस्रम्भ। सृभ्यात्। षिभु षिभि इत्येके। सेभति। सिम्भति। शुभ ४३२ शुम्भ ४३३ भाषणे। भासने इत्येके। हिंसायाम् इत्यन्ये।

अथानुनासिकान्ताः। तत्र कम्यन्ता अनुदात्तेतो दश। घिणि ४३४ घुणि ४३५ घृणि ४३६ ग्रहणे। नुम्। ष्टुत्वम्। घिण्णते। जिघिण्णे। घुण्णते। जुघुण्णे। घृण्णते। जघृण्णे। घुण ४३७ घूर्ण ४३८ भ्रमणे। घोणते। घूर्णते। इमौ तुदादौ परस्मैपदिनौ। पण ४३९ व्यवहारे स्तुतौ च। पन ४४० च। स्तुतावित्येव संबध्यते पृथङ्निर्देशात्। पनिसाहचर्यात्पणेरपि स्तुतावेवायप्रत्ययः।

---

श्तिपा निर्देशोऽयम्। प्रात् तुम्पवातौ परे सुट् स्याद् गवि कर्तरि सतीत्यर्थः। तुम्पघातोः सुड् आद्यवयवः। मुड्विधावस्मिन् तुम्पतावित्ति श्तिपा निर्देशस्य प्रयोजनमाह श्तिपा निर्देशाद्यङ्लुकि नेति। श्तिपा शपाऽनुबन्धेनेत्युक्तेरिति भावः। षृभु षृम्भु इति। ऋदुपधौ षोपदेशौ। सृभ्यादिति। आशीर्लिङि अनिदित्त्वान्नलोपः। षिभु षिभि इत्येक इति। आद्य इदुपधो द्वितीय इदित। शुभ शुम्भेति। द्वितीयस्य आशीर्लिङि अनिदित्त्वान्नलोपः। इति गुपू इत्यादयः पवर्गीयान्ताः परस्मैपदिनो गताः।

कम्यन्ता इति। कमु कान्तौ इत्येतत्पर्यन्ता इत्यर्थः। घुण घूर्णेति। द्वितीयस्य दीर्घपाठः स्पष्टार्थः, 'उपधायां च' इत्येव दीर्घसिद्धेः। केचित्तु घुर्णेति ह्रस्वमेव पठन्ति। स्तुतावित्येवेति। न तु व्यवहार इत्येवकारार्थः। पृथङ्निर्देशादिति। अन्यथा पण पन व्यवहारे स्तुतौ चेत्येव निर्दिशेदिति भावः। यद्यपि पृथङ्निर्देशो यथासंख्यनिवृत्त्यर्थ इत्यपि वक्तुं शक्यम्, तथापि संप्रदायानुरोधादेवमुक्तम्। पनिसाहचर्यादिति। पनधातुः स्तुतावेव वर्तते तत्साहचर्याद् 'गुपूधूप-

---

लोपकरणे फलाभावादुच्चारणार्थं एव तत्राकारोऽस्त्विति चेत्। अत्राहुः—'गोपायतं नः' इत्यत्र गोपायशब्दस्य धातुत्वाद् धातोरन्त उदात्तो भवति। ततः शबकारेणैकादेशेऽपि 'एकादेश उदात्तेन—' इत्युदात्त एव, तकाराकारस्तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्यनुदात्तः। ततश्च। 'उदात्तादनुदात्तस्य—' इति स्वरितो भवति। 'स्वरितात्संहितायाम-

व्यवहारे तु पणते, पेणे, पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्न त्मनेपदम् । पणायति । पणायांचकार, पेणे । पणायितासि, पणितासे । पणाय्यात्, पणिषीष्ट पनायति । पनायांचकार, पेने । भाम ४७१ क्रोधे । भामते । बभामे । क्षमूष् ४४२ सहने क्षमते । चक्षमे । चक्षमिषे, चक्षंसे । चक्षमिध्वे । चक्षमिवहे । २३०९ म्वोश्च । (८-२-६५ मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चक्षण्वहे चक्षमिमहे, चक्षण्महे । क्षमिष्यते, क्षंस्यते । क्षमेत । आशिषि क्षमिषीष्ट, क्षंसीष्ट अक्षमिष्ट, अक्षंस्त । कमु ४४३ कान्तौ । कान्तिरिच्छा । २३१० कमेर्णिङ्

विच्छ–' इत्यत्र पणधातुरपि स्तुत्यर्थक एव गृह्यते, नतु व्यवहारार्थकः । अतः स्तुतावेव पण धातोरायप्रत्ययः । न तु व्यवहारे इत्यर्थः । क्रेतव्यद्रव्यस्य मूल्यनिर्धारणाय प्रश्नप्रतिवचन त्मको व्यवहारः । ननु स्तुतौ पणायतीति रूपं वक्ष्यमाणमनुपपन्नं पणधातोरनुदात्तेत्त्वेनात्मं पदापत्तेः । न च आयप्रत्ययान्तस्यानुदात्तेत्त्वं नेति शङ्क्यम्, पणधातौ श्रुतस्यानुदात्तेत्त्वस्य 'आनर्थक्यात्तदङ्ग–' न्यायेन आयप्रत्ययान्ते अन्वयोपपत्तेरित्यत आह स्तुताविति । अनुबन्धस्य अनुदात्तात्मकस्य इत आर्धधातुकविषये कदाचिदायप्रत्ययविनिर्मुक्ते चरितार्थत्वादायप्रत्ययान्त दात्मनेपदं नेत्यर्थः । एवं च तुल्यन्यायत्वाद् 'एकाच उपदेशे–' इति निषेधोऽपि नेति सूचि तम् । क्षमूष् सहन इति । 'षिद्भिदादिभ्योऽङ्' [१]इत्यर्थं षित्त्वम् । ऊदित्त्वादिड्विकल्पं मत्वाह चक्षमिषे, चक्षंस इति । इडभावपक्षे 'अनुनासिकस्य क्विझलोः–' इति दीर्घस्तु भवति, क्विसाहचर्येण तिङ्भिन्नस्यैव झलादेः तत्र ग्रहणात् । वहि मह्योरिडभावपक्षे विशेषम म्वोश्च । 'मो नो धातोः' इत्यनुवर्तते, तदाह मान्तस्येति । णत्वमिति । पात्परत्वाद् 'अ कुप्वाङ्–' इति नकारस्य णत्वमित्यर्थः । कमु कान्ताविति । 'उदितो वा' इति क्त्वाय इड्विकल्पार्थमुदित्त्वम् । कान्तिशब्दस्य प्रभापरत्वभ्रमं वारयति कान्तिरिच्छेति । स्वर्गका इत्यादौ कमेरिच्छायां प्रयोगबाहुल्यदर्शनादिति भावः । 'कामोऽभिलाषस्तर्षश्च' इत्यमरः कमेर्णिङ् । शेषपूरणेन सूत्रं व्याचष्टे स्वार्थ इति । अर्थविशेषानिर्देशादिति भावः णङावितौ । 'णेरनिटि' इत्यत्र उभयोर्ग्रहणाय अनुबन्धकरणम् । ङित्त्वात्तङिति अनुदात्तेत्त्वं तु णिङभावे चकमे इत्यादौ चरितार्थमिति भावः । कामयत इति णिङि 'अत उपधायाः' इति वृद्धौ कामि इति णिङन्तम् । 'क्ङिति च' इ

नुदात्तानाम्' इति न इत्यस्य एकश्रुतिः । आयप्रत्ययस्य अभदन्तत्वे नेदमिष्टं सिध्यतीति स्तुतावित्येवेति । भट्टिस्तु व्यवहारेऽपि आयं प्रायुङ्क्त । 'न चोपलेभे वणिजं पणाया इति । वणिजां व्यवहारमित्यर्थः । 'अ प्रत्ययात्' इति आयप्रत्यान्तादकारप्रत्य टाप् । चक्षंस इति । इह 'अनुनासिकस्य क्विझलोः–' इत्युपधादीर्घो न कृत संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति । कमु कान्तौ । अस्य णि भावे 'उदितो वा' इति क्त्वायामिड्विकल्पः । कमित्वा, कान्त्वा । निष्ठायां तु 'यस्

१ 'इत्याद्यर्थम्' इति क ।

(३—१—३०) स्वार्थे। ङित्वात्तङ्। कामयते। २३११ अयामन्ताल्वाय्येत्न्विष्णुषु। (६-४-५५) आम् अन्त आलु आय्य इलु इष्णु एषु णेरयादेशः स्यात्। वक्ष्यमाणलोपापवादः। कामयांचक्रे। 'आयादय आर्धधातुके वा' (सू २३०५)। चकमे। कामयिता, कमिता। कामयिष्यते, कमिष्यते। २३१२ णिश्रिद्रुस्रुभ्यः कर्तरि चङ्। (३—१—४८) ण्यन्तात् श्रयादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे। अकाम् इ अ त इति स्थिते। २३१३ णेरनिटि। (६—४—५१) अनिडादावार्धधातुके परे णेर्लोपः स्यात्। पर-

निषेधस्तु न, अनिग्लक्षणत्वात्। णिङन्तस्य धातुत्वाद् लडादयः। तत्र लटि शपि गुणे अयादेशे कामयत इति रूपम्। कामयेते इत्यादि सुगमम्। लिटि 'कास्यनेकाचः—' इत्यामि, 'आमः' इति लिटो लोपे, कामि आम् इति स्थिते, 'सार्वधातुक—' इति गुणं बाधित्वा 'णेरनिटि' इति वक्ष्यमाणे णिलोपे प्राप्ते अयामन्त। अय् इति छेदः। 'णेरनिटि' इत्यतो णेरित्यनुवर्तते, तदाह णेरयादेशः स्यादिति। तथा च कामयामित्यामन्तं स्थितम्। ततः 'कृञ्चानुप्रयुज्यते—' इत्यनुप्रयोगाल्लिडिति मत्वाह कामयांचक्र इति। णिङ आयादिष्वन्तर्भावाल्लिडादावार्धधातुके तद्विकल्पमुक्तं स्मारयति आयादय इति। चकम इति। सेट्कोऽयम्। चकमिषे। चकमिध्वे। चकमिवहे। चकमिमहे। कामयितेति। लुटि णिङ्पक्षे तासि इति वृद्धौ गुणे अयादेशे रूपम्। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट, कमिषीष्ट। अथ णिङन्तात् इत्यस्माल्लुङः तादेशे च्लेः सिजादेशे प्राप्ते णिश्रि। णि श्रि द्रु स्रु एषां द्वन्द्वः। प्रत्ययग्रहणपरिभाषया णीति तदन्तस्य ग्रहणम्। 'च्लि लुङि' इत्यतो लुङीति, 'च्लेः सिच्' इत्यतः च्लेरिति चानुवर्तते, तदाह ण्यन्तादित्यादिना। चङावितौ। णेरनिटि। 'आर्धधातुके' इत्यधिकृतम्। 'अतो लोपः' इत्यस्माद् लोप इत्यनुवर्तते। अनिटीत्यस्य आर्धधातुकविशेषणत्वात् तदादिविधिः, तदाह अनिडादाविति। तथा च णिलोपे काम् अ त इति स्थिते परत्वादिति। 'एरनेकाचः—' इत्यस्य 'णेरनिटि' इत्यपेक्षया परत्वाण्णिलोपं बाधित्वा यणि प्राप्ते सतीत्यर्थः। कृते तु

विभाषा' इति निषेधात्कान्तः। अयामन्ता। नामन्तेति सूत्रितेऽपि 'णेरनिटि' इटि वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादि रूपाणि सिध्यन्त्येव, तथापि 'ल्यपि लघुपूर्वात्' इत्येवमर्थमयादेशवचनम्। प्रस्तनय्य, सङ्गमय्य। नह्यत्र गुणायादेशौ लभ्येते। आम्, कारयामास। अन्त, गण्डयन्तो मण्डयन्तः। 'तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च' इत्यौणादिको झच्। 'झोऽन्तः'। 'स्पृहिगृहि—' इत्यालुच्, स्पृहयालुः। 'श्रुदक्षिस्पृहिगृहिभ्यः—' इत्यौणादिक आय्यः, 'स्पृहयाय्यः'। 'स्तनिहृषिपुषि—' इत्यौणादिक एव इत्नुच्, स्तनयित्नुः, 'णेश्छन्दसि' इति इष्णुच्, 'वीरुधः पारयिष्णवः'। णिश्रिद्रु। च्लेः सिचोऽपवादः। णेरनिटि। णेरिति णिङ्णिचोर्ग्रहणम्। एवमन्यत्रापि बोध्यम्। अनिटीत्यनेनाधिकृतमार्धधातुक इत्येतद्विशेष्यते। 'यस्मिन्विधिः—' इति तदादिविधिः। 'अतो लोपः' इत्यस्माल्लोप इति चानुवर्तते, तदाह, अनिडादावित्यादि। यणि प्राप्त इति। ननु परत्वादि-

त्वाद् 'एरनेकाचः—' ( सू २७२ ) इति यणि प्राप्ते । ण्यल्लोपावियङ्यण्गुण-वृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्तिकम् । णिलोपस्य तु पाचयतेः पाक्ति-रित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्तु 'अनिटि' इति वचनसामर्थ्या-दार्धधातुकमात्रमस्य विषयः । तथा चेयङादेरपवाद एवायम् । इयङ् अततक्षत् ।

---

यणि लोपो दुर्लभो णेरभावात् । स्थानिवत्त्वेऽपि यणा बाधितस्य पुनरुन्मेषो दुर्लभः । वस्तुतस्तु स्थानिवत्त्वमेवेह दुर्लभम् । यण्स्थानिनमिकारम् अल्रूपं णित्वरूपेणाश्रित्य प्रवर्त-मानस्य णिलोपस्याल्विधित्वेन तत्र स्थानिवत्त्वासंभवात् । स्पष्टा चेयं रीतिः 'भोभगो-' इति सूत्रभाष्ये इति शब्देन्दुशेखरे विस्तरः । ण्यल्लोपाविति । णिलोप इयङ्यण्गुणवृद्धि-दीर्घेभ्यः अल्लोपस्तु वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेनेति विवेकः । तथा च पूर्वविप्रतिषेधादिह यणं बाधित्वा णिलोपो भवतीति स्थितम् । ननु अततक्षत, आटिटत, कारणा, कारकः, कार्यते इति वक्ष्यमाणेषु वार्तिकोदाहरणेषु क्रमेण इयङ्यण्गुणवृद्धिदीर्घाणामवश्यं प्राप्तेर्णि-लोपस्य निरवकाशत्वादेव इयङादिबाधकत्वसंभवादिदं वार्तिकं व्यर्थम् । सुधियौ, प्रध्यौ, कर्ता, चिकाय, सूयात् इत्यादौ इयङ्यण्गुणवृद्धिदीर्घाणां सावकाशत्वादित्यत आह णिलोपस्य त्विति । पचधातोर्णिचि उपधावृद्धौ पाचि इति ण्यन्तात् 'स्त्रियां क्तिन्' इति क्तिनि, 'तितुत्रतथसिसुसर-कसेषु च' इति इण्निषेधे 'णेरनिटि' इति णिलोपे कुत्वे पाक्तिरिति स्थितिः । क्तिजन्तमिति पाठे तु 'क्तिच् क्तौ च संज्ञायाम्' इति क्तिच् बोध्यः । पाक्तिरिति कस्यचित्संज्ञा । अत्र इयङादीनाम् अप्रसक्तेर्णिलोपस्यापि सावकाशत्वं तुल्यम् । तत्र अततक्षदित्यादौ परत्वादियङा-दिप्राप्तौ तन्निवृत्त्यर्थं वार्तिकं व्यर्थमेवेत्याह वस्तुतस्त्विति । आर्धधातुकमात्रमिति । कृत्स्नमनिडाद्यार्धधातुकमस्य णिलोपस्य विषय इत्यर्थः । तथा च अततक्षदित्यादौ परानपि इयङादीन् णिलोपः अपवादत्वाद् बाधते, परापेक्षया अपवादस्य प्रबलत्वात् परत्वादियङादीनां णिलोपबाधकत्वाभ्युपगमे हि णेरनिटीत्यत्र अनिटीति व्यर्थम् । कारयितेत्यादाविडा-द्यार्धधातुके गुणेनैव णिलोपस्य बाधसिद्धेः । ततश्च अनिटीति वचनसामर्थ्या-दनिडादावार्धधातुके सर्वस्मिन्परे णिलोप इति विज्ञायते । एवं च अततक्ष-दित्यादावियङादिप्रवृत्तियोग्येऽप्यार्धधातुके सर्वत्र णिलोप इत्यस्य निरवकाश-

---

यङ्यणादिविषयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् । नैवं शङ्क्यम्, इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च 'अतो लोपः' इति सूत्रे भाष्ये स्थितम् । न चात्र कारणा कारक इत्यादौ गुणवृद्धयोः कृतयोरन्तरङ्गत्वादयादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेश एव दोष उक्त इति शङ्क्यम्, 'वार्णादाङ्गं बलीयः' इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात् । ण्यल्लोपाविति । णिलोप इयङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रति-षेधेन, अल्लोपस्तु वृद्धिदीर्घाभ्यामिति विवेकः । णिलोपस्य निरवकाशत्वेन वार्तिक-स्योक्तिसंभव एव नास्तीत्यत आह पाक्तिरित्यादि क्तिजन्तमिति । तत्र 'तितुत्र—' इतीण्निषेधादिति भावः । वचनसामर्थ्यादिति । अयं भावः—

यण् आटिटत्। गुणः कारणा। वृद्धिः कारकः। दीर्घः कार्यते। २३१४ णौ चङ्युपधाया ह्रस्वः। ( ७—४—१ ) चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्। २३१५ चङि। ( ६—१—११ ) चङि परेऽनभ्यासधात्व-

---

त्वादपवादत्वादेव णिलोपेन इयङादिबाधसिद्धेर्वार्तिकमिदं व्यर्थमिति भावः। अपवाद एवा-यमिति। णिलोप इत्यर्थः। अतो लोपस्तु चिकीर्षक इत्यत्र वृद्धिं चिकीर्ष्यादित्यत्र 'अकृत्सा-र्वधातुकयोः' इति दीर्घं च बाधित्वा पूर्वविप्रतिषेधाद्भवति। नह्यतो लोपो वृद्धिदीर्घयोरपवादः, गोपायितेत्यादौ वृद्धिदीर्घयोरप्राप्तयोर्लोपस्यारम्भादित्यलम्। इयङिति। उदाहरणसूचन-मिदम्। अततक्षदिति। तक्षधातोर्ण्यन्ताल्लुङस्तिपि इकारलोपे चङि द्वित्वे संयोगपूर्व-कत्वाद् 'एरनेकाचः—' इति यणभावे इयङि प्राप्ते पूर्वविप्रतिषेधाद् णिलोपे हलादिशेषे अडा-गमे अततक्षदिति रूपम्। यणिति। उदाहरणसूचनम्। आटिटदिति। अटधातोर्ण्यन्ताद् आटि इत्यस्माद् लुङि तिपि इकारलोपे चङि टि इत्यस्य द्वित्वे 'एरनेकाचः—' इति यणं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे आटि वृद्धौ रूपम्। गुण इति। उदाहरणसूचनम्। कारणेति। 'स्त्रियाम्' इत्यधिकारे कृञ्धातोर्ण्यन्तात् कारि इत्यस्माद् 'ण्यासश्रन्थो युच्' इति युचि अनादेशे 'सार्वधातुकार्धधातुकयोः' इति गुणं बाधित्वापूर्वविप्रतिषेधाण्णिलोपे स्त्रीत्वाट्टापि-कारणेति रूपम्। वृद्धिरिति। उदाहरणसूचनम्। कारक इति। कृञ्धातोर्ण्यन्तात्कारि इत्यस्माण्ण्वुलि अकादेशे वृद्धिं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपे रूपम्। दीर्घ इति। उदाह-रणसूचनम्। कार्यत इति। कृञ्धातोर्ण्यन्तात्कारि इत्यस्मात् कर्मणि लटि यकि 'अकृत्सार्व-धातुकयोः' इति दीर्घं बाधित्वा पूर्वविप्रतिषेधाण्णिलोपः। तथा च प्रकृते काम् इ अ त इत्यत्र 'एरनेकाचः—' इति यणं बाधित्वा णिलोपे काम् अ त इति स्थितम्। णौ चङि। अङ्गाधिकारादाह यदङ्गमिति। 'उपधायाः' किम्? अचकाङ्क्षत्। 'चङि' किम्? कार-यति। 'णौ' किम्? 'चङ्युपधाया' ह्रस्व इत्युच्यमाने अदीदपदित्यत्र दाधातोः ण्यन्ताद् लुङि चङि दा इ अ त् इति स्थिते आकारस्य ह्रस्वे सति पुग् न स्यात्। णावित्युक्तौ तु आकारस्य णौ परत उपधात्वाभावान्न ह्रस्वः। 'द्विर्वचनेऽचि' इति निषेधस्तु न शङ्क्यः, द्वित्वनिमित्तचङ उपधया व्यवहितत्वात्। तथा च प्रकृते कम् अ त इति स्थितम्। चङि। 'एकाचो द्वे प्रथमस्य' इति 'अजादेर्द्वितीयस्य' इति चाधिकृतम्। 'लिटि धातोरनभ्यासस्य' सूत्रं लटि इति वर्जमनुवर्तते, तदाह चङि पर इत्यादिना। तथा च कम् इत्यस्य द्वित्वे हलादि-

---

णेरित्येतावति सूत्रे कृतेऽप्यार्धधातुक इत्यनुवृत्त्या आर्धधातुके परतो वर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादित्यनिटीत्यस्य वैयर्थ्यं प्रसज्येत, तथा चानिडाद्यार्धधातुकं सर्वमप्यस्य विषयो न तु क्तिजन्तमेवेति। अयमिति। णिलोप इत्यर्थः अल्लोपांशे तु वचनमपेक्षितमेव। तेन चिकीर्षक इत्यत्र वृद्धिं चिकीर्ष्यादित्यत्र 'अकृत्सार्व—' इति दीर्घं बाधित्वा पूर्वविप्रतिषेधेन 'अतो लोप.' इति लोपो भवतीत्याहुः। णौ चङ्युपधाया ह्रस्वः। उपधायाः किम्, अचकाङ्क्षीत्।

वयस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य। २३१६ सन्वल्लघुनि चङ्परेऽनग्लोपे। (७—४—९३) चङ्परे इति बहुव्रीहिः। [1]अन्यपदार्थो णिः। स च 'अङ्गस्य' इति च द्वयमप्यावर्तते। अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत् तत्परं यल्लघु तत्परो योऽङ्गस्याभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति। अथवा अङ्गस्य इति नावर्तते। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत्। २३१७ सन्यतः। (७—४—७९) अभ्यास-

शेषे कम् अ त इति स्थितम्। सन्वल्लघुनि। अनग्लोप इति च्छेदः। बहुव्रीहिरिति। चङ् परो यस्मादिति विग्रह इति भावः। कर्मधारयमाश्रित्य चङि परे इति नार्थः, परग्रहणवैयर्थ्यात्। ननु बहुव्रीह्याश्रयणेऽपि 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवृत्तौ चङ्परके लघुनि परे अभ्यासः सन्वदित्यर्थो लभ्यते। तथा सति अण्यन्तेभ्यो णिश्रिद्रुस्रुभ्यश्चङि द्वित्वे अशिश्रियत् अदुद्रुवत् असुस्रुवदित्यत्रापि सन्वत्त्वं स्यात्। ततश्च 'दीर्घो लघोः' इति सन्वद्भावविषये अभ्यासस्य वक्ष्यमाणो दीर्घः स्यादित्यत आह अन्यपदार्थो णिरिति। तथा च चङ्परे णौ इति लभ्यते। अशिश्रियदित्यादौ च णेरभावाद् न सन्वत्त्वमिति भावः। स चाङ्गस्येति चेति। बहुव्रीहिगम्यो णिः 'अङ्गस्य' इत्यनुवृत्तं चेत्यर्थः। तत्र णावित्यावृत्तौ एकं लघुनीत्यत्रान्वेति। तथा च चङ् परे णौ यल्लघु तस्मिन्परत इति लभ्यते। द्वितीयं तु अनग्लोपे इत्यत्रान्वेति। तथा च णौ परतो यः अग्लोपः तस्याभावे सतीति लभ्यते। अङ्गस्येत्यावृत्तौ एकं चङ् परे इत्यत्रान्वेति। निमित्तनिमित्तिभावे षष्ठी। तथा च अङ्गसंज्ञानिमित्तभूते चङ् परके वर्णे परे इति लभ्यते। चङ् परकश्च वर्णः अर्थाद् णेरिकार एव। न श्रिद्रुस्रुवामन्त्यवर्णः, तस्य अप्रत्ययत्वेन अङ्गसंज्ञाप्रापकत्वाभावात्। एतदर्थमेव अङ्गस्येत्यस्य निमित्तषष्ठ्यन्ततामाश्रित्य चङ् पर इत्यनेनान्वयोऽभ्युपगतः। चङ् पर इत्येतावतैव तु णाविति न लभ्यते, श्रिद्रुस्रुषु व्यभिचारात्। द्वितीयं त्वङ्गस्येत्येतत् अभ्यासस्येत्यनुवृत्तेन अन्वेति। सन्वदिति सप्तम्यन्ताद्वतिः तदाह। अङ्गसंज्ञानिमित्तमित्यादिना। अथवेति। अस्मिन्व्याख्याने चङ् परे इत्येतद् अङ्गस्येत्यत्रान्वेति, न तु लघुनि। अङ्गस्य च प्रत्ययनिमित्तत्वादेव णेरन्यपदार्थस्य लाभः। लघुनीति तु अभ्यासस्येत्यत्रैवान्वेति तदाह चङ्परे णौ यदङ्गमित्यादिना प्राग्वदिति। सनीव कार्यं स्याण्णावग्लोपे असतीत्यर्थः। अत्र प्रथमपक्ष एव भाष्यसंमतः, अजजागरदित्यत्र चङ् परे णौ यल्लघु तदभ्यासव्यवहितमिति न सन्वत्त्वमिति भाष्योक्तेः। एवं च प्रथमपक्षे उन्देर्ण्यन्ताच्चङि द्वित्वे उन्दिदि अ त् इत्यत्र अभ्यासोत्तरखण्डे चङ् परे णौ लघोर-

सन्वल्लघुनि। चङ् पर इत्येतावतैव णिरिति न लभ्यते, श्रिद्रुस्रुवामपि चङ् परत्वादत आह अङ्गसंज्ञानिमित्तमिति। अङ्गस्याभ्यास इति। अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास इत्यर्थः। अङ्गस्येति नावर्तत इति। अस्मिंस्तु व्याख्याने चङ् परे इत्येतावतैव णिरिति लभ्यते, श्रिद्रुस्रुषु परेषु अङ्गत्वासम्भवादतो व्याचष्टे चङ्परे णौ यदङ्गमिति। चङ् परे इत्यस्यैव व्याख्यानं णाविति ज्ञेयम्। अनग्लोपे

[1] वाक्यमिदं प्रायोऽन्यत्रनोपलभ्यते।

स्यात इकारः स्यात्सनि। २३१८ दीर्घो लघोः ( ७—४—९४ ) अभ्यासस्य लघोर्दीर्घः स्यात्सन्वद्भावविषये। अचीकमत। णिङभावपक्षे तु 'कमेश्च्लेश्चङ् वक्तव्यः। णेरभावान्न दीर्घसन्वद्भावौ। अचकमत।

---

भावेनाभ्यासस्य तथाविधलघुपरकत्वविरहात् सन्वत्त्वाभावान्नाभ्यासदीर्घः। द्वितीयपक्षे तु चङ्परे णौ यदङ्गम् उन्दिद् इत्येतत् तदीयोऽभ्यासश्चङमादाय लुप्तं णिमादाय वा लघुपर इति सन्वत्त्वसत्त्वादभ्यासदीर्घ इति भेदः। एवं च प्रकृते ककम् अ त इत्यत्र व्याख्याद्वयेऽपि सन्वत्त्वं स्थितम्। सन्यतः। सनि अत इति च्छेदः। 'अत्र लोपः—' इत्यतः अभ्यासस्येत्यनुवर्तते। 'भृञामित्' इत्यस्माद् इदिति, तदाह अभ्यासस्येति। किकम् अ त इति स्थितम्। दीर्घो लघोः। 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनुवर्तते, तदाह अभ्यासस्य लघोर्दीर्घ इति। अभ्यासावयवस्य लघोरित्यर्थः। 'सन्वल्लघुनि चङ्परे—' इति सूत्रं सन्वच्छब्दवर्जमनुवर्तते। तच्च प्राग्वदेव द्वेधा व्याख्येयम्। तथा च फलितमाह सन्वद्भावविषय इति। 'सन्यतः' इत्यत्र तपरत्वं स्पष्टार्थमिति दीर्घोऽकितः' इति सूत्रे भाष्ये स्पष्टम्। तथा च कि कम् अ तेत्यत्र अभ्यासेकारस्य दीर्घे अभ्यासचुत्व अडागमे परिनिष्ठितं रूपमाह अचीकमतेति। अत्र लघोर्णिपरत्वं येन नाव्यवधानन्यायाद्बोध्यम्। णिङभावपक्षे त्विति। 'अयादय आर्धधातुके वा' इति णङो वैकल्पिकत्वादिति भावः। कमेश्च्लेश्चङ् वक्तव्य इति। अण्यन्तत्वादप्राप्तौ वचनम्। णेरभावादिति। णिङभावपक्षे कमिधातोरनुदात्तेत्त्वात्तङि प्रथम-

---

किम्, अचकथत्। सन्यतः। 'अत्र लोपोऽभ्यासस्य' इत्यतोऽभ्यासस्येति 'भृञामित्' इत्यत इद्ग्रहणं चानुवर्तते, तदाह अभ्यासस्येत्यादि। तपरकरणं किम्, पापच्यतेः सन्। पापचिषते। न च सनि योऽभ्यासः सन्निमित्त इति विज्ञानात्तपरकरणाभावेऽपि नोक्तातिप्रसङ्गः अभ्यासस्येह यङ्निमित्तत्वादिति वाच्यम्, तादृशविवक्षायामधीपिपति प्रतीपिपतीत्यादावव्याप्तेः न हि कार्यो निमित्तत्वेनाश्रीयते। यद्याश्रीयेत तर्हि 'द्विर्वचनेऽचि' इति निषेधेन रिस्शब्दस्य द्वित्वाप्रवृत्तावरिरिपतीत्यादि न सिध्येत्। नन्वेवं पिपक्षतीत्यादावव्याप्तिः। अभ्यासस्य सन्परत्वाभावात्। न च 'येन नाव्यधान—' न्यायेन सन्प्रवृत्त्या व्यवहितेऽप्यभ्यासस्येत्वं स्यादेवेति वाच्यम्, प्रतीपिपतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायस्याप्रवृत्तिरिति चेत्। अत्राहुः—सना धातुमाक्षिप्य सनि सति यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्यानान्नोक्तदोषः। न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम्, तपरकरणस्यैव तत्र मानत्वात्। किं च अकारग्रहणमपि तत्र मानम्। अन्यथा सन इत्येव ब्रूयात्। तावताप्यधीपिपति प्रतीपिपतीत्यादावित्वप्रवृत्तिसिद्धेरिति। दीर्घो लघोः। लघोरभ्यासस्येति। ननु अज्झल्समुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा 'ह्रस्वं लघु' इति सूत्रितत्वात्। नैष दोषः। इमे हि न समानाधिकरणे षष्ठ्यौ किं तु व्यधिकरणे, तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः। 'लघुनि चङ्परेऽनग्लोपे' इति सर्वमिहानुवर्तते। तच्च प्राग्वदेव द्वेधा व्याख्येयम्, तदाह सन्वद्भावविषय

संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ।
तत्रैव दीर्घः सन्वच्च नानेकाक्ष्विति माधवः ॥ १ ॥
चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ।

---

पुरुषैकवचने चलेश्चङि द्वित्वे हलादिशेषे अभ्यासचुत्वे अडागमे अचकमतेति रूपं वक्ष्यते । तत्र णेरभावाद् 'दीर्घो लघोः' इत्यभ्यासलघोर्दीर्घो न भवति, तत्र लघुनि चङ्परेऽनग्लोप इत्यनुवर्त्य चङ्परे णावेव तद्विधानोक्तेः । अत एव सन्वत्त्वाभावात् 'सन्यतः' इत्यभ्यासाकारस्य इत्वं च न भवतीत्यर्थः । 'दीर्घो लघोः' इति दीर्घविधौ सन्वत्त्वं न निमित्तम् । किंतु लघुनि चङ्पर इत्यस्य तत्रानुवृत्त्या सन्वद्भावविषये तत्प्रवृत्तिः । अतो दीर्घसन्वद्भावाविति पृथगुक्तिः।

अथ पञ्चभिः श्लोकैः सन्वद्भावसूत्रं 'दीर्घो लघोः' इति सूत्रं च विशदयति संज्ञाया इत्यादिना । अस्मिन् शास्त्रे कार्यकालं संज्ञापरिभाषमित्येकः पक्षः । कार्यकालमित्यस्य कार्यप्रदेशकमित्यर्थः । अस्मिन्पक्षे तत्तत्कार्यविधिप्रदेशेषु संज्ञाशास्त्रस्य परिभाषाशास्त्रस्य च उपस्थितिः । यथोद्देशं संज्ञापरिभाषमिति पक्षान्तरम् । उद्देशाः संज्ञापरिभाषाशास्त्राम्नातप्रदेशा , तान् अनतिक्रम्य यथोद्देशम् संज्ञाशास्त्रं परिभाषाशास्त्रं च स्वदेशे स्थितमेव तत्तद्विव्यपेक्षितं स्वं स्वमर्थं समर्पयतीति यावत् । अस्मिन्पक्षे कार्यप्रदेशेषु संज्ञापरिभाषाभ्यां तदर्थस्यैवोपस्थितिः, न तु संज्ञापरिभाषाशास्त्रयोरिति स्थितिः । 'सन्वल्लघुनि–' इति सूत्रे 'दीर्घो लघोः' इति सूत्रे च अङ्गस्येति अभ्यास्येति चानुवृत्तम् । तत्र कार्यकालपक्षे 'पूर्वोऽभ्यासः' इति सूत्रं संनिहितम् । ततश्च अङ्गस्य ये द्वे उच्चारणे तयोः पूर्वः अभ्याससंज्ञः स सन्वद्भवतीति

---

इति । हलादेरिति प्राचोक्तमिहोपेक्षितं निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितम् । न चैवमौन्दिदत् । आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम्, अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः । चङ्परे हि यदङ्गम् उन्द इति न तदीयोऽभ्यासो न वा चङ्परणिच्परं यल्लघु तत्परः । एतेन आट्टिटदित्यादिभाष्योदाहरणमेव 'हलादेः' इति व्याख्याने प्रमाणमिति केषांचिदुत्प्रेक्षापि प्रागुक्ता । दीर्घाप्राप्त्यैवोदाहरणासौष्ठवस्योक्तत्वात् । लघोः किम्, 'क्षणु हिंसायाम्' अचिक्षणत । शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषम्' 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति जातिव्यक्तिपक्षवत् तथा च 'पूर्वोऽभ्यासः' इत्यस्य 'सन्वल्लघुनि–' इत्यादिना सह पक्षद्वयेऽपि एकवाक्यता समानैव, तथापि कार्यकालपक्षे पदैकवाक्यता, यथोद्देशपक्षे तु वाक्यैकवाक्यतेत्यस्ति विशेषः । तत्रेदानीं कार्यकालपक्षपाति माधवमतं यावद्व्याचष्टे संज्ञाया इत्यादिना श्लोकद्वयेन । अङ्गं यत्रेति । अयं भावः—'सन्वल्लघुनि–' 'दीर्घो लघोः' इति सूत्रद्वये अङ्गस्येत्यनुवर्तते, अभ्यासस्येति च । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते, तच्च कृदन्तम्, तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्राङ्गं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्त इति अचीकरत् । अपीपचत् । युक्तं चैतत् । अङ्गस्येति षष्ठ्या कारकविभक्तित्वसम्भवे तदुपेक्ष्य शेषषष्ठी

किं त्वस्यावयवः कश्चित्तस्मादेकाक्ष्विदं द्वयम् ॥ २ ॥
वस्तुतोऽङ्गस्यावयवो योऽभ्यास इति वर्णनात् ।
ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥

फलितम् । तत्र कृदन्तोच्चारणशब्दयोगादङ्गस्येति कर्मणि षष्ठी, न त्ववयवषष्ठी, कारकषष्ठ्या बलवत्त्वात् । अङ्गं च प्रत्यये परतः कृत्स्नमेव प्रकृतिरूपम्, न तु तदेकदेशः। ततश्च कृत्स्नमङ्गं यत्र द्विरुच्यते न तु तदेकदेशमात्रं तत्रैव 'दीर्घो लघोः' इति दीर्घः 'सन्वल्लघुनि–' इति सन्वद्भावश्च भवति । एवं च अङ्गस्य एकाच्कत्वे सत्येव तयोः प्रवृत्तिः, तत्र कृत्स्नस्याङ्गस्य द्विरुक्तेः । अनेकाच्केषु तु अङ्गेषु न तयोः प्रवृत्तिः, तत्र एकस्यैव एकाच अङ्गैकदेशस्य द्विरुक्तेरिति भावो मन्यत इति प्रथमश्लोकस्यार्थः । नानेकाक्ष्वित्युक्तं विशदयति चकास्तीति श्लोकेन । 'चकासृ दीप्तौ' । अर्थमाचष्टे इत्यर्थे णिचि 'अर्थवेदयोः–' इति प्रकृतेरापुगागमे अर्थापिवातुः । 'ऊर्णुञ् आच्छादने' एते त्रयः अनेकाच्का धातवः । आदिना 'जागृ निद्राक्षये' इत्यादिसंग्रहः । एभ्यो ण्यन्तेभ्यश्चङि अङ्गं कृत्स्नं न द्विरुच्यते, किंतु अङ्गस्य कश्चिदेकाजवयव एव द्विरुच्यते । तस्माद् अनेकाच्केषु कृत्स्नस्याङ्गस्य द्विरुक्त्यभावाद् एकाच्केष्वेवाङ्गेषु 'दीर्घो लघोः' इति दीर्घः, 'सन्वल्लघुनि–' इति सन्वद्भावश्चेत्येतद्द्वयं भवति, नत्वनेकाच्काङ्गेष्वित्यर्थः । नन्वेवं सति दिदरिद्रासति इत्यादौ 'हलादिः शेषः' इत्याद्यभ्यासकार्यमनेकाच्केष्वङ्गेषु न स्यात् कृत्स्नाङ्गस्य द्विरुक्त्यभावात् । किंच अजजागरदित्यत्र सन्वत्त्वमाशङ्क्य णिपरकलवोर्गकाराकारस्य जा इत्यनेन व्यवहितत्वादभ्यासस्य न सन्वत्त्वमिति समाहितं भाष्ये । तदेतद् अनेकाच्काङ्गेषु सन्वत्त्वस्याप्रवृत्तौ विरुध्यते, कृत्स्नस्याङ्गस्य द्विरुक्त्यभावादेव तत्र सन्वत्त्वस्याप्राप्तौ तच्छङ्काया एवानुन्मेषादित्यस्वारस्याद्यथोद्देशपक्षमालम्ब्याह वस्तुत इति । अङ्गस्येत्यवयवषष्ठी । अङ्गावयवस्याभ्यासस्येति लभ्यते । ततश्च ऊर्णुङि ण्यन्ते चङि नु इत्येकदेशस्य द्वित्वेऽपि और्णूनुवदित्यत्र 'दीर्घो लघोः' इत्यभ्यासलघुर्दीर्घो भवति । सन्वत्त्वं तु प्रयोजनाभावादुपेक्षितम्, अभ्यासे अकाराभावेन 'सन्यतः' इत्यस्यासंभवात् । अर्थमाचष्टे इत्यर्थे णिचि प्रकृतेरापुकि अर्थापिवातोश्चङि णिलोपे उपधाह्रस्वे थप इत्यस्य द्वित्वेऽपि आर्तीथपत्वकल्पनाया अन्याय्यत्वात् । नाङ्गं द्विरुच्यत इति । एवं च, अचचकासत् । आर्तथपत्, और्णुनवत्, इत्येव भवतीति भावः । अवयवः कश्चिदिति । हलादेः प्रथमावयवो द्विरुच्यते अजादेस्तु द्वितीयावयव इत्यर्थः । अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधीयमानौ एकाक्ष्वेवेति च फलितम् । किं च अस्मिन्पक्षे एकाच इत्यङ्गस्य विशेषणं शब्दतोऽपि सुलभम्, 'एकाचो द्वे—' इत्यविकारादित्याशयेनाह तस्मादेकाक्ष्विति । स्यादेतत्—उक्तरीत्या ह्रस्वहलादिःशेषचुत्वादीन्यपि अनेकाक्षु न स्युः । न चेष्टापत्तिः, दिद्रासति, दिदरिद्रासति, जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत्, तर्हि इहापि स एवोचितः । अर्थाविकारपक्षस्यैवाभ्यर्हितत्वात्, वृत्त्यादिषु स्वीकृतत्वाच्चेत्यभिप्रेत्याह वस्तुत इति । ऊर्णौ दीर्घ इति । स्यादित्यपकृष्यते ।

चकास्तौ तूभयमिदं न स्यात्स्याच्च व्यवस्थया ।
णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥
इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् ।

दित्यत्र सन्वद्भावात् 'सन्यतः' इत्यभ्यासस्य इत्वम् अभ्यासदीर्घश्चेति द्वयं भवतीति जानीम इति तृतीयश्लोकार्थः । अङ्गस्यावयव इति पक्षेऽपि चकास्तौ विशेषमाह चकास्तौ त्विति । अवस्था वस्तुस्थितिः । व्यवस्थया पक्षद्वयेनेति यावत् । चङ्परे इत्यनेन अन्यपदार्थलब्धस्य णावित्यस्य संनिहितं लघुनीत्येतद् विशेष्यम् । तथा च चङ्परे णौ यल्लघु इति प्रथमव्याख्यानं फलितम् । अङ्गमेव वा णेर्विशेष्यम् । तथा च चङ्परे णौ यदङ्गमिति द्वितीयं व्याख्यानं फलितम् । इति व्यवस्थया पक्षद्वयेन सन्वत्त्वं दीर्घश्चेत्युभयमिदं चकासृधातोः ण्यन्ते चङि णिलोपे द्वित्वे अचचकासत् इत्यत्र न स्यात्, स्याच्चेत्यन्वयः । तत्र चङ्परे णौ यल्लघ्विति व्याख्याते सति नैव उभयं स्यात् । चङ्परस्य णेः कास् इत्यनेन व्यवहितत्वात् । अचीकमतेत्यादौ त्वेकव्यवधानं येन नाव्यवधानन्यायात्सोढव्यमेव । चङ्परे णौ यदङ्गमिति व्याख्याने तु अचीचकासदित्यत्र उभयं स्यादेव, अङ्गस्य णिपरकत्वसत्त्वादिति बोध्यम् । ननु चङ्परे णौ यल्लघ्विति, चङ्परे णौ यदङ्गमिति च व्याख्याभेदे किं प्रमाणमित्यत आह इति **व्याख्याविकल्पस्य कैयटेनैव वर्णनादिति** । आदर्तव्यतेति शेषः । ननु णौ इत्यस्यावृत्तिमभ्युपगम्य अग्लोपेऽपि तदन्वयः किमर्थं इत्यत आह **णेरग्लोपेऽपीति** । **अगितामिति** । कमु कान्तौ-

थौर्णुनवत् । इह सन्वद्भावस्तु नोपयुज्यते,णौ कृतस्यादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भावः । **अर्थापयताविति** । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि दीर्घस्य'सन्यतः'इतीत्वस्य च प्रवृत्तौ आर्तीथपदित्येव भवतीति भावः । अर्थ उपयाच्ञायामित्यस्य तु चङ्परे णौ आर्तथतेति भवति,न तु तत्र दीर्घसन्वद्भावयोःप्रवृत्तिरिति चुरादिषु स्फुटीभविष्यति । **उभयमिति** । दीर्घः सन्वच्चेत्येतद्द्वयमित्यर्थः । **न स्यात्स्याच्च व्यवस्थयेति** । चङ्परे णौ यल्लघ्विति व्याख्याने न स्यात् । चङ्परे णौ यदङ्गमिति व्याख्याने तु स्यात् । एवं च अचचकासत् अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः । ननु यथा चङ्परे णौ यल्लघ्विति व्याख्याने 'येन नाव्यवधान-' न्यायेन अपीपचदित्यादावेवोभयं भवति न त्वनेकव्यवाये । अचचकासदित्यादौ, तथा न्यायसाम्येन लघुनि योऽभ्यास इत्यत्राप्येकैनैव व्यवायस्य स्वीकार्यत्वादचिक्षणदित्यादौ 'सन्यतः' इदतीत्वं न स्यादिति चेत् । अत्राहुः—'अत्स्मृदृत्वर-' इतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेऽपीत्वस्य ज्ञापितत्वान्नोक्तदोषः । अतएव 'दीर्घो लघोः' इति सूत्रे लघोरिति सार्थकम् । माधवोऽपि जागृधातावित्थमेवाह । एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत् । तथाच ऊर्णुधातौ यत्तेनोक्तमौर्णुनवदित्यत्र 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति सूत्रार्थात् । अत्र त्वङ्गावयवस्याभ्यासो न त्वङ्गस्येत्यादि । तत्र तस्याप्याग्रहो नास्तीति गम्यते । अतएव च कास्तावची-

णेरग्लोपेऽपि संवन्वस्त्वगितामपि सिद्धये ॥ ५ ॥

अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः। अण ४४४ रण ४४५ वण ४४६ भण ४४७ मण ४४८ कण ४४९ क्वण ४५० व्रण ४५१ भ्रण ४५२ ध्वण ४५३ शब्दार्थाः। अणति। रणति। वणति। वकारादित्वादेत्वाभ्यासलोपौ न। ववणतुः। ववणिथ। धणिरपि कैश्चित्पठ्यते। धणति। ओणृ ४५४ अपनयने। ओणति। ओणांचकार। शोणृ ४५५ वर्णगत्योः। शोणति। शुशोण। श्रोणृ ४५६ संघाते। श्रोणति। श्लोणृ ४५७ च। शोणादयस्त्रयोऽमी तालव्योष्मादयः। पैणृ ४५८ गतिप्रेरणश्लेषणेषु। प्रैणृ इति क्वचित्पठ्यते। पिप्रैण। ध्रण ४५९ शब्दे। उपदेशे नान्तोऽयम्। 'रषाभ्याम्' ( सू २३५ ) इति णत्वम्। ध्रणति। णोपदेशफलं यङ्लुकि। दन्ध्रन्ति। बण इत्यपि केचित्। बेणतुः। बेणिथ। कनी[1] ४६० दीप्तिकान्तिगतिषु। चकान। ष्टन ४६१ वन

---

वित्यादीनामपीत्यर्थः। सिद्धय इति। दीर्घसन्वत्त्वसिद्ध्यर्थमित्यर्थः। अन्यथा कमुप्रभृतीनामुकाराद्यनुवन्धलोपमादाय अग्लोपित्वाद् दीर्घसन्वद्भावौ न स्यातामित्यर्थः। इति घिणिप्रभृतयः कम्यन्ता दश गताः।

क्रम्यन्ता इति। 'क्रमु पादविक्षेपे' इत्येतत्पर्यन्ता इत्यर्थः। अनुनासिकान्ता इति शेषः। अण रणेति। इतः प्रभृति कन दीप्तावित्यतः प्राग् मूर्धन्यान्ताः। ओणृ इति। ऋदित्त्वं 'नाग्लोपि–' इति निषेधार्थम्। ध्रण शब्द इति। अदुपधोऽयम्। उपदेश इति। धातूपदेशे नकारान्तोऽयम्। अकारस्य उच्चारणार्थस्य निवृत्तौ तवर्गपञ्चमान्त इत्यर्थः। तर्हि णकारस्य कथं श्रवणमित्यत आह रषाभ्यामिति णत्वमिति। ननु स्वाभाविक एव णकार इत्यस्तु, किं नकारस्य कृतणत्वस्य निर्देश इति कल्पनयेत्यत आह णोपदेशेति। नकारस्थानिकणोपदेशस्य 'नश्च' इत्यनुस्वारात्मकं फलं यङ्लुकि प्रत्येतव्यमित्यर्थः। दन्ध्रन्तीति। ध्रणधातोर्यङ्लुकि द्वित्वे हलादिशेषे 'नुगतोऽनुनासिकान्तस्य' इत्यभ्यासस्य नुकि उत्तरखण्डे णकारस्यासिद्धत्वेन अनुस्वारे परसवर्णे तस्यासिद्धत्वाद् णत्वाभावे नकारस्यैव

---

चकासदित्युदाजहार। तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति। कातन्त्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतम्, तन्मतद्वयेऽप्यसंभवादुपेक्ष्यम्। व्यवस्थामेव विवृणोति णेरिति। सन्निहितमिति हेतुगर्भविशेषणम्, लघुनीत्येतद् णेर्विशेष्यं भवति सन्निहितत्वादित्यर्थः। अङ्गमेवेति। अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाभावेऽपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः। कैयटेनैवेति। तथा च एकं हरदत्तमतम्, अपरं तु कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः। चङ्परे इत्यावर्त्य अग्लोपविशेषणतयापि योजितं तस्य फलमाह णेरिति। णिश्रिद्रुस्रुषु परतोऽग्लोपित्वासंभवादिहापि चङ्पर इत्येतावतैव णाविति लभ्यत इति बोध्यम्। अगितामपीति। पचिक्रमिशकिप्रभृतीनामित्यर्थः। नहीत्संज्ञकानां लोपो णिचं

---

१ बालमनोरमाकृत्तु 'कन' इति ईकाररहितं पाठं मनुते।

४६२ शब्दे । स्तनति । वनति । वन ४६३ षण ४६४ संभक्तौ । वनेरर्थभेदात् पुनः पाठः । सनति । ससान सेनतुः **२३१९ ये विभाषा ।** ( ६–४–४३ ) जनसनखनामात्त्वं वा स्याद्यादौ क्ङिति । सायात्, सन्यात् । अम ४६५ गत्यादिषु । कनी दीप्तिकान्तिगति–इत्यत्र गतेः परयोः शब्दसंभक्त्योरादिशब्देन संग्रहः । अमति । आम । द्रम ४६६ हम्म ४६७ मीमृ ४६८ गतौ । द्रमति । दद्राम । 'ह्म्यन्त–' ( सू २२९९ ) इति न वृद्धिः । अद्रमीत् । हम्मति । जहम्म । मीमति । मिमीम । अयं शब्दे च । चमु ४६९ छमु ४७० जमु ४७१ झमु ४७२ अदने । **२३२० ष्ठिवुक्लमुचमां[1] शिति ।** ( ७—३—७५ ) एषामचो दीर्घः स्याच्छिति । 'आङि[2] चम इति वक्तव्यम्' आचामति । 'आङि' किम्–चमति । विचमति । अचमीत् । जिमि केचित्पठन्ति । जेमति ।

---

श्रवणम् । स्वाभाविकणकारोपदेशे तु उत्तरखण्डे णकार एव श्रूयेतेति भावः । **वणे-त्यपीति** । पवर्गतृतीयादिरिति भावः । कन दीप्तीत्यारभ्य अम गत्यादिष्वित्यतः प्राक् तवर्ग-पञ्चमान्ताः । **ष्टन वनेति** । आद्यः षोपदेशः । ष्टुत्वसंपन्नः टकारः, तदाह **स्तनतीति** । **वन षणेति** । द्वितीयः षोपदेशः । ननु ष्टन वन शब्दे इति वनेः पठितस्य पुनः पाठो व्यर्थ इत्यत आह **अर्थभेदादिति** । वनेः शब्दे संभक्तौ च वृत्तिरिष्टा । ष्टनेस्तु शब्द एव वृत्तिरिष्टा । तत्र ष्टन वन शब्दे संभक्तौ चेत्युक्तौ ष्टनेरपि संभक्तौ वृत्तिः स्यात् । ष्टन् शब्दे इत्युक्त्वा वन संभक्तौ चेति पाठे तु गौरवमिति भावः । आशीर्लिङि विशेषमाह **ये विभाषा** । 'जनसनखनां सन्झलोः' इत्यतो जनसनखनामित्यनुवर्तते । 'अनुदात्तोपदेश–' इत्यतः क्ङितीति । ये इति तद्विशे-षणम् । अकार उच्चारणार्थः । तदादिविधिः । 'विड्वनोरनुनासिकस्यात्' इत्यत आदित्यनु-वर्तते, तदाह **जनसनखनामित्यादिना** । **सायादिति** । नकारस्य आत्वे सवर्णदीर्घः । **द्रम हम्म मीमृ गताविति** । आद्योऽदुपधः । **न वृद्धिरिति** । अद्रमीदित्यत्र हलन्तलक्षणायां वृद्धौ 'नेटि' इति निषिद्धायां 'ह्म्यन्त–'इत्यतः 'अतो हलादेः-'इति वृद्धिर्नेत्यर्थः । **जहम्मेति** । अभ्यासचुत्वेन हस्य झः । तस्य 'अभ्यासे चर्च' इत्यनेन जः । **मिमीमेति** । मीमृधातोर्णलि द्वित्वे अभ्यासह्रस्वः । **अयं शब्दे चेति** । मीमृधातुरित्यर्थः । **ष्ठिवुक्लमु** । 'शमामष्टानां दीर्घः श्यनि' इत्यतो दीर्घ इत्यनुवर्तते । दीर्घश्रुत्या अच इत्युपस्थितम्, तदाह **एषामचो दीर्घ इति** । ष्ठिवु क्लमु [3]चम एषां द्वन्द्वः । चम इत्यनेन आङ्पूर्वकस्य चमेर्ग्रहणम् ।

---

[illegible]त इति भावः । **णोपदेशफलमिति** । अनुस्वार इत्यर्थः । **दंध्रन्तीति** । नुगतोऽनुना[illegible]न्तस्य' इत्यभ्यासस्य नुक् । **गत्यादिष्विति** । गतिशब्दसंभक्ति-ष्वित्यर्थः । **मीमृ** । ऋदित्फलं तु 'नाग्लोपि—' इति निषेधः । अमिमीमत् । **ष्ठिवुक्लमु** । ष्ठीवति । क्लाम्यति । **आङि चम इति** । 'ष्ठिवुक्लम्वाचमाम्' इति वृत्तिकारोक्तपाठोऽयुक्त इति भावः । **जिमि केचिदिति** । तथा च जेमनमिति

---

१ 'ष्ठिवुक्लम्वाचमाम्' इति क्वचित् पाठः । २ वार्तिकमिदं बालमनोरमा कृतोऽसम्मत-मिति भाति । ३ 'आचम्' इति क्वचित् ।

क्रमु ४७३ पादविक्षेपे २३२१ वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। ( ३—१—७० ) एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे। २३२२ क्रमः परस्मैपदेषु। ( ७–३–७६ ) क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति। क्राम्यति, क्रामति। चक्राम। क्राम्यतु, क्रामतु। २३२३ स्नुक्रमोरनात्मनेपदनिमित्ते। ( ७–२–३६ ) अत्रैवेट्। अक्रमीत्।

---

अचमीदिति। 'ह्म्यन्त–' इति न वृद्धिः। क्रमु पादेति। उदित्त्वम् 'उदितो वा' इति विकल्पार्थम्। वा भ्राश। 'दिवादिभ्यः श्यन्' इत्यतः श्यन्निति, 'कर्तरि शप्' इत्यतः कर्तरिति, 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते तदाह एभ्यः श्यन्वेत्यादि। क्रमः। दीर्घः स्यादिति। 'शमामष्टानाम्—' इत्यतः तदनुवृत्तेरिति भावः। शितीति। 'ष्ठिवुक्लमुचमाम्–' इत्यतस्तदनुवृत्तेरिति भावः। क्रामत्विति। मध्यमपुरुषैकवचने क्रामेत्यत्र तु 'क्रमः परस्मैपदेषु' इति दीर्घो भवत्येव। नच दीर्घस्याङ्गाधिकारस्थत्वाद् नलुमतेति निषेधः शङ्क्यः, लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्यं एव तस्य प्रवृत्तेः। शिति परतः क्रमेरङ्गस्य दीर्घस्तु न लुप्तप्रत्यये परस्मैपदे परे अङ्गस्य कार्यं, किंतु शिति परे अङ्गस्य कार्यमिति बोध्यम्। स्नुक्रमोः। पञ्चम्यर्थे षष्ठी आत्मनेपदनिमित्तस्याभावः अनात्मनेपदनिमित्तम्, अर्थाभावे अव्ययीभावेन सह नञ्तत्पुरुषो विकल्प्यत इत्युक्तेः समासः। आत्मनेपदनिमित्ताभावे अव्ययीभावे सति स्नुक्रमभ्यां परस्य वलाद्यार्धधातुकस्य इट स्यादित्यर्थः स्नुक्रमोरनुदात्तोपदेशानन्तर्भावादिटि सिद्धे वचनमिदं नियमार्थमित्याह अत्रैवेडिति। एवं च भावकर्मलकारेषु इण्न भवति। उपस्नोष्यते जलेन। भावलकारोऽयम्। उपक्रंस्यते। कर्मणि लृट्। स्यः। प्रस्नुतमित्यत्र तु श्र्युकः कितीति निषेधान्नेट्, आर्धधातुकस्येड्वलादेरिति इड्विधेः पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्। 'नुक्रमोरनात्मनेपदे' इति तु न सूत्रितम्, आत्मनेपदभिन्ने परस्मैपदे परे इत्यर्थे चिक्रमिष्यतीत्यसिद्धेः स्येन व्यवधानात्। आत्मनेपदे परे नेडित्यर्थे तु प्रचिक्रंसिष्यत इत्यसिद्धिः। अतो निमित्तग्रहणमित्यलम्। अक्रमीदिति। 'ह्म्यन्त–'इति न वृद्धिः। इति

---

भोजने प्रयुञ्जते। वा भ्राश। उभयत्र विभाषेयम्। अनवस्थानार्थो भ्रमिः। क्लमित्रसी न दिवादी, तेभ्यो नित्यं प्राप्ते इतरेषामप्राप्ते चारम्भात्। भ्राशृ भ्लाशृ दीप्तौ। फणादावेतौ। भ्रमु चलने भ्वादिः, ज्वलादिः फणादिरपि मनोरमायां पठ्यते, तद्भसादिति नव्याः। भ्रमु अनवस्थाने दिवादिः, पुषादिः, शमादिः, तत्र भ्वादेः भ्रम्यति भ्रमति। शमादेस्तु श्यनि दीर्घे भ्राम्यतीति त्रैरूप्यम्। क्लमु ग्लानौ, त्रसी उद्वेगे, त्रुट छेदने, लष कान्तौ। क्रमः। 'ष्ठिवुक्लमुचमाम्–' इत्यतोऽनुवर्तनादाह परस्मैपदे शितीति। परस्मैपदे किम्, उपक्रमते। पराक्रमते। स्नुक्रमोः। अनात्मने पदनिमित्ते इति। आत्मनेपदनिमित्ताभावे इत्यर्थः। अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम्, अनात्मनेपदनिमित्तयोरित्यर्थं इत्याहुः। उभयोरपि भावकर्मकर्मव्यतिहारास्तङो निमित्तम्, क्रमेस्तु वृत्तिसर्गादयोऽपीति बोध्यम्। स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोऽयमित्याह अत्रैवेडिति। अनात्मनेपदे ति किम्, उपस्नोष्यते जलेन।

अथ रेवत्यन्ता अनुदात्तेतः। अय ४७४ वय ४७५ पय ४७६ मय ४७७ चय ४७८ तय ४७९ णय ४८० गतौ । अयते। २३२४ दयायासश्च। (३—१—३७) दय अय आस् एभ्य आम् स्याल्लिटि । अयांचक्रे । अयिता । अयिषीष्ट। २३२५ विभाषेटः। (८—३—७९) इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात्। अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम्। २३२६ उपसर्गस्यायतौ। (८–२–१९) अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते, पलायते। निसदुसो रुत्वस्यासिद्धत्वान्न लत्वम्। निरयते। दुरयते। निर्दुरोस्तु निलयते दुलयते। प्रत्यय इति त्विणो रूपम्। अथ कथम् 'उदयति विततोर्ध्वरश्मिरज्जौ' इति माघः। इट किट कटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा 'अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्' (प ९७) । चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वाद्

क्रम्यन्ताः परस्मैपदिनो गताः। रेवत्यन्ता इति। रेवृ प्लवगताविव्येतत्पर्यन्ता इत्यर्थः। अयपयेत्यारभ्य शल चलने इत्यतः प्राग् यकारान्ताः। दयायासश्च। दय अय आस् एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । कास्प्रत्ययादित्यत आम लिटित्यनुवर्तते, तदाह एभ्य आम स्याल्लिटि इति। विभाषेटः। 'इणः षीध्वंलुङ्लिटां धः—' इत्यनुवर्तते । 'अपदान्तस्य—' इत्यतो मूर्धन्य इति इति च, तदाह इणः परो इडित्यादि । इण्णन्तादङ्गादित्यर्थः । अयिषीढ्वमिति । आशीर्लिङो ध्वमः सीयुट्। यलोपः। आर्धधातुकत्वान्न सलोपः। इट्। यकारादिणः परो य इट ततः परत्वाद् धस्य मूर्धन्यो ढः। इटः परभक्तत्वाद्यकारान्तादाङ्गात् परस्य इषीध्वम इण्णन्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पोऽयम्। आयिढ्वमिति। लुङो ध्वमि, च्लेः सिचि, आटि वृद्धौ, सिच इटि, 'धि च' इति सलोपः। ध्वम इवर्णान्तादङ्गात्परत्वान्नित्ये प्राप्ते विकल्पः। अङ्गादिति निवृत्तमिति केचित्। उपसर्गस्यायतौ। अयताविति श्तिपा निर्देशः। 'कृपो रो लः' इत्यतो रो ल इत्यनुवर्तते, तदाह अयतिपरस्येत्यादिना। प्लायत इति। प्र इत्युपसर्गः। पलायत इति। परा इत्याकारान्त उपसर्गः। ननु निरयते दुरयत इत्यत्रापि लत्वं स्यादित्यत आह निसुदुसोरिति। तर्हि निलयते दुलयत इति कथमित्यत आह निर्दुरोस्त्विति। एतदर्थमेव प्रादिषु सान्तयो रेफान्तयोश्च निर्देश इति भावः। तर्हि प्रत्यय इत्यत्रापि प्रतेरयतिपरत्वाद् रस्य लत्वं स्यादित्यत आह प्रत्यय इति। त्विति। प्रतिपूर्वकादिण्धातोरच्प्रत्यये प्रत्यय इति रूपम्। अयतिपरत्वाभावान्न लत्वमित्यर्थः। अयधातुमादाय प्लत्यय इति न, अनभिधानादिति कैयटः। कथमुदयतीति। उदपूर्वकादयधातोः शत्रन्तात्सप्तम्यन्तमिति मत्वा आक्षेपः। अनुदात्तेत्त्वेन लटः शानच्प्रसङ्गादिति भावः। प्रश्लिष्टस्येति। इधातोरिति शेषः। तस्य अनुदात्तेत्त्वाभावाच्छतृप्रत्ययो निर्बाध इति भावः। ज्ञापकादिति। चक्षिङ्-

उपक्रंस्यते। निमित्त इति किम्, स्नौतीति स्नविता, स इवाचरति स्नवित्रीयते। इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौतिरित्याहुः। लुङ्लिटां धस्येति।

ववये । पेये । मेये । चेये । तेये । प्रणयते । नेये । दय ४८१ दानगतिरक्षणहिंसादानेषु । आदानं ग्रहणम् । दयांचक्रे । रय । ४८२ गतौ । ऊयी ४८३ तन्तुसन्ताने । ऊयांचक्रे । पूयी ४८४ विशरणे दुर्गन्धे च । पूयते । पुपूये । क्नूयी ४८५ शब्दे उन्दे च । चुक्नुये । क्ष्मायी ४८६ विधूनने । चक्ष्माये । स्फायी ४८७ ओ प्यायी ४८८ वृद्धौ । स्फायते । पस्फाये । प्यायते २३२७ **लिड्यङोश्च** । ( ६-१-२९ ) लिटि यङि च प्यायः पीभावः स्यात् । पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्वित्वम् । 'एरनेकाचः—' ( सू २७२ ) इति यण् । पिप्ये पिप्याते पिप्यिरे । २३२८ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** । ( ३—१—६१ ) एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे । २३२९ **चिणो लुक्** । ( ६—४—१०४ ) चिणः परस्य तशब्दस्य लुक्स्यात् ।

---

धातौ इकारस्य अनुदात्ततया अनुदात्तेत्त्वादेव आत्मनेपदसिद्धौ ङित्करणं अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्य अनित्यतां ज्ञापयति । तस्य अनित्यत्वे तु नित्यात्मनेपदार्थं ङित्करणमर्थवदिति भावः । इदं तु भाष्ये न दृश्यते । **वादित्वादिति** । वयधातोर्लिटि वादित्वादेत्वाभ्यासलोपयोरभावे सति ववये इति रूपमित्यर्थः । णयधातुर्णोपदेश इति मत्वा आह **प्रणयत इति** । 'उपसर्गादसमासेऽपि—' इति णत्वमिति भावः । **दयांचक्र इति** । 'दयायासश्च' इत्याम् । **ऊयांचक्र इति** । इजादित्वादाम् । **उन्दने चेति** । क्लेदने चेत्यर्थः । **स्फायी ओ प्यायीति** । ओदित्त्वम् 'ओदितश्च' इति निष्ठानत्वार्थम् । ईदित्त्वं तु 'श्वीदितो निष्ठायाम्' इति इण्निषेधार्थम् । **लिड्यङोश्च** । लिट् च यङ् चेति द्वन्द्वात्सप्तमी । 'प्यायः पी' इति सूत्रमनुवर्तते, तदाह **लिटि यङि चेति** । ननु प्यायेर्लिटि द्वित्वं बाधित्वा परत्वात् पीभावे द्वित्वे 'एरनेकाचः—' इति यणि पिप्ये इति रूपमिष्यते । तत्र द्वित्वं बाधित्वा परत्वात् पीभावे कृते पुनर्द्वित्वं न संभवति, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादित्यत आह **पुनः प्रसङ्गेति** । 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति परिभाषा । विप्रतिषिधे बाधितस्यापि पुनः प्रवृत्तेरभ्युपगमात्कृतेऽपि पीभावे द्वित्वादिकं सिद्धमिति तदर्थः । **दीपजन** । 'च्लेः सिच्' इत्यतः च्लेरिति, 'चिण् ते पदः' इत्यस्मात् चिण् ते इति चानुवर्तते, तदाह **एभ्यश्च्लेरिति** । **एकवचन इति** । दीपादीनामात्मनेपदित्वेन तेभ्यस्तशब्दस्य एकवचनत्वनियमादिति भावः । **चिणो लुक्** । चिण इति पञ्चमी, तदाह **चिणः परस्येति** । चिणः परश्च अर्थात् तशब्द एव भवति । चिणभावे च्लेः सिचि रूपमाह अप्यायिष्टेति ।

---

लिटि लिलिहिढ्वे लिलिहिध्वे । **अथ कथमिति** । शानचा भाव्यमिति शङ्कितुराशयः । **क्नूयी शब्दे उन्दे च** । उन्दः क्लेदनम् । **लिड्यङोश्च** । यङि पेपीयते । **दीपजन** । दीपी दीप्तौ, जनी प्रादुर्भावे, बुध अवगमने, पूरी आप्यायने—एते दिवादयः । **चिणो लुक्** । **परस्य लुक् स्यादिति** । तशब्दस्येति कैश्चित्पठ्यते, तदार्थिककार्थकथनम् । तशब्दे परतः चिणि विहिते चिणः परस्य जायमानो लुक् 'प्रत्ययस्य

अप्यायि, अप्यायिष्ट । तायृ ४८९ सन्तानपालनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि अतायिष्ट । शल ४९० चलनसंवरणयोः । वल ४९१ वल्ल ४९२ संवरणे संचरणे च । ववले । ववल्ले । मल ४९३ मल्ल ४९४ धारणे । मेले । ममल्ले । भल ४९५ भल्ल ४९६ परिभाषणहिंसादानेषु । बभले । बभल्ले । कल ४९७ शब्दसंख्यानयोः । कलते । चकले । कल्ल ४९८ अव्यक्ते शब्दे । कल्लते । अशब्दे इति स्वामी, अशब्दस्तूष्णींभाव इति च । तेवृ ४९९ देवृ ५०० देवने । तितेवे । दिदेवे । षेवृ ५०१ गेवृ ५०२ ग्लेवृ ५०३ पेवृ ५०४ मेवृ ५०५ म्लेवृ ५०६ सेवने । 'परिनिविभ्यः—' (सू २२७५) इति षत्वम् । परिषेवते । सिषेवे । अयं सोपदेशोऽपीति न्यासकारादयः । तद् भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे । मेवते । म्लेवते । शेवृ खेवृ क्लेवृ इत्यप्येके । रेवृ ५०७ प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते ।

अथावत्यन्ताः परस्मैपदिनः । मव्य ५०८ बन्धने । ममव्य । सूर्क्ष्य ५०९ ईर्क्ष्य ५१० ईर्ष्य ५११ ईर्ष्यार्थाः । हय ५१२ गतौ । अहयीत् । यान्तत्वान्न

---

तायृ संतानेति । लुङि 'दीपजन—' इति च्लेश्चिणि तलोपे रूपमाह अतायीति । चिणभावे सिचि अतायिष्टेति रूपम् । शल चलनेत्यारभ्य तेवृ इत्यतः प्राग् लान्ताः । तेवृ इत्यारभ्य रेवत्यन्ता वकारान्ताः । षेवृधातोः षोपदेशत्वात्सत्वे सेवत इत्यादि रूपम् । परिषेवत इत्यत्र 'सात्पदाद्योः' इति निषेधे प्राप्ते आह परिनिविभ्य इति । सिषेवे इति । आदेशसकारत्वात् षत्वमिति भावः । अयं सोपदेशोऽपीति । षेवृधातुरित्यर्थः । तद्भाष्यविरुद्धमिति । सेक्सृप्सृस्तृस्तृजस्तृस्त्यानामेव भाष्ये षोपदेशपर्युदासादिति भावः । रेवृ प्लवगताविति । प्लवेति न धात्वन्तरमिति सूचयन्नाह प्लवगतिः प्लुतगतिरिति । अयपयेत्यादिरेवत्यन्ता गताः । अवत्यन्ता इति । अव रक्षणे इत्येतत्पर्यन्ता इत्यर्थः । मव्येत्यारभ्य अल भूषणेत्यतः

---

लुक्श्लुलुपः' इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् । अयमिति । षेवृ धातुः । भाष्यविरुद्धमिति । यदि सोपदेशः स्यात्तदा स्त्यायतिरिवायमपि षोपदेशलक्षणे पर्युदस्येत, तदकरणान्नास्ति सोपदेश इति भावः । प्लव गताविति । केचित् प्लवेति धात्वन्तरमित्याहुस्तद्धि मनोरमायां दूषितम् । प्लवेति धात्वन्तरत्वे 'विभाषाङि रुप्लुवोः' इत्यत्र प्लुवः पक्षे घञ्विधानं व्यर्थं स्यात् । प्लवेत्येतस्माद् घञि आप्लावशब्दस्य सिद्धत्वात् । तथा 'स्रवति शृणोति—' इति सूत्रेण प्लवतेरभ्यासोकारस्येत्वविधानमपि व्यर्थं स्यात् । तद्धि पक्षे अपिप्लवदिति रूपसिद्ध्यर्थं क्रियते, तच्च रूपं प्लवधातोः 'सन्यतः' इत्यनेन सिद्धमिति किं तदुपादानेनेति । ममव्येति । 'यस्य हलः' इति लोपस्तु न भवति, यस्येति संघातग्रहणमिति सिद्धान्तितत्वात् । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक् । लुटि मव्यिता । आशिषि मव्यात् । 'हलो यमाम्—' इति धातुयकारस्य वा लोपः । सूर्क्ष्य ईर्क्ष्य । णलि सुसूर्क्ष्य । ईर्क्ष्याचकार । ईर्ष्याचकार । एभ्यः क्विपि 'लोपो व्योः—' इति लोपे, 'स्कोः—' इति कलोपे जश्त्वचर्त्वयोः सूट् ईट् । संयोगान्तलोपस्त्विह न भवति 'रात्सस्य' इति नियमात् ।

वृद्धिः । शुच्य ५१३ अभिषवे । अवयवानां शिथिलीकरणं सुरायाः सन्धानं वा अभिषवः, स्नानं च । शुशुच्य । चुच्य इत्येके । हर्य ५१४ गतिकान्त्योः । जहर्य । अल ५१५ भूषणपर्याप्तिवारणेषु । अलति । आल । २३३० अतो ल्रान्तस्य । ( ७—२—२ ) ल्र इति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि । 'नेटि' ( सू २२६८ ) इति ।

---

प्राग् यकारान्ताः । अल भूषणेत्यारभ्य खोर्ऋ प्रतीघात इत्यतः प्राग् लकारान्ताः । अतो ल्रान्तस्य । 'सिचि वृद्धिः परस्मैपदेषु' इत्यनुवृत्तम् । 'अङ्गस्य' इत्यधिकृतम् । तद्विशेषणत्वात्तदन्तविधिनैव सिद्धे अन्तग्रहणं व्यर्थम् । तत्राह ल्रेति लुप्तषष्ठीकमिति । ल्र अन्तस्य इति छेदः । ल् च रश्चेति समाहारद्वन्द्वात् षष्ठ्येकवचनं लुप्तम् । ल्रस्यान्तस्येति सामानाधिकरण्येनान्वयः । अत इति व्यधिकरणषष्ठ्यन्तम् अन्तस्येत्यत्रान्वेति । अन्तशब्दः समीपवर्तिवाची । तथा च अतः समीपवर्तिनो ल्रस्येति लभ्यते । ल्रस्येत्यङ्गविशेषणत्वात्तदन्तविधिः, ततश्च अत्समीपवर्तिरेफलकारान्तस्य अङ्गस्य सिचि वृद्धिरिति लभ्यते । अत इत्यावृत्तं वृद्धौ स्थानित्वेनान्वेति, तदाह अतः समीपावित्यादिना । अतः समीप इति किम् ? अखोरीत् । अमीलत् । ल्रान्तस्य इति किम् ? मा भवानतीत् । अतो वृद्धिरित्युक्त्वा अतः समीपावित्यनुक्तौ तु अवभ्रीत् अश्वल्लीदित्यत्रातिव्याप्तिः । अत्र अङ्गस्यान्तौ रेफलकारौ नातः समीपाविति न वृद्धिः नचात्र अतो भकारेण लकारेण च व्यवहितत्वादेव न वृद्धिः । आलीदित्यादौ एकव्यवधाने चरितार्थत्वादिति वाच्यम्,

---

सूर्क्ष्य आदर इति वक्ष्यते, तस्यापि सूर्क्ष्य इत्येव रूपम् । हय गतौ । जहाय । हय्यात् । शिथिलीकरणमिति । सोममभिषुणोतीत्यादौ दर्शनात् सुराया इति । तत्प्रकरणे 'संधानं स्यादभिषवः' इत्यमरोक्तेः । अतो ल्रान्तस्य । यद्यवयववचनेनान्तशब्देन बहुव्रीहिरङ्गं चान्यपदार्थस्तत्पक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम्, अश्वल्लीदित्यत्रातिव्याप्तिश्च । समीपवाचिना अन्तशब्देन षष्ठीसमासपक्षे रपिरणिशल्ल प्रभृतिष्वतिव्याप्तिः, अङ्गस्यातो ल्रोः समीपत्वात् । ल् च तदन्तश्चेति समीपवाचिनान्तशब्देन कर्मधारयपक्षे त्वन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यादत आह लुप्तषष्ठीकमिति । अन्तशब्दः समीपवाचीत्यभिप्रेत्याह अतःसमीपाविति । अतो वृद्धिः स्यादिति । इह अत इत्यस्य तन्त्रावृत्त्यादिकं स्वीकर्तव्यम् । अन्यथा प्रयोजनाभावादिक्परिभाषानुपस्थानेऽप्यलोन्त्यपरिभाषयान्त्यस्य स्यादिति भावः । यद्यपि 'अतो ल्रस्य' इत्युक्तेऽपि ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिरित्यर्थे स्वीकृते 'येन नाव्यवधान—' न्यायेनेष्टं सिध्यति, तथाप्यङ्गस्य सिचि परे अतो वृद्धिरित्यर्थोऽपि प्रतीयेत । ततश्चाश्वल्लीदित्यत्रातिप्रसङ्गः स्यात् । तद्वारणाय सूत्रेऽन्तग्रहणं कृतमिति । तदनुरोधेनान्तशब्दस्य समीपवाचित्वमत इत्यस्य चानुवृत्तिः स्वीकृतेति बोध्यम् । अतः समीपाविति किम्, अखोरीत् । अमीलीत् । ल्रान्तस्याङ्गस्य किम्, श्वल्ल आशुगमने । अश्वल्लीत् । अत्र अकारसमीपो यो लकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः स तु नाकारस्य समीपः । ननु ल्र इत्यस्य लुप्तषष्ठीकत्वाभ्युपगमेऽप्यन्तशब्दस्यावयाव-

निषेधस्य 'अतो हलादेः—' (सू २२८४) इति विकल्पस्य चापवादः। मा भवानालीत्। अयं स्वरितेदित्येके। तन्मते अलते इत्याद्यपि। ञि फला ५१६ विशरणे। 'तृफल—' (सू २३०१) इत्येत्वम्। फेलतुः फेलुः। अफालीत् मील। ५१७ श्मील ५१८ स्मील ५१९ क्ष्मील ५२० निमेषणे। निमेषणं संकोचः। द्वितीयस्तालव्यादिः। तृतीयो दन्त्यादिः। पील ५२१ प्रतिष्टम्भे। प्रतिष्टम्भो रोधनम्। णील ५२२ वर्णे। निनील। शील ५२३ समाधौ। शीलति। कील ५२४ बन्धने। कूल ५२५ आवरणे। शूल ५२६ रुजायां संघोषे च। तूल ५२७निष्कर्षे,तुतूल। पूल ५२८संघाते। मूल५२९प्रतिष्ठायाम्। फल ५३०निष्पत्तौ फेलतुः फेलुः। चुल्ल ५३१ भावकरणे। भावकरणमभिप्रायाविष्कारः। फुल्ल ५३२ विकसने चिल्ल ५३३ शैथिल्ये भावकरणे च। तिल ५३४ गतौ। तेलति। तिल्ल इत्येके। तिल्लति। वेलृ ५३५ चेलृ ५३६ केलृ ४३७ खेलृ ५३८ क्ष्वेलृ ५३९ वेल्ल ५४० चलने। पञ्च ऋदितः। षष्ठो लोपधः। पेलृ ५४१ फेलृ ५४२ शेलृ ५४३ गतौ। षेलृ इत्येके। स्खल ५४४ संचलने। चस्खाल। अस्खालीत्। खल ५४५ सञ्चये। गल ५४६ अदने। गलति। अगालीत् षल ५४७ गतौ। सलति। दल ५४८ विशरणे। श्वल ५४९ श्वल्ल ५५० आशुगमने।

---

सिचि परे यदङ्गं तदकारस्य वृद्धिरित्यर्थाश्रयणे अतिव्याप्तिवारणार्थत्वात्। ञि फलेति। विशरणं शिथिलीभावः। 'आदिर्ञिटुडवः' इति ञिरित्। 'ञीतः क्तः' इति प्रयोजनम्। 'आदितश्च' इति इण्निषेधार्थमादित्त्वम्। लिण्निमित्तादेशादित्वादप्राप्ते आह तृफलेति। मील श्मीलेति। निमेषणं नेत्रसंकोचः। संकोच इति पाठेऽप्ययमेवार्थः। णील वर्ण इति। वर्णक्रियायामित्यर्थः। फल निष्पत्ता-

---

वाचित्वं स्वीकृत्य अङ्गस्यान्तं यद् लृ तस्यातः तत्समीपस्यातो वृद्धिरिति व्याख्याने त्वत इत्यस्यावृत्तिनपिक्षितेति चेत्। अत्राहुः—'हलन्त्यम्' इति सूत्रे मनोरमायां 'सामीप्यं षष्ठ्यर्थः' इति पक्षस्य निराकरणात्तदनुरोधेनात्रात इत्यस्यावृत्तिराश्रितेति। अत्र केचित्— 'अतो ल्रान्तस्य' इत्यत्र लृ ति लुप्तसप्तमीकम्। अथवा 'अतो ल्रान्त' इति व्यस्तमेव सूत्रयितुं शक्यम्। तथा च 'अङ्गस्यान्तं यद् लृ तस्मिन्परेऽव्यवहितस्यातो वृद्धिरिति व्याख्यानसंभवान्न तन्त्रावृत्त्याद्याश्रयणक्लेशः। न चाङ्गस्य विशेष्यत्वेनैवान्वयो युज्यते न तु विशेषणत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषायाः पदमङ्गं च विशेष्यं भवतीत्यभिप्रायवर्णनादिति वाच्यम्, 'अल्लोपोऽनः' इति सूत्रेऽङ्गावयवोऽसर्वनामस्थानेत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात्क्वचिद्विशेषणत्वेऽप्यङ्गस्य न क्षतिरित्याहुः। नेटीत्यादि। यद्यपि पुरस्तादपवादन्यायेन नेटीत्यस्यापवादो न तु विकल्पस्यापि, तथापि वाध्यसामान्यचिन्तायां स्वविषये प्राप्तं सर्वं वाध्यत इति पुरस्तादपवादन्यायोऽत्र न प्रवर्तत इति भावः। मील संकोच इति। नेत्रसंकोचे तु प्रचुरप्रयोगः। तिल गतौ। तिल स्नेहने इति चुरादौ।

शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् । खोलृ ५५१ खोर्ऋ ५५२ गतिप्रतिघाते । खोलति खोरति । धोर्ऋ ५५३ गतिचातुर्ये । धोरति । त्सर ५५३ छद्मगतौ । तत्सार । अत्सारीत् । क्मर ५५५ हूर्च्छने । चक्मार । अभ्र ५५६ वभ्र ५५७ मभ्र ५५८ चर ५५९ गत्यर्थाः । चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत् । अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः । ष्ठिवु ५६० निरसने । 'ष्ठिवुक्लमु–' ( सू २३२० ) इति दीर्घः । ष्ठीवति । अस्य द्वितीयो वर्णस्थकारष्ठकारो वेति वृत्तिः । तिष्ठेव तिष्ठिवतुः तिष्ठिवुः । टिष्ठेव टिष्ठिवतुः टिष्ठिवुः । 'हलि च' (सू ३५४) इति दीर्घः । ष्ठीव्यात् । जि ५६१ जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति । २३३१ सन्लिटोर्जेः । ( ७—३—५७ ) जयतेः सन्लिण्निमित्तो योऽभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय जिग्यतुः जिग्युः । जिगयिथ, जिगेथ । जिगाय, जिगय जिग्यिव

विति । ञि फलेति पूर्वं पठितम् । अनुबन्धभेदात्पुनः पाठः । **खोलृ खोर्ऋ इति** । द्वितीयो रेफान्तः । ऋदित् । इत आरभ्य ष्ठिवेः प्राग् रेफान्ताः । **धोर्ऋ गतिचातुर्य इति** । अश्वगतिविशेष इत्यर्थः । रेफान्तोऽयम् । ऋदित् । **त्सरच्छद्मगताविति** । कपटगताविदर्थः। **क्मर हूर्छन इति** । कुटिलीभवन इत्यर्थः । **ष्ठिवु निरसन इति** । इदुपधः । उदित् । इत आरभ्य ऊष्मान्तेभ्यः प्राग् वकारान्ताः । तिपि शपि लघूपधगुणे प्राप्ते आह **ष्ठिवुक्लमिवतीति** । ल्युटि तु शित्परकत्वाभावाद् दीर्घाभावे लघूपधगुणः । ष्ठीवनमिति तु पृषोदरादित्वात् समाधेयम् । **अस्येति** । ष्ठिवुधातोः द्वितीयो वर्णः थकार इत्यर्थः। कृतष्टुत्वस्य निर्देश इति भावः । षोपदेशोऽयम् । केवलदन्त्यथकारपरकसादित्वात् षोपदेशत्वेऽपि न सत्वम्, 'सुब्धातुष्ठिवु–' इति निषेधात् । लिटि 'शर्पूर्वाः खयः' इति षकारवकारयोर्निवृत्त्या ष्टुत्वनिवृत्तौ रूपमाह **तिष्ठेवेति** । ठकारस्य स्वाभाविकत्वे तु टिष्ठेवेति रूपम् । **जि जय इति** । जिधातुरनिट्कः । **सन्लिटोर्जेः** । 'अभ्यासाच्च' इति सूत्राद् अभ्यासादित्यनुवर्तते । 'चजोः कु घिण्ण्यतोः' इत्यस्मात् कु इति च । सन्लिटोरिति निमित्तसप्तमी अभ्यासे अन्वेति, तदाह **सन्लिण्निमित्तो योऽभ्यास इत्यादि** । सनि लिटि च अभ्यासात् परस्य कुत्वमिति व्याख्याने तु यङ्लुगन्तात् सनि जेजयिषति इत्यत्र कुत्वं स्यात् । अतः सन्लिण्निमित्तो योऽभ्यास इति व्याख्येयमिति माधवः । **जिगायेति** । णलि द्वित्वे वृद्धौ उत्तरखण्डे जस्य कुत्वेन गः । **जिग्यतुरिति** । कित्त्वाद् गुणाभावो लिटि 'एकाच–'इति इण्निषेधं बाधित्वा क्रादिनियमादिटि प्राप्ते, थलि 'अचस्तास्वत्–' इति तन्निषेधस्य भारद्वाजनियमाद्विकल्पः, तदाह **जिगयिथ, जिगेथेति** । जिग्यथुः । जिग्य । 'णलुत्तमो वा' इति मत्वा

दल विशरणे । विशरणमवयवानां विभागः । **धोर्ऋ** । धोरितकश्वानां गतिविशेषः । निष्ठान्तात्संज्ञायां कन् । त्सर छद्मगतौ । छद्मना कपटेन गतिः छद्मगतिः । **क्मर** हूर्छने । हूर्छनं कौटिल्यम् **ष्ठिवु** निरसने । अस्य ल्युटि ष्ठेवनम् । 'ष्ठीवनाऽसृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत्' इत्यत्र पृषोदरादित्वात्पक्षे दीर्घ ईकार इत्याहुः । सन्लि-

जिग्यिम । जेता । जीयात् । अजैषीत् । जीव ५६२ प्राणधारणे । जिजीव । पीव ५६३ मीव ५६४ तीव ५६५ णीव ५६६ स्थौल्ये । पिपीव । मिमीव । तितीव । निनीव । क्षीवु ५६७ क्षेवु ५६८ निरसने । उर्वी ५६९ तुर्वी ५७० थुर्वी ५७१ दुर्वी ५७२ धुर्वी ५७३ हिंसार्थाः । ऊर्वांचकार । 'उपधायां च' ( सू २२६५ ) इति दीर्घः । तुतूर्व । गुर्वी ५७४ उद्यमने । गूर्वति । जुगूर्व । मुर्वी ५७५ पुर्व ५७६ पर्व ५७७ मर्व ५७८ पूरणे । चर्व ५७९ अदने । भर्व ५८० हिंसायाम् । कर्व ५८१ खर्व ५८२ गर्व ५८३ दर्पे । अर्व ५८४ शर्व ५८५ षर्व ५८६ हिंसायाम् । आनर्व । शर्वति । इवि ५८७ व्याप्तौ । इन्वति । इन्वांचकार । पिवि ५८८ मिवि ५८९ णिवि ५९० सेचने । तृतीयो मूर्धन्योष्मादिरित्येके । सेवने इति तरङ्गिण्याम् । पिन्वति । पिपिन्व । हिवि ५९१ दिवि ५९२ धिवि ५९३ जिवि ५९४ प्रीणनार्थाः । हिन्वति । दिन्वति ।

२३३२ **धिन्विकृण्व्योर च** । ( ३—१—८० ) अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शब्विषये । 'अतो लोपः' ( सू १३०८ ) तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति धिनुतः धिन्वन्ति । २३३३

---

आह **जिगाय जिगयेति** । क्रादिनियमादिटं मत्वा आह **जिग्यिव जिग्यिमेति** । **जेतेति** । जेष्यति । जयतु । अजयत । आशीर्लिङि 'अकृत्सार्वधातुकयोः—' इति दीर्घं मत्वा आह **जीयादिति** । **अजैषीदिति** । 'सिचि वृद्धिः—' इति वृद्धिरिति भावः । अजेष्यत् । षर्वधातुः षोपदेशः । इविधातोरिदित्त्वान्नुम्, तदाह **इन्वतीति** । **इन्वांचकारेति** । नुमि इजादिगुरुमत्त्वादामिति भावः । पिविमिवीत्यादय इदितः । **धिन्विकृण्व्योः** । अ इति लुप्तप्रथमाकम् । धिविकृण्व्योः कृतनुमोः धिन्विकृण्वीति निर्देशः । 'तनादिकृञ्भ्य उः' । इत्यत उरिति चकारादनुकृष्यते । 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुक इति च, तदाह **अनयोरित्यादिना** । वकारस्याकारः, धिन् अ उ ति इति स्थितम् । **अतो लोप इति** । युगपत्संनियोगशिष्टतया उप्रत्ययाकारयोर्विधानेऽपि श्रुतक्रमानुरोधेन प्रवृत्त्या आर्धधातुकोपदेशकाले धिन इत्यस्यादन्तत्वमिति भावः । नन्वत्र वकारस्य लोप एव विधीयतां किमकारविधिनेत्यत आह **तस्येति** । वकारस्य लोपविधौ तु अजादेशत्वाभावात् स्थानिवत्त्वं न स्यादिति भावः । तथा च धिनु ति इति स्थिते आह **उप्रत्ययस्येति** । **धिनुत इति** । धिविधातोर्नुमि तसि उप्रत्यये वकारस्य अकारादेशे अतो लोपे तसो ङित्त्वादुकारस्य न गुणः । **धिन्वन्तीति** । धिन्व इत्यस्माद् झिः । झोऽन्तः । उप्रत्ययः । वकारस्य अकारः । अतो लोपः । उकारस्य यणिति भावः । अत्र वकारस्य स्थानिवत्त्वेन आर्धधातुकत्वेऽपि नेट् । उकारवृत्त्यार्धधातुकत्वस्य अल्धर्मत्वेन अनल्विधाविति निषेधात् । तदिदं 'भोभगो—'

---

टोर्जः । **सन्लिण्निमित्त इति** । यदि तु सनि लिटि च परे योऽभ्यास इति प्राचां व्याख्यानमाद्रियेत तदा 'येन नाव्यवधान—' प्रकृतिव्यवधानं सोढव्यमेव परं तु यङ्लुगन्तात्सनि जेययिषतीत्यत्र कुत्वं स्यात्, न च तन्माधवग्रन्थसंमतमिति

**लोपश्चास्यान्यतरस्यां म्वोः।** ( ६—४—१०७ ) असंयोगपूर्वो यः प्रत्ययोकारस्त-दन्तस्याङ्गस्य लोपो वा स्याद् म्वोः परयोः। धिन्वः, धिनुवः धिन्मः, धिनुमः। मिपि तु परत्वाद् गुणः। धिनोमि। **२३३४ उतश्च प्रत्ययादसंयोगपूर्वात्।** ( ६–४–१०६ ) असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात् परस्य हेर्लुक्स्यात्। धिनु। नित्यत्वादुकारलोपा-त्पूर्वमाट्। धिनवाव धिनवाम। जिन्वतीत्यादि। रिवि ५९५ रवि ५९६ धवि ५९७ गत्यर्थाः। रिण्वति। रण्वति। धन्वति। कृवि ५९८ हिंसाकरणयोश्च। चकाराद्गतौ। कृणोति इत्यादि धिनोतिवत्। अयं स्वादौ च। मव ५९९ बन्धने। मवति। मेवतुः मेवुः। अमवीत्, अमावीत्। अव ६०० रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेश-

---

इति सूत्रभाष्ये स्पष्टम्। धिनोषि धिनुथः। धिनुथ। धिनोमि। **लोपश्च।** 'उतश्च प्रत्यया-दसंयोगपूर्वात्' इति पूर्वसूत्रोक्त उकारः अस्येत्यनेन परामृश्यते। प्रत्ययशब्दः प्रत्ययसंबन्धिनि वर्तते। असंयोगपूर्वात् प्रत्ययादिति च उकारे अन्वेति। स च अङ्गस्य विशेषणम्। तदन्त-विधिः। तदाह **असंयोगेति।** **प्रत्ययोकार इति।** प्रत्ययसम्बन्धी उकार इत्यर्थः। प्रत्यय उकार इति व्याख्याने तु सुनुवः सुनुमः इत्यत्र न स्यात, तत्र श्नोरेव प्रत्ययत्वात्। प्रत्यय इति किम्? युवः युमः। 'असंयोगपूर्वात्' इति किम्? शक्नुवः शक्नुमः। **धिन्वः, धिनुव इति।** अत्र उप्रत्ययस्य उकारान्तत्वं व्यपदेशिवत्त्वेन बोध्यम्। नन्वेवं धिनोमीत्यत्र मिपि धिनु मि इति स्थिते उकारस्य लोपः स्यादित्यत आह **मिपि त्विति।** दिधिन्व। धिन्विता। धिन्विष्यति। धिनोतु। **उतश्च।** **हेर्लुक्स्यादिति।** 'चिणो लुक्' इत्यतः 'अतो हे' इत्यतश्च तदनुवृत्तेरिति भावः। लोटो मिपि उप्रत्यये वकारस्य अकारे अतो लोपे धिनु मि इति स्थिते मेर्निभावम् 'आडुत्तमस्य—' इत्याडागमं च बाधित्वा परत्वादुकारस्य 'लोपश्चा-स्यान्यतरस्याम्—' इति लोपमाशङ्क्याह **नित्यत्वादुकारलोपात् पूर्वमाडिति।** निभावस्याप्युपलक्षणम्। उकारलोपे कृते अकृते च निभावस्य आडागमस्य च प्रवृत्त्या नित्यत्वादुकारलोपात्पूर्वमेव निभावाडागमयोः कृतयोः उकारलोपस्याप्रसक्तौ आटः पित्त्वेन ङित्त्वाभावादुकारस्य गुणे अवादेशे च धिनवानीति रूपमिति भावः। अधिनोत्। धिनुयात्। धिन्व्यात्। अधिन्वीत्। अधिन्विष्यत्। **कृणोतीत्यादीति।** धिविवद्रूपाणीति भावः। **अयं स्वादौ**

---

भावः। **धिन्विकृण्व्योर च।** 'अलोऽन्त्यस्य' इति वकारस्याकारादेशः। चकारेण तु उप्रत्ययोऽनुकृष्यते। वोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम्। तन्मते तु चकारं विनाप्युप्रत्यय-लाभः। **अतो लोप इति।** यद्यप्युपदेशेऽदन्तत्वं नास्ति, तथाप्यार्धधातुकोपदेशे तदस्त्येव 'धिन्विकृण्व्योर च' इति श्रुतत्वाद् अकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः। **लोपश्च।** **यः प्रत्ययोकार इति।** असंयोगपूर्वो यः प्रत्यय इति प्रत्ययविशेषणं तु न कृतम्। अक्ष्णुवः अक्ष्णुम इत्यादावनिष्टाभावेऽपि अश्नुवहे इत्यादावतिप्रसङ्गात्। एवम् 'उतश्च—' इति सूत्रेऽपि अक्ष्णुहीत्यत्र दोषभावेऽपि अश्नुहीत्यत्रातिप्रसङ्गः स्यादित्यसंयोगपूर्वेति प्रत्ययविशे-

श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभाववृद्धिषु । अवति । आव । मा भवानवीत् । धावु ६०१ गतिशुद्ध्योः । स्वरितेत् । धावति, धावते । दधाव, दधावे ।

अथोष्मान्ता आत्मनेपदिनः । धुक्ष ६०२ धिक्ष ६०३ सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । धिक्षते । दिधिक्षे । वृक्ष ६०४ वरणे । वृक्षते । ववृक्षे । शिक्ष ६०५ विद्योपादाने । शिक्षते । भिक्ष ६०६ भिक्षायामलाभे लाभे च । भिक्षते । क्लेश ६०७ अव्यक्तायां वाचि । बाधने इति दुर्गः । क्लेशते । चिक्लेशे । दक्ष ६०८ वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे । दीक्ष ६०९ मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ईक्ष ६१० दर्शने । ईक्षांचक्रे । ईष ६११ गतिहिंसादर्शनेषु । ईषांचक्रे । भाष ६१२ व्यक्तायां वाचि । भाषते । वर्ष ६१३ स्नेहने । दन्त्योष्ठ्यादिः । ववर्षे । गेषृ ६१४ अन्विच्छायाम् । ग्लेषृ इत्येके । अन्विच्छा अन्वेषणम् । जिगेषे । पेषृ ६१५ प्रयत्ने । पेषते । जेषृ ६१६ णेषृ ६१७ एषृ ६१८ प्रेषृ ६१९ गतौ । जेषते । नेषते । एषांचक्रे । पिप्रेषे । रेषृ ६२० हेषृ ६२१ ह्रेषृ ६२२ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वौ अश्वशब्दे । रेषते । हेषते । ह्रेषते । कासृ ६२३ शब्दकुत्सायाम् । कासांचक्रे । भासृ ६२४ दीप्तौ । बभासे । णासृ ६२५ रासृ ६२६ शब्दे । नासते ।

---

चेति । कृविरित्यर्थः । अव रक्षणेति । स्वाम्यर्थ ऐश्वर्यम् । मा भवानवीदिति । 'नेटि' इति न वृद्धिः । मव्यादयोऽवत्यन्ताः परस्मैपदिनो गताः धावु गतीति । उदिदयम् । स्वरितेदिति । ततश्च कर्तृगामिनि फले आत्मनेपदम् । अन्यथा परस्मैपदमिति भावः । अथोष्मान्ता इति । तत्र धुक्षेत्यारभ्य कासृ धातोः प्राक् षकारान्ताः । तत्र क्लेशधातुरेकः शकारान्तः । दीक्ष मौण्ड्येति ।

---

षणं न कृतमित्याहुः । अश्नुहीति परस्मैपदं यद्यपि लोके दुर्लभम्, तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम् । आप्नुहीति पाठस्तूचितः । कृवि । अयमिति । कृणोतीत्यादिरित्यर्थः । स्वादौ हि कृवीत्ययं धातुर्न पठ्यते, किंतु कृञ् हिंसायामिति । तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोऽर्थः । अव रक्षणे । एकोनविंशतिरर्थाः । कान्तिः शोभा । दीप्तिस्तेज इत्याहुः । तृप्तिरिच्छानाशः । स्वाम्यर्थः स्वामित्वम् । हिंसा-हननम् । आदानं ग्रहणम् । न चात्र दानमेवार्थोऽस्त्विति वाच्यम्, 'भागे वृद्धौ ग्रहे वधे' इत्येवमर्थानां विशिष्य वोपदेवेन गणितत्वात् । भिक्ष । याच्ञालाभालाभास्त्रयोऽर्थाः । स्वामी तु 'क्लेशेऽव्यक्तायां वाचि च' इति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते । क्लिश उपताप इति दिवादौ । क्लिशू विबाधन इति क्र्यादौ । दीक्ष । पञ्चार्थाः । ईष । गति– । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । ईषा, मनस ईषा मनीषा । शकन्ध्वादिः । मनीषामभिनिविष्टं मनीषितम् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि तदन्तात् क्तः । इष उञ्छे इति तु परस्मैपदिषु । ह्रस्वादयस्त्रयः । इष गतौ दिवादिः । इष इच्छायां तुदादिः । इष आभीक्ष्ण्ये क्र्यादिः कासांचक्र इति । 'कास्प्रत्ययात्–' इत्याम् । भासृ

प्रणासते । णस ६२७ कौटिल्ये । नसते । भ्यस ६२८ भये । भ्यसते । बभ्यसे । आङःशसि ६२९ इच्छायाम् । आशंसते । आशशंसे । ग्रसु ६३० ग्लसु ६३१ अदने । जग्रसे जग्लसे । ईह ६३२ चेष्टायाम् । ईहांचक्रे । वहि ६३३ महि ६३४ वृद्धौ । वंहते । ववंहे । मंहते । अहि ६३५ गतौ । अंहते । आनंहे । गर्ह ६३६ गल्ह ६३७ कुत्सायाम् । जगर्हे । वर्ह ६३८ वल्ह ६३९ प्राधान्ये । ओष्ठ्यादी । वर्ह ६४० वल्ह ६४१ परिभाषणहिंसाच्छादनेषु । दन्त्योष्ठ्यादी । केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितामनयोरोष्ठ्यादितां चाहुः । प्लिह६४२गतौ । पिप्लिहे । वेहृ । ६४३ जेहृ ६४४ वाहृ ६४५ प्रयत्ने । आद्यो दन्त्योष्ठ्यादिः । अन्त्यः केवलोष्ठ्यादिः । उभावप्योष्ठ्यादी इत्येके दन्त्योष्ठ्यादी इत्यपरे । जेहतिर्गत्यर्थोऽपि । ववाहे । द्राहृ ६४६ निद्राक्षये । निक्षेपे इत्येके। काशृ ६४७ दीप्तौ । चकाशे । ऊह ६४८ वितर्के । ऊहांचक्रे । गाहू ६४९ विलोडने । गाहते । जगाहे । जगाहिषे, जघाक्षे । जगाहिढ्वे, जगाहिध्वे, जघाढ्वे ।

---

पञ्चार्याः णोपधानुर्णोपदेशः । कासधातुमारभ्य ईहधातोः प्राक् सकारान्ताः । कासांचक्र इति । कास्प्रत्ययादित्याम् । णासधातुर्णसधातुश्च णोपदेशः । आङः शसीति । आङः परः शसिधातुरिच्छायामित्यर्थः । ईहेत्यारभ्य काशृधातुवर्जं घुषि कान्तीत्यतः प्राग् हकारान्ताः । काशृधातुस्तु शकारान्तः । प्लिहधातुरिदुपधः । ऊह वितर्क इति । युक्त्या अर्थनिर्णयो वितर्कः । 'अनुक्तमप्यूहति पण्डितो जनः' इत्यत्र तु अनुदात्तेत्त्वलक्षणात्मनेपदमनित्यमिति बोध्यम् । गाहूधातुरूदित्त्वाद्वेट्, तदाह जगाहिषे,जघाक्षे इति। इडभावे जगाह् से इति स्थिते 'हो ढः', 'एकाचः—' इति भष्भावेन गस्य घः, 'षढोः—' इति ढस्य कः, सस्य षः । जगाहिढ्वे जगाहिध्व इति । इट्पक्षे 'विभाषेटः' इति ढत्वविकल्पः । इडभावे त्वाह जघाढ्व इति । जगाह् ध्वे इति स्थिते हस्य ढः, धस्य ष्टुत्वेन ढः, गस्य भष् घकारः,

---

दीप्तौ । अस्य ऋदित्त्वं भ्राजतेरिव तङ्मात्रफलकम् । 'भ्राजभास—' इत्यादिनोपधाह्रस्वस्य विकल्पितत्वात् । णस । कौटिल्ये । लिण्निमित्तादेशादित्वाभावादेत्वम् । नेसे । आङ शसि । शंसु स्तुताविति तु परस्मैपदिषु वक्ष्यते । ग्रसु ग्लसु । 'उदितो वा' इति क्त्वायां वेट् । ग्रसित्वा । ग्रस्त्वा । 'यस्य विभाषा' इति नेट् । ग्रस्तः । वेहृ जेहृ बाहृ । आद्य इति । वेहतेरति प्रत्यये वेहत्शब्दो निपातितः । 'पोटायुवति—' इति सूत्रे इति भावः । वेहद्गर्भोपघातिनी । अन्त्य इति । बाहुशब्दस्य भुजपर्यायस्य 'क्षुब्धस्वान्तध्वान्त—' इति निपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः । दन्त्योष्ठ्यादी इति । उभावपीत्यनुपपज्यते । अनुदात्तेत्त्वकृतमात्मनेपदमनित्यम् । तेन 'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः' इति सिद्धम् । न चात्रार्थसंगतिः । धातूनामनेकार्थत्वात्प्रस्रवणार्थकत्वे बाधकाभावादित्याहुः । ऊह । कथं तर्हि 'अनुक्तमप्यूहति पण्डितो जनः' इति । अत्राहुः—अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्न दोष इति । गाहू । ऊदित्वादिड् वा । इडभावे द्वित्वम् । 'एकाचः—' इति भष्भावः । 'षढोः कः सि' इति कः । कात्परस्य षत्वम् । जघाक्षे । 'विभाषेटः' इति

गाहिता । २३३५ ढो ढे लोपः । (८-३-१३) ढस्य लोपः स्याद् ढे परे । गाढा । गाहिष्यते, घाक्ष्यते । गाहिषीष्ट, घाक्षीष्ट । अगाहिष्ट, अगाढ अघाक्षाताम् अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । गृहू ६५० ग्रहणे । गर्हते । जगृहे । 'ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन' (वा ५६३) जगृहिषे जघृक्षे । जघृढ्वे । गर्हिता, गर्ढा । गर्हिष्यते, घर्क्ष्यते । गर्हिषीष्ट, घृक्षीष्ट । लुङि अगर्हिष्ट । इडभावे । २३३६ शल इगुपधादनिटः क्सः ।

---

पूर्वस्य ढस्य 'ढो ढे लोपः' इति वक्ष्यमाणो लोपः । ढ्रलोपसूत्रं त्विहैव पठितुं युक्तम् । गाहितेति । इट्पक्षे रूपम् । इडभावे तु गाह् ता इति स्थिते हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वे, ष्टुत्वेन धस्य ढत्वे, गाढ् ढा इति स्थिते । ढो ढे । 'ढः' इति षष्ठ्यन्तम् । तदाह ढस्येति । ढकारस्येत्यर्थः । इति पूर्वस्य ढकारस्य लोपे गाढा इति रूपम् । ढलोपे ष्टुत्वस्यासिद्धत्वं तु न, तथा सति ढलोपविधिवैयर्थ्यात् । घाक्ष्यत इति । इडभावे हस्य ढस्य कः, सस्य ष इति भावः । घाक्षीष्टेति । आशीर्लिङि सीयुटि इडभावपक्षे हस्य ढः, गस्य भष् घकारः, ढस्य कः, सस्य ष इति भावः । अगाहिष्टेति । सिच इट्, सस्य षः, तकारस्य ष्टुत्वेन टः । इडभावे त्वाह अगाढेति । अगाह् स् त इति स्थिते सिच इडभावे 'झलो झलि' इति लोपः । ढत्वधत्वष्टुत्वढलोपाः । सलोपात्पूर्वं भष्भावस्तु न, भष्भावस्यासिद्धतया 'झलो झलि' इति सलोपस्य पूर्वं प्रवृत्तेः । न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सकारपरकत्वाद् भष् दुर्वार इति शङ्क्यम्, वर्णाश्रये प्रत्ययलक्षणाभावादिति भावः । अघाक्षातामिति । इडभावपक्षे ढघकाषाः । अघाक्षतेति । पूर्ववत् । अगाढा इति । थास्, सिच्, इडभावे सलोपः ढत्वधत्वष्टुत्वलोपाः अघाढ्वमिति । ध्वमि इडभावपक्षे सलोपः । ढत्वधत्वष्टुत्वढलोपाः । ध्वममाश्रित्य ढलोपात्पूर्वं भष्भावः । अघाक्षीति । इडभावे हस्य ढः, भष्भावः, कः, सस्य षत्वमिति भावः । अघाक्ष्वहि । अगाहिष्यत, अघाक्ष्यत । गृहूधातुरूदित् ऋदुपधः । गर्हत इति । लटस्तिपि शपि लघूपधगुणे रपरत्वम् । जगृह इति । 'असंयोगात्–' इति कित्त्वाद्गुणाभावः । न च कित्त्वात् परत्वाद्गुणः शङ्क्यः, 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' इति वार्तिकादिति भावः । ऊदित्त्वादिड्विकल्पं मत्वा आह जगृहिषे, जघृक्ष इति । अभ्यासे उरदत्वम्, 'हलादिः शेषः' जश्त्वम्, इट्, षत्वम् । इडभावे तु ढत्वभष्भावकत्वषत्वानि । ध्वमि जगृहिध्वे इति सिद्धवत्कृत्य इडभावे आह जघृढ्व इति । हस्य ढः भष्भावष्टुत्वढलोपाः ।

---

वा मूर्धन्यः । जगाहिढ्वे, जगाहिध्वे । इडभावे तु भष् भावः । ढो ढे लोपः । जघाढ्वे । ढे किम्, ऊढः । इह पूर्वं ढलोपो माभूत् । कृते तु ढग्रहणे 'ष्टुना ष्टुः' इत्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः । अगाढेति । 'झलो झलि' इति सलोपः । ढत्वधत्वष्टुत्वढलोपाः । सिचो लोपात्पूर्वं भष्भावस्तु न, असिद्धत्वात् । भष्भावस्तु सिज्लोपानन्तरमपि न भवति सकारपरत्वाभावात् । न च कृतेऽपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्क्यम्, वर्णाश्रये प्रत्ययलक्षणा-

( ३—१—४५ ) इगुपधो यः शलन्तस्तस्मादनिटः च्लेः क्सादेशः स्यात् । अघृक्षत । २३३७ क्सस्याचि । ( ७—३—७२ ) अजादौ तङि क्सस्य लोपः स्यात् । 'अलोऽन्त्यस्य' ( सू ४२ ) अघृक्षाताम् अघृक्षन्त । ग्लह ६५१ च । ग्लहते । घुषि ६५२ कान्तिकरणे । घुंषते । जुघुंषे । केचिद् घष इत्यदुपधं पठन्ति ।

अथार्हत्यन्ताः परस्मैपदिनः । घुषिर् ६५३ अविशब्दने । विशब्दनं प्रति-

---

गर्ढेति । इडभावे गुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपः । घर्क्ष्यत इति । गुणः, रपरत्वम् हस्य ढः, भष्भावे ढस्य कः षत्वम् । घृक्षीष्टेति । आशीर्लिङः सीयुटि इड्भावे 'लिङ्सिचौ—' इति कित्त्वाद्गुणाभावे, हस्य ढः, भष्भावः, ढस्य कः, षत्वम् । अगर्हिष्टेति । सिच इटि गुणे रपरत्वे षत्वे रूपम् । शल इगुपधा । शलन्त इति । 'धातोरेकाचः—' इत्यतोऽनुवृत्तधातु-विशेषणत्वात्तदन्तविधिरिति भावः । सिचोऽपवादः क्सादेशः अदन्तः । ककार इत् । अघृक्ष-तेति । च्लेः क्सः । तस्य कित्त्वादृकारस्य न गुणः । हस्य ढः, भष्भावः, ढस्य कः, षत्वमिति भावः । अघृक्ष आताम् इति स्थिते 'आतो ङितः' इति इयादेशे प्राप्ते क्सस्य । अचीत्य-स्याङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः । 'घोर्लोपो लेटि वा' इत्यतो लोप इत्यनुवर्तते । तदाह अजादावित्यादिना । अलोऽन्त्यस्येति । अन्त्यस्याकारस्य लोप इति भावः । वस्तुतस्तु 'लुग्वा दुहदिह—' इत्युत्तरसूत्रादात्मनेपदे इत्ययपकृष्य तद्विशेषणत्वादचीति तदादि-विधिः । तेन दृशेः क्सप्रत्यये तादृक्षा इत्यादौ नायं लोपः । अजादौ तङीत्येव क्वचित्पाठो दृश्यते । अघृक्षातामिति । अघृक्ष आताम् इति स्थिते क्साकारस्य लोपे अतः परत्वाभावाद् 'अतो ङितः' इति इय नेति भावः । अघृक्षन्तेति । झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अकारलोपाभावादतः परत्वाद् 'आत्मनेपदेष्वनतः' इत्यादेशो न । कृते तु झोऽन्तादेशे क्सस्या-कारलोपः पररूपं वा । ग्लहे चेति । ग्लहधातुरपि ग्रहणे वर्तत इत्यर्थः । अदुपधोऽयम् । घुषि कान्तीति । उदुपधोऽयम् । इदित्वान्नुम् । 'नश्च—' इत्यनुस्वारः । यय्परकत्वाभावान्न परसवर्णः । तदाह घुंषत इति । सेट्कोऽयम् । अदुपधपक्षे तु घषते । जघषे । ऊष्मान्ता आत्मनेपदिनो गताः ।

अथार्हत्यन्ताः परस्मैपदिन इति । ऊष्मान्ता इति शेषः । तत्र तुस

---

भावात् । अन्यथा । गवे हितं गोहितमित्यत्रावादेशः स्यादिति दिक् । जगृह इति । कित्वा-त्परत्वात् 'पुगन्त—' इति गुणे प्राप्ते 'ऋदुपधेभ्यः—'इति वार्तिकात्कित्त्वे गुणाभावः । शल इगु-पधा । शल इति धातोर्विशेषणात्तदन्तलाभः । शल इति किम्, अतिप्त । इगिति किम्, अगाढ । अनिटः किम्, औहिष्ट । क्सस्याचि । अजादाविति । अङ्गाक्षिप्तप्रत्ययोऽत्र विशेष्यः । तङीति तु केषांचित्प्रक्षेपस्तस्य काशिकादावनुक्तत्वादित्याहुः । अन्ये तु 'लुग्वा दुह—' इत्यत आत्मनेपद इत्यपकर्षणात्तङीति न लभ्यते । तेन 'दृशेः क्सः' इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न भवति सदृक्षा अन्यादृक्षा इत्यत्रेत्याहुः । घुषि । कान्तिकरणे । लुङि अघुंषिष्ट अघुंषिषाताम् । अदुपधपाठे

ज्ञानम्, ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता इरित्वादङ् वा अघुषत् । अघोषीत् । अक्षू ६५४ व्याप्तौ । २३३८ अक्षोऽन्यतरस्याम् ( ३-१-७५ ) अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति अक्ष्णुतः अक्ष्णुवन्ति । अक्षति अक्षतः अक्षन्ति । आनक्ष । आनक्षिथ, आनष्ठ । अक्षिता, अष्टा । अक्षिष्यति । 'स्कोः–' ( सू ३८० ) इति कलोपः । 'षढोः कः सि' ( सू २९५ ) अक्ष्यति अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयुः अक्ष्यात् ऊदित्त्वाद्वेट् । 'नेटि' ( सू २२६८ ) । भवानक्षीत् अक्षिष्टाम् अक्षिषुः । इडभावे तु म

---

हसेत्यतः प्राक् पान्ताः । घुषिरिति । इर् इत् । प्रतिज्ञानमिति । वेदाः प्रमाणमित्याद्यभ्युपगम इत्यर्थः । ततोऽन्यस्मिन्निति । विशब्दनाद् अन्यद् अविशब्दनम्, तस्मिन्नित्यर्थः इरित्त्वादङ् वेति । 'इरितो वा' इत्यनेनेति शेषः । अघुषदिति । अङो ङित्त्वान्न लघूपधगुणः । अघोषीदिति । अङभावपक्षे लघूपधगुणे 'इट ईटि' इति सिज्लोपः । हलन्तलक्षणवृद्धेः 'नेति' इति निषेधः । अक्षूधातुः ऊदित्त्वाद्वेट्कः । अक्षोऽन्यतरस्याम् । वक्ष इति पञ्चमी । 'स्वादिभ्यः श्नुः' इत्यतः श्नुरिति, 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते, तदाह अक्षो वेति । श्नुप्रत्ययस्य शित्त्वं सार्वधातुकत्वार्थम् । तत्फलं तु 'स्वादिभ्यः श्नुः' वक्ष्यते । अक्ष्णोतीति । तिपि श्नुः तस्य पित्त्वेन ङित्त्वाभावात् 'सार्वधातुक–' इति गुणः, णत्वम् । अक्ष्णुत इति । तसः अपित्त्वेन ङित्त्वात् श्नोर्न गुणः । अक्ष्णुवन्तीति । ङित्त्वाद्गुणाभाव उवङ् । अक्ष्णोषि अक्ष्णुथः अक्ष्णुथ । अक्ष्णोमि अक्ष्णुवः अक्ष्णुम । अक्षतीति । शप्पक्षे रूपम् । आनक्षेति । णलि द्विहल्त्वान्नुट् । आनक्षतुः आनक्षुः । ऊदित्त्वादिट्पक्षे आह आनक्षिथेति । इडभावे आह आनष्ठेति । आनक्ष् थ इति स्थिते 'स्कोः–' इति कलोपः । थस्य ष्टुत्वेन ठः । अष्टेति । लुटि तासि इडभावपक्षे 'स्कोः–' इति कलोपे तकारस्य ष्टुत्वेन टः । अक्ष् स्य तीति स्थिते, प्रक्रियां दर्शयति स्कोरिति कलोपः, षढोः कः सीति । कात्परत्वात् सस्य षत्वं च अक्ष्णोत्विति । अक्ष्णोतु, अक्ष्णुतात् अक्ष्णुताम् अक्ष्णुवन्तु । अक्ष्णुहीति । संयोगपूर्वत्वाद् 'उतश्च–' इति हेर्लुग् न । हेरपित्त्वेन ङित्त्वात् श्नोर्न गुणः । अक्ष्णुतात् अक्ष्णुतम् अक्ष्णुत । अक्ष्णवानीति । आटः पित्त्वेन ङित्त्वाभावान्न गुणनिषेधः । गुणे अवादेशः । अक्ष्णवाव अक्ष्णवाम । शपि तु अक्षत्वित्यादि । आक्ष्णोदिति । लङि तिप् श्नोर्गुणः आट् वृद्धिः । आक्ष्णुताम् आक्ष्णुवन् । आक्ष्णोः आक्ष्णुतम् । आक्ष्णुत । आक्ष्णवमिति । मिपः अम्, श्नोर्गुणः, अवादेशः । आक्ष्णुव आक्ष्णुम । अक्ष्णुयादिति । विधिलिङि यासुटो ङित्त्वात् श्नोर्न गुणः । अक्ष्णुयुरिति । 'लिङः सलोपः—' इति सलोपे 'उस्यपदान्तात्' इति पररूपमिति भावः । अक्ष्णुयाः अक्ष्णुयातम् अक्ष्णुयात । अक्ष्णुयाम् अक्ष्णुयाव अक्ष्णुयाम । शप्पक्षे अक्षेदित्यादि । अक्ष्यादिति । आशीर्लिङि आर्धधातुकत्वान्न श्नुः, नापि शप् । लुङि सिचि विशेषमाह ऊदि-

भवानाक्षीत् आष्टाम् आक्षुः । तक्षू ६५५ त्वक्षू ६५६ तनूकरणे । २३३६
**तनूकरणे तक्षः ।** ( ३-१-७६ ) श्नुः स्याद्वा शब्विषये । तक्ष्णोति, तक्षति वा काष्ठम् । ततक्षिथ, ततष्ठ । अतक्षीत् अतक्षिष्टाम् । अताक्षीत् अताष्टाम् । 'तनूकरणे' किम्—वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः । उक्ष ६५७ सेचने । उक्षांचकार । रक्ष ६५८ पालने । णिक्ष ६५९ चुम्बने । प्रणिक्षति । त्रक्ष ६६० ष्ट्रक्ष ६६१ णक्ष ६६२ गतौ । त्रक्षति । स्त्रक्षति । नक्षति । वक्ष ६६३ रोषे ।

---

**स्वाद्वेडिति** । तत्र इट्पक्षे आह **नेटीति** । हलन्तलक्षणा वृद्धिर्नेत्यर्थः । नच अभैत्सीदित्यादावेकेन हला व्यवधाने हलन्तलक्षणवृद्धेश्चरितार्थत्वादत्र न तत्प्रसक्तिरिति शङ्क्यम्, रञ्जेः अराङ्क्षीदित्यत्र वृद्धिसिद्धये अनेकाल्व्यवधानेऽपि हलन्तलक्षणवृद्धिप्रवृत्तेर्भाष्यादौ प्रपञ्चितत्वादिति भावः । **मा भवानक्षीदिति** । आटि सति हलन्तलक्षणवृद्धौ सत्यामसत्यां च रूपे भेदाभावाद् मा भवानित्युपात्तम् । **अक्षिष्टाम्** । **अक्षिषुरिति** । अत्रापि मा इति संबध्यते । **इडभावे त्विति** । लुङस्तिपि अक्ष स् ईदिति स्थिते इडभावाद् 'नेटि' इति निषेधाप्रसक्त्या हलन्तलक्षणवृद्धौ 'स्कोः—' इति कलोपे 'षढोः—' इति कत्वे षत्वमिति भावः । अत्र 'नेटि' इति निषेधाभावेन हलन्तलक्षणवृद्धिर्निर्बाधेति स्पष्टयितुमेव 'मा भवान्' इत्यत्राप्युपात्तमिति बोध्यम् । **आष्टामिति** । अक्ष स् ताम् इति स्थिते हलन्तलक्षणवृद्धौ 'झलो झलि' इति सिज्लोपे 'स्कोः—' इति कलोपे तकारस्य ष्टुत्वम् **आक्षुरिति** । अक्ष् स् उस् इति स्थिते हलन्तलक्षणवृद्धौ 'स्कोः—' इति कलोपे षस्य कत्वे सस्य षत्वमिति भावः । आक्षीः आष्टम् आष्ट । आक्षम् आक्ष्व आक्ष्म । आक्षिष्यत्, आक्ष्यत् आक्ष्यताम् आक्ष्यन् । आक्ष्यः आक्ष्यतम् आक्ष्यत । आक्ष्यम् आक्ष्याव आक्ष्याम । **तक्षू त्वक्षू इति** । स्थूलस्य काष्ठादेः कतिपयावयवापनयनेन सूक्ष्मीकरणं तनूकरणम् । तनूकरणे । शेषपूरणेन सूत्रं व्याचष्टे **श्नुःस्याद्वा शब्विषय इति** । 'स्वादिभ्यः श्नुः' इत्यतः श्नुरिति, 'कर्तरि शप्' इत्यतः कर्तरीति, 'सार्वधातुके यक्' इत्यतः सार्वधातुके इति चानुवर्तते । तनूकरणेऽर्थे विद्यमानात् तक्षधातोः श्नुः स्यात्कर्त्रर्थे सार्वधातुके इति फलितम् । नच तक्षूधातोस्तनूकरणार्थकत्वव्यभिचारात् श्नुविधौ तनूकरणग्रहणं व्यर्थमिति वाच्यम्, अत एव धातुपाठे अर्थनिर्देशस्य उपलक्षणत्वावगमात् । **तक्ष्णोतीत्यादि** । अक्षूवद्रूपाणि । लुङि सिचि इट्पक्षे 'नेटि' इति वृद्धिनिषेधे अतक्षीदिति, इडभावे तु अताक्षीदिति च रूपम् अक्षूवत् । एवं त्वक्षूधातुरपि । णिक्षधातुर्णोपदेशः । **प्रणिक्षतीति** । 'उपसर्गादसमासेऽपि—' इति णत्वम् । **त्रक्ष ष्ट्रक्ष णक्ष गताविति** । त्रयोऽप्यकारमध्याः,

---

तु अचापीत, अवपीत । **अतक्षीदिति** । 'नेटि' इति वृद्धिनिषेधः । इडभावे तु अताक्षीत् । **प्रणिक्षतीति** । 'उपसर्गादसमासेऽपि—' इति नित्यं णत्वम् । 'वा निंसनिक्षनिन्दाम्' इति तु कृद्विषयम् । 'ण्वुल् तृचौ', प्रणिक्षकः । प्रनिक्षकः । प्रणिक्षिता । प्रनिक्षिता । **अवज्ञेत्यादि** । सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः । यदि तु सूर्क्षणमनादरः इत्युच्येत तर्हि असूर्क्षणमवज्ञापर्यायो न स्यादिति भावः । **काङ्क्षि** ।

सङ्घाते इत्येके । मृक्ष ६६४ सङ्घाते । म्रक्ष इत्येके । तक्ष ६६५ त्वचने । त्वचनं संवरणं त्वचो ग्रहणं च । पक्ष परिग्रहे इत्येके । सूर्क्ष ६६६ आदरे । सुसूर्क्ष । अनादरे इति तु क्वाचित्कोऽपपाठः । 'अवज्ञावहेलनमसूर्क्षणम्' इत्यमरः । काक्षि ६६७ वाक्षि ६६८ माक्षि ६६९ काङ्क्षायाम् । द्राक्षि ६७० ध्राक्षि ६७१ ध्वाक्षि ६७२ घोरवाशिते च । चूष ६७३ पाने । चुचूष । तूष ६७४ तुष्टौ । पूष ६७५ वृद्धौ । मूष ६७६ स्तेये । लूष ६७७ रूष ६७८ भूषायाम् । शूष ६७९ प्रसवे । प्रसवोऽभ्यनुज्ञानम् । तालव्योष्मादिः । यूष ६८० हिंसायाम् । जूष ६८१ च । भूष ६८२ अलङ्कारे । भूषति । ऊष ६८३ रुजायाम् । ऊषांचकार ईष ६८४ उञ्छे । कष ६८५ खष ६८६ शिष ६८७ जष ६८८ झष ६८९ शष ६९० वष ६९१ मष ६९२ रुष ६९३ रिष ६९४ हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्त्योष्ठ्यादिः । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः अशिक्षत् । अशेक्ष्यत् । जेषतुः, जझषतुः । शेषतुः । ववषतुः । मेषतुः । २३४० तीषसहलुभरुषरिषः । ( ७—२—४८ ) इच्छत्यादेः परस्य

---

द्वितीयः षोपदेशः, तदाह म्रक्षतीति । षस्य सत्वे ष्टुत्वनिवृत्तिरिति भावः । णक्षधातुर्णोपदेशः । सिचि 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः । वक्ष रोष इति । दन्त्योष्ठ्यादिः । म्रक्षधातुरकारमध्यः त्वचनशब्दस्य विवरणं संवरणमिति । सूर्क्षधातुः रेफमध्यः । अपपाठत्वे हेतुमाह अवज्ञेति । सूर्क्षधातोरनादरार्थकत्वे असूर्क्षणमित्यस्य आदरार्थकत्वापत्त्या अमरकोशे अवज्ञापर्यायत्वावगमविरोध इति भावः । घोरवाशिते चेति । चात् काङ्क्षायामपि । घोरवाशितं क्रूरशब्दः । चूषेत्यारभ्य ऊष रुजायामिति यावदूदुपधाः । ईष उञ्छ इति । ईदुपधः । कषेत्यारभ्य दश धातवः । तत्र तृतीयो दशमश्च इदुपधः । शिषधातुरनिट्कः । क्रादिनियमात्थलि वसि मसि च नित्यमिट्, अजन्ताकारवत्त्वाभावेन थलि वेट्कत्वाभावात् । शिशेषिथ । शिशिषिव शिशिषिम । अशिक्षदिति । 'शल इगुपधात्—' इति च्लेः क्सादेशे कित्त्वाल्लघूपधगुणनिषेधे षस्य कत्वे सस्य षत्वमिति भावः । ववषतुरिति । 'न शसदद—' इति निषेधादेत्त्वाभ्यासलोपौ न । रुषधातुः सेट्कः । रोषति । रुरोष रुरुषतुः रुरुषुः । रुरोषिथः रुरुषथुः रुरुष । रुरोष रुरुषिव रुरुषिम । तीषसह । 'आर्धधातुकस्य—' इत्यत इडित्यनुवर्तते । 'स्वरतिसूति—' इत्यतो वेति च । तीति सप्तम्युपादानात्तदादिविधिः । इष सह लुभ रुष रिष एषां द्वन्द्वात्पञ्चम्येकवचनम्, तदाह इच्छत्यादेरिति । इच्छतीति इषेः श्तिपा निर्देशः ।

---

काङ्क्षा इच्छा । द्राक्षि ध्राक्षि ध्वाक्षि । घोरवासितं घोरशब्दः । वास्ट शब्दे । ध्वाङ्क्षतीति । ध्वाङ्क्षः काकः । द्राक्षि । धातोः 'गुरोश्च हलः' इति अप्रत्यये द्राक्षा । यवादिगणे निपातनान्नलोपः । द्राक्षामान् । इह मतोर्वत्वं तु न भवति, 'अयवादिभ्यः' इत्युक्तेः । तूष तुष्टौ । दिवादौ तु ह्रस्वोपधः । मूष स्तेये । संज्ञायां क्वुनि मूषकः क्र्यादौ तु ह्रस्वोपधोऽयम् । भूष अलंकारे । अयं चुरादावपि । ईष उञ्छे । 'गुरोश्च हलः' इत्यप्रत्यये ईषा लाङ्गलदण्डः । कष खष षान्तौ । शिषेत्ययमप्यनिट्को न

तादेरार्धधातुकस्येड्वा स्यात्। रोपिता, रोष्टा। रोपिष्यति। रेपिता, रेष्टा। रेपिष्यति। भष ६९५ भर्त्सने,इह भर्त्सनं श्वरवः। भषति। बभाष। उष६९३ दाहे। ओषति। २१४१ **उषविदजागृभ्योऽन्यतरस्याम्।** ( ३—१—३८ ) एभ्यो लिट्याम्वा स्यात्। ओषांचकार। उवोष। ऊषतुः। उवोषिथ। जिषु ६९७ विषु ६९८ मिषु ६९९ सेचने। जिजेष। क्रादिनियमादिट्। विवेषिथ, विविषिथ। वेष्टा। वेक्ष्यति अविक्षत्। पुष ७०० पुष्टौ। पोषति। पोषिता। पोषिष्यति। अपोषीत्। अनिट्केषु पुष्य इति श्यना निर्देशादयं सेट्, अतो न क्सः। अङ्विधौ दैवादिकस्य ग्रहणान्नाङ्। श्रिषु ७०१ श्लिषु ७०२ प्रुषु ७०३ प्लुषु ७०४ दाहे। श्रेषति। शिश्रेषिता। श्लेषति। शिश्लेष। श्लेषिता अयमपि सेट्। अनिट्सु दैवादिकस्यैव ग्रहणम् इति कैयटादयः। यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तं तत्स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्चो-

---

इषधातुर्विवक्षितः। इषु इच्छायां तुदादिः शविकरणः। इष गतौ दिवादिः श्यन्विकरणः। इष आभीक्ष्ण्ये क्र्यादिः श्नाविकरणः। तत्र 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वार्तिकात् श्यन्विकरणस्य न ग्रहणम्। **रोपिता, रोष्टेति।** इडभावे ष्टुत्वेन तकारस्य टकारः। रिषेस्तादाविड्विकल्पं मत्वा आह **रेपिता रेष्टेति।** **उष दाह इति।** सेट्कोऽयम्। उख-धातुवद् रूपाणि। **उषविद।** 'कास्प्रत्ययात्—' इत्यत आम् लिटीत्यनुवर्तते, तदाह **एभ्यो लिटीति।** आमभावपक्षे आह **उवोषेति।** 'अभ्यासस्यासवर्णे' इति उवङादेशः। **जिषु विषु मिषु सेचन इति।** द्वितीयो दन्त्योष्ठ्यादिः। थलि वसि मसि च विशेषमाह **क्रादिनियमा-दिडिति।** **विवेषिथेति।** अजन्ताकारवत्त्वाभावेन भारद्वाजनियमाप्रवृत्तेस्थल्यपि क्रादिनि-मान्नित्यमिट्। **वेष्टेति।** तासि ष्टुत्वेन तकारस्य टः। **वेक्ष्यतीति।** 'षढोः—' इति षस्य कः। **अविक्षदिति।** 'शल इगुपधात्' इति क्सः, षस्य कः, सस्य सः, कित्त्वान्न गुणः। पुषधातुः सेडिति मत्वा आह **पोषितेति।** **अपोषीदिति।** 'नेटि' इति वृद्धिनिषेधः। नन्वनिट्सु पुषेः पाठात् कथं सेट्कत्वमित्यत आह **अनिट्केष्विति।** **अत इति।** सेट्कत्वात् क्सो नेत्यर्थः। ननु पुषादित्वलक्षणः अङ् कुतो नेत्यत आह **अङ्विधा-विति।** एतच्चानुपदमेव पुषादिसूत्रव्याख्यावसरे स्पष्टीभविष्यति। **अयमपीति।** पुषधातुवत् श्लिषधातुरपि भौवादिकः सेडित्यर्थः। **कैयटादय इति।** 'श्लिष आलिङ्गने' इति सूत्रे कैयटहरदत्तादिभिस्तथा प्रपञ्चितत्वादिति भावः। **द्वयोर्ग्रहणमिति।** भौवादिक-दैवादिकयोरित्यर्थः। **स्वोक्तीति।** 'श्लिष आलिङ्गने' इति सूत्रे दैवादिकश्लिषे-रनिट्केषु ग्रहणमिति न्यासकृता कैयटादिभिश्चोक्तत्वादिति भावः। पृषु वृषु इत्या-रभ्य हृषुपर्यन्ता ऋदुपधाः। अलीकं मिथ्याभवनं मिथ्योक्तेर्वा। तुस ह्रसेत्यारभ्य

---

तु रौधादिक एव, संकोचे मानाभावादित्यभिप्रेत्योदाहरति **शेष्टा।** **अशिक्षदित्यादि।** **तीषसह।** इष इच्छायाम्। षह मर्षणे। लुभ गार्ध्ये। रुष रिष हिंसायाम्। एषिता, एष्टा। सहिता, सोढा। लभिता, लोब्धा। **उचोषेति।** 'पुगन्त—' इति

पेक्ष्यम् । पुप्रोष । पुप्लोष । पृषु ७०५ वृषु ७०७ मृषु ७०७ सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । घृषु ७०८ सङ्घर्षे । हृषु ७०२ अलीके । तुस ७१० ह्रस ७११ ह्लस ७१२ रस ७१३ शब्दे । तुतोस । जह्रास । जह्लास । ररास । लस ७१४ श्लेषणक्रीडनयोः । घस्लृ ७११ अदने । अयं न सार्वत्रिकः । 'लिट्यन्यतरस्याम्' (सू २४२४) इत्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गवचनं वास्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि तु विशिष्योपदानम् । घसति । घस्ता । २३२४ सः स्यार्धधातुके । ( ७—४—४९ ) सस्य तः स्यात्सादावार्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङ्गाद्यभावादाशिष्यस्याप्रयोगः । २३४३ पुषादिद्युताद्यॢदितः

---

णश गतावित्यतः प्राक् सकारान्ताः । घस्लृधातुरनिट्कः । अयमिति । घस्लृधातुः सर्वेषु न प्रयोज्य इत्यर्थः । कुत इत्यत आह लिटीति । यद्ययं सार्वत्रिकः स्यात् तदा लिट्यपि प्रयुज्येत । ततश्च 'अद भक्षणे' इति धातोः 'लिट्यन्यतरस्याम् इति घस्लृभावविधिर्व्यर्थः स्यादिति भावः । असार्वत्रिकत्वे सति क्व प्रयोगः क्व नेत्यत आह ततश्चेति । यत्र घस्लृधातोः प्रयोगे ज्ञापकं प्रत्यक्षवचनं वास्ति तत्रैवास्य प्रयोग इत्यर्थः । तत्र तात्रल्लिङ्गं दर्शयति तत्रैवेति । भ्वादिगणे अत्रैव क्रमे अस्य पाठः शपि परस्मैपदे प्रयोगे लिङ्गमित्यर्थः । नच धातुसंज्ञार्थः पाठ इति शङ्क्यम्, द्युत दीप्तावित्यतः प्राक् पाठेनैव सिद्धे अत्र तत्पाठवैयर्थ्यादिति भावः । लृदित्करणमङीति । प्रयोगे लिङ्गमिति शेषः । अनिट्कारिकास्विति । अनुदात्तोपदेशेषु घस्लृधातोः पाठो वलाद्यार्धधातुकप्रयोगे लिङ्गमित्यर्थः । अथ क्वचिदस्य प्रयोगे प्रत्यक्षवचनं दर्शयति क्मरचीति । 'सृघस्यदः क्मरच्' इत्यत्र विशिष्यघसेरुपादानं क्मरचि प्रयोगे प्रमाणमित्यर्थः । घसतीति । लटि तसाद्युपलक्षणमिदम् । लिटि अस्य प्रयोगाभावाल्लुट्युदाहरति घस्तेति । सः सि । स इति छेदः । सः इति षष्ठ्यन्तम् । सि इति सप्तम्यन्तम् आर्धधातुकविशेषणम् । तदादिविधिः । 'अच उपसर्गात्तः' इत्यतः त इत्यनुवर्तते । अकार उच्चारणार्थः, तदाह सस्य तः स्यादिति । आदेशे अकारस्य उच्चारणार्थत्वात्तकारः स्यादित्यर्थः लुङि च्लेः सिचि प्राप्ते पुषादि । 'च्लेः सिच्' इत्यतः च्लेरिति 'अस्यतिवक्तिख्यातिभ्यः—' इत्यतः अङिति चानुवर्तते । पुषादि द्युतादि लृदित् एषां समाहारद्वन्द्वात् पञ्चमी ।

---

गुणः । 'अभ्यासस्यासवर्णे' इत्युवङ् । घृषु संघर्षे । ल्युटि घर्षणम् । घस्लृ अदने । अयमिति । यद्ययं सार्वत्रिकः स्यात्तदा लिट्यपि प्रयुज्येत, ततश्च 'लिट्यन्यन्तरस्याम्' इति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः । अत्रैव पाठ इति । भ्वादौ परस्मैपदे पाठ इत्यर्थः । क्मरचीति । 'सृघस्यदः क्मरच्' इति सूत्रे । सः स्यार्धे । सः सीति च्छेदः । सादौ किम्, घस्मरः । आर्धधातुके इति किम्, वस्ते । आशिषीति । आशीर्लिङीत्यर्थः । एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तम् । कर्मणि तु यग्विषये प्रयोगो नेति बोध्यम् । पुषादिद्युता । पुष धातुर्भ्वादौ दिवादौ क्र्यादौ चुरादौ च

परस्मैपदेषु । ( ३—१—५५ ) श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अघसत् । जर्ज ७१६ चर्च ७१७ झर्झ ७१८ परिभाषणहिंसा-तर्जनेषु । पिस्टृ ७१९ पेस्टृ ७२० गतौ । पिपिसतुः । पिपेसतुः । हसे ७२१ हसने । एदित्वान्न वृद्धिः । अहसीत् । णिश ७२२ समाधौ । तालव्योष्मान्तः । प्रणेशति । मिश ७२३ मश ७२४ शब्दे रोषकृते च । तालव्योष्मान्तौ । शव ७२५ गतौ । दन्त्यौष्ठ्यान्तस्तालव्योष्मादिः । शवति । अशवीत्, अशावीत् । शश ७२६ प्लुतगतौ । तालव्योष्माद्यन्तः । शशाश शेशतुः शेशुः । शेशिथ ।

---

तत्र पुषधातुस्तु भ्वादौ क्र्यादौ चुरादौ दिवादौ चास्ति । तत्र यदि भौवादिकः पुषादिगणो गृह्येत, तर्हि द्युतादिग्रहणमनर्थकं स्यात्, पुषादिगणोत्तरमेवात्र द्युतादिगणपाठात् । नापि क्र्याद्यन्तर्गणः, तत्र हि 'मुष स्तेये' 'खच भूतप्रादुर्भावे' 'हेठ च' 'ग्रह उपादाने' इति चत्वार एव पठ्यन्ते । यदि त एवात्र पुषादयो विवक्षिताः स्युः तर्हि लाघवाद् लृदित एव ते क्रियेरन् । नाप्यत्र चौरादिकः पुषादिर्गृह्यते, णिचा च्लेर्व्यवहितत्वात् । अतः परिशेषाद् दिवादय एव गृह्यन्ते, तदाह श्यन्विकरणेति । जर्ज चर्च झर्झेति । एतेषां चवर्गीयान्तेष्वेव पाठ उचितः । हसे हसन इति । एदिदयम् । न वृद्धिरिति । 'ह्म्यन्त—' इत्यनेनेति शेषः । णिश समाधाविति । णोपदेशत्वाद् 'उपसर्गादसमासेऽपि—' इति नस्य णत्वम्, तदाह प्रणेशतीति । 'शसु हिंसायाम्' इत्यतः प्राक् शकारान्ताः । शवतिस्तु वान्तः ।

---

पठ्यते । यदि तु पुष पुष्टाविति भौवादिकधातुमारभ्य पुषादिगणो गृह्यते तदा द्युतादिग्रहण-मनर्थकं भवेत् । पुषेरुत्तरत्र द्युतादीनां पाठात् । नापि क्र्याद्यन्तर्गणः । तत्र हि पुषधातोरग्रे मुष स्तेये, खच भूतप्रादुर्भावे हठे च, ग्रह उपादाने, इति चत्वार एव पठ्यन्ते । यदि तु त एव जिघृक्षिताः स्युर्तर्हि लाघवाल्लृदित एव क्रियेरन् । ग्रहेः स्वरितेत्त्वेऽपि लृकारेणैव तन्निर्वा-हादनेकानुबन्धासङ्गगौरवशङ्कया अप्यभावात् नापि चुरादिः । णिचा व्यवधानेन ततोऽन्तरस्य च्लेरसंभवात् । अतः परिशेषाद् दिवादय एव गृह्यन्त इत्याह श्यन्विकरणपुषादेरिति । केचित्तु दिवाद्यन्तर्गत एव पुषादिर्गृह्यते व्याख्यानादित्याहुः । चुरादीनां सर्वेषां णिज्विकल्प इति पक्षे चौरादिकपुषादेरपि परः च्लिः संभवतीति तेषामाशयः । 'नन्दिग्रहिपचादिभ्यः' इतिवत् 'पुषद्युताद्यॢदितः' इति सूत्रयितुमुचितम् । ननु पुषादयो द्युतादयश्च लृदित एव कुतो न कृता इति चेत् । अत्राहुः—निरनुबन्धेषु सानुबन्धेषु च प्रत्येकं लृकारपाठे विपरीतगौरवं स्यात् । न च अनुबन्धान्तरस्य यत्प्रयोजनमात्मनेपदं तत्तु लृदित्करणेऽपि सिध्यतीत्य-नेकानुबन्धासङ्गगौरवदोषो नास्तीत्यपि शङ्क्यम्, आदितामीदितामूदितां चैतेषु सत्त्वाद् लृकारेण तत्तत्कार्याणामनिर्वाहादनेकानुबन्धासङ्गगौरवस्य दुर्निवारत्वादिति । जर्ज चर्च झर्झ । एषां परिभाषणादिभिः सह यथासंख्यं नास्ति, व्याख्यानादित्याहुः । परिभाषणं सनिन्दोपालम्भः । त्रयाणामपि चवर्गीयान्तेषु पाठ उचितो न त्विहो-ष्मान्तेषु । णिश समाधौ । समाधिरन्तःकरणनिरोधः । प्रणेशतीति । 'उपसर्गाद-समासेऽपि' इति णत्वम् । रोषकृते चेति । चकारात्समाधौ । शश प्लुतगतौ ।

शसु ७२७ हिंसायाम् । दन्त्योष्मान्तः । 'न शसदद–' (सू २२२३ ) इत्येत्त्वं न । शशसतुः शशसुः । शशसिथ । शंसु ७२८ स्तुतौ । अयं दुर्गतावपीति, दुर्गः । 'नृशंसो घातुकः क्रूरः' इत्यमरः । शशंस । । आशिषि नलोपः, शस्यात् । चह ७२९ परिकल्कने । कल्कनं शाठ्यम् । अचहीत् । मह ७३० पूजायाम् । अमहीत् । रह ७३१ त्यागे । रहि ७३२ गतौ । रंहति । रंह्यात् । दृह ७३३ दृहि ७३४ बृह ७३५ बृहि ७३६ वृद्धौ । दर्हति ददर्हतुः । दृंहति । वर्हति । बृंहति । बृहि शब्दे च । 'बृंहितं करिगर्जितम्' इत्यमरः । बृहिर् इत्येके । अबृहत्, अबर्हीत् । तुहिर् ७३७ दुहिर् ७३८ उहिर् ७३९ अर्दने । तोहति । तुतोह । अतुहत्, अतोहीत् । दोहति । दुदोह । अदुहत्, अदोहीत् । अनिट्कारिकास्वस्य दुहेर्ग्रहणं नेच्छन्ति । ओहति । उवोह ऊहतुः । ओहिता । मा भवानुहत् । औहीत् । अर्ह ७४० पूजायाम् । आनर्ह ।

अथ कृपूपर्यन्ता अनुदात्तेतः । द्युत ७४१ दीप्तौ । द्योतते । २३४४ द्युतिस्वाप्योः संप्रसारणम् । ( ७—४—६७ ) अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते दिद्युताते । द्योतिता । २३४५ द्युद्भ्यो लुङि । ( १—३—९१ )

---

शंस्विति । नोपधः, कृतानुस्वारस्य निर्देशः । 'चह परिकल्कने' इत्यारभ्य अर्हतिपर्यन्ता हकारान्ताः । रह त्याग इति । नायमिदित् । रहि गताविति । अयमिदित् । दृह दृहीति । ऋदुपधा एते । द्वितीयचतुर्थाविदितौ । अबृहत् । अबर्हीदिति । इरित्त्वादङ् इति भावः । उवोहेति । उहिर्धातोर्लिटि द्वित्वे हलादिशेषे पुगन्तलक्षणे गुणे 'अभ्यासस्यासवर्णे' इत्युवङ् । मा भवानुहदिति । इरित्त्वादङि रूपम् । औहीदिति । अङभावपक्षे च्लेः सिचि तस्य इटि 'अस्तिसिचः–' इति तकारस्य ईटि 'इट ईटि' इति सिचो लोपे 'आडजादीनाम्' इति आटि वृद्धिः । माङ्योगे तु मा भवानुहीत् । आनर्हेति । 'अत आदेः' इति दीर्घे नुट् ।

कृपूपर्यन्ता अनुदात्तेत इति । द्युतेत्यारभ्य कृपूपर्यन्ता इत्यर्थः । द्युतिस्वाप्योः । अभ्यासस्येति । 'अत्र लोपोऽभ्यासस्य' इत्यतः तदनुवृत्तेरिति भावः । दिद्युत इति । द्वित्वे 'हलादिः शेषः' इत्यनेन यकारलोपे प्राप्ते तदपवादत्वेन 'द्युतिस्वाप्योः–' इति संप्रसारणे, 'संप्रसारणाच्च' इति उकारस्य पूर्वरूपे

---

'न शसदद–' इति प्रतिषेधसूत्रे सान्तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे शशसतुरिति । प्राचा तु शशतुरित्युक्तं तदयुक्तमिति भावः । अचहीदिति । 'ह्म्यन्त–' इति न वृद्धिः । रह त्यागे । अयं कथादावपि, 'ज्ञपमिच्च' इति मित्प्रकरणेऽप्ययमेकीयमतेन पठितः । नेच्छन्तीति । व्याख्यानमेवात्रावलम्बनम् । मा भवानुहदिति । 'न माङ्योगे' इत्याडभावः । 'इरितो वा' इत्यङ् वा । अथ द्युतादिः । द्युत दीप्तौ । द्युतिस्वाप्योः । स्वापीति णिजन्तस्य ग्रहणम् । दिद्युत इति । संप्रसारणे कृते 'संप्रसारणाच्च' इति पूर्वरूपम् । स्वापेरुदाहरणं तु सुष्वापयिषति । इह स्वापेर्णिजन्तस्याभ्यासनिमित्तप्रत्ययेनानन्तर्ये सति संप्रसारणमिष्यते । तेनेह न—स्वापेर्ण्वुल् स्वापकः, तमिच्छति

मयति । द्राघयति व्यापारयति वेत्यर्थः । परिवेषणे तु यमयति ब्राह्मणान् । भोजयतीत्यर्थः । 'पर्यवसितं नियमयन्' इत्यादि तु नियमवच्छब्दात्तत्करोतीति-णौ बोध्यम् । स्खदिर् ८२० अवपरिभ्यां च ( ग सू १९४ ) मित्रेत्येव । अव-स्खादयति । परिस्खादयति । अपावपरिभ्य इति न्यासकारः । स्वामी तु 'न कमि—' इति नञमुत्तरत्रिसूत्र्यामननुवर्त्य शमः अदर्शने इति चिच्छेद । यमस्तु अपरिवेषणे मित्त्वमाह । तन्मते 'पर्यवसितं नियमयन्' इत्यादि सम्य-

---

मित्त्वं नेत्यर्थः । **आयामयतीति** । अत्रापरिवेषणे वृत्तेर्न मित्त्वमिति भावः, तदाह **द्राघयतीति** । दीर्घीकरोतीत्यर्थः । **व्यापारयतीति** । प्रवर्तयतीत्यर्थः । **यमयति ब्राह्मणानिति** । परिवेषणार्थकत्वान्मित्त्वमिति भावः, तदाह **भोजयतीति** । भुञ्जते ब्राह्मणाः, तान्परिवेषणेन प्रवर्तयतीत्यर्थः । ननु पर्यवसितं नियमयन्नित्यत्र अपरिवेषणार्थकतया मित्त्वाभावात्कथं ह्रस्व इत्यत आह **पर्यवसितमित्यादि** । नियमनं नियमः । 'यमः समुपनिविषु च' इति भवे अप्प्रत्ययः, तस्मान्मतुप् । नियमवच्छब्दात्तत्करोतीति णिचि 'विन्मतोर्लुक्' इति मतुपो लुकि ण्यन्ताल्लटश्शतरि गुणायादेशयोर्नियमयच्छब्द इति भावः ।। वस्तुतस्तु मतुपो लुकि टिलोपस्याप्राप्त्या 'अचो ञ्णिति' इति वृद्धौ पुगागमापत्तिः । ततश्च नियमवदित्यर्थकाद् अर्श-आद्यजन्ताद् नियमशब्दात् 'तत्करोति' इति णिचि इष्ठवत्त्वाट्टिलोपे तस्य स्थानिवत्वादुपधा-वृद्ध्यभावे नियमयन्निति समर्थनीयमिति शब्देन्दुशेखरे स्थितम् । 'स्खदिरवपरिभ्यां च' इत्यपि गणसूत्रम् । स्खदिरिति इका निर्देशः । अव परि आभ्यां परः स्खदधातुर्मित्त्रेत्यर्थः । 'स्खद स्खदने' इति घटादौ पाठान्मित्त्वप्राप्तिः । **परिस्खादयतीति** । अषोपदेशत्वेन आदेशस-कारत्वाभावान्न ष इति भावः । **अपावेति** । 'स्खदिरपावपरिभ्यः' इति न्यासकारः । पपा-ठेत्यर्थः । तन्मते अपस्खादयतीत्यत्रापि मित्त्वाभावान्न ह्रस्वः । **स्वामी त्विति** । 'न कम्य-मिचमाम्' इत्यत्र श्रुतो नञ् 'शमो दर्शने' 'यमोऽपरिवेषणे' 'स्खदिरवपरिभ्यां च' इति त्रिषु सूत्रेषु नानुवर्तते । शमः अदर्शने इति च्छेदः । शमधातुः अदर्शने मित्स्यादित्यर्थः । अमन्तत्वा-देव सिद्धे नियमार्थमिदम् । अदर्शन एव शमधातुर्मित्स्यात् नतु दर्शने इति स्वामिमतम् । इदं च पर्यवसानगत्या पूर्वमतान्नातिरिच्यते । **यमस्त्विति** । यमधातोस्तु अपरिवेषण एव मित्त्वमा-हेत्यर्थः । अमन्तत्वादेव सिद्धेरपरिवेषण एव यमधातुर्मित् नतु परिवेषण इति फलति । एवं च द्राघयति व्यापारयति वेत्यर्थे मित्त्वाद् ह्रस्वे आयमयतीत्येव रूपम् । परिवेषणे तु मित्त्वा-भावाद् ह्रस्वाभावे यामयति ब्राह्मणानिति भवतीति पूर्वमताद्विपरीतं फलति । एवं च पर्यव-सितं नियमयन्नित्यत्र यमेरपरिवेषणार्थत्वान्मित्त्वे ह्रस्वो निर्बाधः, तदाह **तन्मत** इति । स्खदेर्घटादित्वादेव मित्वसिद्धेः 'स्खदिरवपरिभ्यां च' इति सूत्रमपि नियमार्थम् । सोपसर्गस्य चेत् स्खदेर्मित्त्वं तर्हि अवपरिभ्यां परस्यैव मित्त्वं न तूपसर्गान्तरादिति । एवं च प्रस्खादयतीत्यत्र मित्वाभावान्न ह्रस्वः । अवस्खदयति परिस्खदयति इत्यत्र तु मित्त्वा-

---

न्यस्मिन्नर्थे मिन्निषेधः । **नियमयन्निति** । नियमवच्छब्दाण्णिचि विन्मतोर्लुकि

गेव । उपसृष्टस्य स्खदेश्चेदवादिपूर्वस्य इति नियमात्प्रस्खादयतीत्याह । तस्मात्सूत्रद्वये उदाहरणप्रत्युदाहरणयोर्व्यत्यासः फलितः । इदं च मतं वृत्तिन्यासादिविरोधादुपेक्ष्यम् । फण ८२१ गतौ । न इति निवृत्तमसंभवात् । निषेधात्पूर्वमसौ न पठितः । फणादिकार्यानुरोधात् । **२३५४ फणां च सप्तानाम् ।** ( ६—४—१२५ ) एषां वा एत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । फेणतुः फेणुः । पफणतुः पफणुः । फेणिथ, पफणिथ । फणयति । वृत् घटादिः

---

ह्रस्व इति फलति तदाह **उपसृष्टस्येति** । सोपसर्गस्येत्यर्थः । पूर्वमते तु अवपरिभ्यां परस्य मित्त्वानिषेधादवस्खादयति परिस्खादयतीति न ह्रस्वः । प्रस्खदयतीत्यत्र तु अवपरिपूर्वकत्वाभावेन मित्त्वनिषेधाभावाद्ध्रस्व इति विपरीतम् । **तस्मादिति** । 'यमोऽपरिवेषणे' स्खदिरवपरिभ्यां च' इति सूत्रद्वये उक्तरीत्या मित्त्वनियमविध्याश्रयणादुदाहरणयोरुक्तरीत्या व्यत्यासः फलित इत्यर्थः । **उपेक्ष्यमिति** । 'न पादम्याङ्—' इति सूत्रव्याख्यावसरे 'यमोऽपरिवेषणे' इति मित्त्वं प्रतिसिध्यत इति वृत्तिन्यासयोरुक्तत्वादिति भावः । केचित्तु स्वामिमते पर्यवसितं नियमयन्नित्यादिसामञ्जस्यात्तावेवोपेक्ष्यावित्याहुः । **फण गताविति** । ननु घटादित्वेऽपि नायं मित्, इतः प्राक् 'स्वन अवतंसने' इत्युत्तरमेव घटादयो मित इत्युक्तेः । अतः कथमत्र निषेधः ? तत्राह **न इति निवृत्तमसंभवादिति** । प्राप्तिं विना मित्त्वस्य निषेधासंभवादिह नेति नानुवर्तते, किंतु मिदित्येवानुवर्तत इत्यर्थः । ननु फण गतावित्यत्र मिन्नेति यदि नानुवर्तते तर्हि 'न कम्यमिचमाम्' इति निषेधकाण्डात् प्रागेवायं कुतो न पठितः ? तत्राह **निषेधात्पूर्वमसौ न पठित इति** । कुत इत्यत आह **फणादिकार्यानुरोधादिति** । निषेधकाण्डात्प्रागेव फणेः पाठे कम्यमिचमादीनामपि फणादिष्वन्तर्भावः स्यादिति भावः । **फणां च** । 'अत एकहल्मध्ये—' इत्यतो लिटीति 'थलि च सेटि' इति चानुवर्तते । 'ध्वसोः—' इत्यतः एदिति, 'गहमन—' इत्यतः कितीति, 'वा जॄभ्रमुत्रसाम्' इत्यतो वेति च, तदाह **एषामिति** । फणादीनामित्यर्थः । फणामिति बहुवचनात् तदादिलाभः । 'फण गतौ' इत्यत्र मिदित्येवानुवर्तते, नेति तु नानुवर्तत इत्यस्य प्रयोजनमाह **फणयतीति** । **वृदिति** । कर्तरि क्विबन्तम् । वृतुधातुरिह समाप्त्यर्थकः, तदाह **घटादिः**

---

शतरि शप्प्रत्यये गुणे च ज्ञेयम् । **व्यत्यासः फलित इति** । स्वामिमते त्वपरिवेषणे आयमयति । परिवेषणे तु यामयति ब्राह्मणान् । अवादिपूर्वस्य स्खदेरवस्खदयति । परिस्खदयति । प्रपूर्वस्य तु प्रस्खादयतीत्येवं व्यत्यासो ज्ञेयः । **उपेक्ष्यमिति** । न पादम्याङ्—' इति सूत्रे अयामयत इत्युदाहृत्य वृत्तावुक्तं यमोऽपरिवेषण इत्यनेन मित्त्वं प्रतिषिध्यत इति न्यासेऽपि तत्र 'न कम्यमि—' इत्यतो नेत्यनुवर्तत इत्युक्तम् । एवं हि निषेधानन्तरं पाठ उपपद्यते । अन्यथा 'न कमि—' इत्यतः प्रागेव त्रिमूर्त्रीं पठेदिति भावः । **फण गतौ** । फणति । लुङि । अफाणीत्, अफणीत् । णौ तु 'चिण्णमुलोः—' इति वा दीर्घः । अफणि, अफाणि । फणंफणम्, फाणंफाणम् । **असंभवादिति** । मित्त्वप्राप्तिं विना निषेधासंभवादिह नेत्येतन्न संबध्यते किंतु मित्संज्ञैव, तदेतदाह

समाप्तः । फणेः प्रागेव वृदित्येके । तन्मते फाणयतीत्येव । राजृ ८२३ दीप्तौ । स्वरितेत् । राजति, राजते । रेजतुः, रराजतुः रेजे, रराजे । 'अतः' इत्यनुवृत्तावपि विधानसामर्थ्यादात एत्वम् । टु भ्राजृ ८२३ टु भ्राशृ ८२४ टु भ्लाशृ ८२५ दीप्तौ । अनुदात्तेतः । भ्राजतेरिह पाठः फणादिकार्यार्थः । पूर्वं पाठस्तु व्रश्चादिषत्वाभावार्थः । तत्र हि राजिसाहचर्यात्फणादेरेव ग्रहणम् । भ्रेजे, बभ्राजे । 'वा भ्राश—' ( सू २३२१ ) इति श्यन् वा । भ्राश्यते, भ्राशते । भ्रेशे, बभ्राशे । भ्लाशते, भ्लाश्यते । भ्लेशे, बभ्लाशे । द्वावपीमौ तालव्यान्तौ । स्यमु ८२६ स्वन ८२७ ध्वन ८२७ शब्दे । स्यमादयः क्षरत्यन्ताः परस्मैपदिनः । स्येमतुः, सस्यमतुः । अस्यमीत् । स्वेनतुः, सस्वनतुः अस्वनीत, अस्वानीत् । विष्वणति । अवष्वणति । सशब्दं भुङ्क्ते इत्यर्थः । 'वेश्च स्वनः—' ( सू २२७४ ) इति षत्वम् । फणादयो गताः । दध्वनतुः । षम ८२९ ष्टम ८३० अवैकल्ये । ससाम । तस्ताम । ज्वल ८३१ दीप्तौ । 'अतो ल्रान्तस्य' ( सू २३३० ) । अज्वालीत् ।

---

**समाप्त इति** । **फणेः प्रागेवेति** । एवं सति फणेरघटादित्वान्न मित्त्वमिति भावः तदाह **तन्मते फाणतीत्येवेति** । इति घटादयः । **राजृ दीप्ताविति** । इत आरभ्य षण्णामेत्वाभ्यासलोपौ फणादित्वात्पक्षे भवतः, तदाह **रेजतुरित्यादि** । ननु 'फणां च सप्तानाम्' इत्यत्र अत इत्यनुवृत्तेः कथमिह एत्त्वाभ्यासलोपाविदृयत आह **अत इत्यनुवृत्तावपीति** । अत इति नानुवर्तते । तदनुवृत्तावपि फणादिसप्तानामपि वचनसामर्थ्याद् राजृधातोराकारस्याप्येत्त्वाभ्यासलोपस्य विकल्पः स्यादेवेत्यर्थः । अत इति राजादिधातौ न संबध्यते, असंभवादिति यावत् । **टु भ्राजृ टु भ्राशृ टु भ्लाशृ दीप्ताविति** । टुरित् 'ट्वितोऽथुच्' इत्येतदर्थः । **अनुदात्तेत इति** । एते त्रय इति शेषः । ननु पूर्वं चवर्गान्तेष्वनुदात्तेत्सु भ्राजतेः पाठात् पुनरपि तस्यैव पाठः किमर्थम् इत्यत आह **भ्राजतेरिति** । तर्हि 'एजृ, भ्रेजृ भ्राजृ दीप्तौ' इति भ्राजेः पूर्वं पाठो व्यर्थ इत्यत आह **पूर्वं पाठस्त्विति** । **षत्वाभावार्थ इति** । 'व्रश्चभ्रस्ज—' इति षत्वविधौ भ्राजेर्ग्रहणाभावार्थ इत्यर्थः । ननु पूर्व पठितस्यापि षत्वविधौ कुतो न ग्रहणमित्यत आह **तत्र हीति** । षत्वविधौ हीत्यर्थः । एत्वाभ्यासलोपयोः पाक्षिकत्वादाह **भ्रेजे बभ्राजे इति** । **द्वावपीमाविति** । द्वितीयतृतीयावित्यर्थः । ननु विष्वणतीत्यत्र कथं षत्वम् ? केवलदन्त्याजन्तादित्वाभावेन षोपदेशतया आदेशसकारत्वाभावात् । अवष्वणतीत्यत्र इण्कवर्गाभ्यां परत्वाभावान्न षत्वस्य प्रसक्तिः,'सात्पदाद्योः' इति निषेधाच्चेत्यत आह **वेश्च स्वन इतीति** । तत्र चकारेण अवाच्चेत्यपि लभ्यत इति भावः । **फणादयो गता इति** । ध्वनतेः प्रागिति शेषः । ततश्च ध्वनेर्न फणादिकार्यमिति भावः,

---

**फणयति वृत् सामर्थ्यादिति** । फणादिषु पाठसामर्थ्यादित्यर्थः । **तत्र हीति** । षत्वविधौ हीत्यर्थः । तथा च विभ्राट् । विभ्राड्भ्याम् । पूर्वं पठितस्य तु विभ्राक् विभ्राग्भ्यामित्यादि सिध्यतीति भावः । **अस्यमीदिति** । मान्तत्वान्न वृद्धिः ।

चल ८३२ कम्पने । जल ८३३ घातने । घातनं तैक्ष्ण्यम् । टल ८३४ ट्वल ८३५ वैक्लव्ये । ष्ठल ८३६ स्थाने । हल ८३७ विलेखने । णल ८३८ गन्धे । बन्धने इत्येके । पल ८३९ गतौ । पलति । बल ८४० प्राणने धान्यावरोधने च । बलति । बेलतुः बेलुः । पुल ८४१ महत्त्वे । पोलति । कुल ८४२ संस्त्याने बन्धुषु च । संस्त्यानं संघातः । बन्धुशब्देन तद्व्यापारो गृह्यते । कोलति । चुकोल । शल ८४३ हुल ८४४ पत्लृ ८४५ गतौ । शशाल । जुहोल । पपात पेततुः । पतिता । २३५५ पतः पुम् । (७—४—१९) अङि परे । अपप्तत् । 'नेर्गद—' ( सू २२८५ ) इति णत्वम् । प्रण्यपप्तत् । क्वथे ८४६ निष्पाके । क्वथति । चक्वाथ । अक्वथीत् । पथे ८४७ गतौ । अपथीत् । मथे ८४८ विलोडने । मेथतुः । अमथीत् । टु वम् ८४९ उद्गिरणे । इहैव निपातनाद् ॠतः इत्त्वमिति सुधाकरः । ववाम ववमतुः । वादित्वादेत्वाभ्यासलोपौ न । भागवृत्तौ तु वेमतुरित्याद्यप्युदाहृतम् । तद्भाष्यादौ न दृष्टम् । भ्रमु ८५० चलने । 'वा

---

तदाह दध्वनतुरिति । षम ष्टमेति । षोपदेशौ । तस्तामेति । सत्वे सति ष्टुत्वनिवृत्तिरिति । तैक्ष्ण्यमिति । तीक्ष्णीभवनमित्यर्थः । टल ट्वल वैक्लव्य इति । वैक्लव्यं भयादिजनितो व्यग्रीभावः । णल गन्ध इति । णोपदेशोऽयम् । गन्धो गन्धक्रिया । तद्व्यापार इति । बन्धुतानुकूलो विवाहादिव्यापार इत्यर्थः । पत्लृधातुस्तवर्गप्रथमान्तः सेट्कः । लुङि लृदित्त्वात् च्लेरङि कृते अपत् अ त् इति स्थिते पतः पुम् । शेषपूरणेन सूत्रं व्याचष्टे । अङि पर इति । 'ऋदृशोऽङि—' इत्यतः तदनुवृत्तेरिति भावः । पतेः पुम् स्यादङि परे इति फलितम् । पुमि मकार इत्, उकार उच्चारणार्थः, मित्त्वादन्त्यादचः परः, तदाह अपप्तदिति । क्वथे निष्पाक इति । जलक्षीरघृतादीनां पादभागादिशोषणपर्यन्तः पाको निष्पाकः । अक्वथीदिति । एदित्त्वान्न वृद्धिः । एवम् अमथीत् । टु वम् उद्गिरण इति । टुरित् । नायमुदित् । तेन 'उदितो वा' इति क्त्वायामिड्विकल्पो न । 'गॄ निगरणे' इति दीर्घान्तोऽयम् । नन्वस्माद्धातोर्ल्युटि 'ॠत इद्धातोः' इति इत्त्वं बाधित्वा परत्वात् 'सार्वधातुक—' इति गुणे सति उद्गरण इत्येव निर्देशो युज्यत इत्यत आह इहैवेति । उद्गिरण इत्यर्थनिर्देशः पाणिनीय इति सुधाकरो मन्यते । भ्रमु

---

अथ ज्वलादिः । अज्वालीदिति । 'अतो ल्रान्तस्य' इति वृद्धिः । वैक्लव्य इति । वैक्लव्यं भयादिजनितोद्विग्नता । तद्व्यापार इति । बन्धुतानुकूलो व्यापारः । पतः पुम् । मित्त्वादन्त्यादचः परः । अक्वथीदिति । एदित्त्वान्न वृद्धिः । एवम् अपथीत् । अमथीदित्यत्रापि । टुवम् । केचिदमुमुदितं पठित्वा वान्त्वा वमित्वेत्युदाहरन्ति, तत्तु वामनेन विरुध्यते । तेन हि 'आदितश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य वान्त इत्यत्र इडभावः साधितः । उदित्त्वे तु 'यस्य विभाषा' इत्यनेनैव वान्त इति सिद्धेस्तदसंगतं स्यात् । एवं च क्त्वाप्रत्यये वमित्वेत्येव साधु । निपातनादिति । अन्यथा गुणे सति उद्गरण इति स्यात् । यद्यपि अर्थनिर्देश आधुनिकस्तथापि पृषोदरादित्वादित्वमित्यत्रैव तात्पर्यं बोध्यम् । इत्याद्यप्युदाहृतमिति । 'वेमुश्च केचिद्-

भ्राश—' (सू २३२१) इति श्यन्वा । भ्रम्यति, भ्रमति । भ्राम्यति इति तु दिवादौ वक्ष्यते। २३५६ वा जॄभ्रमुत्रसाम् । (६-४-१२४) एषामेत्त्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च । भ्रेमतुः, बभ्रमतुः । अभ्रमीत् । क्षर ८५१ संचलने । अक्षारीत् ।

अथ द्वावनुदात्तेतौ । षह ८५२ मर्षणे । 'परिनिविभ्यः—' ( सू २२७५ ) इति षत्वम् । परिषहते । सेहे । सहिता । 'तीषसह—' ( सू २३४० ) इति वा इट् । इडभावे ढत्वधत्वष्टुत्वढलोपाः । २३५७ सहिवहोरोदवर्णस्य । ( ६—३—११२ ) अनयोरवर्णस्य ओत्स्याड्ढलोपे सति । २३५८ सोढः ।

---

चलन इति । वक्रमार्गसंचारे इत्यर्थः । अयथार्थज्ञानेऽप्ययम् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थमुदित्त्वम् । वा जॄभ्रमु । 'अत एकहल्मध्ये—' इत्यतो लिटि इति 'थलि च सेटि' इति चानुवर्तते । 'घ्वसोरेद्धौ—' इत्यत एदिति 'गमहन—' इत्यतः कितीति च, तदाह एषामिति । अभ्रमीदिति । 'ह्म्यन्त–' इति न वृद्धिः । अक्षारीदिति । 'अतो ल्रान्तस्य' इति वृद्धिः ।

षह मर्षण इति । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् । इडभाव इति । सह् ता इति स्थिते 'हो ढः' इति ढत्वं 'झषस्तथोः—' इति तकारस्य धत्वम् । धस्य ष्टुत्वेन ढः । 'ढो ढे लोपः' इति पूर्वस्य ढस्य लोप इत्यर्थः । सढा इति स्थितम् । सहिवहोः । ढलोप इति । 'ढ्रलोपे–' इत्यतस्तदनुवृत्तेरिति भावः । रलोप इति तु नानुवर्तते असंभवात् । तथा च सकारादकारस्य ओत्वे सोढेति रूपम् । परिसोढेत्यत्र 'परिनिविभ्यः–' इति षत्वे प्राप्ते । सोढः । सोढ इति

---

धिरम' इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः । ननु वादित्वेन निषेधादेत्वाभ्यासलोपौ कथमिह स्यातामिति चेत् । अत्राहुः—'न शसददवादिगुणानाम्' इति सूत्रितेऽपि वेत्यकारान्तसंघातग्रहणेनेष्टसिद्धेरादिग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । एकान्ता अनुबन्धा इति च स्त्रीक्रियते । तथा च नायं वादिः, किं तु ट्वादिरिति । अन्ये तु वमेरादौ 'लोपो व्योः—' इति लोपेन यकारः प्रश्लिष्यते । ततश्चोपदेशे वादित्वाभावान्निषेधो नेत्याहुः । भ्रमु चलने । मण्डलाकारेण चलनमेव धात्वर्थो न तु चलनामात्रम्, तदभाववद्विशेष्यकं तत्प्रकारकज्ञानं च धात्वर्थः । 'शुक्तिं पश्यन् रजतमिति भ्रमति' इति प्रयोगात् । 'उदितो वा' इति क्त्वायां वेट् । भ्रमित्वा, भ्रान्त्वा । 'यस्य विभाषा' इति निष्ठायां नेट् । भ्रान्तः । नन्वस्य ज्वलादिगणे पाठः किमर्थः । न चात्र णप्रत्ययार्थमेव पाठ इति वाच्यम्, पचादेराकृतिगणत्वादच्प्रत्ययेनापि भ्रम इति रूपसिद्धेः 'नोदात्तोपदेशस्य—' इति वृद्धिनिषेधाद् णप्रत्यये अच्प्रत्यये च रूपस्य तुल्यत्वादिति चेत् । अत्राहुः—यदि पचादित्वादच्प्रत्ययः स्यात्तर्हि अभ्रम इत्यत्र 'अच्कावशक्तौ' इति नञः परमन्तोदात्तं स्यात् । णप्रत्यये त्विह 'तत्पुरुषे तुल्यार्थ–' इत्याद्युदात्तमेव भवतीति । वा जॄभ्रमुत्रसाम् । अप्राप्तविभाषेयम् । अभ्रमीदिति । मान्तत्वान्न वृद्धिः । अक्षारीदिति । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो ल्रान्तस्य' इति वृद्धिः । षह । अपराधे सत्यपि कोपानाविष्करणं मर्षणम् । सहिवहो । इह

( ८—३—११५ ) सोढ्रूपस्य सहेः सस्य षत्वं न स्यात्। परिसोढा। २३५९ **सिवादीनां वाड्व्यवायेऽपि।** ( ८—३—७१ ) परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेपि। पर्यषहत, पर्यसहत। रमु ८५३ क्रीडायाम्। रेमे। रेमिषे। रन्ता। रंस्यते। रंसीष्ट। अरंस्त।

अथ कसन्ताः परस्मैपदिनः। पद्लृ ८५४ विशरणगत्यवसादनेषु। २३६० **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।** ( ७—३—७८ ) पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। सीदति। ससाद सेदतुः। सेदिथ, ससत्थ। सत्ता।

---

सहेरोत्वसंपन्नस्य षष्ठ्यन्तम्। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'न रपर—' इत्यतो नेति। मूर्धन्य इत्यधिकृतम्, तदाह **सोढ्रूपस्येत्यादिना। सिवादीनाम्।** 'परिनिविभ्यः—' इति सूत्रादुत्तरमिदं सूत्रम्, तदाह **परिनिविभ्यः परेषामिति।** सिवुसहसुट्स्तुस्वञ्जामिति शेषः। **रमु क्रीडायामिति।** नायमुदिदिति माधवः। केचित्तु उदितं मत्वा 'उदितो वा' इति क्त्वायामिड्विकल्पमिच्छन्ति। अनिट्कोऽयम्। लिटि क्रादिनियमादिट् तदाह **रेमिष इति।**

**अथ कसन्ता इति।** 'कस गतौ' इत्येतत्पर्यन्ता इत्यर्थः। पद्लृधातुः षोपदेशः अनिट्कश्च। लटि शपि सद् अ ति इति स्थिते **पाघ्राध्मा।** पा घ्रा ध्मा स्था म्ना दाण् दृशि अर्ति सर्ति शद् सद्, एषां द्वन्द्वात् षष्ठीबहुवचनम्। पिब जिघ्र धम तिष्ठ मन यच्छ पश्य ऋच्छ धौ शीय सी द, एषां द्वन्द्वात् प्रथमाबहुवचनम्। यथासंख्यमादेशाः 'ष्ठिवुक्लमु—' इत्यतः शितीत्यनुवर्तते। श्चासौ इच्चेति कर्मधारयः। अङ्गाक्षिप्तप्रत्ययविशेषणत्वात् तदादिविधिः, तदाह **इत्संज्ञकेति। ससादेति।** इत्संज्ञकशकारादिप्रत्ययाभावाद् न सीदादेशः। श् इद् यस्य स शित्। शितीति बहुव्रीह्याश्रयणे तु पाधातोः कर्मणि लिटि एशि आल्लोपे

---

रेफलोपस्यासंभवाद् 'ढ्रलोपे पूर्वस्य—' इत्यतो ढलोप एवानुवर्तते तदाह **ढलोप इति।** ढलोपे किम्, सहते। वहते। **सोढः षत्वं नेति।** 'न रपर—' इति सूत्रान्नेत्यनुवर्तत इति भावः। **सिवादीनां।** सिवुसहसुट्स्तुस्वञ्जः सिवादयः। पर्यषीव्यत्। पर्यसीव्यत्। पर्यष्करोत्। पर्यस्करोत्। न्यष्टौत्। न्यस्तौत्। व्यष्वजत्। व्यस्वजत्। **रमु क्रीडायाम्।** अमुमुदितं मत्वा रत्वा रमित्वेति केचिदुदाजह्रुस्तन्माधवादयो न सहन्ते। तथा च क्त्वायां रत्वेत्येव साधु। **रेमिषे इति।** क्रादिनियमादिट्। पचाद्यचि टाप्। रमा। घञि तु रामः। अमन्तत्वेन मित्त्वाद् णौ ह्रस्वः रमयति। **पद्लृ।** विशरणमवयवानां विश्लेषः। अवसादनं नाशः। **पाघ्राध्मा।** पा पाने। पा रक्षणे इति तु न गृह्यते। लुग्विकरणत्वात्। [1]दष्टीति केषांचित्पाठस्तत्र 'सृजिदृशोः—' इत्यम्। अर्तीत्यादौ ऋच्छादेशाद्यभाव इव सौत्रत्वात्पश्यादेशाभाव इति बोध्यम्। दृश्यर्तीति पाठस्तु निर्दुष्ट एव। **पादीनामिति।** एकादशानामेषां यथासंख्यमेकादश-पिबाद्यादेशाः स्युरित्यर्थः। 'ष्ठिवुक्लमुचमाम्—' इत्यतः शितीत्यनुवर्तते,

---

१ 'द्रष्टि' इति क्वचित् पाठः।

सत्स्यति। लृदित्त्वादङ्। असदत्। 'सदिरप्रतेः' (सू २२७१)। निषीदति। न्यषीदत्। **२३६१ सदेः परस्य लिटि।** (८—३—११८). सदेरभ्यासात्परस्य षत्वं न स्याल्लिटि। निषसाद निषेदतुः। शद्लृ ८५५ शातने। विशीर्णतायामयम्। शातनं तु विषयतया निर्दिश्यते। **२३६२ शदेः शितः।** (१—३—६०) शिद्भाविनोऽस्मादात्मनेपदं स्यात्। शीयते। शशाद शेदतुः।

---

षपे इत्यत्रापि पिबादेशः स्यादिति बोध्यम्। थलि क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति निषेधेऽपि भारद्वाजनियमाद्वेट्। तत्र इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपौ, तदाह **सेदिथ ससत्थेति**। सेदिव सेदिम। क्रादिनियमादिट्। **न्यषीददिति**। 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। निषसादेत्यत्र अभ्यासात् परस्य 'स्थादिष्वभ्यासेन—' इति षत्वे प्राप्ते **सदेः परस्य**। 'न रपर—' इत्यतो नेत्यनुवर्तते। मूर्धन्य इत्यविकृतम्। सदेरित्यवयवषष्ठी। परशब्द उत्तरखण्डपरः। सदेरुत्तरखण्डस्य षत्वं नेति लभ्यते। फलितमाह **सदेरभ्यासात्परस्येति। शद्लृ शातन इति**। ननु शद्धातोरस्माद् हेतुमण्ण्यन्ताद् ल्युटि 'शदेरगतौ तः' इति दकारस्य तकारे शातनशब्दः। तथा च शातनं शीर्णतानुकूलक्रियेति। फलति। एवं च सकर्मकत्वापत्तौ विशीर्यतीत्यर्थे शीयत इति वक्ष्यमाणमुदाहरणं कथमित्यत आह **विशीर्णतायामिति**। विशरणे इत्यर्थः। तर्हि कथं शातनमिति हेतुमण्णिजित्यत आह **शातनं तु विषयतयेति**। विपूर्वात् 'षिञ् बन्धने' इत्यस्माद् विषयशब्दः। अविनाभावेनेत्यर्थः। प्रयोजकव्यापारं विना विशरणस्यासंभवात् शातननिर्देशः। ण्यर्थस्याविवक्षितत्वाद् विशरणमेव शद्लृधात्वर्थ इति यावत्। **शदेः शितः**। 'अनुदात्तङितः—' इत्यस्मादात्मनेपदमित्यनुवर्तते। श् इद् यस्य स शित्। शप् विवक्षितः। शिति विवक्षिते भवतीत्यर्थः, तिङुत्पत्तेः पूर्वं सार्वधातुकाश्रयस्य शपोऽसंभवात, तदाह **शिद्भाविन इति**। शिद् भावी भविष्यन् यस्मात्स शिद्भावी तस्मादित्यर्थः। **शीयते इति**। शपि शदेः शीयादेशः। विशीर्यतीत्यर्थः। शीयेते शीयन्ते इत्यादि। शिद्विषयादित्युक्ते लिटि नात्मनेपदम्, इत्संज्ञकशकारादावित्युक्तेर्न शीयादेशः, तदाह **शशादेति**। अनिट्कोऽयम्। क्रादिनियमप्राप्तस्य इटः 'उपदेशेऽत्वतः' इति नियमात्थलि भार-

---

स च कर्मधारय इत्यभिप्रेत्याह **इत्संज्ञकशकारादाविति**। शकारादाविति किम्, पपे। जघ्रे। दध्मे। शितीति बहुव्रीहिरित्यभ्युपगमे त्विह पिबाद्यादेशाः स्युरेव। **सेदिथेति**। 'उपदेशेऽत्वतः' इति क्रादिनियमप्राप्तस्येटो निषेधेऽपि भारद्वाजनियमादिट्। **सदेः परस्य**। सदेरिति षष्ठी। फलितमाह **अभ्यासात्परस्येति**। 'स्थादिष्वभ्यासेन च—' इति प्राप्तिः। लिटीति किम्, निषिषित्सति। सदिस्वञ्जयोरिति वृत्त्यादिरूढोऽपि पाठ इहोपेक्षितः भाष्याननुगुणत्वात्। **निषसादेति**। 'सदिरप्रतेः' इत्यत्राप्रतेरिति पर्युदासात्प्रतिससादेत्यत्राभ्यासस्यापि षत्वं नेति बोध्यम्। **शद्लृ**। विशीर्णतायामिति वक्तव्ये शातने इत्युक्तिरसंगतेत्याशङ्क्य कथंचित्समाधत्ते **शातनं**

शेदिथ, शशत्थ । शत्ता , अशदत् । क्रुश ८५६ आह्वाने रोदने च । क्रोशति । क्रोष्टा । च्लेः क्सः । अक्रुक्षत् । कुच ८५७ सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु, कोचति । चुकोच । बुध ८५८ अवगमने । बोधति । बोधिता । बोधिष्यति । रुह ८५९ बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह । रुरोहिथ । रोढा । रोक्ष्यति । अरुक्षत् । कस ८६० गतौ । अकासीत्, अकसीत् । वृत् । ज्वलादिगणः समाप्तः ।

अथ गूहत्यन्ताः स्वरितेतः । हिक्क ८६१ अव्यक्ते शब्दे । हिक्कति, हिक्कते । अञ्चु ८६२ गतौ याचने च । अञ्चति, अञ्चते । अचु इत्येके । अचि इत्यपरे टु याचृ ८६३ याच्ञायाम् । याचति, याचते । रेटृ ८६४ परिभाषणे । रेटति,

---

द्वाजनियमाद् वेट्, तदाह **शेदिथ शशत्थेति च** । इट्पक्षे 'थलि च सेटि' इत्येत्त्वाभ्यासलोपाविति भावः । शेदिव शेदिम । क्रादिनियमादिट् । **अशददिति** । लुदित्त्वादङिति भावः । क्रुशधातुरनिट्कः । चुक्रोशिथ । क्रादिनियमात्थलि नित्यमिट् । अजन्ताकारवत्त्वाभावान्न भारद्वाजनियमः चुक्रुशिव चुक्रुशिम । **क्रोष्टेति** । व्रश्चादिना शस्य षत्वे ष्टुत्वेन तकारस्य टः । **च्लेः क्स इति** । इगुपधशलन्तत्वादिति भावः । **अक्रुक्षदिति** । व्रश्चादिना शस्य षः । 'षढोः—' इति षस्य कः, सस्य षत्वम् । कित्त्वान्न गुणः । **कुच संपर्चनेति** । 'कुच शब्दे' इति पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादिकार्येणप्रत्ययार्थः । अर्थनिर्देशः क्वचित्पाणिनीय इति भूधातौ प्रपञ्चितम् । **बुध अवगमन इति** । सेट्कोऽयम्, अनिट्सु श्यन्विकरणस्यैव बुधेर्ग्रहणात्, तदाह **बोधितेति** । अबोधीत् । रुहधातुरनिट्कः क्रादिनियमात्थल्यपि नित्यमिट् । अजन्ताकारवत्त्वाभावाद् न भारद्वाजनियमः । **रोढेति** । लुटि तासि गुणे ढत्वधत्वष्टुत्वढलोपाः । **रोक्ष्यतीति** । लृटि स्ये ढकपाः । **अरुक्षदिति** । इगुपधशलन्तत्वात् क्से ढकपाः कित्त्वान्न गुणः । **वृदिति** । 'ज्वलितिकसन्तेभ्यः—' इति उत्तरावधेरपि कसेर्ग्रहणादेव सिद्धेः वृत्करणं स्पष्टार्थमित्याहुः । इति ज्वलादयः ।

**गूहत्यन्ता इति** । 'गुहू संवरणे' इत्येतत्पर्यन्ता इत्यर्थः । चते चदे

---

**त्विति** । शदेरेव हि णिचि 'शदेरगतौ—' इति तत्वे ल्युटि च शातनमिति रूपम् । तथा चास्यैव धातोरिदं रूपं प्रसिद्धं चेत्यभिप्रेत्य तन्निर्देशः कृतः । यथा गम्लृ गतौ । डुपचष् पाके इत्यादाविति भावः । **कुच संपर्चनादौ** । कुच शब्दे तारे इति चवर्गीयान्तेषु पठितस्य पुनरिह पाठः संपर्चनादावेव ज्वलादित्वप्रयुक्तो णप्रत्ययो यथा स्यादिति मनोरमादौ स्थितम् । अत्र नव्याः—अनेनैव ग्रन्थेन पाणिनिनापि क्वचित् क्वचिदर्थनिर्देशः कृत इत्यनुमीयते अन्यथाऽत्रत्यग्रन्थस्वारस्यभङ्गापत्तेरित्याहुः । **बोधितेति** । बुध्यतेरेवानिट्कारिकासु पठितत्वादयं सेडिति भावः । **अकासीदिति** । हलन्तलक्षणाया वृद्धेः 'नेटि' इति निषेधेऽपि 'अतो हलादेः—' इति वैकल्पिकी वृद्धिः । **वृदिति** । अत्र नव्याः—'ज्वलितिकसन्तेभ्यः—' इति निर्देशाद् वृत्करणमिहानार्षमित्यनुमीयते । अन्यथा 'ज्वलादिभ्यो णः' इत्येव सूत्रयेदित्याहुः । अञ्चु गतौ ।

रेटते। चते ८६५ चदे ८६६ याचने। चचात, चेते। अचतीत्। चचाद, चेदे। अचदीत्। प्रोथृ ८६७ पर्याप्तौ। पुप्रोथ, पुप्रोथे। मिदृ ८६८ मेदृ ८६९ मेधाहिंसनयोः। मिमदे, मिमिदे। मिमेदे। थान्ताविमौ इति स्वामी। मिमेथ। धान्तौ इति न्यासः। मेधृ ८७० संगमे च। मेधति। मिमेधे। णिदृ ८७१ णेदृ ८७२ कुत्सासंनिकर्षयोः। निनेद निनिदतुः। निनिदे। निनेदे। शृधु ८७३ मृधु ८७४ उन्दने। उन्दनं क्लेदनम्। शर्धति, शर्धते। शर्धिता। मर्धति, मर्धते। बुधिर् ८७५ अवबोधने। बोधति, बोधते। इरित्वादङ् वा। अबुधत, अबोधीत्, अबोधिष्ट। 'दीपजन—' (सू २३२८) इति चिण् तु न भवति, पूर्वोत्तरसाहचर्येण दैवादिकस्यैव तत्र ग्रहणात्। उ बुन्दिर् ८७६ निशामने। निशामनं ज्ञानम्। बुबुन्दे। अबुदत, अबुन्दीत्। वेणृ ८७७ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वर्णति, वेणते। नान्तोऽप्ययम्। खनु ८७८ अवदारणे। खनति, खनते। **२३६२ गमहनजनखनघसां लोपः क्ङित्यनङि। ( ६—४—९८ )** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। चख्नतुः। 'ये विभाषा'

---

याचने। **अचतीदिती**। एदित्वान्न वृद्धिः। एवमचदीत्। **बुधिर् अवबोधन इति**। 'बुध अवगमने' इति केवलपरस्मैपदी गतः। स तु ज्वलादिकार्यार्थः। अयं तु इरित् स्वरितेत्। अनिट्सु श्यन्विकरणस्यैव पाठादयं सेट्। **अबुधदिति**। इर इत्त्वेपि तदवयवस्य इकारस्य प्रत्येकमित्त्वाभावान्न नुम्। स्वरितेत्त्वप्रयुक्तमात्मनेपदं तु भवत्येव, स्वरितेत्सु पाठसामर्थ्यात्। वस्तुतस्तु इकारस्य प्रत्येकमित्त्वेऽपि न नुम्, इदितो नुमित्यत्र कर्मधारयमाश्रित्य इत्संज्ञकेकारान्तस्यैव नुंविधेः। **पूर्वोत्तरेति**। जनपूरिसाहचर्येणेत्यर्थः। **उ बुन्दिरिति**। आद्य उकार इत् 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः। **अबुददिति**। इरित्त्वादङि 'अनिदिताम्—' इति नलोपः। इर इकारस्य प्रत्येकमित्संज्ञाविरहाद् अनिदितामित्यस्य इत्संज्ञकेकारान्तभिन्नानामित्यर्थाश्रयणाच्चेति शब्देन्दुशेखरे स्थितम्। **वेणृ गतीति**। वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम्। खनुधातुरुदित्। क्त्वायामिड्विकल्पः। **गमहन। उपधाया इति**। 'ऊदुपधायाः—इत्यतः तदनुवृत्तेरिति भावः। **अजादाविति**। 'अचि श्नुधातु—'इत्यतः अनुवृत्तस्य अचि इत्यस्य

---

'अनिदिताम्—' इति नलोपः। अच्यात्। अचीत्येकीयमते तु इदित्त्वादञ्च्यात्। मेधृ संगमे च। चात्पूर्वोक्तेऽर्थे। 'प्रजायै गृहमेधिनाम्' इत्यत्र गृहैर्दारैर्मेधन्ते सङ्गच्छन्ते इति विग्रहः। 'सुप्यजातौ-'इति णिनिः। शृधु मृधु। क्लेदनमिति। आर्द्रीभाव इत्यर्थः। उदित्वात् क्त्वायां वेट्। शर्धित्वा। शृद्ध्वा। उबुन्दिर्। बुन्दित्वा। बुत्वा। निष्ठायां बुन्नः। निशामनं चाक्षुषं ज्ञानम्। वेणृ। गत्यादयः पञ्चार्थाः। वाद्यभाण्डस्य वादनार्थं ग्रहणं वादित्रग्रहणम्। वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः। नान्तोऽपीति। 'उत माता महिषमन्ववेनत्' इत्यत्र नान्तदर्शनादिति भावः। खनु। खनित्वा। खात्वा। निष्ठायाम्। खातः। गमहन। 'अचि श्नुधातुभ्रुवाम्-' इत्यतोऽचीत्यनुवर्तते, 'ऊदुपधाया गोहः' इत्यत 'उपधाग्रहणं च', तदाह

( सू २३१९ ) खायात्, खन्यात् । चीवृ ८७९ आदानसंवरणयोः । चिचीव, चिचीवे । चायृ ८८० पूजानिशामनयोः । व्यय ८८१ गतौ । अव्ययीत् । दाशृ ८८२ दाने । ददाशे । भेषृ ८८३ भये । गतौ इत्येके । भेषति, भेषते । भ्रेषृ ८८४ भ्लेषृ ८८५ गतौ । अस ८८६ गतिदीप्त्यादानेषु । असति, असते । आस, आसे । अयं षान्तोऽपि । स्पश ८८७ बाधनस्पर्शनयोः । स्पर्शनं ग्रथनम् । स्पशति, स्पशते । लष ८८८ कान्तौ । 'वा भ्राश-' (सू २३२१ ) इति श्यन्वा । लष्यति, लषति । लेषे । चष ८८९ भक्षणे । छष ८९० हिंसायाम् । चच्छषतुः चच्छषे । झष ८९१ आदानसंवरणयोः । भ्रक्ष ८९२ भ्लक्ष ८९३ अदने । भक्ष इति मैत्रेयः । दासृ ८९४ दाने । माहृ ८९५ माने । गुहू ८९६ संवरणे । २२६४ ऊदुपधाया गोहः । ( ६—४—८९ ) गुहे उपधाया ऊत्स्याद् गुणहेतावजादौ प्रत्यये । गूहति, गूहते । ऊदित्त्वादिड् वा । गूहिता,

अङ्गाक्षिप्तप्रत्ययविशेषणतया तदादिविधिलाभ इति भावः । क्ङितीत्युक्तेः चखानेत्यत्र नोपधालोपः । 'अनङि' इति किम् ? अगमत् । चख्ने चख्नाते इत्यादि । **व्यय गताविति** । अयं वित्तत्यागेऽपि, अर्थनिर्देशस्योपलक्षणत्वात् । **अव्ययीदिति** । ह्मयन्तेति न वृद्धिः । **चष भक्षण इति** । चचाष चेषतुः । **छष हिंसायामिति** । वैरूप्यसंपादकादेशादित्वादेत्त्वाभ्यासलोपौ न, तदाह **चच्छतुरिति** । **गुहू संवरण इति** । उदुपधोऽयम् । ऊदित् । **ऊदुपधायाः** । गोह इति कृतलघूपधगुणस्य गुहेर्निर्देशः । ततश्च गुणविषय एवेदं भवति । 'अचि श्नुधातु-' इत्यतः अनुवृत्तस्य अङ्गाक्षिप्तप्रत्ययविशेषणत्वात्तदादिविधिः, तदाह **गुह उपधाया इत्यादिना** । **गुणहेताविति** । गुणं प्रति परनिमित्तभूत इत्यर्थः । गुणापवादः । जुगूह । 'गुणहेतौ' इति किम् ? जुगुहतुः जुगुहुः । जुगुहे जुगुहाते जुगुहिरे । जुगूहिथ, जुगोढ । ढत्वधत्वष्टुत्वढलोपाः । जुगुहथुः जुगुह । जुगुहिषे, जुघुक्षे । ढत्वभष्भावकत्वषत्वानि । जुगुहाथे जुगुहिध्वे, जुघुढ्वे । जुगूह

एषामुपधाया इत्यादि । जग्मतुः । जग्मुः । जघ्नतुः जघ्नुः । जज्ञे । जज्ञाते । जक्षतुः । जक्षुः । अनङीति किम्, अगमत् । **चीवृ** । चीवरं वस्त्रम्, 'चीवरपीवरमीवर-' इत्युणादिषु निपातितोऽयम् । **व्यय गतौ** । वित्तत्यागे तु नित्यमात्मनेपदी गत इति मनोरमा । न कुत्रापि गत इति चिन्त्यैव सा । **अव्ययीदिति** । यान्तत्वान्न वृद्धिः । **स्पश** । बाधनस्पर्शनयोः । 'णिश्रि-' इति च्लेश्चङि । अपस्पशत् । 'अत्स्मृदृत्वरप्रथ—' इत्यादीनां अभ्यासस्यात्वं सन्वदित्वापवादः । पस्पशा । यङन्तादचि 'यङोऽचि च' इति लुक् । 'अजाद्यतः—' इति टाप् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घस्तु न भवति संज्ञापूर्वकविधेरनित्यत्वादित्याहुः । 'जपजभदहदशभञ्जपशां च' इत्यत्र 'पसेति सौत्रो धातुः । पसतीत्यादि । यङ्लुकोस्तु 'जपजभ—' इत्यनेनैवाभ्यासस्य नुक् । यङि पंपस्यते । लुकि पंपसीति । पंपस् इति कण्ड्वादिः । पंपस्यति **ऊदुपधाया** । **गुणहेताविति** । एतच्च गोह इति विकृतनिर्देशाल्लब्धम् । 'अचि

१ अस्य सान्तत्वं माधवमतेन । काशिकायां तु तालव्यान्तः ।

गोढा । गूहिष्यति, घोक्ष्यति । गूहेत् । गुह्यात् । अगूहीत् । इडभावे क्सः । अघुक्षत्
२३६५ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये । ( ७—३—७३ ) एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । ढत्वधत्वष्टुत्वढलोपदीर्घाः । अगूढ । अघुक्षत । 'क्सस्याचि' ( सू २३३७ ) इत्यन्तलोपः । अघुक्षाताम् अघुक्षन्त । अगुह्वहि, अघुक्षावहि । अघुक्षामहि ।

अथाजन्ता उभयपदिनः । श्रिञ् ८९७ सेवायाम् । श्रयति, श्रयते । शिश्रियतुः । श्रयिता । 'णिश्रि–' ( सू २३१२ ) इति चङ् । अशिश्रियत् ।

---

जुगुहिव, जुगुह्व जुगुहिम, जुगुह्म । जुगुहे जुगुहिवहे, जुगुह्वहे जुगुहिमहे, जुगुह्महे—इति लिटि रूपाणि सिद्धवत्कृत्य लुटि इट्पक्षे ऊत्वे रूपमाह गूहितेति । इडभावे अजादिप्रत्ययाभावाद् ऊत्वाभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु रूपमाह गोढेति । लृटि स्ये इट्पक्षे ऊत्वे रूपमाह घोक्ष्यतीति । इडभावे तु गुणढत्वभष्भावकत्वषत्वेषु रूपमाह घोक्ष्यतीति । गूहिष्यते, घोक्ष्यते, इत्यप्युदाहार्यम् । गूहतु । गूहताम् । अगूहत् । अगूहत । गूहेदिति । गूहेतेत्यपि ज्ञेयम् । गुह्यादिति । आशीर्लिङि अजादिप्रत्ययाभावादूत्वं न । कित्त्वान्न गुणः । लुङि इट्पक्षे सिज्लोपे ऊत्वे रूपमाह अगूहीदिति । अगूहिष्टाम् अगूहिषुरित्यादि । इडभावे क्स इति । इगुपधशलन्तत्वादिति भावः । अघुक्षदिति । ढत्वभष्भावकत्वषत्वानि । अघुक्षताम् अघुक्षन्नित्यादि । लुङ्स्तङि विशेषमाह लुग्वा दुह । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थः । प्रत्ययादर्शनत्वात्सर्वादेशोऽयं लुक् । अगूढेति । अगुह् स त इति स्थिते क्सस्य कित्त्वेन गुणहेतुत्वाभावादजादित्वाभावाच्च ऊत्वाभावे क्सलुकि अगुह् त इति स्थिते प्रक्रियां दर्शयति ढत्वधत्वष्टुत्वढलोपदीर्घा इति । अघुक्षतेति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानीति भावः । अघुक्षातामिति । च्लेः क्सादेशे क्सस्य कित्त्वेन गुणहेतुत्वाभावादूत्वाभावे ढत्वभष्भावकत्वषत्वेषु कृतेषु 'क्सस्याचि' इत्यन्त्यलोपे अतः परत्वाभाद् 'आतो ङितः' इति न भवतीति भावः । अघुक्षन्तेति । झस्य अजादित्वाभावात्तस्मिन्परे क्सस्य अन्त्यलोपाभावादतः परत्वाभावाद् 'आत्मनेपदेष्वनतः' इत्यदादेशो न भवति । कृते तु झोऽन्तादेशे क्सस्यान्तलोप इति भावः । अघुक्षथाः अघुक्षाथाम् अघुक्षध्वम् । अघुक्षि—इति रूपाणि सिद्धवत्कृत्याह अगुह्वहीति । दन्त्यादिप्रत्ययपरत्वात् क्सस्य लुङि अजादिप्रत्ययाभावाद् ऊत्वाभावे रूपम् । अघुक्षावहीति । क्सलुगभावे ढत्वभष्भावकत्वषत्वानि अतो दीर्घश्च । अघुक्षामहीति । दन्त्यादिप्रत्ययपरत्वाभावान्न क्सलुक् । इति गूहत्यन्ताः स्वरितेतः ।

उभयपदिन इति । ञित्त्वादिति भावः । श्रिञ्धातुः सेट् । शिश्रियतुरिति । कित्त्वान्न गुणः । इयङ् शिश्रियुः । शिश्रयिथ शिश्रियथुः शिश्रिय । शिश्राय, शिश्रय शिश्रियिव शिश्रियिम । शिश्रिये शिश्रियाते शिश्रियिरे । शिश्रियिषे शिश्रि-

---

इनुधातु–' इत्यतोऽनुवृत्तेनाचीत्यनेनाङ्गाक्षिप्तप्रत्ययो विशेष्यते, विशेषणेन तदादिविधिस्तदाह अजादाविति । दन्त्ये तङीति । दन्त्यादौ तङीत्यर्थ । अदुग्ध । अधु-

भृञ् ८९८ भरणे। भरति। बभार बभ्रतुः। बभर्थ। बभृव। बभृषे। भर्ता।
२३६६ ऋद्धनोः स्ये। ( ७—२—७० ) ऋतो हन्तेश्च स्यस्य इट् स्यात्। भरिष्यति। २३६७ रिङ् शयग्लिङ्क्षु। ( ७—४—२८ ) शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात्। रीङि प्रकृते रिङ्विधिसामर्थ्याद्दीर्घो न। भ्रियात्। २३६८ उश्च। ( १—२—१२ ) ऋवर्णात्परौ झलादी लिङ्

---

याथे शिश्रियिढ्वे, शिश्रियिध्वे। शिश्रिये शिश्रियिवहे शिश्रियिमहे। श्रयितेति। श्रयिष्यति, श्रयिष्यते। श्रयतु श्रयताम्। अश्रयत्, अश्रयत। श्रयेत्, श्रयेत श्रीयात्, श्रयिषीष्ट। लुङि विशेषमाह णिश्रीति। अशिश्रियदिति। 'चङि' इति द्वित्वम्। अशिश्रियत। अश्रयिष्यत् अश्रयिष्यत। भृञ्धातुरनिट्। भरतीति। भरते इत्यपि ज्ञेयम्। बभ्रतुरिति। कित्त्वान्न गुणः। यण्। बभ्रुः। थलादौ 'एकाचः—' इति नेट्, कृसृभृवृस्तुद्रुस्रुश्रुषु लिट्यपि तन्निषेधस्य प्रवृत्तेः। थलि 'अचस्तास्वत्—' इति निषेधाच्च, ऋदन्तत्वेन भारद्वाजमतेऽपि थलि निषेधाच्च। तदाह बभर्थेति। बभ्रथुः बभ्र। बभार, बभर—इति सिद्धवत्कृत्याह बभृवेति। बभृम। बभ्रे बभ्राते बभ्रिरे—इति सिद्धवत्कृत्याह बभृषे इति। बभ्राथे बभृढ्वे। बभ्रे बभृवहे बभृमहे। लृटि स्ये इण्निषेधे प्राप्ते ऋद्धनोः। ऋत् हन् अनयोर्द्वन्द्वात् पञ्चम्यर्थे षष्ठी। स्ये इति षष्ठ्यर्थे सप्तमी। 'आर्धधातुकस्येट्—' इत्यत इडित्यनुवर्तते, तदाह ऋत इत्यादिना। 'एकाचः—' इति इण्निषेधस्यापवादः। भरिष्यतीति। भरिष्यते। भरतु भरताम्। अभरत्, अभरत। भरेत्। आशीर्लिङि परस्मैपदे भृ यात् इति स्थिते रिङ्शय। श यक् लिङ् एषां द्वन्द्वात्सप्तमीबहुवचनम्। 'अयङ् यि क्ङिति' इत्यतो यीति सप्तम्यन्तमनुवृत्तं लिङो विशेषणम्, तदादिविधिः। शे तु यीति नान्वेति, असंभवात् नापि यकि, अव्यभिचारात्। अत एव 'अकृत्सार्वधातुकयोः' इत्यनुवृत्तमपि लिङ एव विशेषणम्, तदाह शे यकीत्यादिना। ऋत इति। 'रीङृतः' इत्यतः तदनुवृत्तेरिति भावः। 'अङ्गस्य' इत्यधिकृतम्। ऋत इति तद्विशेषणम्। तदन्तविधिः। ऋदन्तस्याङ्गस्येति लभ्यते। आदेशे ङकार इत्। ङित्त्वाद् अन्तादेशः। निर्दिश्यमानपरिभाषयैव सिद्धे ङकारोच्चारणम्, इङागमेनैव सिद्धे रेफोच्चारणं च स्पष्टार्थम्। ननु भ्रियादिति वक्ष्यमाणमुदाहरणमयुक्तम्, कृते रिङि 'अकृत्सार्वधातुकयोः' इति दीर्घप्रसङ्गादित्यत आह रीङि प्रकृत इति। कृते रिङि यदि दीर्घः स्यात्तर्हि रिङ्विधिर्व्यर्थः, स्यात्। 'रीङृतः' इत्येव सिद्धे कृते सति न दीर्घ इत्यर्थः। भ्रियादिति। भ्रियास्तामित्यादि सुगमम्। आशीर्लिङि भृषीष्टेत्यत्र गुणे प्राप्ते उश्च। 'लिङ्सिचावात्मनेपदेषु' इति सूत्रमनुवर्तते

---

क्षत। अदिग्ध। अधिक्षत। अलीढ। अलिक्षतेत्यादि। रिङ् शयग्लिङ्क्षु। 'अयङ् यि क्ङिति' इत्यतोऽनुवृत्तं यीत्येतल्लिङ एव विशेषणम्, शेऽसंभवात्, यकि तु वैयर्थ्यात्। तथा 'अकृत्सार्वधातुकयोः—' इत्यनुवृत्तमपि लिङ एव विशेषणमित्यभिप्रेत्याह। यादावित्यादि। शे—म्रियते। 'तुदादिभ्यः—' इति शः। यकि—क्रियते। म्रियते। उश्च। 'इको झल्' इत्यतो झल्ग्रहणं 'लिङ्सिचौ—'इति पूर्वसूत्रं चानुवर्तते

तङ्परः सिच्चेत्येतौ कितौ स्तः। भृषीष्ट भृषीयास्ताम्। अभार्षीत् अभार्ष्टाम् अभार्षुः।

२३६६ ह्रस्वादङ्गात्। (८—२—२७) सिचो लोपः स्याज्झलि। अभृत। अभृषाताम्। अभरिष्यत्। हृञ् ८९९ हरणे। हरणं प्रापणं स्वीकारः स्तेयं नाशनं च। जहर्थ। जह्रिव। जह्रिषे हर्ता। हरिष्यति। धृञ् ९०० धारणे। धरति। अधार्षीत्। अधृत। णीञ् ९०१ प्रापणे। निनयिथ, निनेथ, निन्यिषे।

---

'इको झल्' इत्यतो झलिति च, तदाह ऋवर्णादिति। भृषीष्टेति। कित्त्वान्न गुणः। अभार्षीदिति। परस्मैपदे सिचि वृद्धौ रपरत्वम्। तङि तु अभृ स् त इति स्थिते ह्रस्वादङ्गात्। ह्रस्वान्तादित्यर्थः। सिच इति भाष्यम्। 'झलो झलि' इत्यतो झलीति 'संयोगान्तस्य लोपः' इत्यतो लोप इति चानुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे सिचो लोपः स्याज्झलीति। 'ह्रस्वात्' किम् ? अच्योष्ट। 'अङ्गात्' किम् ? अलाविष्टाम्। 'सिचः' किम् ? द्विष्टराम् द्विष्टमाम्। सुजन्तात्तरप्तमपौ। अभृतेति। 'उश्च' इति सिचः कित्त्वान्न गुणः। झलीत्युक्तेः अभृषाताम् अभृषतेत्यत्र न सिज्लोपः। अनतः परत्वाद् झस्य अदादेशः। अभृथाः अभृषाथाम् अभृढ्वम्। अभृषि अभृष्वहि अभृष्महि। हृधातुरनिट्। हरणं चतुर्विधमित्याह। प्रापणमित्यादि। तद्यथा—भारं हरति, प्रापयतीत्यर्थः अंशं हरति, स्वीकरोतीत्यर्थः। परस्वं हरति, चोरयतीत्यर्थः। पापं हरति हरते वा, नाशयतीत्यर्थः। जहार जह्रतुः जह्रुः। 'एकाचः–' इति इण्निषेधस्य क्रादिष्वेव लिटि नियमितत्वादिह थलि इटि प्राप्ते 'अचस्तास्वत्–' इति तन्निषेधः। ऋदन्तत्वेन भारद्वाजमतेऽपि इण् निषेध एव तदाह जहर्थेति। जह्रथुः जह्र। जहार, जहर—इति सिद्धवत्कृत्याह जह्रिवेति। क्रादिनियमादिट्। जह्रिम। जह्रिषे, क्रादिनियमादिट्। जह्राथे जह्रिढ्वे जह्रिध्वे। जह्रे जह्रिवहे जह्रिमहे लुडादिषु भृञ इव रूपाणि। धृञ्धातुरनिट्। हृञ् इव रूपाणि। णीञ्धातुरनिड् णोपदेशः। नयति, नयते। निनाय निन्यतुः निन्युः। क्रादिनियमाल्लिटि इट्। थलि तु 'अचस्तास्वत्–' इति इण्निषेधस्य भारद्वाजनियमादिड्विकल्प इत्योभिप्रेत्याह निनयिथ निनेथेति। निन्यिषे निन्याथे निन्यिढ्वे, निन्यिध्वे। निन्ये निन्यिवहे निन्यिमहे। नेता। नेष्यति, नेष्यते। नयतु नयताम्

---

तदाह ऋवर्णादित्यादि। अभार्षीदिति। 'सिचि वृद्धिः–' इति वृद्धिः। ह्रस्वादङ्गात्। ह्रस्वात् किम्, अच्योष्ट। अल्पोष्ट। अङ्गग्रहणादिह 'रात्सस्य' इत्यतः सस्येत्यनुवृत्तावपि प्रत्ययस्यैव तत्रापीष्टत्वात्सिच एव लोपो भवति। तेनेह न—अस्तं द्विष्टमाम्। केचित्त्विहाङ्गग्रहणाभावे अयाविष्टाम् अलाविष्टामित्यादावपि अतिप्रसङ्गः स्यादित्याहुस्तदपरे न क्षमन्ते, संनिपातपरिभाषयापि परिहारसंभवादिति। झलीति किम्, अभृषाताम्। अभृषत। हृञ् हरणे। चत्वार इहार्थाः। भारं हरति, प्रापयतीत्यर्थः। अंशं हरति, स्वीकरोतीत्यर्थः। स्वर्णं हरति, चोरयति। पापं हरति, नाशयति। धृञ्। दधार। दध्रतुः दधर्थ। दध्रे। दध्राते। धर्ता। ध्रियात्। णीञ्।

अथाजन्ताः परस्मैपदिनः । धेट् ९०२ पाने । धयति । २३७० आदेच उपदेशेऽशिति । ( ६-१-४५ ) उपदेशे एजन्तस्य धातोरात्त्वं स्यान्न तु शिति । २३७१ आत औ णलः । ( ७-१-३४ ) आदन्ताद्धातोर्णल औकारा-

---

अनयत्, अनयत । नयेत्, नयेत । नीयात्, नेषीष्ट । अनैषीत्, अनेष्ट । अनेष्यत्, अनेष्यत । इत्यजन्ता उभयपदिनो गताः ।

परस्मैपदिन इति । 'जि ज्रि अभिभवे' इत्येतत्पर्यन्ता इति शेषः । धेट् पान इति । स्तनंधयीत्यादौ ङीवर्थं टित्त्वम्, अवयवे टित्त्वस्य व्यर्थतया समुदायार्थत्वादिति हरदत्तः । आदेचः । एजन्तस्य धातोरिति । 'लिटि धातोः—' इत्यतो धातोरित्यनुवृत्तम् एचा विशेष्यते, तदन्तविधिरिति भावः । नतु शितीति । श् चासौ इच्चेति कर्मधारयात्सप्तमी, प्रत्ययविशेषणत्वात्तदादिविधिः, इत्संज्ञकशकारादौ प्रत्यये परे इति लभ्यते । 'ल्यपि च' 'न व्यो लिटि' इत्यादिपूर्वोत्तरसूत्राणां प्रत्ययेष्वेव प्रवृत्त्या 'प्रत्यये' इति विशेष्यलाभः । अशितीति न पर्युदासः, तथासति शिद्भिन्ने प्रत्यये परे इत्यर्थः स्यात्, ततश्च 'सुग्लः' इत्यत्र ग्लैधातोः 'आतश्चोपसर्गे' इति कप्रत्ययो न स्यात्, कप्रत्ययनिमित्तमात्त्वम् आदन्तात्प्रत्यय इत्यन्योन्याश्रयात् । शिति नेति प्रसज्यप्रतिषेधे तु आत्त्वस्य अनैमित्तिकतया कप्रत्ययनिमित्तकत्वाभावात् प्रथममात्त्वे कृते कप्रत्ययः सूपपादः । शितीति बहुव्रीह्याश्रयणे ग्लैधातोर्भावे लिटि 'भावकर्मणोः' इति तङि एशि आत्त्वे आतो लोपे जग्ले इति न सिध्येत्, एशः शित्त्वेन तस्मिन्परे आत्त्वस्य निषेधात् ! अतः कर्मधारयमाश्रित्य इत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थं आश्रितः । एवं च पर्युदासेऽपि न क्षतिः । इत्संज्ञकशकारादिभिन्नप्रत्यये विवक्षिते इत्याश्रयणेन सुग्ल इत्यत्र कप्रत्ययात्प्रागेव आत्त्वोपपत्तेः । 'उपदेशे' किम् ? चेता, स्तोता । 'धातोः' किम् ? गोभ्याम् । 'गमेर्डोः' इति डोप्रत्ययोपदेशाद् उपदेशे य एच् तदन्तत्वाद् गो इत्यस्य प्राप्तिः । न च मेङादीनामुपदेशे एजन्तत्वाभावात् कथमात्त्वमिति न शङ्क्यम्, 'उदीचां माङः—' इति निर्देशेन 'नानुबन्धकृतमनेजन्तत्वम्' इति ज्ञापनादित्यास्तां तावत् । तथा च

---

निनयिथेति । भारद्वाजनियमादिड्विकल्पः । आदेच उपदेशेऽशिति । 'लिटि धातोः—' इत्यतो धातोरित्यनुवृत्तमेचा विशेष्यते, तदाह एजन्तस्य धातोरिति । उपदेशे किम्, चेता । स्तोता । ननु लाक्षणिकत्वादेवात्र न भविष्यतीति चेत् । अत्राहुः—वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयत इति ज्ञापनार्थमुपदेशग्रहणम् । तेन 'क्रीङ्जीनां णौ' इति कृतात्वे क्रापयतीत्यादौ पुक् सिध्यतीति मनोरमाकृत् । धातोः किम्, गोभ्याम् । नौभ्याम् । अस्ति ह्यत्रापि गमेर्डोः 'ग्लानुदिभ्यां डोः' इत्युपदेशे एच् । अशितीति प्रसज्यप्रतिषेध इत्याह न तु शितीति । पर्युदासे तु जग्ले मम्ले इत्यादौ 'द्विर्वचनेऽचि' इति निषेधादात्वं न स्यादभ्यासे इकारश्च श्रूयेत । किं च सुग्ल इत्यत्र 'आतश्चोपसर्गे' इति कः । सुग्लेत्यत्र 'आतश्चोपसर्गे' इति स्त्रियामङ् । सुग्लान इत्यत्र 'आतो युच्' इति युच् न स्यात् । प्रत्ययनिमित्तं ह्यात्वमाद-

देशः स्यात् । दधौ । २३७२ आतो लोप इटि च । ( ६—४—६४ ) अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । द्वित्वात्परत्वाल्लोपे प्राप्ते 'द्विर्वचनेऽचि' ( सू० २२४३ ) इति निषेधः । द्वित्वे कृते आलोपः । दधतुः दधुः । दधिथ, दधाथ । दधिव दधिम । धाता । २३७३ दाधा-

---

प्रकृते लिटि द्वित्वादौ दधा अ इति स्थिते आत औ । औ इति लुप्तप्रथमाकम् । 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणम्यते, आत इति तद्विशेषणम्, तदन्तविधिः, तदाह आदन्ताद्धातोरिति । णल्प्रकृतिश्च धातुरेवेति धातुग्रहणम् । तथा च णल औत्वे वृद्धौ रूपमाह दधाविति । दधा अतुसिति स्थिते आतो लोपः । 'आर्धधातुके' इत्यधिकृतम् । 'दीङो युट्–' इत्यतः अचि क्ङितीति चानुवर्तते । अचीत्यार्धधातुकविशेषणत्वात्तदादिविधिः । क्ङिति अजाद्यार्धधातुके इटि च आतो लोप इति लभ्यते । फलितमाह अजाद्योरिति । इट आर्धधातुकत्वं तु तदवयवत्वाद्बोध्यम् । क्ङितीति च इटो न विशेषणम्, इड्ग्रहणसामर्थ्यात् । इडित्यनेन उत्तमपुरुषैकवचनम् इडागमश्च गृह्यते । 'अजाद्योः' किम् ? ग्लैधातोः कर्मणि लटि यकि ग्लायते । 'आर्धधातुकयोः' किम् ? यान्ति वान्ति । दधौ इत्यत्र तुक्ङित्त्वाभावान्नाल्लोपः । सति तस्मिन् औत्वं न स्यात् । ननु धा अतुस् इति स्थिते द्वित्वात्परत्वादाल्लोपे सति एकाच्त्वाभावाद् द्वित्वं न स्यादित्याशङ्क्य परिहरति द्वित्वादित्यादिना । वेट्धातुरनिट् । भारद्वाजनियमात् थलि वेडित्याह दधिथ, दधाथेति । इट्पक्षे आल्लोपः । दधथुः दध । इतो सिद्धवत्कृत्याह दधिवेति । वसि आत्वे क्रादिनियमादिटि आल्लोप इति भावः । दधिमेत्यपि एवं ज्ञेयम् । धातेति । लुटि आत्वे तासादि इति भावः । धास्यति । धयतु । अधयत् ।

---

न्ताच्च प्रत्यय इत्यन्योन्याश्रयात् । प्रसज्यप्रतिषेधे तु न कोऽपि दोषः । 'ह्वावामश्च' इति सूत्रेण कबाधनार्थं पुनरण्विधानं च प्रतिषेधपक्षे ज्ञापकम् । तदाहुः—अनैमित्तिकमात्वं शिति तु प्रतिषेध इति । नन्वेवमपि एशः शित्वाजज्ले मम्ले इत्यादि न सिध्यतीति चेत् । अत्राहुः—यदि तु शितीति बहुव्रीहिः स्यात्तदात्र स्यादेव दोषः । किं तु कर्मधारयोऽयम् । तथा चाशितीत्यत्रेत्संज्ञकशकारादौ प्रत्यये परे नेत्यर्थः । धातुग्रहणाक्षिप्तस्य प्रत्ययस्य शितीति कर्मधारयेण विशेषणाद्विषयसप्तम्यां तु इत्संज्ञकशकारादिभिन्नप्रत्ययविषये आत्वमित्यर्थात्पर्युदासेऽपि न क्षतिरिति । आत औ णलः । इह अङ्गस्येत्यनुवर्तते । धातोरिति तु फलितार्थकथनम् । आदन्तादङ्गादित्यर्थः । आतो लोप इटि च । आर्धधातुक इत्यनुवर्तते । 'दीङो युडचि क्ङिति' इत्यतोऽचि क्ङितीति च, तदेतत्फलितमाह अजाद्योरार्धधातुकयोरिति । अजाद्योः किम्, ग्लायते । यक् । जाग्लायते । यङ् । दासीय । डुदाञो लिङुत्तमैकवचनमिट् । आर्धधातुकयोः किम्, यान्ति । वान्ति । व्यतिरे । रा दाने । कर्मव्यतिहारे धातोर्लङुत्तमैकवचनमिट् । दधिथेति । एवं च अजाद्यार्धधातुकस्य क्त्विेन दधिव दधिमेत्यादिष्वातो लोपसिद्धावपि दधिथ पपिथेत्यादिरूपसिद्धये सूत्रेऽस्मिन्निटीति ग्रहणमावश्यकमिति ज्ञेयम् । यदि तु इडागम एवात्र गृह्यते व्याख्यानात्तदाऽचि क्ङितीत्येतदा-

ध्वदाप्। (१—१—२०) दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। २३७४ एर्लिङि। (६—४—६७) घुसंज्ञानां मास्थादीनां चैत्वं स्यादार्धधातुके किति लिङि। धेयात् धेयास्ताम् धेयासुः। २३७५ विभाषा धेट्श्व्योः। (३—१—४९) आभ्यां च्लेश्चङ्वा स्यात्कर्तृवाचिनि लुङि परे।

---

धयेत। आशीर्लिङि घुसंज्ञाकार्यं वक्ष्यन् घुसंज्ञां दर्शयति दाधाघ्वदाप्। देत्यनेन स्वाभाविकाकारान्तयोः 'डु दाञ् दाने' 'दाण् दाने' इत्यनयोः, कृतात्वयोः 'दो अवखण्डने' 'देङ् रक्षणे' इत्यनयोः लाक्षणिकयोश्च, धेत्यनेन स्वाभाविकाकारान्तस्य 'डु धाञ् धारणपोषणयोः' इत्यस्य, लाक्षणिकस्य 'धेट् पाने' इत्यस्य च ग्रहणम्। 'गामादाग्रहणेष्वविशेषः' इति परिभाषाबलात् तत्र दाग्रहणेन धारूपस्यापि ग्रहणाच्च। अत एव 'दो दद् घोः' इत्यत्र धेण्निवृत्त्यर्थं दाग्रहणमर्थवत्, दधाते हिभावविधानादेव निवृत्तिसिद्धेः, तदाह दारूपा धारूपाश्चेति। एर्लिङि। एरिति प्रथमान्तम्। 'आर्धधातुके' इत्यधिकृतम्। घुमास्थागापाजहातिसाम् इत्यनुवर्तते। घु मा स्था गा पा जहाति सा एषां द्वन्द्वात् षष्ठीबहुवचनम्, तदाह घुसंज्ञानां मास्थादीनामिति। किति लिङीति। 'दीङो युट्—' इत्यतः कितीत्यनुवृत्तेरिति भावः। ङितीति नानुवर्तते। लिङार्धधातुकस्य ङित्त्वासंभवात्। लुङि च्लेः सिचि प्राप्ते विभाषा धेट्। 'च्लि लुङि' इत्यनुवर्तते। 'णिश्रिद्रुस्रुभ्यः—' इत्यतः कर्तरि चङिति च, तदाह आभ्यामिति। धेट् श्वि आभ्यामित्यर्थः।

---

धधातुकस्यैव विशेषणं न तूभयोः। दाधा घ्वदाप्। इह दारूपाश्चत्वारः। डुदाञ् दाने। दाण् दाने। दो अवखण्डने। देङ् रक्षणे। धारूपौ तु द्वौ। डुधाञ् धारणपोषणयोः। धेट् पाने। अनुबन्धानामनेकान्तत्वाद् 'आदेच उपदेशे—' इत्यात्वे दोदेङ्धेटामनुकरणे दाधारूपत्वमस्ति। एवं च दाश्च दाश्च दाश्च दाः। धाश्च धाश्च धौ। दाश्च धौ च दाधा इति विग्रहः। दाप्दैपौ विनेति। दाप् लवने। दैप् शोधने एतद्भिन्ना इत्यर्थः। दैपः पित्त्वमिह प्रतिषेधार्थं न त्वनुदात्तार्थम्। 'अनुदात्तौ सुप्पित्तौ' इति प्रत्ययस्यैव पितोऽनुदात्तत्वात्। न च दैपो लाक्षणिकत्वान्नास्य प्रतिषेध इति शङ्क्यम्, पित्करणस्यानर्थप्रसङ्गात्। इदमेव दैपः पित्त्वं 'गामादाग्रहणेष्वविशेषः' इति परिभाषाया ज्ञापकमित्याहुः। अदाविति किम्, दातं बर्हिः। लूनमित्यर्थः। इह 'दो दद्घोः' इति दद्भावो न। अवदातं मुखम्। शुद्धमित्यर्थः। इह तु 'अच उपसर्गात्—' इति तादेशो न। एर्लिङि। मास्थादीनामिति। मास्थागापाजहातिसामित्यर्थः। माङ् माने गामादाग्रहणेष्वविशेषेऽपि माङ्मेङौ नेह गृह्येते, लिङि कित्त्वासंभवात्। ष्ठा गतिनिवृत्तौ। गै शब्दे। गाङ् गतौ इति तु न गृह्यते, लिङि कित्त्वासंभवादेव। पा पाने। ओहाक् त्यागे। षोऽन्तकर्मणि। देयात्। स्थेयात्। गेयात्। पेयात्। हेयात्। अवसेयात्। आर्धधातुके किम्, मायात्। मायाताम्। मायुः। कितीति किम्, दासीष्ट। इह 'दीङो युडचि—' इत्यतः क्ङितीत्यनुवर्तमानेऽपि प्रकृतोपयोगितया कितीत्यस्यैवानुवृत्तिः कृता। विभाषा धेट्। 'च्लि लुङि' इत्यनुवर्तते 'णिश्रि—' इत्यस्मात्कर्तरीति

'चङि' ( सू० २३१५ ) इति द्वित्वम् । अदधत् अदधताम् । **२३७६ विभाषा घ्राधेट्शाच्छासः** । ( २-४-७८ ) एभ्यः सिचो लुग्वा स्यात्परस्मैपदे परे । अधात् अधाताम् अधुः । **२३७७ यमरमनमातां सक्च** । (७-२-७३ ) एषां सक् स्यादेभ्यः सिच इट् च परस्मैपदेषु । अधासीत् अधासिष्टाम् अधासिषुः । ग्लै ९०३ म्लै ९०४ हर्षक्षये । हर्षक्षयो धातुक्षयः । ग्लायति । जग्लौ । जग्लिथ, जग्लाथ । **२३७८ वाऽन्यस्य संयोगादेः** ।

---

**अदधदिति** । चङि द्वित्वे आलोप इति भावः । अदधताम् अदधन् । अदधः अदधतम् अदधत । अदधम् अदधाव अदधाम । चङभावपक्षे विशेषमाह **विभाषा घ्रा** । 'ण्यक्षत्रियार्ष–' इत्यतो लुगित्यनुवर्तते । 'गातिस्था–' इत्यतः सिचः परस्मैपदेष्विति, तदाह **एभ्य इति** । 'घ्रागन्धोपादाने' 'धेट् पाने' 'शो तनूकरणे' 'छो छेदने' 'षो अन्तकर्मणि' एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । शो प्रभृतीनां कृतात्त्वानां निर्देशः । धेटः 'गातिस्थाघुपा—' इति नित्यं प्राप्ते अन्येषामप्राप्ते वचनम् । **अधुरिति** । 'उस्यपदान्तात्' इति पररूपम् । अधाः अधातम् अधात । अधाम् अधाव अधाम । सिचो लुगभावपक्षे आह **यमरम** । यम, रम, नम, आत्, एषां द्वन्द्वाषष्ठीवहुवचनम् । आदित्यनेन आदन्तं गृह्यते, तदाह **एषां लुक् स्यादिति** । सकि ककार इत्, अकार उच्चारणार्थः । कित्त्वादन्तावयवः । चकारेण 'इडत्त्यर्ति—' इत्यत इडिति 'स्तुसुधूञ्भ्यः–' इत्यतः परस्मैपदेष्विति चानुकृष्यते । 'अञ्जेः सिचि' इत्यतः सिचीति च । तच्च षष्ठ्या विपरिणम्यते, तदाह **एभ्यः सिच इट् चेति** । **अधासीदिति** । धातोः सगागमः । सिच इट्, इट ईटि इति सिज्लोपः । **अधासिष्टामिति** । अपृक्तत्वाभावादीडभावान्न सिज्लोपः । सस्य षत्वे तकारस्य ष्टुत्वेन टः । **अधासिषुरिति** । अधासीः अधासिष्टम् अधासिष्ट । अधासिषम् अधासिष्व अधासिष्म । यद्यपि अधासीदित्यत्र सगिटोर्विधिर्व्यर्थ एव, तथापि अधासिष्टामित्याद्यर्थम् आतः सगिड्विधानम् । यमादीनां तु अयंसीत्यादौ हलन्तलक्षणवृद्धेरभावार्थम्, अयंसिष्टामित्याद्यर्थं च । तदेतद् तत्तद्धातुषु स्पष्टीभविष्यति । अधास्यत् **ग्लै म्लै हर्षक्षये । धातुक्षय इति** । बलक्षय इत्यर्थः । अनिटाविमौ ग्लायतीति । शपि आयादेशः । शिद्विषयत्वादात्त्वं न । **जग्लाविति** । णलि आत्वे 'आत औ णलः' इति औभावे वृद्धिरिति भावः । अतुसादौ द्वित्वे कृते आतो लोपः । जग्लतुः जग्लुः । भारद्वाजनियमात्थलि

---

च तदाह **च्लेश्चङ् वेत्यादि** । **अदधदिति** । चङि आतो लोपः । श्वयतेरुदाहरणमशिश्वियद् । **विभाषा घ्रा** । इह 'ण्यक्षत्रियार्ष ' इत्यतो लुगनुवर्तते, गातिस्था—' इत्यतः सिचः परस्मैपदेष्विति च तदाह **सिचो लुग्वेत्यादि** । परस्मैपदे किम्, व्यत्यघ्रास्त । **अधुरिति** । 'आतः' इति झेर्जुस् । **यमरमनमातां** । इह 'आर्धधातुकस्येड्वलादेः' इतीडनुवर्तते । 'अञ्जेः सिचि' इत्यतः सिज्ग्रहणम्, स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदग्रहणं च, तदाह **एभ्यः सिच इडित्यादि** । अयंसीत् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् अनंसिष्टाम् । परस्मैपदेषु कित्, उदायंस्त

( ६—४—६८ ) घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्त्वं वा स्यादार्धधातुके किति लिङि । ग्लायात्, ग्लेयात् । अग्लासीत् । म्लायति । द्यै ९०५ न्यक्करणे । न्यक्करणं तिरस्कारः । द्रै ९०६ स्वप्ने । ध्रै ९०७ तृप्तौ । ध्यै ९०८ चिन्तायाम् । रै ९०९ शब्दे । स्त्यै ९१० ष्ट्यै ९११ शब्दसंघातयोः । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम् । षोपदेशफलं तु तिष्ट्यासति अतिष्ट्यपदित्यत्र षत्वम् । खै ९१२ भक्षणे । क्षै ९१३ जै ९१४ षै ९१५ क्षये । क्षायति । जजौ । ससौ । साता । 'घुमास्था—' ( सू० २४६२ ) इत्यत्र 'विभाषा घ्राधेट्—'

वेडित्याह जग्लिथ, जग्लाथेति । इट्पक्षे आल्लोपः । जग्लथुः जग्ल । जग्लौ जग्लिव जग्लिम । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । आशीर्लिङि आत्त्वे कृते ग्लायात् इति स्थिते वाऽन्यस्य । 'आर्धधातुके' इत्यधिकृतम् । 'एर्लिङि' इत्यनुवर्तते । एरिति प्रथमान्तम् । 'आतो लोप इटि च' इत्यत आत इत्यनुवर्तते । कस्मादन्यस्येत्यपेक्षायां 'घुमास्थागापाजहातिसां हलि' इति प्रकृतत्वात्तेभ्योऽन्यस्येति लभ्यते, तदाह घुमास्थादेरित्यादिना । कितीति । 'दीङो युडचि क्ङिति' इत्यतः तदनुवृत्तेरिति भावः । ङितीति तु नानुवर्तते, लिङार्धधातुकस्य ङित्त्वासंभवात् । अग्लासीदिति । यमरमेत्यादन्तत्वात् सगिटौ । अग्लासिष्टाम् अग्लासिषुरित्यादि । अग्लास्यत । म्लायतीति । ग्लैधातोरिव रूपाणीति भावः । द्यै न्यक्करण इति । यकारमध्योऽयम् । इत आरभ्य ऐकारान्तानां संयोगादीनां ग्लैवदेव रूपाणि प्रत्येतव्यानि । 'रै 'शब्दे' इत्यादीनां तु असंयोगादीनाम् आशीर्लिङि 'वान्यस्य संयोगादेः' इत्येत्त्वं न भवति रायादित्यादि रूपमिति विशेषः । स्त्यै ष्ट्यै इति । षोपदेशेषु स्त्याधातोः पर्युदासादाद्यो न षोपदेशः । द्वितीयस्तु षोपदेशः । तकारस्य ष्टुत्वसंपन्नटकारनिर्देशः । सत्वे कृते इति । 'धात्वादेः—' इति षस्य सकारे सति निमित्तापायात् ष्टुत्वनिवृत्तिरिति भावः । तिष्ट्यासतीति । ष्ट्यैधातोः कृतसत्वात् सनि आत्त्वे स्त्या स इति सन्नन्ताल्लटि तिपि शपि 'सन्यङोः' इति द्वित्वे 'शर्पूर्वाः खयः' इति सकारयकारनिवृत्तौ तास्त्यासति इति स्थिते अभ्यासह्रस्वे 'सन्यतः 'इति इत्वे सकारस्य इणः परत्वादादेशसकारत्वाच्च षत्वे तिष्ट्यासतीति रूपम् । स्वाभाविकसकारादित्वे त्वादेशसकारादित्वाभावात् षत्वं न स्यादिति भावः अतिष्ट्यपदिति । ष्ट्यैधातोः कृतसत्वात् णौ आत्त्वे 'अर्तिह्री—' इति पुकि स्त्यापि इति ण्यन्ताद् लुङि अडागमे तिपि 'इतश्च' इति इकारलोपे 'णिश्रिद्रुस्रुभ्यः—' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधायाः—' ह्रस्वे 'चङि' इति स्त्यप् इत्यस्य द्वित्वे 'शर्पूर्वाः—' इति सकारस्यकारपकाराणां निवृत्तौ सत्यां 'सन्यतः' इति इत्वे इणः परत्वादादेशसकारत्वाच्च सस्य षत्वे तस्य ष्टुत्वे अतिष्ट्यपदिति रूपम् । स्वाभाविकसकारत्वे त्वादेशसकारत्वाभावात् षत्वं न स्यादिति भावः । जजौ ससाविति । जैधातोः षैधातोश्च णलि आत्वे

भारम् । अरंस्त । अरंसाताम् । वान्यस्य । अन्यस्य किम्, स्थेयात् । द्यै न्यक्करणे । द्यायति । दद्यौ । अद्यासीत् । घुमास्थेत्यत्रेति । व्याख्यानात्तन्त्रान्तरे जहातिस्य-

( सू० २३७६ ) इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य । तेन एत्त्वसिज्लुकौ न । सायात् । असासीत् । कै ९१६ गै ९१७ शब्दे । गेयात् । अगासीत् । शै ७१८ श्रै ९१९ पाके । पै ९२० ओ वै ९२१ शोषणे । पायात् । अपासीत् । 'घुमास्था–' ( सू० २४६२ ) इतीत्त्वम्, तदपवाद 'एर्लिङि' ( सू० २३७४ ) इत्येत्त्वम्, 'गातिस्था–' ( सू० २२२३ ) इति सिज्लुक् च न । पारूपस्य लाक्षणिकत्वात् । ष्टै ९२२ वेष्टने । स्तायति । ष्णै ९२३ वेष्टने । शोभायां च इत्येके स्नायति । दैप् ९२४ शोधने । दायति । अघुत्वादेत्त्वसिज्लुकौ न । दायात् । अदासीत् । पा ९२५ पाने । 'पाघ्राध्मा–' ( सू० २३६० ) इति पिबादेशः । तस्योदन्तत्वान्नोपधागुणः ।

---

द्विलवादौ वृद्धिरिति भावः । ननु 'एर्लिङि' इत्यत्र 'घुमास्थागापाजहातिसाम्–' इत्यनुवृत्त्या सैधातोराशीर्लिङि सायादित्यत्र एत्त्वं स्यात् । तथा लुङि सगिटोः असासीद् असासिष्टामित्येव इष्यते । तत्र 'विभाषा घ्राधेट्शाच्छासः' इति सिचः पाक्षिके लुकि असात् असातामित्यपि प्रसज्येतेत्यत आह **घुमास्थेत्यत्रेत्यादि । स्यतेरिति ।** 'षो अन्तकर्मणि' इति श्यन्विकरणस्येत्यर्थः । अत्र व्याख्यानमेव शरणम् । 'विभाषा घ्राधेट्–' इत्यत्र श्यन्विकरणाभ्यां साहचर्याच्च । **पै ओवै शोषणे ।** पायति । वायति । 'ओदितश्च' इति निष्ठानत्वार्थमोदित्त्वम् । ननु पैधातोः कर्मणि लटि यकि आत्त्वे पायते इत्यत्र 'घुमास्थागापाजहातिसां हलि' इति ईत्त्वं स्यात् । तथा आशीर्लिङि पायाद् इत्यत्र 'एर्लिङि' इति एत्त्वं स्यात्, तत्रापि 'घुमास्थागापाजहातिसाम्–' इत्यनुवृत्तेः । तथा लुङि अपासीदित्यत्र 'गतिस्था–' इति सिचो लुकि 'यमरम–' इति इटः अभावात्तत्संनियोगशिष्टः सगपि न स्यादित्यत आह **घुमास्थेतीत्त्वमित्यादिना । पारूपस्येति ।** उदाहृतसूत्रत्रये लक्षणप्रतिपदोक्तपरिभाषया आ न्तत्वेन उपदिष्टस्यैव पाधातोर्ग्रहणम्, न तु पैधातोः कृतात्वस्येति भावः । एवं च प्रकृते पैधातोराशीर्लिङि पायादित्येव रूपम् । लुङि सगिटोः अपासीत्, अपासिष्टामित्येव रूपम् । **ष्टै वेष्टन इति ।** षोपदेशोऽयम् कृतष्टुत्वनिर्देशः । सत्वे कृते ष्टुत्वनिवृत्तिः, तदाह **स्तायतीति ।** ष्णैधातुरपि षोपदेशः कृतष्टुत्वनिर्देशः । सत्वे कृत्वे ष्टुत्वनिवृत्तिः, तदाह **स्नायतीति । दैप् शोधने । अघुत्वादिति ।** घुसंज्ञाविधौ दाब्दैपौ विनेत्युक्तेरिति भावः । **पा पाने । पिबादेश इति ।** शिद्विषय इति शेषः । **तस्येति ।** पिबादेशस्य अदन्तत्वाद् न लघूपधगुण इति भाष्ये स्पष्टम् । अनिडयम् । पपौ पपतुः पपुः । भारद्वाजनियमात् थलि वेट्– पपिथ, पपाथ पपथुः पप । पपौ पपिव पपिम । क्रादिनियमादिट् । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् । आशीर्लिङि 'एर्लिङि' इत्येत्त्वमभिप्रेत्याह **पेयादिति ।**

---

तीनामिति श्यना निर्देशाच्चेति भावः । **विभाषा घ्रेति ।** श्यन्विकरणाभ्यां शाच्छाभ्यां साहचर्यादिति भावः । एवं शाच्छासेति युग्विधावपि स्यतेरेव ग्रहणमिति बोध्यम् । तेनास्य धातोः 'अर्तिह्री–' इति पुगेव । सापयति । **पै ओवै ।** पायति । वायति । शुष्यतीत्यर्थः । 'ओदितश्च' इति निष्ठानत्वम् । वानम् 'शुष्के वानमुभे ·५' इत्यमरः **अदन्तत्वादिति ।** केचित्तु अङ्गवृत्तपरिभाषयापि गुणाभावं

भौवादिकस्य । २४५८ इणो गा लुङि । ( २—४—४५ ) 'गातिस्था—' ( सू० २२२३ ) इति सिचो लुक् । अगात् अगाताम् अगुः । इङ् १०४६ अध्ययने । नित्यमधिपूर्वः । अधीते अधीयाते अधीयते । २४५८ गाङ् लिटि । ( २—४—४९ ) इङो गाङ् स्याल्लिटि लावस्थायां विवक्षिते वा । अधिजगे अधिजगाते अधिजगिरे । अध्येता । अध्येष्यते । अध्ययै । गुणायादेशयोः कृत-

समीयादिति प्रयोगस्तु भौवादिकस्येति । 'इट किट कटी गतौ' इति प्रश्लिष्टस्य इधातोराशीर्लिङि 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घो बोध्य इति भावः । लुङि विशेषमाह इणो गा लुङि । इण्धातोः गा इत्यादेशः स्याल्लुङीति सूत्रार्थः स्पष्टः । अगा स् त् इति स्थिते आह गातिस्थेतीति । लृङि ऐष्यत् । इङ् अध्ययन इति । अधिरुपरिभावे । उपरिभावश्च पठने नियमपूर्वकत्वमिति भूवादिसूत्रे भाष्ये स्पष्टम् । नित्यमधिपूर्व इति । धातुपाठे वचनमिदम् । अधीते इत्यत्र धातुरुपसर्गं न व्यभिचरतीति भूवादिसूत्रे भाष्ये । अधीत इति । 'सार्वधातुकमपित्' इति ङित्त्वाद् गुणनिषेधे सवर्णदीर्घः । अजादौ तु इयङ्, तदाह अधीयाते अधीयते इति । अधीषे अधीयाथे अधीध्वे । अधीये अधीवहे अधीमहे । गाङ् लिटि । इङ् इति । 'इङश्च' इत्यतस्तदनुवृत्तेरिति भावः । स्थानिवत्त्वादेव ङित्त्वे सिद्धे ङित्करणं 'गाङ्कुटादिभ्यः—' इत्यत्र 'इणो गा लुङि' इत्यस्य ग्रहणाभावार्थमिति भाष्यम् । ननु कृते गाङादेशे द्वित्वे अभ्यासजश्त्वे अल्लोपे अधिजगे इति रूपं वक्ष्यति । तदयुक्तम्, 'द्विर्वचनेऽचि' इति गाङादेशनिषेधाद् गाङादेशात् प्रागेव द्वित्वे सति उत्तरखण्डस्य गादेशे अधीगे इति रूपापत्तेरित्यत आह लावस्थायां विवक्षित इति । तत्र लावस्थायामिति वार्तिकमते गाङादेशात् प्रागेव 'द्विर्वचनेऽचि' इति सूत्रं न प्रवर्तते, द्वित्वनिमित्ताचोऽभावात् । विवक्षिते इति भाष्यमते तु सुतरां 'द्विर्वचनेऽचि' इति न प्रवर्तते, अनैमित्तिकत्वादिति भावः । अधिजगिरे इति । अधिजगिषे अधिजगाथे अधिजगिध्वे । अधिजगे अधिजगिवहे अधिजगिमहे । लोटि अधीताम् अधीयाताम् अधीयताम् । अधीष्व अधीयाथाम् अधीध्वम् इति सिद्धवत्कृत्य आह अध्ययै इति । तत्र प्रक्रियां दर्शयति गुणायादेशयोरिति । 'पूर्वं धातुः साधनेन युज्यते पश्चादु-

तस्यैव परस्य कथमादिवद्भावः स्यात् । एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः । नन्वेवं रामौ इत्यत्र 'सुप्तिङन्तम्—इति पदत्वं न स्यात्, परादित्वे रामेति प्रकृतेरभावात् । 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणम्' इति स्वीकाराद्राम इत्यस्य प्रकृतित्वात्,पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् । अत्राहुः-पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः इहच ज्ञापकं 'सुपिसूतिसमाः' इति । विध्यादौ समीयादिति न भवत्येव । आशीर्लिङि तु 'अकृत्सार्व—' इति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह भौवादिकस्येति । इटकिटकटीत्यत्र प्रश्लिष्टस्य इधातोराशीर्लिङि इदं रूपम् । वी गतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादिलिङ्यपि भवत्येवेति बोध्यम् । गाङ् लिटि । लावस्थायां

योरुपसर्गस्य यण्। 'पूर्वं धातुरुपसर्गेण–' इति दर्शनेऽन्तरङ्गत्वाद् गुणात्पूर्वं सवर्णदीर्घः प्राप्तः। 'णेरध्ययने वृत्तम्' (सू० ३०६६) इति निर्देशान्न भवति। अध्यैत। परत्वादियङ्, तत आट्, वृद्धिः, अध्यैयाताम् अध्यैयत। अध्यैयि अध्यैवहि अध्यैमहि। अधीयीत अधीयीयाताम्। अधीयीध्वम्। अधीयीय। अध्येषीष्ट। २४६० विभाषा लुङ्लृङोः। (२-४-५०) इङो गाङ् वा

---

पसर्गेण' इति 'सुट्कात्पूर्वः' इति सूत्रसिद्धान्तादिति भावः। तथा च इट एत्वे आटि वृद्धौ अधि इ ऐ इति स्थिते गुणे अयादेशे यणिति फलितम्। ननु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इत्यपि पक्षः 'सुट्कात्पूर्वः' इति सूत्रभाष्ये स्थितः। तथा च अधि इ ऐ इति स्थिते पूर्वं सवर्णदीर्घे सति गुणायादेशयोः कृतयोः अधयै इति स्यादित्याशङ्क्य निराकरोति पूर्वं धातुरिति। साधनेनेत्यस्य कारकबोधकेनेत्यर्थः, प्रत्ययेनेति यावत्। दर्शन इत्येतस्य मते इत्यर्थः। 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति पक्षे पूर्वप्रवृत्तिकत्वेन अन्तरङ्गत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणं बाधित्वा सवर्णदीर्घः प्राप्तो न भवतीत्यन्वयः। कुत इत्यत आह णेरध्ययने वृत्तमिति निर्देशादिति। अन्यथा ल्युटि अनादेशे अधि इ अन इति स्थिते पूर्वं सवर्णदीर्घं ततो गुणायादेशयोः कृतयोः अधयनमिति प्रसङ्गादिति भावः। वस्तुतस्तु पूर्वं धातुः साधनेन युज्यते। इत्येव भाष्यसंमतम्, पूर्वं धातुरुपसर्गेण, नैतत्साम्मिति भाष्योक्तेरित्यन्यत्र विस्तरः। अध्ययावहै अध्ययामहै। लङ्याह अध्यैतेति। अधि आ इ त इति स्थिते 'आटश्च' इति वृद्धौ यणिति भावः। अधि इ आतामिति स्थिते आटि वृद्धौ यणि अध्यैतामिति प्राप्ते आह परत्वादियङिति। आटः प्रागेव परत्वादिकारस्य इयङि तत आटि वृद्धौ यणि अध्यैयातामिति रूपमित्यर्थः। अध्यैयतेति। 'आत्मनेपदेष्वनतः' इत्यदादेशः। अध्यैथाः अध्यैयाथाम् अध्यैध्वम् इति सिद्धवत्कृत्याह अध्यैयि अध्यैवहि अध्यैमहीति। विधिलिङ्याह। अधीयीतेति। अधि इ त इति स्थिते सीयुटि सुटि सलोपे यलोपे अधि इ इत इति स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घ इति भावः। अधीयीयातामिति। अधि इ आतामिति स्थिते सीयुटि सुटि सलोपे अधि इ यातामिति स्थिते धातुभूत इकारस्य इयङि सवर्णदीर्घ इति भावः। झस्य रन्भावे सीयुटि कारयकारलोपे अधि इ ई रन् स्थिते धातुभूतस्य इकारस्य इयङि सवर्णदीर्घे अधीयीरन्, अधीयीथाः, अधीयीयाथाम् इति सिद्धवत्कृत्य आह अधीयीध्वमिति। ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङ इयङि सवर्णदीर्घ इति भावः। अधीयीयेति। इटोऽत् सीयुट् सलोपः। अधि इ ईय इति स्थिते इङ इयङि सवर्णदीर्घ इति भावः।

---

नेति। वार्तिकमते तु एकादेशात्प्रागेव गाङादेशे 'द्विर्वचनेऽचि' इति सूत्रं न प्रवर्तते त्वनिमित्ताचोऽभावात्। विवक्षित इति। भाष्यमते तु सुतरां न प्रवर्तते, अनैमित्तिकत्वाति भावः। निर्देशान्न भवतीति। 'वार्णादाङ्गं बलीयः' इति समाधानं न प्रवर्तते, व्याश्रयत्वादिति भावः। अध्यैयतेति। 'आत्मनेपदेष्वनतः' इति

स्यात् । २४६१ गाङ्कुटादिभ्योऽञ्णिन्ङित् । ( १—२—१ ) गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः । २४६२ घुमास्थागापाजहातिसां हलि । ( ६—४—६६ ) एषामात ईत्स्याद् हलादौ क्ङित्यार्धधातुके । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । इक् १०४७ स्मरणे । अयमप्य-

---

अधीयीवहि अधीयीमहि । आशीर्लिङ्याह अध्येषीष्टेति । सीयुटि गुणः, यण् षत्वम् । अध्येषीयास्ताम् अध्येषीरन् । अध्येषीष्ठाः अध्येषीयास्थाम अध्येषीढ्वम् । अध्येषीय अध्येषीवहि अध्येषीमहि । लुङि आटि अधि आटि इ इति स्थिते विभाषा लुङ्लृङोः । शेषं पूरयति इङो गाङ् वा स्यादिति । 'इङश्च' इत्यतो 'गाङ् लिटि' इत्यतश्च तदनुवृत्तेरिति भावः । सिचि अधि अ गा स् त इति स्थिते गाङ्कुटादिभ्यो । ञ् ण्च ञ्णौ, तौ इतौ यस्य स ञ्णित्, स न भवतीत्यञ्णित् । गाङ् च कुटादयश्चेति द्वन्द्वात्पञ्चमी । गाङिति ङकारानुबन्धाद् 'इणो गा लुङि' इत्यस्य न ग्रहणमित्युक्तम् । नापि 'गाङ् गतौ' इत्यस्यात्र ग्रहणम्, तत्र ङकारस्यात्मनेपदप्रापणेन चरितार्थत्वात् । इङादेशस्य गाङो ङकारो नात्मनेपदप्रापणेन चरितार्थः, स्थानिवत्त्वेनैव तत्सिद्धेः तदाह गाङादेशादिति । एवं च सिचः ङित्त्वे आह घुमास्था । 'षो अन्तकर्मणि' इत्यस्य कृतात्त्वस्य निर्देशः । घु मा स्था गा पा जहाति सा एषां द्वन्द्वात्षष्ठी । 'आर्धधातुके' इत्यधिकृतम् । 'आतो लोप इटि च' इत्यत आत इति 'ईद्यति' इत्यत ईदिति 'अनुदात्तोपदेश—' इत्यतः क्ङिति इति चानुवर्तते, तदाह एषामित्यादिना । अध्यगीष्टेति । अधि अ गा स् त् इत्यत्र अकारस्य ईकारे यणि सिचः षत्वे तकारस्य ष्टुत्वेन ठ इति भावः । 'गातिस्था—' इति न सिज्लोपः परस्मैपदाभावात् । अध्यगीषाताम् अध्यगीषत । अध्यगीष्ठाः अध्यगीषाथाम् अध्यगीढ्वम् । अध्यगीषि अध्य-

---

ज्ञस्य अत् । लङ मध्यमे तु अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् अध्येषीष्टेति । लिङः सीयुट् । अध्येषीयास्ताम् । अध्येषीरन् । गाङ्कुटादिभ्यो । इह गाङ् तावित्यस्य न ग्रहणम्, तङर्थतया ङकारानुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्तु अचरितार्थः, स्थानिवद्भावेनैव तङः सिद्धत्वादत आह गाङादेशादिति । कुटादिस्तुदाद्यन्तर्गणः । केचित्तु कुट् आदिर्येषां ते कुटादयः, कुटस्य आदिः कुटादिः, कुटादिश्च कुटादयश्च कुटादय इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः । तच्च 'रलो व्युपधात्—' इति सूत्रस्थेन लिखित्वा लेखित्वा लिलिखिषति लिलेखिषति इति वृत्तिग्रन्थेन, 'शकुनिष्वालेखने' इति सौत्रप्रयोगेण च विरुध्यते । अञ्णिदिति किम्, घञि कोटः । पोटः । णलि चुकोट । पुपोट । घुमास्था । 'दीङो युडचि—' इत्यतः क्ङितीत्यनुवर्तते । आर्धधातुक इति चाधिक्रियत एव । क्ङिति किम्, दाता । धाता । हलादौ किम् ददतुः । ददुः । अन्यथा आतो लोपात्परत्वादीत्वं स्यात् । आर्धधातुके किम् मातः । माथः । अध्यगीष्टेति । सिचो ङित्त्वादीत्वम् । इक् स्मरणे । ककार इह 'इण्वदिकः' इति विशेषणार्थः । एरित्युक्ते तु इट किट कटीत्यत्र प्रश्लिष्टस्य ईधातोरपि ग्रहणं स्यादि-

धिपूर्वः । 'अधीगर्थदयेशाम्-' ( सू० ६१३ ) इति लिङ्गात् । अन्यथा हि 'इगर्थ-' इत्येव ब्रूयात् । 'इण्वदिक इति वक्तव्यम्' ( वा० १५७७ ) । अधियन्ति । अध्यगात् । केचित्तु आर्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः, तन्मते यण्न । तथा च भट्टिः—'ससीतयो राघवयोरधीयन्' इति । वी. १०४८ गति-

---

गीष्वहि अध्यगीष्महि । गाङभावपक्षे आह अध्यैष्टेति । अधि आ इ स् त इति स्थिते इकारस्य गुणे आटो वृद्धौ यणि षत्वष्टुत्वे इति भावः । अध्यैषाताम् अध्यैषत । अध्यैषाथाम् । 'धि च' इति सलोपः अध्यैढ्वम् अध्यैषि अध्यैष्वहि अध्यैष्महि । लृङ्याह अध्यगीष्यतेति । 'विभाषा लुङ्लृङोः' इति गाङादेशे स्ये तस्य 'गाङ्कुटादिभ्यः' इति ङित्त्वे 'घुमास्था-' इतीत्त्वे अटि यणि षत्वमिति भावः । अध्यगीष्येतामित्यादि । गाङभावपक्षे आह अध्यैष्यतेति । अध्यैष्येतामित्यादि । इक् स्मरणे । अयमपीति । इङ्धातुवदयमपि धातुर्नित्यमधिपूर्वक इत्यर्थः । ननु धातुपाठे इङमधिकृत्य नित्यमधिपूर्व इति वचनाद् भूवादिसूत्रभाष्याच्च इङो नित्यमधिपूर्वकत्वं युक्तम् । अस्य तु तथात्वे किं प्रमाणमित्यत आह अधीगर्थेति । तत्र हि अधीगर्थेत्यनेन स्मरणार्थकधातुर्विवक्षितः । इग्धातोरधिपूर्वकत्वाभावेऽपि स्मरणार्थकत्वे इगर्थेत्येतावतैव स्मरणार्थकधातुलाभात् तत्र अधीति व्यर्थं स्यात् । अत इग्धातुरयं नित्यमधिपूर्वक एव स्मरणार्थक इति विज्ञायत इत्यर्थः । इण्वदिक इति । षष्ठ्यन्ताद्वतिः । गुणो यत् कार्यम् 'इणो यण्' इत्यादि, तद् इको भवतीत्यर्थः । अध्येति, अधीत इति सिद्धवत्कृत्य आह अधियन्तीति । अन्तादेशे इयङपवादः । 'इणो यण्' इति यणिति भावः । अध्येषि अधीथः अधीथ । अध्येमि अधीवः अधीमः । अधीयाय । अतुसि तु द्वित्वे कृते अधि इ इ अतुस् इति स्थिते 'इणो यण्' इति द्वितीयस्य इकारस्य यणि प्रथमस्य इकारस्य 'दीर्घ इणः किति' इति दीर्घे सवर्णदीर्घे, अधीयतुः अधीयुः अधीययिथ, अधीयेथ अधीयथुः अधीय । अधीयाय, अधीयय अधीयिव अधीयिम । अध्येता । अध्येष्यति । अध्येतु, अधीतात् अधीताम् अधियन्तु । अधीहि, अधीतम् अधीत । अध्ययानि अध्ययाव अध्ययाम । अध्येत् अध्यैताम् अध्यायन् । अध्यैः अध्यैतम् अध्यैत । अध्यायम् अध्यैव अध्यैम-इति सिद्धवत्कृत्य लुङ्याह अध्यगादिति । इण्वत्त्वाद् 'इणो गा लुङि' इति गादेशे 'गातिस्था-' इति सिचो लुका लुप्तत्वाद् 'घुमास्था-' इति ईत्त्वं न । अध्यगाताम् । अध्यगाम् अध्यगाव । अध्यैष्यत् । केचित्त्विति । आर्धधातुके इत्यधिकारे 'इणो गा लुङि' इति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादिति भावः । तन्मते यण् नेति । 'इणो यण्' इत्यस्य आर्धधातुकाधिकारस्थत्वाभावान्नातिदेश इत्यर्थः । तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्यम् । राघवयोरधीयन्निति । 'अधीगर्थ—' इति षष्ठी । राघवौ स्मरन्नित्यर्थः । अधिपूर्वाद् इग्धातोर्लटः शतरि शपो लुकि इकारस्य इयङि सवर्णदीर्घे अधीयदिति शत्रन्तात् सुबुत्पत्तौ सौ रूपम् ।

---

त्याहुः । केचित्त्विति । आर्धधातुकाधिकारे वार्तिकपाठात्तदधिकारोक्तानामेव कार्या-

व्याप्तिप्रजनकान्त्यसनखादनेषु । प्रजनं गर्भग्रहणम् । असनं क्षेपणं । वेति वीतः वियन्ति । वेषि । वेमि । वीहि । अवेत् अवीताम् अवियन् । अडागमे सत्यनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते । एति ईतः इयन्ति । ईयात् ऐषीत् । या १०४९ प्रापणे। प्रापणमिह गतिः । प्रणियाति । यातः यान्ति । २४६३ लङः शाकटायनस्यैव। (३-४-१११) आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् यायाताम्।

---

**वी गतीति** । 'अजेर्व्यघञपोः' इति सूत्रभाष्यरीत्या अस्य आर्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरे स्थितम् । **वियन्तीति** । एकाच्त्वाद्यणभावादियङिति भावः । लोटि वेतु, वीतात् वीताम् वियन्तु—इति सिद्धवत्कृत्याह **वीहीति** । हेरपित्त्वेन ङित्वान्न गुण इति भावः । वीतात् वीतम् वीत । वयानि वयाव वयाम । लङ्याह **अवेदिति** । **अवियन्निति** । वी अन् इति स्थिते परत्वादडागमात् प्रागियङि कृते अडागम इति भावः । मतान्तरमाह **अडागमे सतीति** । लावस्थायामडिति पक्षे इयङं बाधित्वा अनेकाच्त्वात् यणि अव्यन्निति केचिदाहुरित्यर्थः । केचिदित्यस्वरसं सूचयति । तद्बीजं तु कृतेऽप्यटि यणि कर्तव्ये आभीयतया अटोऽसिद्धत्वादनेकाच्त्वाभावाद्यणभावादियङेवोचित इति शब्देन्दुशेखरे विस्तरः । **अत्रेति** । वी ई इति सवर्णदीर्घे वी गतीति निर्देश इति भावः । **ईयादिति** । विधिलिङि आशीर्लिङि च रूपमिदं समानम् । 'स्कोः—' इति वलोपः । तत्र विधिलिङि ईयातामित्यादि, आशिषि तु ईयास्तामित्यादि, इति विशेषः । **ऐषीदिति** । सिचि वृद्धिः । **या प्रापण इति** । ननु गच्छतीत्यर्थे यातीति कथमित्यत आह **प्रापणमिह गतिरिति** । णिजर्थस्त्वविवक्षित इति भावः । **प्रणियातीति** । 'नेर्गद—' इति णत्वम् । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् । लङः **शाकटायनस्यैव** । 'झेर्जुस्' इति 'आतः' इति चानुवर्तते, तदाह **आदन्तादिति** । **जुस् वेति** । शाकटायनग्रहणाद्विकल्पलाभ इति भावः । एवकारस्तु 'लिट् च' 'लिङाशिषि' इत्युत्तरार्थ इति भाष्ये स्पष्टम् । च न 'लोटो लङ्वत्' इत्यतिदेशाद् यान्तु इत्यत्रापि जुस्विकल्पः शङ्क्यः, 'नित्यं ङितः' इत्यतो ङित इत्यनुवृत्त्यैव सिद्धेर्लङ्ग्रहणस्य

---

णामुपस्थितत्वादतिदेश इति भावः । **अधीयन्निति** । स्मरन्नित्यर्थः । रायलयोरित्यत्र 'अधीगर्थदयेशां कर्मणि' इति षष्ठी । **वी गति** । **अवियन्निति** । अडागमात् परत्वादियङ् । **अडागमे सतीति** । कृताकृतप्रसङ्गित्वमात्रेण अटो नित्यत्वादिति भावः । अतएवापरितोपात् 'असिद्धवदत्राभात्' इति समानाश्रये यणि कर्तव्ये अटोऽसिद्धत्वादियङेवोचित इत्याशयेन वा केचिदित्युक्तम् । लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यम् । **ईकारोऽपीति** । प्रयुञ्जते च 'न हि तरणिरुदीते दिक्पराधीनवृत्तिः' इति, व्याख्यातं च मनोरमायाम्—कर्मव्यतिहारे तङ् । न च 'न गतिहिंसार्थेभ्यः' इति निषेधः शङ्क्यः उत्पूर्वस्याविर्भावार्थत्वादिति । अत्र वदन्ति—व्यतिशब्दं विना कर्मव्यतिहारकल्पनं क्लेशावहम् । परकीयकर्म च कर्मव्यतिहारेऽपेक्ष्यते तच्चात्र नोपात्तम् । परस्परकरणं तु न संभवत्येव । ततश्चोदीते इति भावे

यायास्ताम् । अयासीत् । वा १०५० गतिगन्धनयोः । गन्धनं सूचनम् । भा १०५१ दीप्तौ । ष्णा १०५२ शौचे । श्रा १०५३ पाके । द्रा १०५४ कुत्सायां गतौ । प्सा १०५५ भक्षणे । पा १०५६ रक्षणे । पायास्ताम् अपासीत् । रा १०५७ दाने । ला १०५८ आदाने । 'द्वावपि दाने' इति चन्द्रः । दाप् १०५९ लवने । प्रणिदाति, प्रनिदाति । दायास्ताम् अदासीत् । ख्या १०६० प्रकथने । अयं सार्वधातुकमात्रविषयः । 'संस्थानत्वं नमः ख्यात्रे' ( वा० १५९१ ) इति वार्तिकं तद्भाष्यं चेह लिङ्गम् । संस्थानो जिह्वामूलीयः, स नेति ख्याञादेशस्य ख्शादित्वे प्रयोजनमित्यर्थः । 'संपूर्वस्य ख्यातेः प्रयोगो न' इति न्या-

---

लङ्‌व-द्भावमादाय प्रवृत्तिनिवारणार्थत्वात् । इदमपि भाष्ये स्पष्टम् । अयानिति । जुसभावे रूपम् । अयासीत् । ष्णाधातुः षोपदेशः । नस्य ष्टुत्वेन णत्वनिर्देशः । स्नाति । स्नायात्, स्नेयात् । पा रक्षणे । 'एर्लिङि' इति सूत्रे 'तिस्या—' इत्यत्र च पिबतेरेव ग्रहणादेत्त्वसिज्लुकौ न, तदाह पायास्ताम् । अपासीदिति । दाप् लवने । घुत्वाभावात् 'शेषे विभाषा इति णत्वविकल्पं मत्वाह प्रणिदाति, प्रनिदातीति । घुत्वाभावादाशीर्लिङि एत्वम्, लुङि लुक् च नेति मत्वाह दायास्तामिति । अदासीदिति च । ख्या प्रकथने । अयं सार्वधातुकमात्रविषय इति । मात्रशब्दोऽवधारणे । सार्वधातुक एवास्य ख्याधातोः प्रयोगः, न त्वार्धधातुक इत्यर्थः । कुत इत्यत आह संस्थानत्वमिति । 'चक्षिङः ख्याञ्'इति सूत्रे ख्यास्थाने 'ख्शाञ्' इति वक्तव्यम् । अस्य शकारस्य पूर्वत्रासिद्धमित्यधिकारे यकारो वक्तव्य इत्युक्त्वा 'प्रयोजनं सौप्रख्ये वुञ्विधिः' इत्युपक्रम्य 'संस्थानत्वं नमः ख्यात्रे' इत्युक्तं वार्तिके । तत्र नञमध्याहृत्य नमः ख्यात्रे इति संस्थानत्वं न भवतीति व्याख्यातं भाष्ये । तदिदं वार्तिकं भाष्यं च ख्याधातोरस्य सार्वधातुके एव प्रयोग इत्यत्र ज्ञापकमित्यर्थः । तत्र संस्थानपदं व्याचष्टे संस्थानो जिह्वामूलीय इति । प्राचीनाचार्यसमयादिति भावः । स नेति । स जिह्वामूलीयो 'नमः ख्यात्रे' इत्यत्र न भवतीत्येतत् ख्याञादेशस्य ख्शादित्वविधौ शस्य यत्वविधौ च प्रयोजनमित्यर्थः । ख्शादित्व इति । यत्वविधावित्यस्याप्युपलक्षणम् । शकारस्थानिकयत्वस्यासिद्धत्वात् । 'शर्परे विसर्जनीयः' इति विसर्जनीय इष्टः सिध्यति, जिह्वामूलीयस्त्वनिष्टो न भवतीति भाष्यवार्तिकहृदयम् । ख्याधातोरस्यार्धधातुकेऽपि प्रयोगसत्त्वे तु तृजन्ते ख्यातृशब्दे यकारस्य शकारस्थानिकत्वाभावाद् असिद्धत्वाभावात् 'शर्परे विसर्जनीयः' इत्यस्याप्रवृत्तौ 'कुप्वोः—'इति जिह्वामूलीयो दुर्वारः स्यात् । ततश्चार्धधातुके सर्वत्र न ख्याधातोः प्रयोग इति विज्ञायते, ज्ञापकस्य सामान्यापेक्षत्वादिति भावः । संपूर्वस्येति ।

---

निष्ठा ज्ञेया । तथा चोदये दिक्पराधीनवृत्तिस्तरणिर्नेत्यर्थः सुगम इति । प्रणिदातीति । 'शेषे विभाषा—' इति णत्वविकल्पः । अदासीदिति । अघुत्वान्न सिज्लुक् । नमः ख्यात्रे इति । यद्ययमार्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे 'शर्परे विसर्जनीयः' इत्यस्याप्रवृत्त्या कुप्वोरिति जिह्वामूलीयो दुर्वारः स्यादेवेति तद्भावः ।

सकारः । प्रा १०६१ पूरणे । मा १०६२ माने । अकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषः' इतिमाघः । उपसर्गवशेनार्थान्तरे तु सकर्मकः । 'उदरं परिमाति मुष्टिना' । 'नेर्गद—' ( सू० २२८५ ) इत्यत्र नास्य ग्रहणम् । प्रणिमाति, प्रनिमाति । वच १०६३ परिभाषणे । वक्तिः । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वग्धि । वच्यात् । उच्यात् ।

---

सार्वधातुकेऽपीति भावः । अत्र व्याख्यानमेव शरणम् । एवं च संख्याति इत्यादि नास्तीति फलितम् संख्यादिशब्दास्तु ख्याञादेशस्येति बोध्यम् । मा मान इति । मानं परिमितिरिति भावः, तदाह अकर्मक इति । माति घृतं पात्रेऽस्मिन्निति उदाहरणम् । परिमितं भवतीत्यर्थः, संगृहीतं भवतीति यावत् । अत्रार्थे शिष्टप्रयोगसंवादं दर्शयति तनौ ममुस्तत्रेति । 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः' इति माघकाव्ये । तपोधनस्य—नारदस्य, अभ्यागमेन-आगमनेन, संभवा मुदः—संतोषाः, कैटभद्विषः–श्रीकृष्णस्य तनौ–शरीरे, न ममुः–परिमिता न बभूवुः, आधिक्यान्न संगृहीता बभूवुरिति यावत् । अर्थान्तरे त्विति । परिच्छेदे त्वित्यर्थः । उदरमिति । 'उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु' इति नैषधकाव्ये । कोऽपि कुतुकी दमस्वसुः दमयन्त्याः, उदरं मुष्टिना परिमाति किमु परिगृह्णातीत्यर्थः । नास्य ग्रहणमिति । घुप्रकृतिमाङिति भाष्यादिति भावः । एवं च 'शेषे विभाषाऽकखादौ—' इति णत्वविकल्प इति मत्वाह प्रणिमाति, प्रनिमातीति । ममौ । ममिथ, ममाथ । ममिव माता । मास्यति । मातु अमात् । अमासीत् । अमास्यत् । वच परिभाषणे । अनिट् । अयमन्तीति । लटि प्रथमपुरुषबहुवचनं नास्तीत्यर्थः । बहुवचनपर इति । न प्रयुज्यत इति शेषः । अस्मिन् पक्षे पुरुषत्रये बहुवचनं नास्ती । झिपर इति । न प्रयुज्यत इति शेषः । अस्मिन् पक्षे लिडादिष्वपि बहुवचनं नास्तीति भावः । तत्र लिटि अकिति 'लिट्यभ्यासस्य–' इति संप्रसारणम्, उवाच । किति तु 'वचिस्वपि–' इति संप्रसारणम्, ऊचतुः । उवचिथ, उवक्थ । ऊचिव । वक्ता । वक्ष्यति । वक्तु । अवक् । वच्यादिति । विधिलिङि रूपम् । आशीर्लिङि 'वचिस्वपि–' इति संप्रसारणं मत्वाह

---

ख्शादित्वे प्रयोजनमिति वार्तिककाराद्युक्तिर्व्याकुप्येतेति भावः । संपूर्वस्येत्यादि । संख्यातीत्यादिप्रयोगो नास्त्येव । संख्येति प्रयोगस्तु ख्याञादेशस्येति न्यासकारादयः । मा माने । नास्येति । घुप्रकृतिमाङ् इति पाठाद् ङितामेव तत्र ग्रहणम्, ततश्च 'शेषे विभाषा—' इति विकल्प एव प्रवर्तत इत्याह प्रणिमाति । प्रनिमातीत्यादि । वच परिभाषणे । उवाच । वक्ता । वक्ष्यति । वक्तु । वक्तात् । अवक् । अवक्ताम् । अयमन्तिपर इति । तथा च वचन्ति, वक्ष्यन्ति, वचन्तु, अवचन्, अवोचन्, अवक्ष्यन्नित्येतेसाधवः । बहुवचनपर इति । अस्मिन् पक्षे लटि मध्यमे वक्थ । उत्तमे तु वच्मः । लिटि ऊचुः । मध्यमे ऊच । उत्तमे तु ऊचिम । लुटि वक्तारः । लिङि उच्यासुः, वच्यासुरित्यादयोऽप्यसाधवः । झिपर इति । अस्मिंस्तु पक्षे वक्थ, वच्मः, ऊच, ऊचिमेत्यादयः साधव इति दिक् ।

अवोचत् । विद १०६४ ज्ञाने । २४६४ विदो लटो वा । (३—४—८३) वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद विदतु विदुः । वेत्थ विदथुः विद । वेद विद्व विद्म । पक्षे वेत्ति वित्त इत्यादि । विवेद विविदतुः 'उषविद—' (सू० २३४१) इत्याम्पक्षे विद इत्यकारान्तनिपातान्न लघूपधगुणः । विदांचकार । वेदिता । २४६५ विदांकुर्वन्त्वित्यन्यतरस्याम् । (३—१—४१) वेत्तेर्लोट्याम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते, इतिशब्दात् । २४६६ तनादिकृञ्भ्य उः । (३—१—७९) तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । तनादित्वादेव सिद्धे कृञ्ग्रहणं गणकार्यस्यानित्यत्वे लिङ्गम् । तेन 'न विश्वसेदविश्वस्तम्' इत्यादि

---

उच्यादिति । अवोचदिति । लुङि 'अस्यतिवक्ति–' इति च्लेरङि 'वच उम्' इति भावः । विद ज्ञान इति । अनिट्सु लुग्विकरणस्याग्रहणाद् अयं सेट् । विदो लटो वा । 'परस्मैपदानां णलतुस्–' इत्यादिसूत्रमनुवर्तते । विद इति पञ्चमी, तदाह वेत्तेर्लट इति । विन्दतिविद्यत्योस्तु शेन श्यना च व्यवधानाद् नैते आदेशाः । इत्यादीति । विदन्ति । वेत्सि वित्थः । वित्थ । वेद्मि विद्वः विद्मः । विविदतुरिति । विविदुः । विवेदिथ विविदथुः विविद । विवेद विविदिव विविदिम । आमूपक्ष इति । न लघूपधगुण इत्यन्वयः । कुत इत्यत आह अकारान्तनिपातनादिति । 'उषविद–' इति सूत्रे विदेरकारान्तत्वम् आम्संनियोगेन निपात्यत इत्यर्थः । आमि अतो लोपः । तस्य स्थानिवत्त्वाद् न लघूपधगुण इति भावः । वेदितेति । वेदिष्यतीत्यपि ज्ञेयम् । विदांकुर्वन्त्वित्यन्यतरस्याम् । 'कृञ् चानुप्रयुज्यते लिटि' इत्युत्तरमिदं सूत्रम् । इति शब्दः प्रकारे । एवं जातीयकं वैकल्प्येन प्रत्येतव्यमित्यर्थः । वेत्तेरिति । लुग्विकरणाद् विदधातोः लोटिपरे आम्प्रत्ययो निपात्यत इत्यर्थः । लोडन्तेति । आमन्ताद्विदेः लोडन्तकृञ्धातोः अनुप्रयोगश्च निपात्यत इत्यर्थः । ननु 'विदांकुर्वन्तु—' इति लोटि प्रथमपुरुषवहुवचनस्यैव सूत्रे निर्देशात् कथं लोडन्तसामान्यानुप्रयोग इत्यत आह पुरुषेति । कुर्वन्त्विति प्रथमपुरुषो वहुवचनं च न विवक्षितमित्यर्थः । तयोस्तु नान्तरीयकमुच्चारणमिति भावः । इतिशब्दादिति । तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वादिति भावः । तनादिकृञ्भ्य उः । शपोऽपवाद इति । अनेन शब्विषय एवास्य प्रवृत्तिरिति सूचितम् । 'सार्वधातुके यक्' इत्यतः सार्वधातुकग्रहणस्य 'कर्तरि शप्' इत्यतः कर्तरीत्यस्य चानुवृत्तेरिति भावः । तेनेति । गणकार्यस्यानित्यतया 'श्वसेत्' इत्यत्र अदादिगण

---

विदो लटो वा । पञ्चमोयं न तु षष्ठी, तेन विद्यतिविन्दत्योरव्यवहितपरस्य लटोऽभावान्नैते आदेशास्तदाह वेत्तेरिति । लोटो लुगिति । 'आमः' इति सूत्रे 'मन्त्रे घस–' इत्यतो लेरित्यनुवर्त्य आमः परस्य लेर्लुगिति व्याकुर्वतां मतेनेदमुक्तम् । निष्कर्षे तु तेनैव लुगिति वोध्यम् । पुरुषवचन इति । प्रथमपुरुषो वहुवचनं चेत्यर्थः । परस्मैपदमप्यविवक्षितमेवेति केषांचिन्मते कर्मव्यतिहारे तङ्, व्यतिविदांकुरुताम्, व्यतिविदांकुर्वातामित्यादि ज्ञेयम् । तेनेति । विश्वसेदित्यत्र

सिद्धम्। विदांकरोतु। २४६७ अत उत्सार्वधातुके। (६-४-११०) उप्रत्यान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति। उदिति तपरत्वसामर्थ्यान्न गुणः। विदांकुरुतात्। विदांकुरुताम्। 'उतश्च-' (सू० २३३४) इति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्वम्। विदांकुरु। विदांकरवाणि। अवेत् अविताम्। 'सिजभ्यस्त-' (सू० २२२६) इति झेर्जुस्। अविदुः। २४६८ दश्च। (८-२-७२) धातोर्दान्तस्य पदस्य सिपि परे रुः स्याद्वा। अवेः, अवेत्। अस १०६५ भुवि। अस्ति। २४६९ श्नसोरल्लोपः। (६-४-१११)

---

कार्यं शपो लुङ् न भवतीत्यर्थः। वस्तुतस्तु कृञ्ग्रहणस्यात्र भाष्ये प्रत्याख्यातत्वाद् उक्तज्ञापनाभावाद् विश्वसेदित्यसंबद्धमेवेत्याहुः। विश्वस्तमित्यत्र तु आगमशास्त्रस्यानित्यत्वाद् नेडित्याहुः। विदांकरोत्विति। अत्र विदेर्लोटि आमि लोटो लुकि आमन्ताद्विदेः कृञो लोडन्तस्यानुप्रयोगः। तत्र लोटस्तिपि 'एरुः' इत्युत्वे शपं बाधित्वा उप्रत्यये ऋकारस्य गुणे रपरत्वे उकारस्य तिब्निमित्तो गुणः। तातङि तु ऋकारस्य गुणे रपरे तातङो ङित्त्वाद् उकारस्य गुणाभावे विदांकुरुतात् इति स्थिते। अत उत्। उप्रत्ययान्तस्येति। 'उतश्च प्रत्ययात्-' इत्यतस्तदनुवृत्तेरिति भावः। कृञोऽकारस्य उदिति। 'नित्यं करोतेः' इत्यतस्तदनुवृत्तेरिति भावः। क्ङितीति। 'गमहन--इत्यतस्तदनुवृत्तेरिति भावः। अकारस्य उत्वे कृते तस्य लघूपधगुणमाशङ्क्य आह तपरेति। इदं स्थानिवत्सूत्रे भाष्ये स्पष्टम्। विदांकुरुतामिति। विदांकुर्वन्त्वित्यपि ज्ञेयम्। 'न भकुर्छुराम्' इति निषेधाद् 'हलि च' इति दीर्घो न। हेर्लुगिति। विदांकुरु हि इति स्थिते, 'अत उत्सार्वधातुके' इत्युत्त्वं परमपि बाधित्वा नित्यत्वाद् 'उतश्च प्रत्ययात्--' इति हेर्लुगित्यर्थः तर्हि सार्वधातुकाभावात् कथमुत्त्वमित्यत आह आभीयत्वेनेति। विदांकुर्विति। विदांकुरुतात् विदांकुरुतम् विदांकुरुत। विदांकरवाणीति। आटः पित्त्वेन ङित्त्वाभावादुकारस्य गुण इति भावः। विदांकरवाव विदांकरवाम। लङ्याह अवेदिति। हल्ङ्यादिना सिपो लोपे विशेषमाह दश्च। 'सिपि धातो रुर्वा' इत्यनुवृत्तम्। द इति षष्ठ्यन्तेन धातुर्विशेष्यते, तदन्तविधिः, पदस्येत्यधिकृतम्, तदाह धातोर्दान्तस्य पदस्येति। अलोऽन्त्यस्येत्यन्त्यस्य ज्ञेयम्। अवेदिति। सिपो हल्ङ्यादिलोपे दकारस्य रुत्वविकल्पः। अवित्तम् अवित्त। अवेदम् अविद्व अविद्म। विद्यात् विद्याताम्। विद्यात् विद्यास्ताम्। अवेदीत्। अवेदिष्यत्। अस भुवीति। भवनं भूः। सत्ताया-

---

शपो लुगभावः सिद्ध इति भावः। एवमप्यविश्वस्तमित्यत्रेडभावः कथमिति चेदागमशास्त्रस्यानित्यत्वादिति गृहाण। अत उत्सार्व। क्ङिति किम्, करोति। करोषि। लुकोऽसिद्धत्वादिति। सार्वधातुकग्रहणमुत्तरार्थमेव नात्रावश्यकम्। इह भूतपूर्वगत्या सार्वधातुकपरत्वमाश्रीयत इति वृत्तिमते त्वसिद्धत्ववर्णनस्योपयोगलेशोऽपि नास्तीति ज्ञेयम्। दश्च। 'सिपि धातोरुर्वा' इत्यनुवर्तते, पदस्येति 'झलां जशोऽन्ते' इत्यस्मादन्त इति च तदाह धातोर्दस्येत्यादि। सिपि किम् तिपि अवेत्। दान्तस्य धातोः सिपि रुर्वेत्येतावतैवेष्टसिद्धौ पदान्तानुवृत्तिर्मन्दप्रयोजनेत्याहुः।

श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। स्तः सन्ति। 'तासस्त्योः–' (सू० २१-९१) इति सलोपः। असि स्थः स्थ। अस्मि स्वः स्मः। 'आर्धधातुके' (सू० २४३२) इत्यधिकृत्य। २४७० अस्तेर्भूः। (२-४-५२) बभूव भविता। अस्तु, स्तात् स्ताम् सन्तु। २४७१ घ्वसोरेद्धावभ्यासलोपश्च। (६-४-११९) घोरस्तेश्चैत्त्वं स्याद्धौ परेऽभ्यासलोपश्च। आभीयत्वेनैत्त्वस्यासिद्धत्वाद्धेर्धिः। 'श्नसोः–'(सू० २४६९) इत्यल्लोपः। एधि। तातङ्पक्षे एत्त्वं न। परेण तातङा बाधात्। 'सकृद्गतौ–' (प० ४१) इति न्यायात्। स्तात् स्तम् स्त। असानि असाव असाम। 'अस्तिसिचः' (सू० २२२५) इतीट्। आसीत्। श्नसोरल्लोपस्याभीयत्वेनासिद्धत्वादाट्। आस्ताम् आसन्। स्यात्।

मित्यर्थः। अस्तीति। सस्य चर्त्वेऽपि सकार एव भवति, न तु तकारः, अल्पप्राणतया प्रयत्नभेदात्। श्नसोरल्लोपः। अत् इति लुप्तषष्ठीकं पदम्। श्न अस् अनयोर्द्वन्द्वात् षष्ठीद्विवचनम्। शकन्ध्वादित्वात् पररूपम्। श्नेति श्नम्प्रत्ययैकदेशनिर्देशः। 'अत उत्सार्वधातुके' इत्यतः सार्वधातुके इत्यनुवर्तते, 'गमहन–' इत्यतः क्ङितीति, तदाह श्नस्येत्यादिना। अस्तेर्भूः। असधातोर्भूभावः स्याद् आर्धधातुके परे इत्यर्थः। अस् हि इति स्थिते घ्वसोरेद्धावभ्यासलोपश्च। घु अस् अनयोर्द्वन्द्वः। एत् हौ इति च्छेदः। ननु अस् हि इति स्थिते 'हुझल्भ्यो हेर्धिः' इति धित्वं परत्वाद् बाधित्वा 'घ्वसोः–' इति सकारस्य एत्त्वे कृते हुझल्भ्यः परत्वाभावात् कथं धिभाव इत्यत आह आभीयत्वेनेति। तथा च अ ए धीति स्थिते आह श्नसोरिति। नन्वाशिषि अस् हि इति स्थिते तातङं बाधित्वा परत्वादेत्त्वं प्राप्नोतीत्यत आह तातङ्पक्षे एत्त्वं नेति। कुत इत्यत आह परेणेति। ननु कृते तातङि तस्य स्थानिवत्त्वेन हित्वात्तस्मिन्परे 'घ्वसो–' इत्येत्त्वं कुतो नेत्यत आह सकृद्गताविति। सकृद् एकवारं गतौ प्रवृत्तौ विप्रतिषेधे विरोधे सति यद्बाधितं तद्बाधितमेव भवति, न तु पुनः प्रवर्तत इति तदर्थः। लङ्स्तिपि विशेषमाह अस्तिसिच इति। इकारलोपे आटि वृद्धौ 'अस्तिसिचः-' इति इडागमे इत्यर्थः। ननु तसादौ ङिति परत्वादाडागमात्प्राक् 'श्नसोः—इत्यल्लोपे सति अजादित्वाभावात् कथमाडित्यत आह श्नसोरल्लोपस्याभीयत्वेनेति। आस्तामिति। अत्र कृते आडागमे तस्य लोपनिवृत्त्यर्थं 'श्नसोरल्लोपः' इति तपरकरणम्। वस्तुतस्तु आट आभीयत्वेनासिद्धत्वादेव लोपो न भवतीति 'श्नसोरल्लोपः' इत्यत्र तपरकरणं व्यर्थमिति भाष्ये स्पष्टम्। आसन्निति। आसीः आस्तम् आस्त। आसम् आस्व आस्म। विधिलिङ्याह स्यादिति। स्याताम् स्युरित्यादि। आशीर्लिङि

तच्चिन्त्यम्, वेत्सीत्यत्रातिप्रसङ्गाच्चर्त्वस्यासिद्धत्वेन दान्तत्वात् श्नसोरल्लोपः। 'अत उत्–' इति सूत्रादत इत्यनुवर्त्यादग्रहणं त्यक्तुं शक्यमित्याहुः असोरिति। शकन्ध्वादित्वात्पररूपमित्याह अस्यास्तेश्चेति। अस्योदाहरणं रुन्धः, रुन्धन्तीत्यादि। क्ङिति किम्, रुणद्धि, अस्ति। तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो माभूदित्येतदर्थम्। निष्कर्षस्तु अनुपदं स्फुटीभविष्यति। घ्वसोरेद्धा। एत्वमलोन्त्यस्य लोपस्तु शित्वात्सर्वस्येति भाष्यादौ स्पष्टम् देहि धेहि।

भूयात्। अभूत्। सिचोऽस्तेश्च विद्यमानत्वे विशेषणादीण्न। २४७२ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। (८—३—८७) उपसर्गेणः प्रादुषश्च परस्यास्तेः सस्य षः स्याद्यकारेऽचि च परे। निष्यात। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परः किम्—अस्तिः। मृजूष्[1] १०६६ शुद्धौ। २४७३ मृजेर्वृद्धिः। (७—२—११४) मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे। 'क्ङित्यजादौ वेष्यते—'

---

आर्धधातुकत्वाद् भूभावं मत्वाह भूयादिति। लुङि तु सिचि भूभावे 'गातिस्था–' इति सिचो लुकं मत्वाह अभूदिति। तत्र 'अस्तिसिचोऽपृक्ते' इति ईडागममाशङ्क्याह सिचोऽस्तेश्चेति। इह भूभावे सति अस्तेरश्रूयमाणत्वाद् इण्नेति भावः। उपसर्गप्रादुर्भ्याम्। उपसर्गः प्रादुस् अनयोर्द्वन्द्वः। इण्कोरित्यधिकृतम्। तत्र इण इत्युपसर्गेण संबध्यते। न तु प्रादुसि, ततः परस्य अस्तेः सस्य इणः परत्वासंभवात्। कोरित्यपि असंभवान्न संबध्यते। अस्तिरिति षष्ठ्यर्थे प्रथमा। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, मूर्धन्य इत्यधिकृतम्। य् अच् अनयोर्द्वन्द्वः। यचौ परौ यस्मादिति विग्रहः। यकारे अकारे च परे इति लभ्यते। तदाह उपसर्गेण इति। उपसर्गस्थादिण इत्यर्थः। परस्येति। अस्तेः सस्य विशेषणमिदम्। न त्वस्तेः। तेन प्रादुरासीदित्यत्र न षत्वम्। यकारपरकत्वे उदाहरति निष्याद, प्रादुष्ष्यादिति। प्रादुस् इति सान्तमव्ययम्। सस्य षत्वे पूर्वस्य ष्टुत्वेन षः। षान्तत्वे तु प्रादुर्भ्यामिति रुत्वनिर्देशो नोपपद्यते अच्परकत्वे उदाहरति निषन्ति प्रादुष्षन्तीति। मृजूष् शुद्धाविति। ऊदित्वमिड्विकल्पार्थम्। 'षिद्भिदादिभ्योऽङ्' इत्यङर्थं षित्त्वम्। वस्तुतस्तु भिदादिगणे मृजाशब्दपाठादेव सिद्धेरिह षित्करणमनार्षमित्याहुः। मृजेर्वृद्धिः। 'इको गुणवृद्धी' इति परिभाषया इक इत्युपस्थितम्। मृजेरित्यवयवषष्ठी, तदाह मृजेरिको वृद्धिः स्यादिति। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषामभिप्रेत्य आह धातुप्रत्यये पर इति। धातोर्विहिते प्रत्यये इत्यर्थः। तेन परिमृड्भ्यामित्यत्र न वृद्धिरिति भावः। गुणापवादोऽयम्। क्ङित्यजादौ वेष्यत इति। मृजेर्वृद्धिरिति शेषः। 'इको गुणवृद्धी' इति सूत्रभाष्ये इदं पठितम्।

---

असिद्धत्वादाडिति। नन्वेवमाटोऽसिद्धत्वात् 'श्नसोः–' इत्यल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेत्। अत्राहुः—आभाच्छास्त्रस्यानित्यताज्ञापनार्थं तपरकरणम्, तेन देभतुरित्यादि सिद्धमिति। स्यादेतत्—अत्र केचिद् अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञापनार्थत्वं न सिध्यते। न च 'अत उत्–' इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम् अस्येत्युक्तौ गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात्। तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहुः। उपसर्गप्रादुर्भ्याम्। प्रादुस् इति सान्तमव्ययम्। प्रादुषश्चेति पाठे प्रादुर्भ्यामिति निर्देशो न युज्यत इति प्राचां षान्तपाठः प्रामादिकः। परस्येति। अयमस्तेः सस्य विशेषणं न त्वस्तेः, तेन प्रादुरस्तीत्यत्र न षत्वम्। उपसर्गेत्यादि

---

१—'मृजू' इति षकाररहितपाठ एव बहुत्रोपलभ्यते।

( वा० ५०५७ ) । व्रश्च–' ( सू० २९४ ) इति षः । मार्ष्टि मृष्टः मृजन्ति, मार्जन्ति ममार्ज ममार्जतुः, ममृजतुः । ममार्जिथ, ममार्ष्ठ । मार्जिता, मार्ष्टा । मृड्ढि । अमार्ट् । अमार्जम् । अमार्जीत्, अमार्क्षीत् । रुदिर् १०६७ अश्रुविमोचने ।
२४७४ रुदादिभ्यः सार्वधातुके । ( ७–२–७६ ) रुद्, स्वप्, श्वस्, अन्, जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात् । रोदिति रुदितः । हौ

व्रश्चेति ष इति । मृज् ति इति स्थिते ऋकारस्य वृद्धौ रपरत्वे जकारस्य व्रश्चेति षत्वे तकारस्य ष्टुत्वेन टकारे मार्ष्टीति रूपमित्यर्थः । मृष्ट इति । ङित्वान्न वृद्धिः नापि गुण इति भावः । मृजन्ति,मार्जन्ति इति । क्ङित्यजादाविति वृद्धिविकल्प इति भावः । मार्क्षि मृष्ठः मृष्ठ । मार्जिम । मृज्वः । मृज्मः । ममार्जेति । णलि मृजेर्वृद्धिरिति भावः ।अतुसादावजादौ किति वृद्धिविकल्पं मत्वाह ममार्जतुः, ममृजतुरिति । ममार्जुः ममृजुः इत्यपि ज्ञेयम् । ऊदित्त्वादिड्विकल्पं मृजेर्वृद्धिं च मत्वाह ममार्जिथ, ममार्ष्ठेति । इडभावे जस्य व्रश्चेति षः । थस्य ष्टुत्वेन ठ इति भावः । ममार्जथुः, ममृजथुः ममार्ज, ममृज । ममार्ज ममार्जिव, ममृजिव, ममृज्व ममार्जिम, ममृजिम, ममृज्म । लुट्याह मार्जिता, मार्ष्टेति । ऊदित्त्वादिट् तदभावे च 'मृजेर्वृद्धिः' इति भावः । मार्जिष्यति, मार्क्ष्यति । मार्ष्टु, मृष्टात् मृष्टाम् मार्जन्तु, मृजन्तु । मृड्ढीति । हेरपित्त्वेन ङित्त्वान्न वृद्धिः । व्रश्चादिना जस्य षः, हेर्धिः, षस्य जश्त्वेन डः, धस्य ष्टुत्वेन ढः । मृष्टात् मृष्टम् मृष्ट । मार्जानि मार्जाव मार्जाम । लङ्याह अमार्ट् इति । तिप इकारलोपे वृद्धौ रपरत्वे हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः । अमृष्टाम् अमार्जन्, अमृजन् । अमार्ट् अमृष्टम् अमृष्ट । अमार्जमिति । अमृज्व अमृज्म । मृज्यात् मृज्यास्ताम् । अमार्जीत्, अमार्क्षीदिति । ऊदित्त्वादिड्विकल्प इति भावः । इट्पक्षे अमार्जिष्टाम् अमार्जिषुरित्यादि सुगमम् । इडभावे अमार्ष्टाम् अमार्क्षुः । अमार्क्षीः अमार्ष्टम् अमार्ष्ट । अमार्क्षम् अमार्क्ष्व अमार्क्ष्म । अमार्जिष्यत्, अमार्क्ष्यत् । रुदिरधातुरिरित् सेट् । रुदादिभ्यः । इड्वलादेरित्यनुवृत्तिं मत्वाह वलादेरिति । रुदित इति । ङित्त्वान्न गुणः । रुदन्ति । रोदिषि रुदिथः रुदिथ । रोदिमि रुदिवः रुदिमः । रुरोद रुरुदतुः । रुरोदिथ । रुरुदिव रुरुदिम । रोदिता । रोदिष्यति । रोदितु, रुदितात् रुदिताम् । रुदन्तु । रुदि हि इति स्थिते

किम्, दधि स्यात् । अस्तेः किम्, परिसृजति । मृजू शुद्धौ । अयं न षित्, भिदादिपाठसामर्थ्यात् । मृजेर्वृद्धिः । गुणापवादः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याह धातुप्रत्यय इति । धातुप्रत्यये किम्, कंसपरिमृड्भ्याम् । क्ङित्यजाविति । एतच्चान्येषां वैयाकरणानां मतम् 'इको गुणवृद्धी' इति सूत्रे भाष्यकृता स्वीकृतम् । मृड्ढीति । 'हुझल्भ्यः–' इति हेर्धिः । षत्वष्टुत्वजश्त्वानि । वलादे सार्वधातुकस्येति । वलादेः किम् रुदन्ति । सार्वधातुके

१—केचित्त्विह क्रादिनियमान्नित्यमिटमाहुः, क्रादिनियमस्य नञ्–वेत्युभयप्रापितनिषेवनियामकत्वस्वीकारात् ।

परत्वादिटि धित्वं न । रुदिहि । २४७५ रुदश्च पञ्चभ्यः । (७-३-९८) हलादेः पितः सार्वधातुकस्यापृक्तस्य ईट् स्यात् । २४७६ अड् गार्ग्यगालवयोः । (७-३-९९) अरोदीत्, अरोदत् अरुदिताम् अरुदन् । अरोदीः, अरोदः । अरोदम् । प्रकृतिप्रत्ययविशेषापेक्षाभ्यामन्तरङ्गत्वाद्यासुट् । रुद्यात् । अरुदद्, अरोदीत् । ञि ष्वप् १०६८ शये । स्वपिति स्वपितः । सुष्वाप सुषुपतुः, सुषुपुः । सुष्वपिथ, सुष्वप्थ । २४७७ सुविनिर्दुर्भ्यः सुपिसूति-

---

हुझल्भ्यः-' इति धित्वमाशङ्क्याह हौ परत्वादिति । रुदिहीति । हेरपित्त्वेन ङित्वान्न लघूपधगुण इति भावः । रुदितात् रुदितम् रुदित । रोदानि रोदाव रोदाम । रुदश्च पञ्चभ्यः । 'नाभ्यस्तस्य-' इत्यतः पिति सार्वधातुके इति 'उतो वृद्धिः-' इत्यतो हलीति 'गुणोऽपृक्ते' इत्यतः अपृक्ते इति 'ब्रुव ईट्' इत्यत ईडिति चानुवर्तते । रुद इति पञ्चमी । रुदादिभ्य इति विवक्षितम् इत्यभिप्रेत्य सूत्रशेषं पूरयति हलादेरित्यादिना । अड्गार्ग्यगालवयोः । अनयोर्मते रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः सार्वधातुकस्य अपृक्तस्य अडागमः स्यादिति स्पष्टोऽर्थः । अरोदीरिति । अरुदितम् अरुदित इत्यपि ज्ञेयम् । अरोदमिति । अरुदिव अरुदिम इत्यपि ज्ञेयम् । ननु लिङस्तिपि यासुटं बाधित्वा परत्वाद् 'अड्गार्ग्यगालवयोः' इति 'रुदश्च पञ्चभ्यः' इति च अडीटौ स्यातामित्यत आह प्रकृतिप्रत्ययेति । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्चेत्यपि ज्ञेयम् । लुङि 'इरितो वा' इत्यङ्पक्षे आह अरुददिति । अङभावपक्षे त्वाह अरोदीदिति । 'अस्तिसिचः-' इति ईट् । 'रुदश्च पञ्चभ्यः' इति तु नेह प्रवर्तते, सिचा व्यवहितत्वात् । ञिष्वप् शय इति । षोपदेशोऽयम् । आर्धधातुके अनिट् । स्वपितीति । 'रुदादिभ्यः-' इति इट् । स्वपित इति । स्वपिषि स्वपिथः स्वपिथ स्वपिमि स्वपिवः स्वपिमः सुष्वापेति । द्वित्वे 'लिट्यभ्यासस्य-' इति संप्रसारणे पूर्वरूपे आदेशसकारत्वात् षत्वमिति भावः । सुषुपतुरिति । 'वचिस्वपि-' इति संप्रसारणे कृते द्वित्वादीति भावः । सुषुपुरित्यपि ज्ञेयम् । सुष्वपिथ, सुष्वप्थेति । भारद्वाजनियमात्थलि वेडिति भावः । सुषुपथुः सुषुप । सुष्वाप, सुष्वप सुषुपिव सुषुपिम । सुविनिर्दुर्भ्यः । कृतसंप्रसारणस्य स्वप्धातोः सुपीत्यनेन ग्रहणम् । सूतीत्यनेन सूतिशब्दः कृदन्तो गृह्यते । समेत्यनेनापि समशब्दस्य ग्रहणम् । षष्ठ्यर्थे प्रथमा । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । मूर्धन्य इत्यधि-

---

किम्, स्वसा । धित्वं नेति । सकृद्गताविति न्यायात्, हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थं इत्यादिप्रागुक्तसमाधानाद्वेति भावः । रुदश्च । पञ्चभ्यः किम्, जागर्तेर्लङि अजागः । प्रकृतिप्रत्ययेत्यादि । हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः । अरुददिति । 'इरितो वा' इत्यङ् । अरोदीदिति । 'अस्तिसिचः-' इति ईट् । 'रुदश्च-' इत्यनेन तु न, सिचा व्यवधानेन रुदादेः परत्वाभावात् । सुषुपतुरिति । 'वचिस्वपि-' इति संप्रसारणम् । ततो द्वित्वम् ।

समाः । ( ८—३—८८ ) एभ्यः सुप्यादेः सस्य षः स्यात् । 'पूर्वं धातुरुपसर्गेण युज्यते' । किति लिटि परत्वात्संप्रसारणे षत्वे च कृते द्वित्वम् । 'पूर्वत्रासिद्धीयमद्विर्वचने' ( प० १२७ ) सुषुषुपतुः सुषुषुपुः । पिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं 'हलादिः शेषः' ( सू० २१७९ ) । नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत्, अस्वपत् ।

---

कृतम्, तदाह एभ्यः सुप्यादेरिति । सुषुप्तिः, सुषूतिः, सुषम इत्युदाहरणानि । अत्र कृतसंप्रसारणस्य स्वप्धातोर्ग्रहणात् सुस्वप्न इत्यत्र न षत्वमिति भाष्यम् । नन्वेवं सति सुषुषुपतुरित्यत्र सुपूर्वस्य स्वपधातोः कथं षत्वम् । कृतसंप्रसारणस्य हि स्वपधातोः षत्वम् । तत्र यदि स्वप् अतुस् इति स्थिते पूर्वं द्वित्वे कृते पश्चाद् 'वचिस्वपि—' इति संप्रसारणं तदा हलादिशेषे उत्तरखण्डस्यैव 'वचिस्वपि—' इति संप्रसारणम, न त्वभ्यासस्य । अतुसः कितः उत्तरखण्डव्यवहितत्वात्, 'न संप्रसारणे संप्रसारणम्' इति निषेधाच्च । ततश्च सु ससुप् अतुसित्यत्र पूर्वखण्डस्य कृतसंप्रसारणत्वाभावात् कथं षत्वम् । उत्तरखण्डस्य च सु इत्युपसर्गादव्यवहितपरत्वाभावात्कथमनेन षत्वम्, इण्कवर्गाभ्यां परत्वाभावेन आदेशप्रत्यययोः इत्यस्याप्युत्तरखण्डे अप्रवृत्तेः । यदि तु परत्वात्पूर्वं संप्रसारणे कृते पश्चाद् द्वित्वं तर्हि सुप् इत्यस्य द्वित्वप्रवृत्तेः प्रागेव षत्वमिति वक्तव्यम् । तत्तु न युज्यते । 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति परिभाषया सु इत्युपसर्गसंबन्धस्य द्वित्वात्प्रागप्रवृत्तेः । तथा च कृतसंप्रसारणस्य अकृतषत्वस्य सुप् इत्यस्य द्वित्वे उत्तरखण्डस्यैव 'आदेशप्रत्यययोः' इति षत्वं स्यात् । न तु पूर्वखण्डस्य 'सात्पदाद्योः' इति निषेधात् । कृते हलादिशेषे सु इति पूर्वखण्डस्य सुत्र षत्वाभावेन 'सुविनिर्दुर्भ्यः—' इत्यस्याप्यप्रवृत्तिः । न च एकदेशविकृतस्यानन्यत्वं शङ्क्यम्, एवमप्यभ्यासस्यानर्थकत्वेन अर्थवद्ग्रहणपरिभाषया षत्वस्य तत्राप्राप्तेः । तस्मादिह सुषुषुपतुरित्यत्र पूर्वखण्डे षत्वं दुरुपपादमित्याशङ्क्याह पूर्वं धातुरित्यादिना । लक्ष्यानुरोधादिह 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इत्याश्रीयते । ततश्च द्वित्वात्प्रागेव परत्वात्संप्रसारणे सति सुप् इत्यस्य सु इत्युपसर्गपूर्वकत्वमादाय षत्वे च कृते सति पुनः प्रसङ्गविज्ञानात् षुप् इत्यस्य कृतषत्वस्य द्वित्वे सति खण्डद्वयेऽपि षकारश्रवणं निर्बाधमित्यर्थः । तदुक्तं भाष्ये—' 'षुपिभूतो द्विरुच्यते' इति । ननु कृतषत्वस्य कथं द्वित्वे कर्तव्ये षत्वस्यासिद्धत्वादित्यत आह पूर्वत्रासिद्धीयमिति । ननु तर्हि सुसुष्वातेत्यत्रापि पूर्वखण्डे षत्वं श्रूयेतेत्यत आह पिति त्विति । पिति णलि कित्त्वाभावाद् 'वचिस्वपि—' इत्यस्याप्रवृत्तौ कृते द्वित्वे 'लिट्यभ्यासस्य—' इति पूर्वखण्डस्य संप्रसारणम् । सु सुप् स्वप् अ इति स्थिते 'सुविनिर्दुर्भ्यः—' इति षत्वस्यासिद्धत्वाद् हलादिशेष इत्यर्थः । नित्यत्वाच्चेति । कृते अकृते च षत्वे हलादिशेषस्य प्राप्तेरिति भावः । तत इति । हलादिशेषानन्तर सु इत्यस्यैव

---

सुपिसूतिसमा इति । सूतीति क्तिन्नन्तः । समेति पचाद्यजन्तः । सुषुप्तिः । सुषूतिः । सुषमा । विषमः । अद्विर्वचन इति । तेन षत्वसहितस्य द्वित्वम् । सुपि रूपाभावादिति । 'एकदेशविकृतमनन्यवत्' इति तु न प्रवर्तते । तस्य

स्वप्यात् । सुप्यात् सुषुप्यात् । अस्वाप्सीत् । श्वस १०६९ प्राणने । श्वसिति । श्वसिता । अश्वसीत्, अश्वसत् श्वस्यातम् । श्वस्यास्ताम् । 'ह्म्यन्तक्षण-' ( सू० ३२९९ ) इति न वृद्धिः । अश्वसीत् । अन १०७० च । अनिति । आन । अनिता । आनीत्, आनत् । २४७८ अनितेः । ( ८—४—१९ ) उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । जक्ष १०७१ भक्षहसनयोः । जक्षिति जक्षितः । २४७९ अदभ्यस्तात् । ( ७—१—४ ) झस्य अत्स्यात् । अन्तापवादः । जक्षति । 'सिजभ्यस्त-' ( सू० २२२६ ) इति झेर्जुस् । अजक्षुः । अयमन्तस्थादिरित्युज्ज्वलदत्तो बभ्राम । रुदादयः पञ्च गताः ।

---

स्थित्या सुप् इति रूपस्याभावान्न ष इत्यर्थः । एकदेशविकृतत्वादनन्यत्वेऽपि अभ्यासस्यार्थवत्त्वाभावान्न ष इति द्रष्टव्यम् । स्वप्ता । स्वप्स्यति । स्वपितु, स्वपितात् स्वपिताम् स्वपन्तु । स्वपिहि, स्वपितात् स्वपितम् स्वपित । स्वपानि स्वपाव स्वपाम । लङ्याह अस्वपीत्, अस्वपदिति । 'रुदश्च पञ्चभ्यः' इति ईट् 'अड्गार्ग्यगालवयोः' इत्यटि च रूपे । अन्यानि रुदिवद्रूपाणि । लिङ्याह सुप्यादिति । 'वचिस्वपि-' इति संप्रसारणमिति भावः । 'सुविनिर्दुर्भ्यः-' इति षत्वं मत्वाह सुषुप्यादिति । अस्वाप्सीदिति । अनिट्क्त्वान्न सिज्लोप इति भावः । श्वस प्राणन इति । वलाद्यार्धधातुके सेडयम् सार्वधातुके तु वलादौ 'रुदादिभ्यः-' इति इट् । लङस्तिपि 'रुदश्च' इति ईटम् 'अड्गार्ग्य-' इत्यटं च मत्वाह अश्वसीत्, अश्वसदिति । विध्याशीर्लिङोः श्वस्यादिति सिद्धवत्कृत्याह श्वस्याताम् । श्वस्यास्तामिति । अन चेति । अनधातुरपि प्राणने वर्तते इत्यर्थः । सेडयम् । सार्वधातुकेऽपि वलादौ 'रुदादिभ्यः-' इति इट् । लङि ईडटौ मत्वाह आनीत्, आनदिति । अनितेः । 'रषाभ्यां नो णः' इत्यनुवर्तते । 'उपसर्गादसमासेऽपि-' इत्यत उपसर्गादिति, तदाह उपसर्गस्थादिति । भिन्नपदस्थत्वादप्राप्तौ वचनम् । जक्षधातुः सेट् । वलादौ सार्वधातुकेऽपि 'रुदादिभ्यः-' इति सेट् । अदभ्यस्तात् । झस्येति । 'झोऽन्तः-'इत्यतस्तदनुवृत्तेरिति भावः । जक्षतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञेति भावः । लङस्तिपि ईडटोः अजक्षीत् अजक्षत् । इति सिद्धवत्कृत्याह सिजभ्यस्तेति । अदादेशापवादो जुस् । अन्तस्थादिरिति । तालव्यान्तस्थादिरित्यर्थः । बभ्रामेति । "जक्षन् क्रीडन् रममाणः" इत्युपनिषदि चवर्गतृतीयादित्वस्य निर्विवादत्वादिति भावः ।

---

स्थानिवत्सूत्रशेषत्वात् । षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थादित्त्वाभावादित्याहुः । वस्तुतस्तु 'स्थानिवदादेश-' इत्येतत् प्रति त्रिपादी सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमित्यन्ये । अनितेः । 'उपसर्गादसमासेऽपि-'इत्यत उपसर्गादिति वर्तते, 'रषाभ्याम्'-इत्यतो 'नो णः' इति च तदाह उपसर्गस्थादित्यादि । अन्तापवाद इति । 'झोऽन्तः' इत्यस्य अदादेशोऽपवादः, अस्य त्वपवादो जुसिति ज्ञेयम् । बभ्रामेति । 'जक्षन् क्रीडन् रममाणः' इत्युपनिषदि जशादित्वस्य; निर्विवादत्वात् । 'नाभ्यस्ताच्छतुः' इति निषेधेन 'जक्षत्' इति नुमश्छान्दसत्वेऽपि

जागृ १०७२ निद्राक्षये । जागर्ति जागृतः जाग्रति । 'उषविद—' ( सू० २३४१ ) इत्याम्वा । जागरांचकार, जजागार । २४८० जाग्रोऽविचिण्णल्ङित्सु । ( ७—३—८५ ) जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । अजागः अजागृताम् अभ्यस्तत्वाज्जुस् । २४८१ जुसि च । ( ७—३—८३ ) अजादौ जुसीगन्ताङ्गस्य गुणः स्यात् ।

जागृधातुः ऋकारान्तः सेट्, जागर्तीति । तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम् । जागृत इति । ङित्वान्न गुणः । जाग्रतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झेरदादेशः ङित्वाद्गुणनिषेधे ऋकारस्य यणिति भावः । जागर्षि जागृथः जागृथ । जागर्मि जागृवः जागृमः । लिटि 'कास्यनेकाच्–' इति नित्यमामि प्राप्ते आह उषविदेत्याम् वेति । जागरामिति । आमि ऋकारस्य गुणो रपरत्वं चेति भावः । आमभावे आह जजागारेति । अतुसादौ कित्वाद्गुणनिषेधे प्राप्ते जाग्रोऽवि । जाग्र इति षष्ठी । 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्तते, तदाह जागर्तेर्गुणः स्यादिति । अविचिण्णल्ङित्स्विति च्छेदः । वि चिण् णल् ङित् एषां द्वन्द्वे नञ्समासः, तदाह विचिण्णल्ङिद्भ्योऽन्यस्मिन्निति । चिण्णल्पर्युदासाद् वृद्धिविषयेऽप्यस्य प्रवृत्तिः । ङित्पर्युदासाद् गुणप्रतिषेधविषयेऽप्यस्य प्रवृत्तिः, तदाह वृद्धिविषये प्रतिषेधविषये चेति । जजागरतुरिति । अत्र कित्वेऽपि गुणः जजागरुः । जजागरिथ जजागरथुः जजागर । जजागार, जजागर जजागरिव जजागरिम । विचिण्णल्ङित्सु तु न गुणः । वि—जागृविः । चिण्—अजागारि । णल्—जजागार । ङित्—जागृतः । वृद्धिविषये यथा—ण्वुलि जागरकः । प्रतिषेधविषये यथा—जजागरतुः । कित्वेऽपि गुण इत्याद्यूह्यम् । जागरिता । जागरिष्यति । जागर्तु, जागृतात् जागृताम् जाग्रतु । जागृहि, जागृतात् जागृतम् जागृत । जागराणि जागराव जागराम । लङ्याह अजागरिति । तिपि इकारलोपे हल्ङ्यादिना तकारलोपे रेफस्य विसर्ग इति भावः । अभ्यस्तत्वाल्लङो झेरदादेशे प्राप्ते आह अभ्यस्तत्वाज्जुसिति । 'सिजभ्यस्तविदिभ्यश्च' इत्यनेनेति भावः । जक्षित्यादित्वादभ्यस्तत्वम् । अजागृ उस् इति स्थिते 'सार्वधातुकमपित्' इति ङित्वादविचिण्णल्ङित्स्विति पर्युदासादप्राप्ते गुणे आह जुसि च । अङ्गस्येत्यधिकृतम् । 'मिदेर्गुणः' इत्यतो गुण इत्यनुवर्तते । 'इको गुणवृद्धी' इति परिभाषया इक इत्युपस्थितेन अङ्गस्य विशेषणा-

---

जक्षादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जक्षादिपाठाच्च । जाग्रोऽविचिण्णल्–ङिद्भ्योऽन्यस्मिन्निति । जागृविः । विशब्देन वादिप्रत्ययो गृह्यते । इकारस्तूच्चारणार्थ इति वदतां मते क्वसावपि न भवति, जजागृवान् । जजागृवांसौ । चिण्, अजागारि । णल्, जजागार । ङित्, जागृतः । जागृथः । वृद्धिविषय इति । ण्वुलि जागरकः । घञि जागरः । णिचि जागरयति । न चैतेषु गुणे कृतेऽपि 'अत उपधायाः' इति वृद्धिः स्यादिति वाच्यम्, गुणविधेश्चिण्णल्प्रतिषेधस्य चानर्थक्यापत्तेः । जुसि च । चकारः स्पष्टप्रति-

अजागरुः । अजादौ किम्—जागृयुः । आशिषि तु जागर्यात् जागर्यास्ताम् जागर्यासुः । लुङि अजागरीत् । 'जागृ इस्' इत्यत्र यण् प्राप्तः, तं सार्वधातुकगुणो बाधते, तं सिचि वृद्धिः, तां जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः प्राप्ता, 'नेटि' ( सू० २२६८ ) इति निषिद्धा, ततः 'अतो हलादेः–' ( सू० २२८४ ) इति बाधित्वा 'अतो ल्रान्तस्य' ( सू० ६३३० ) इति वृद्धिः प्राप्ता, 'ह्म्यन्त–' ( सू० २२९९ ) इति निषिध्यते । तदाहुः—

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव ॥' इति ।

दरिद्रा १०७३ दुर्गतौ । दरिद्राति । २४८२ इद्दरिद्रस्य । ( ६—४—११४ ) दरिद्रातेरिकारः स्याद्धलादौ क्ङिति सार्वधातुके । दरिद्रितः । २४८३ श्नाभ्यस्तयोरातः । ( ६—४—११२ ) अनयोरातो लोपः स्यात् क्ङिति

---

त्तदन्तविधिः । 'क्सस्याचि' इत्यतोऽनुवृत्तेन अचीत्यनेन जुसीत्यस्य विशेषणात्तदादिविधिः तदाह अजादावित्यादिना । अजागरुरिति । अजागः अजागृतम् अजागृत । अजागरम् अजागृव अजागृम । विधिलिङि यासुटो ङित्वान्न गुणः । जागृयात् जागृयाताम् । जागृयुरिति । जुसि चेत्यत्र अजादावित्युक्तेर्न गुण इति भावः । आशिषि तु जागर्यादिति । किदाशिषि इति यासुटः कित्त्वाद् 'जाग्रोऽविचिण्णल्ङित्सु' इति गुण इति भावः । जागृधातोर्लुङि सिचि इति यणादिप्राप्तिक्रमं दर्शयति जागृ इस् इत्यत्रेति । तत्र कृत इति । 'जाग्रोऽविचिण्णल्—' इति गुणे रपरत्वे कृते अजागर् ईदिति स्थिते सतीत्यर्थः । तदाहुरिति । वृद्धा इतिशेषः । अजागरिष्टाम् अजागरिषुः इत्यादि सुगमम् । दरिद्राधातुरादन्तः सेट् । दुर्गतिः धनहीनीभवनम् । दरिद्रातीति । धनहीनीभवतीत्यर्थः । इद्दरिद्रस्य । सौत्रो ह्रस्वः । 'गमहन—' इत्यतः क्ङितीत्यनुवर्तते 'ई हल्यघोः' इत्यतो हलि इति 'अत उत—' इत्यतः सार्वधातुके इति, तदाह दरिद्रातेरिति । 'श्नाभ्यस्तयोः—' इत्याल्लोपापवादः । 'अलोऽन्त्यस्य' इत्यन्त्यस्य इकारः । दरिद्रित इति । 'सार्वधातुकमपित्' इति तसो ङित्वादाकारस्य इकारः । श्नाभ्यस्तयोरातः । 'गमहन—'

---

त्यर्थः । 'क्सस्याचि' इत्यतोऽचीत्यनुवर्तत इत्याह अजादाविति । जागृयुरिति । एवं शृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम् । यासुटो ङित्वाच्छृणुयुरित्यादौ गुणो नेति प्राचोक्तिस्तु मनोरमायां दूषिता, 'जुसि च' इति गुणस्य निषेधापवादत्वादिति । केचित्तु—'जुसि च' इत्यत्र उसीत्यावर्त्य उस्रूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः । अजादौ जुसीति समाधानं तु भाष्यारूढम् । जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति जागृ इस् इत्यत्रेति । तत्र कृत इति । हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधस्तेन गुणेन हलन्तत्वसंपादनात् । या हि गुणप्रवृत्तिसमये वृद्धिः सा बाध्यते नान्येति भावः । अजागरिष्टाम् । अजागरिषुः । अजागरीरित्यादि । दरिद्रा । इद्दरिद्रस्य । इद्दरिद्र इति वक्तुमुचितम् । श्नाभ्यस्त । क्रीणन्ति । क्रीणते । पुनन्ति । पुनते । दधति । दधते

ार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्रांचकार। 'आत औ णलः' (सू० २३७१) इत्यत्र ओ इत्येव सिद्धे औकारविधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके। ददरिद्रौ ददरिद्रतुरित्यादि। यत्तु णलि दरिद्रेति तन्निर्मूलमेव। 'दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः' (वा० ४१४६)। 'लुङि वा' (वा० ४१४२)। 'सनि ण्वुलि ल्युटि च न'

---

इत्यतो लोपः क्ङितीत्यनुवर्तते। 'अत उत्–' इत्यतः सार्वधातुके इति, तदाह अनयोरिति। नाप्रत्ययस्य अभ्यस्तस्य चेत्यर्थः। दरिद्रतीति। जक्षित्यादित्वादभ्यस्तत्वाद् 'अदभ्यस्तात्' इति झस्य अदादेशे अकारलोपः। दरिद्रासि दरिद्रिथः। दरिद्रिथ। दरिद्रामि दरिद्रिवः दरिद्रिमः। लिटयाह अनेकाच्त्वादामिति। इदं च 'कास्प्रत्ययात्–' इति सूत्रभाष्ये स्पष्टम्। दरिद्रांचकारेति। आमि सवर्णदीर्घः। कैयटमतमाह आत इति। 'आत औ णलः' इत्यत्र प्रथमातिक्रमे कारणाभावाद् ओकार एव विधातुमुचितः। वृद्धौ सत्यां तावतैव ययौ इत्यादिसिद्धेः तस्मादौकारविधानं दरिद्रावातोर्णलि 'दरिद्रातेरार्धधातुके लोपो वक्तव्यः' इत्याल्लोपे ददरिद्रौ इत्यौकारश्रवणार्थं संपद्यते। ओकारविधाने तु आल्लोपे सति वृद्धेरसंभवाद् ददरिद्रो इत्योकार एव श्रूयेतेत्यर्थः। अत एवेति। अस्मादेव दरिद्रातेः औकारश्रवणार्थाद् औकारविधानाद्दरिद्रातेर्लिटि आम् नेति विज्ञायते। आमि सति णल एवाप्रसक्तेरित्यर्थः। इदं च 'वस्वेकाजाद्घसाम्' इति सूत्रभाष्ये ध्वनितम्, कैयटेन स्पष्टीकृतम्। तन्निर्मूलमेवेति। 'कास्प्रत्ययात्–' इति 'वस्वेकाच्–' इति सूत्रस्यभाष्यकैयटविरोधादिति भावः। ददरिद्रतुः ददरिद्रुः। ददरिद्रिथ ददरिद्रथुः ददरिद्र। ददरिद्रौ ददरिद्रिव ददरिद्रिम। आर्धधातुके विवक्षित इति। 'आतो लोप इटि च' इत्याल्लोपो दरिद्रातेर्भवन् क्ङिति अक्ङिति च अजादावार्धधातुके भवति। स च आर्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः, आल्लोपे कृते पचाद्यच् सिध्यति। आर्धधातुके परे आल्लोपप्रवृत्तौ तु 'श्याद्व्यधा–' इत्यादन्तलक्षणो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यात्। आर्धधातुके विवक्षिते ततः प्रागेव आल्लोपे तु कृते आदन्तत्वाभावाद् णप्रत्ययाभावे पचाद्यच्प्रत्ययो निर्बाधः। तदिदं भाष्ये स्पष्टम्। लुङि वेति। लुङि आल्लोपो वा वक्तव्य इत्यर्थः। 'अद्यतन्यां वेति वक्तव्यम्' इति वार्तिकार्थसंग्रहोऽयम्। अद्यतन्यामित्यनेन अद्यतनभूतार्थकधातुविहितलुङ्विभक्तिर्विवक्षिता, भाष्ये तस्या एवोदाहरणात्। सनि ण्वुलि ल्युटि च नेति। एतेषु दरिद्रातेराल्लोपो नेति वक्तव्यमित्यर्थः।

---

ङ्किति किम्, क्रीणाति। पुनाति। ददाति। अतः किम्, बिभ्रति। ओ इत्येव सिद्धे इति। प्रथमत्यागे मानाभावादिति भावः। निर्मूलमेवेति। यत्तु व्याख्यातृभिः समर्थ्यते आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्वं नेति, तन्न, 'आत औ णलः' इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेऽपि श्रवणार्थं सद् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः स्वग्रन्थेन च विरोधात्।

( वा० ५०५८ )। दरिद्रिता। अदरिद्रात् अदरिद्रिताम् अदरिद्रुः। दरिद्रियात्। दरिद्रयात्। अदरिद्रीत्। इट्सकौ, अदरिद्रासीत्। चकासृ १०७४ दीप्तौ। झस्य अत् चकासति। चकासांचकार। 'धि च' ( सू० २२४९ ) इति सलोपः। सिच

---

ण्वुलि यथा—दरिद्रायकः, आतो युक्। ल्युटि यथा—दरिद्राणः, अनादेशे कृते आल्लोपाभावात् सवर्णदीर्घः। सनि यथा—दिदरिद्रासति। अनन्तरस्येति न्यायादस्य वार्तिकप्राप्तस्यैव लोपस्यायं निषेधः। तेन 'तनिपतिदरिद्राणामुपसंख्यानम्' इति दरिद्रातेः सन इट्पक्षे 'आतो लोप इटि च' इत्याल्लोपो भवत्येव—दिदरिद्रिषति। तदुक्तं भाष्ये—'न दरिद्रायके लोपो दरिद्राणे च नेष्यते। दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा।' **दरिद्रितेति**। तासि इटि उदाहृतवार्तिकेन आल्लोपः। 'आतो लोप इटि च'इत्यस्य संभवेऽपि न्याय्यत्वादत्र वार्तिकोपन्यासः दरिद्रिष्यति। दरिद्रातु, दरिद्रितात् दरिद्रिताम् दरिद्रतु। दरिद्रिहि, दरिद्रितात् दरिद्रितम् दरिद्रित। दरिद्राणि दरिद्राव दरिद्राम। लङ्याह **अदरिद्रादिति**। इत्वं मत्वाह **अदरिद्रितामिति**। **अदरिद्रुरिति**। जक्षित्यादित्वेन अभ्यस्तत्वात्तजुसिति भावः। अदरिद्राः अदरिद्रितम् अदरिद्रित। अदरिद्राम् अदरिद्रिव अदरिद्रिम। **दरिद्रियादिति**। विधिलिङि सार्वधातुकत्वादित्वमिति भावः। आशीर्लिङ्याह **दरिद्रयादिति**। आतो लोप इति भावः। लुङि आतो लोपपक्षे आह **अदरिद्रीदिति**। अदरिद्रिष्टामित्यादि। आल्लोपाभावपक्षे त्वाह **इट्सकाविति**। अदरिद्रिष्यत्। **चकासृदीप्ताविति**। ऋदित् सेट्। चकास्ति चकास्ते सिद्धवत्कृत्याह **झस्य अदिति**। जक्षित्यादित्वेन अभ्यस्तत्वादिति भावः। **चकासतीति**। चकास्सि चकास्थः चकास्थ। चकास्मि चकास्वः चकास्मः। **चकासांचकारेति**। अनेकाच्त्वादामिति भावः। चकासिता। चकासिष्यति। चकास्तु चकास्ताम् चकासतु। हेर्धिभावे चकास् धि इति स्थिते 'धि च' इति सलोप इति सिद्धान्तः। तत्र मतान्तरमाह **सिच एवेत्येक इति**। 'धि च' इति लोपः सिच

---

तप्कथमौत्वस्याप्रवृत्तिर्भवेत्। यदप्युक्तम्—ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति तदपि स्थवीयः। तस्मिन्पक्षे आमो दुर्वारत्वप्रसङ्गात्। **विवक्षित इति**। तेन दरिद्रातीति दरिद्र इति पचाद्यजेव भवति। परसप्तम्यां तु 'श्याद्व्यधा–' इत्यादन्तलक्षणो णः स्यात्। सति तु तस्मिन् 'आतो युक् चिण्कृतोः' इति युकि दरिद्राय इति स्यादिति भावः। **सनि ण्वुलीति**। एतेष्वालोपो नेत्यर्थः। दिदरिद्रासति। दरिद्रायकः। दरिद्राणम्। **अदरिद्रुरिति**। 'सिजभ्यस्त–' इति झेर्जुस्। 'लङः शाकटायनस्यैव' इत्यादन्तलक्षणो विकल्पस्तु न भवति। परत्वात् 'श्नाभ्यस्तयोः–' इत्याल्लोपे आकारान्तस्यैवाभावात्। 'ई हल्यघोः' इत्यत ईत्वमिह न शङ्क्यमेव, झेर्जुसि हलादिपरत्वाभावादिति भावः। ननु दरिद्रा-झि इति स्थिते जुसः प्रागेव आल्लोपात्परत्वादपवादत्वाच्च ईत्वं स्यात्, मैवम्, अकृतव्यूहपरिभाषाया जागरूकत्वात् इत्वनिमित्तं हि हलादित्वम्, तच्च विनाशोन्मुखम्, जुसो भावि-

चादास्कन्दने । तिक्नोति । तिग्नोति । षघ १२६८ हिंसायाम् । सघ्नोति । ञि धृषा १२६९ प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । दम्भु १२७० दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्–' (सू० ४१५) इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्त्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्त्वाभ्यासलोपौ वक्तव्यौ' (वा० ४१५३) । देभतुः, ददम्भतुः, इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु देभ देभिथ देभ इति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ ददम्भिथ ददम्भेत्येव । दभ्यात् । ऋधु १२७१ वृद्धौ । तृप प्रीणने इत्येके । क्षुम्नादित्वाण्णत्वं न । तृप्नोति । 'छन्दसि' (गण १९७) आगणान्तादधिकारोऽयम् । अह १२७२ व्याप्तौ । अह्नोति । दघ १२७३ घातने पालने च दघ्नोति । चमु १२७४ भक्षणे । चम्नोति । रि १२७५ क्षि १२७६ चिरि १२७७ जिरि १२७८ दाश १२७९ दृ १२८० हिंसायाम् । रिणोति । अयं भाषायामपीत्येके । 'न तद्यशः शस्त्रभृतां क्षिणोति' । ऋक्षीत्येक एवाजादिरित्यन्ये । ऋक्षिणोति । चिरिणोति । जिरिणोति । दाश्नोति । दृणोति । वृत् ।

॥ इति तिङन्ते स्वादिप्रकरणम् ॥



दिति । स्वादिगणसमाप्तिपर्यन्तमित्यर्थः । इत्युक्तमिति । स्वादाविति भावः । कित्त्वपक्षे आह **अनिदितामिति नलोप इति** । नन्वनिदितामिति नलोपे प्रति 'अत एकहल्मध्ये–' इत्येत्त्वसिद्धेः 'दम्भेश्च' इति व्यर्थमित्यत आह **तस्याभीयत्वादिति** । नलोपस्येत्यर्थः । **दभ्यादिति** । आशीर्लिङि 'अनिदिताम्–' इति नलोपः । **छन्दसीति** । गणसूत्रमिदम् । तद्व्याचष्टे **आगणान्तादिति** । **रिक्षि इति** । रि क्षि चिरि दाश दृ इति षड् धातवः आद्यद्वितीयावेकाक्षरौ, तदाह **रिणोति** । **क्षिणोतीति** । **अयं भाषायामपीति** । क्षिधातुरित्यर्थः । तत्र प्रयोगं दर्शयति **न तद्यश इति** । **वृदिति** । स्वादयो वृत्ता इत्यर्थः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
वालमनोरमाख्यायां श्नुविकरणं समाप्तम् ।



ञिधृषा । शूलेन धृष्णोति प्रगल्भते इति शूलधृक् शूलधृषौ । 'ऋत्विक्दधृक्–' इति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् । **दम्भु** । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः । **तृप** । अयं सेट्कः अनुदात्तेषु श्यना निर्देशात् । **अह** व्याप्तौ । अस्माद् 'ऋहलोर्ण्यत्' इति अह्य इति 'तस्यादित उदात्तमर्धह्रस्वम्' इत्य-

# अथ तिङन्ते तुदादिप्रकरणम् ॥ ४८ ॥

तुद १२८१ व्यथने । इतः षट् स्वरितेतः । २५३४ तुदादिभ्यः शः । (३-१-७७) तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त । णुद १२८२ प्रेरणे । नुदति, नुदते । नुनोद, नुनुदे । नोत्ता । दिश १२८३ अतिसर्जने । अतिसर्जनं दानम् । देष्टा । दिक्षीष्ट अदिक्षत, अदिक्षत । भ्रस्ज १२८४ पाके । 'ग्रहिज्या—' ( सू० १४१२ ) इति संप्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति, भृज्जते । २५३५ भ्रस्जो रोपधयो रमन्यतरस्याम् । ( ६—४—४७ ) भ्रस्जो

---

अथ शविकरणा धातवो निरूप्यन्ते । इतः षडिति । 'ऋषी गतौ' इत्यतः प्रागित्यर्थः । तुदादिभ्यः शः । कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात् स्वार्थे इत्यर्थः । शवपवादः । तुदतीति । लघूपधगुणं बाधित्वा नित्यत्वात् शे कृते तस्य अपित्वात् 'सार्वधातुकमपित्' इति ङित्वान्न गुण इति भावः । अजन्ताकारवत्त्वाभावात् क्रादिनियमाल्लिटि थल्यपि नित्यमिट्, तदाह तुतोदिथेति । तोत्तेति । अनिडिति भावः अतौत्सीदिति । हलन्तलक्षणा वृद्धिः । णुदधातुर्णोपदेशः । अनिट् । दिशधातुरप्यनिट् । देष्टेति । व्रश्चेति षत्वे ष्टुत्वम् । स्ये तु 'षढोः—' इति षस्य कत्वं च, देक्ष्यति । दिक्षीष्टेति । 'लिङ्सिचौ—' इति कित्त्वान्न गुणः । 'शल इगुपधात्—' इति क्सं मत्वाह अदिक्षत्, अदिक्षतेति । भ्रस्ज पाके । अनिट् भ्रस्ज् अ ति इति स्थिते आह ग्रहिज्येति । ङित्वाद्रेफस्य संप्रसारणमृकारः पूर्वरूपं चेति भावः भृस्ज् अ ति इति स्थिते आह सस्येत्यादि । णलि भ्रस्ज् अ ति इति स्थिते भ्रस्जो रोपधयोः । भ्रस्ज इत्यवयवषष्ठी । रोपधयोरिति स्थानषष्ठी । रश्च उपधा च तयोरिति विग्रहः । रेफादकार उच्चारणार्थः । रेफस्य उपधायाश्च स्थाने इति लभ्यते । 'आर्धधातुके'

---

ऽस्माभिरुपपादितम् । अन्ये त्वाहुः—'शतचक्रं यो ३ ह्यो वर्तनिः' इत्यत्र अह्य इति षण्त्वन्तमेव । 'घेर्ङिति' इति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति । रिह्नि । एते षट् धातवः । एक एवाजादिरिति मते तु पञ्च धातवः ।

इति तत्त्वबोधिन्यां स्वादिप्रकरणम् ।

—o—

तुदतीति । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके । अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये । भ्रस्ज पाके । भर्जनरूपः पाकोऽत्र धात्वर्थो न त्वोदनादेः पाकस्तत्र प्रयोगाभावादित्याहुः । भ्रस्जो इति केषांचित्पाठे तु 'ओदितश्च' इति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् । भ्रस्जो रोपधयोः । रम्यकार उच्चारणार्थः । रमित्यस्यान्त्यादचः परत्वे 'रोपधयः' इति षष्ठी-

रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज बभर्जतुः। बभर्जिथ, बभर्ष्ठ। बभर्ज।

---

इत्यविकृतम्, तदाह **भ्रस्जो रेफस्येत्यादिना**। रमि मकार इत् अकार उच्चारणार्थः, तदाह **मित्त्वादन्त्यादचः पर इति**। तथा च रेफाकारादुपरि सकारात् प्राग् रेफ आगम इति फलितम्। भ र् स् ज् अ इति स्थितम्। ननु रम आगमत्वे रोपधयोरिति कथं स्थानषष्ठीनिर्देश इत्यत आह **स्थानेति**। स्थानं प्रसङ्गः। रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः। भकारादुपरि रेफः जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम्। तथा च तयोर्निवृत्तिः फलितेति भावः। एवं च भर्ज् अ इति स्थिते द्वित्वादौ रूपमाह **बभर्जेति**। अनुसादावपि संयोगात्परत्वात्कित्वाभावाद् 'ग्रहिज्या-' इति संप्रसारणं न भवति। भारद्वाजनियमात्थलि वेडिति मत्वाह **बभर्जिथ, बभर्ष्ठेति**। इडभावपक्षे बभर्ज् थ इति स्थिते 'व्रश्च—' इति जस्य षः। ष्टुत्वेन थस्य ठ इति भावः। बभर्जिव। लिटस्तङ्याह **बभर्जे इति**। बभर्जाते इत्यादि सुगमम्। रमभावे

---

निर्देशस्य वैयर्थ्यमाशङ्क्याह **निवृत्तिरिति**।। अयं भावः—स्थानविशेषलाभाय मित्त्वस्य करणान्न रोपधयोः स्थाने रम् भवति। यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति। यथा 'इको यणचि' इत्यादौ यणादिः। प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति। एवं चास्य आदेशागमत्वे भवतो यथा श्नमः प्रत्ययागमत्वे इति। अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा 'सनः क्तिचि' इत्यतो लोपमनुवर्त्य भ्रज्जो रोपधयोर्लोपः रम् तु आगम एवेत्याहुः। अपरे तु 'भ्रस्जो रमन्यतरस्याम्' इत्येव सूत्रमस्तु। रसः इति च्छेदः। रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः। ततश्च अक्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति। ऋकाराभावपक्षे तु भ्रज्जको भ्रज्जनं बभ्रज्जेत्यादि। क्ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि। तदभावे संप्रसारणे सति तदेव रूपम्। एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् 'अनुदात्तोपदेश-' इत्यत उपदेशग्रहणमनुवर्त्यमिदानीं तु नानुवर्त्यम् क्ङिति रमागमं बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः। इदं च रसोर्वचनात्सिद्धमिति वार्तिकाशयवर्णनमेव न त्वपूर्वम्। वचनादित्यस्य वा ऋवचनादिति च्छेदः। भाष्यकारैस्तु 'सूत्रं भिद्यते यथान्यासमेवास्तु' इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितं तच्च मनोरमायां स्पष्टमेव। तथा हि रेफाकारसकारसमुदायस्य ऋभावे पञ्च दोषाः। अपित्लिटि बभर्जतुः बभर्जुरित्यादीष्यते, बभृजतुः बभृजुरित्यादि स्यात्। न चात्र गुणेन निर्वाहः। ऋभावे सति 'असंयोगल्लिट् कित्' इति कित्त्वप्रवृत्त्या तन्निषेधात्। 'सनीवन्त-' इति इड्विकल्पाद्बिभर्क्षतीत्यादि इष्यते, बिभृक्षतीत्यादि स्यात्। ऋभावे 'हलन्ताच्च' इति सनः कित्त्वाप्रवृत्तेः। लिङ्सिचोस्तङि भर्क्षीष्ट अभर्ष्टेत्यादीष्यते। भृक्षीष्ट अभृष्टेत्यादि स्यात्। 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वाद् णिजन्ताच्चङि अबभर्जदितीष्यते। अबीभृजदित्यपि स्यात्।

रमभावे, बभ्रज्ज बभ्रज्जतुः। बभ्रज्जिथ। 'स्कोः—' ( सू० ३८० ) इति सलोपः। 'व्रश्च—' ( सू० ३९४ ) इति षः। बभ्रष्ठ। बभ्रज्ज। भ्रष्टा भर्ष्टा। भ्रक्ष्यति, भर्क्ष्यति। 'क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन' ( वा० ४०७८ ) भृज्ज्यात् भृज्ज्यास्ताम्। भर्क्षीष्ट, भ्रक्षीष्ट। अभार्क्षीत्, अभ्राक्षीत्। अभर्ष्ट,

---

आह बभ्रज्जेति। णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकार इति भावः। लिट्यभ्यासस्य—' इति संप्रसारणस्य न प्रसक्तिः, अभ्यासे हलादिशेषेण रेफाभावात्। बभ्रज्जतुरिति। संयोगात्परत्वादकित्त्वाद् 'ग्रहिज्या—' इति न संप्रसारणमिति भावः। बभ्रज्जिथेति। भारद्वाजनियमादिट्पक्षे रमभावपक्षे रूपम्। तत्र इडभावपक्षे बभ्रस्ज् थ इति स्थिते आह स्कोरिति। व्रश्चेति ष इति। जस्येति शेषः। रमभावपक्षे लिटस्तङ्याह बभ्रज्जेति। बभ्रज्जाते। बभ्रज्जिषे। इत्यादि सुगमम्। भ्रष्टेति। रमभावपक्षे रूपम्। भ्रष्टेति। रमागमे भर्ज् ता इति स्थिते जस्य 'व्रश्च—' इति षः, ष्टुत्वेन तकारस्य ट इति भावः। एवं भर्ष्टेति। भ्रक्ष्यति,। 'षढोः—' इति कत्वे सस्य षत्वमिति विशेषः। भृज्जतु। अभृज्जत्। भृज्जेत्। ननु आशीर्लिङि भ्रस्ज् यात् इति स्थिते यासुटः कित्त्वाद् 'ग्रहिज्या—' इति संप्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यात् इति रूपं वक्ष्यति। तदयुक्तम् संप्रसारणं बाधित्वा परत्वाद् रमागमे कृते भर्ज्यात् इति प्रसङ्गादित्यत आह क्ङिति रमागममिति। आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह भर्क्षीष्टेति। रमभावे तु अकित्त्वात्संप्रसारणाभावादाह भ्रक्षीष्टेति। लुङि परस्मैपदे रमागमविकल्पं मत्वाह अभार्क्षीत्, अभ्राक्षीदिति। आत्मनेपदे सिचि रमागमविकल्पं

---

इररारामपवादत्वे 'उर्ऋत्' इति ऋत्वप्रवृत्तौ 'सन्वल्लघुनि—' इति सन्वद्भावात् 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति प्रवृत्तेः। यद्यपि 'उर्ऋत्' इत्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम्। ऋजिभृजी भर्जने इति भ्वादेस्तादृशं रूपमिष्टमिति चेत्। मैवम्, भर्जनार्थे हि तादृग् रूपमिष्टं न तु पाकसामान्ये। उभयोरेकार्थत्वाभ्युपगमेऽपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव। न हि तेऽपि वात्वन्तरेण सुपरिहराः। अपिच्छिटि भृजेरपि धातोर्गुणाभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यसिद्धेः। तथा भृजेरुदात्तत्वेन ततः परेषां सन्लिङ्सिचामिडागमध्रौव्यात्। बिभर्क्षति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति। एतेन भ्रस्जेर्भृजिरादेश इति पक्षोऽपि निरस्तः पूर्वोक्तदूषणगणप्रसङ्गात्। किंच अस्मिन्पक्षे यङ्लुकि अधिको दोषः। बबादेशवत्साभ्यासस्य भृज्ज्यादेशे पुनर्द्विवचनस्य दुर्लभत्वात्स्थानिवत्त्वेनानभ्यासस्येति निषेधात्। स्वीकृतेऽपि द्विर्वचने रुग्रिग्रौकोऽभ्यासस्य स्युरेवेति रुगादिरहितं बाभर्जिता बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत्। यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्ष्यते तर्हि भ्रस्जे रसोरिति पठित्वा रसिति समुदायस्य अरेव विधीयतां तथा च न कोऽपि दोष इति। अयमत्र संग्रहः—'रस ऋचेदपिच्छिट्सन्लिङ्सिच्चङ्परणिक्षुते।

अभ्रष्ट । क्षिप १२८५ प्रेरणे । क्षिपति, क्षिपते । क्षेप्ता । अक्षैप्सीत्, अक्षिप्त । कृष १२८६ विलेखने । कृषति, कृषते । क्रष्टा, कर्ष्टा । कृष्यात् । कृक्षीष्ट 'स्पृशमृश—'( वा० १८२३ ) इति सिज्वा । पक्षे क्सः । सिचि अम्वा अक्राक्षीत्, अकार्क्षीत् अकृक्षत् । 'तङि लिङ्सिचौ—' ( सू० २३०० ) इति कित्त्वादम्न अकृष्ट अकृक्षाताम् अकृक्षत । अकृक्षत अकृक्षाताम् अकृक्षन्त । ऋषी १२८७ गतौ । परस्मैपदी । ऋषति । आनर्ष । जुषी १२८८ प्रीतिसेवनयोः । आत्मनेपदिनश्चत्वारः । जुषते । ओ विजी १२८९ भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । २५३६ विज इट् । ( १—२—२ ) विजेः पर इडादिः प्रत्ययो

मत्वाह अभर्ष्ट, अभ्रष्टेति । 'झलो झलि' इति सिज्लोपः । क्षिप प्रेरण इति । अनिट् । अजन्ताकारवत्त्वाभावात् क्रादिनियमात्थलि नित्यमिट् । चिक्षेपिथ । एवं कृषधातुरपि । चकर्षिथ । लुटि तासि 'अनुदात्तस्य चर्दुपधस्य—' इत्यमागमविकल्पः । अमागमाभावे गुणे रपरत्वम्, तदाह क्रष्टा कर्ष्टेति । आशीर्लिङि परस्मैपदे आह कृष्यादिति । कित्त्वाद् झलादित्वाभावाच्च अमागमो गुणश्च नेति भावः । आशीर्लिङस्तङ्थाह कृक्षीष्टेति । 'लिङ्सिचौ–' इति कित्त्वादमागमो गुणश्च नेति भावः । लुङि परस्मैपदे आह स्पृशमृशेति सिज्वेति । पक्षे इति । सिजभावपक्षे 'शलः—' इति क्स इत्यर्थः । सिचि अम्वेति । सिच्पक्षे 'अनुदात्तस्य च—' इत्यमागमविकल्प इत्यर्थः । क्से तु कित्त्वादमागमो नेति भावः । अक्राक्षीदिति । सिचि अमागमे रूपम् । अकार्क्षीदिति । सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः क्सादेशपक्षे आह अकृक्षदिति । कित्त्वादमागमो गुणश्च नेति भावः । तङीति । तङि सिच्पक्षे अकृष् स् त इति स्थिते 'लिङ्सिच—' इति कित्त्वादम् नेत्यर्थः । गुणोऽपि नेति ज्ञेयम् । अकृष्टेति । 'झलो झलि' इति सिज्लोप इति भावः । अकृक्षतेति । सिच्पक्षे अनतः परत्वाददादेश इति भावः । क्सादेशपक्षे आह अकृक्षतेति । कित्त्वादम् नेति भावः । अकृक्षन्तेति । क्सादेशपक्षे अ कृक्ष झ इति स्थिते अच्परकत्वाभावात् 'क्सस्याचि' इत्याकारलोपाभावादतः परत्वाददादेशाभावे अन्तादेश इति भावः । ऋषी गताविति । सेट् । आनर्षिथ । आनर्षिव । अर्षिता । आर्षीत् । ओ विजी भयेति । सेट् । उद्विजितेत्यादौ लघूपधगुणे प्राप्ते विज

दोषो भ्रस्जेर्भृज्जौ चैवं दोषो यङ्लुकि चाधिकः । साभ्यासस्य हि भृज्भावो भवेद्धन्तेर्वधिर्यथा । द्वित्वे पुनर्न लभ्येत स्थानिवत्त्वाद्घघेरिव । तस्मादस्तु यथान्यासं स्वातन्त्र्येऽस्तु रसोरिति' पूर्वविप्रतिषेधेनेति । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात्पूर्वं धातोः रेफस्य पश्चात्तु रमागमे रेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्वं नेति शङ्क्यम् । लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात् । विज इट् । इह 'वृद्धिर्यस्य—' इति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् । नव्यास्तु इह ङित्यनेनोत्तमैकवचनं न गृह्यते । तथा च सति विजिषीयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिद्धयर्थमिडागमो गृह्यते तस्य तु ङित्त्वं व्यर्थम् । तन्निमित्तगुणस्याप्राप्तेरतो

ङिद्वत् । उद्विजिता । उद्विजिष्यते । ओ लजी १२९० ओ लस्जी १२९१ व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ।

अथ परस्मैपदिनः । ओ व्रश्चू १२९२ छेदने । 'ग्रहिज्या–' (सू० २४१२) वृश्चति । वव्रश्च वव्रश्चतुः । वव्रश्चिथ, वव्रष्ठ । 'लिट्यभ्यासस्य–' (सू०२४०८)

---

इट् । 'गाङ्कुटादिभ्यः—' इत्यतो ङिदित्यनुवर्तते, तदाह विजेः पर इत्यादि । उद्विजिता । उद्विजिषीष्ट । उदविजिष्ट ।

व्रश्च्धातुरूदित्त्वाद्वेट् । ग्रहिज्येति । लटि व्रश्च् अ ति इति स्थिते शस्यापित्त्वेन ङित्त्वाद् 'ग्रहिज्या—' इति रेफस्य संप्रसारणमृकारः पूर्वरूपं चेति भावः, तदाह वृश्चतीति । वृश्चतः वृश्चन्तीत्यादि । अश्चेति । णलि रूपमिदम् । थलि च प्रक्रिया अनुपदं वक्ष्यते । अतुसादौ संयोगात्परत्वेन कित्त्वाभावाद् 'ग्रहिज्या—' इति न संप्रसारणम्, तदाह वव्रश्चतुरिति । ऊदित्त्वात्थलादौ वेट्, तदाह वव्रश्चिथ, वव्रष्ठेति धातुपाठे व्रश्चू इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देशः । तथा च वव्रश्च् थ इति स्थिते श्चुत्वस्यासिद्धत्वात् 'स्कोः—' इति सकारलोपे, चस्य 'व्रश्च—' इति षत्वे, ष्टुत्वेन थस्य ठत्वे, वव्रष्ठेति रूपम् । ववश्चिव । ननु णलि थलि च अकिति द्वित्वे कृते 'लिट्यभ्यासस्य—' इत्यभ्यासावयवयोर्वकाररेफयोर्द्वयोरपि संप्रसारणं स्यात् । न च 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः शङ्क्यः, पूर्वं वकारस्य संप्रसारणसंभवादित्यत आह लिट्यभ्यासेति । 'न संप्रसारणे—' इति निषेधादेव ज्ञापकात् प्रथमं रेफस्य ऋकारः संप्रसारणमित्यर्थः । तस्य संप्रसारणसंपन्नस्य ऋकारस्य अकारविधि

---

लक्षणया इड्वान् गृह्यते । इट्प्रत्ययस्यादिरिति फलितार्थकथनमिडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः । इह ओविजीति तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिव्याख्यानात् । यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः यस्यानिट्कत्वादिति । तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम्, अपिल्लिटः कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाभावात् । वव्रश्चेति । अत्र नव्याः—वव्रश्चेत्यादौ 'लिट्यभ्यासस्य—' इत्यभ्यासावयवयोर्द्वयोरपि यणोः संप्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय 'न संप्रसारणे—' इति सूत्रं स्वीक्रियते । ततश्च अतएव ज्ञापकात्परस्य प्रथमं संप्रसारणमिति परिकल्प्य आ पादपरिसमाप्तेरङ्गाधिकार इति पक्षमभ्युपगम्य उरदत्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकाराद् 'अचः परस्मिन्—' इति स्थानिवद्भावप्रवृत्त्या संप्रसारणपरत्वमाश्रित्य वकारस्य संप्रसारणनिषेधः कथंचिदुपपद्यते । परस्य संप्रसारणम्, परस्य यणः संप्रसारणमिति वा सूत्रिते परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभाद् उक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति । न चैवं 'लिटि वयो यः' 'वेञः' इत्यत्र संप्रसारणनिषेधाय नञोऽनुवृत्तिर्न लभ्येतेति वाच्यम्, 'न लिटि वयो यः' इति सूत्रकरणे बाधकाभावाद् 'न संप्रसारणे—' इति यथाश्रुतसूत्रप्रणयने त्वन्ततो मात्राद्वयस्याधिक्याच्च ।

इति संप्रसारणं रेफस्य ऋकारः। 'उरत्' ( सू० २२४४ )। तस्य च 'अचः परस्मिन्—' ( सू० ५० ) इति स्थानिवद्भावाद् 'न संप्रसारणे—' ( सू० ३६३ ) इति वस्योत्वं न। व्रश्चिता, व्रष्टा। व्रश्चिष्यति, व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्, अव्राक्षीत्। व्यच १२९३ व्याजीकरणे। विचति। विव्याच विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्, अव्यचीत्। 'व्यचेः कुटादित्वमनसि' ( वा० ३४५६ ) इति तु नेह प्रवर्तते। 'अनसि' इति पर्युदासेन कृन्मात्र-

---

स्मारयति उरदिति। ननु ऋकारस्य अकारे कृते वकारस्य संप्रसारणं स्यात्, संप्रसारणपरकत्वविरहेण 'न संप्रसारणे—' इति निषेधाप्रवृत्तेरित्यत आह तस्य चेति। अकारस्येत्यर्थः। न च उरदत्त्वस्य परनिमित्तकत्वाश्रवणात् कथं स्थानिवत्त्वमिति वाच्यम्, आपादपरिसमाप्तेरङ्गाधिकारः इत्यभ्युपगम्य अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात्। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति न्यायस्तु 'न संप्रसारणे—' इति निषेधादेव न स्थानिभेदे प्रवर्तते इति ज्ञायते। अत एव सुद्ध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पूर्वधकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तां तावत्। आशीर्लिङ्याह वृश्च्यादिति। कित्त्वात् संप्रसारणमिति भावः। अव्रश्चीदिति। ऊदित्त्वादिट्पक्षे 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः। इडभावे हलन्तलक्षणवृद्धिं मत्वाह अव्राक्षीदिति। अव्रश्च् सीत् इति स्थिते हलन्तलक्षणा वृद्धिः। श्चुत्वस्यासिद्धत्वात् स्कोः—इति सलोपः। 'व्रश्च—' इति चस्य षः; तस्य 'षढोः—' इति कः, सस्य ष इति भावः। 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः॥' इत्याहुः। व्यच व्याजीकरणे। सेट्। शे 'ग्रहिज्या—' इति संप्रसारणं मत्वाह विचतीति। विव्याचेति। 'लिट्यभ्यासस्य—' इत्यभ्यासयकारस्य संप्रसारणम्। 'न संप्रसारणे—' इति न वकारस्य। विविचतुरिति। कित्वाद् 'ग्रहिज्या—' इति संप्रसारणे कृते द्वित्वादीति भावः। विव्यचिथ। विविचिव। विच्यादिति। आशीर्लिङि कित्त्वाद्यकारस्य संप्रसारणम्। 'अतो हलादेः—' इति वृद्धिविकल्पं मत्वाह अव्याचीत्, अव्यचीदिति। ननु 'व्यचेः कुटादित्वमनसि' इति व्यचेः कुटादित्ववचनात् व्यचिता, व्यचिष्यति, इत्यादावपि 'गाङ्कुटादिभ्यः—' इति ङित्त्वात्। संप्रसारणं स्यादित्यत आह व्यचेरिति। कृन्मात्रेति। अवधारणे मात्रशब्दः।

---

एवं च लघूपायेनेष्टसिद्धौ 'न संप्रसारणे—' इति सूत्रारम्भो ज्ञापयति निमित्तभेदाभावेऽपि स्थानिभेदे पुनरपि कार्यं प्रवर्तते इति च सुध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पुनरुकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव। यदि स्थानिभेदेऽपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्यते तत्र तु 'ज्ञापकसिद्धं न सर्वत्र' इति स दोषः परिह्रियतामित्याहुः। अव्रश्चीदिति। ऊदित्वात्पक्षे इट्। 'वदव्रज—' इति वृद्धेः 'नेटि' इति निषेधः। अव्राक्षीदिति। स्कोः—'इति सलोपः। 'व्रश्च—' इति षः। षढोरिति कः। ततः सस्य षत्वम्। न चात्र सकारस्य कथं लोप इति वाच्यम्, धातुपाठे सकारस्य पाठात्। तदाहुः—

विषयत्वात् । उछि १२९४ उञ्छे । उञ्छति । उछी १२९५ विवासे । उच्छति । ऋच्छ १२९६ गतीन्द्रियप्रलयमूर्तिभावेषु । 'ऋच्छत्यृताम्' (सू०२३८३) इति गुणः । द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट् आनर्च्छ आनर्च्छतुः । ऋच्छिता । मिच्छ १२९७ उत्क्लेशे । उत्क्लेशः पीडा । मिमिच्छ । अमिच्छीत् । जर्ज १२९८ चर्च १२९९ झर्झ १३०० परिभाषणभर्त्सनयोः । त्वच १३०१ संवरणे । तत्वाच । ऋच १३०२ स्तुतौ । आनर्च । उब्ज १३०३ आर्जवे । उज्झ १३०४ उत्सर्गे । लुभ १३०५ विमोहने । विमोहनमाकुलीकरणम् । लुभति । लोभिता, लोब्धा । लोभिष्यति । रिफ १३०६ कत्थनयुद्धनिन्दाहिंसादानेषु । रिफति । रिरेफ । रिह इत्येके । 'शिशुं न विप्रा मतिभी रिहन्ति' । तृप १३०७ तृम्फ १३०८ तृप्तौ । आद्यः प्रथमान्तः । द्वितीयो द्वितीयान्तः । द्वावपि द्वितीयान्तावित्यन्ये । तृपति । ततर्प तर्पिता । 'स्पृशमृश—' इति सिज्विकल्पः पौषादिकस्यैव । अङ्पवादत्वात् । तेनात्र नित्यं सिच् । अतर्पीत् । तृम्फति । शस्य ङित्वाद् 'अनिदिताम्—' ( सू० ४१५ ) इति नलोपे 'शे तृम्फादीनां नुम् वाच्यः' ( वा० ४३२३ ) आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । तृम्फन्ति । ततृम्फ । तृप्यात् । तुप १३०९ तुम्प १३१० तुफ १३११ तुम्फ १३१२ हिंसायाम् । तुपति । तुम्पति तुफति । तुम्फति । दृप १३१३ दृम्फ १३१४ उत्क्लेशे । प्रथमः प्रथमान्तः । द्वितीयो द्वितीयान्तः । प्रथमो द्वितीयान्त इत्येके । दृपति । दृफति । दृम्फति । ऋफ १३१५ ऋम्फ १३१६ हिंसायाम् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार । गुफ १३१७ गुम्फ

---

'उछि उञ्छे' 'उछी विवासे' इति भ्वादौ पठितौ । इह तयोः पाठस्तु शविकरणार्थः । तेन उञ्छती उञ्छन्ती, उच्छती उच्छन्ती इति 'आच्छीनद्योः—' इति नुम्विकल्पः सिध्यति । भ्वादौ पाठस्तु पित्स्वरार्थ इत्यन्यत्र विस्तरः । ऋच्छ गतीति । 'छे च' इति तुकि तस्य श्चुत्वेन चकारनिर्देशः । ऋच्छति । णलि लघूपधत्वाभावाद् गुणे अप्राप्ते आह ऋच्छत्यृतामिति ।द्वित्वे उरदत्त्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ अर्च्छ इति स्थिते बहुहल्त्वाद् द्विहल्त्वाभावान्नुटि अप्राप्ते आह द्विहल्ग्रहणस्येति । आनर्च्छेति । 'इजादेः—' इत्यत्र अनृच्छ इति पर्युदासादाम् न । ऋच्छितेति । 'ऋच्छत्यृताम्' इत्यत्र लिटीत्यनुवृत्तेर्न गुण इति भावः । लुभधातुः सेट् । 'तीषसह' इति वेडिति मत्वाह लोभिता, लोब्धेति । शिशुं नेति । नशब्द इवार्थः । विप्राः शिशुमिव मतिभिः रिहन्ति हिंसन्ति इत्यर्थः । तृपधातुः श्यन्विकरण एवानिट् । अङ्पवादत्वादिति । अपवादस्य उत्सर्ग-

---

'नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः' इति । व्यच । व्याजीकरणं छद्मकरणम् । पर्युदासेनेति । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रयुज्येतेति भावः । कृन्मात्रविषयत्वादिति । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचिता व्यचिषेत्यादौ तु तिङ्विषये न भवति । विव्याचेत् । ऋफति । आनर्फ । ऋम्फति । ऋम्फांचकार । गुफ ।

१३१८ ग्रन्थे । गुफति । जुगोफ । गुम्फति । जुगुम्फ । उभ १३१९ उम्भ १३२० पूरणे । उभति । उवोभ । उम्भति । उम्भांचकार । शुभ १३२१ शुम्भ १३२२ शोभार्थे । शुभति । शुम्भति ॥ दृभी १३२३ ग्रन्थे । दृभति । चृती १३२४ हिंसाश्रन्थनयोः । चर्तिता । 'सेऽसिचि—' ( सू० २५०६ ) इति वेट् । चर्तिष्यति, चर्त्स्यति । अचर्तीत् । विध १३२५ विधाने । विधति । वेधिता । जुड १३२६ गतौ । तवर्गपञ्चमान्त इत्येके । जुडति । 'मरुतो जुनन्ति' । मृड १३२७ सुखने । मृडति । मर्डिता । पृड १३२८ च । पृडति । पृण १३२९ प्रीणने । पृणति । पपर्ण । वृण १३३० च । वृणति । मृण १३३१ हिंसायाम् । तुण १३३२ कौटिल्ये । तुतोण । पुण १३३३ कर्मणि शुभे । पुणति । मुण १३३४ प्रतिज्ञाने । कुण १३३५ शब्दोपकरणयोः । शुन १३३६ गतौ । द्रुण

समानदेशत्वादिति भावः । चृती हिंसाश्रन्थनयोरिति । श्रन्थनं विस्रंसनम् । चृततीत्यादि सुगमम् । "अथास्य योक्त्रं विचृतेत्" इत्याश्वलायनःतु । विस्रंसयेदित्यर्थः, उपसर्गवशात् । 'यजमानो मेखलां विचृतते' इत्यापस्तम्बसूत्रे

---

कुटादित्वे जातेऽपि न क्षतिः 'गाङ्कुटादिभ्यः—' इति सूत्रे अञ्णितः प्रत्यया ङितः स्युरित्युक्तत्वात् । उत्तमे णलि तु णित्त्वाभावपक्षे ङित्त्वात्संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम् । 'उछि उञ्छे' 'उछी विवासे' । इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु उच्छति उञ्छतीत्यत्र 'आच्छीनद्योः—' इति नुम्विकल्पार्थः । पूर्वपाठस्तु स्वरार्थः । तथाहि उञ्छति-उच्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति । न च 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वक्ष्यमाणत्वात्कथमिह मध्योदात्ततेति वाच्यम्, कुरुत इत्यादौ तसादेर्विकरणात्परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेऽपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् । उपलक्षणत्वादिति । अत एव अदुपधस्य चेद् अश्नोतेरेवेति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् । अन्यथा तन्न संगच्छेतेति भावः । आनर्च्छेति । अनृच्छ इति पर्युदासान्नाम् । नव्यास्तु 'ऋच्छत्यृताम्' इति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति 'इजादेः-' इति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः । अन्ये तु 'ऋच्छत्यृताम्' इत्यत्र तौदादिकऋच्छेरिति सर्वैरेव व्याख्यातत्वाद् गणान्तरेऽपि ऋच्छिरस्तीत्यनुमीयते तद्धातोस्तु लिट्यामनिवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः । मिच्छ । उत्कटः क्लेश उत्क्लेशः । ऋच स्तुतौ । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे क्विप् । लोभिता । लोब्धा । 'तीषसह—' इति वेट् । शिशुं न विप्रा इति । नशब्द इवार्थे । विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति हिंसन्ति । न्यूनीकुर्वन्तीत्यर्थः । चृती हिंसाग्रन्थनयोः । ईदित्करणं 'श्वीदितो निष्ठायाम्, इतीण्निषेधार्थम् । यद्यप्यस्य वेट्कत्वान्निष्ठायामिण्निषेधः सिध्यति तथापि 'यस्य विभाषा' इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम् । तेन 'धावितमिभराजधिया' इत्यादि

१३३७ हिंसागतिकौटिल्येषु। घुण १३३८ घूर्ण १३३९ भ्रमणे। षुर १३४० ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। कुर १३४१ शब्दे। कुरति। कूर्यात्। अत्र 'न भकुर्छुराम्' (सू० १६२९) इति निषेधो न। करोतेरेव तत्र ग्रहणादित्याहुः। खुर १३४२ छेदने। मुर १३४३ संवेष्टने। क्षुर १३४४ विलेखने। घुर १३४५ भीमार्थशब्दयोः। पुर १३४६ अग्रगमने। वृहू १३४७ उद्यमने। दन्त्योष्ठ्यादिः। पवर्गादिरित्यन्ये। तृहू १३४८ स्तृहू १३४९ तृंहू १३५० हिंसार्थाः। तृहति। ततर्ह। स्तृहति। तस्तर्ह। तर्हिता, तर्ढा। स्तर्हिता, स्तर्ढा। अतृंहीत्, अताङ्क्षीत् अताण्ढाम्। इषु १३५१ इच्छायाम्। 'इषुगमि—' ( सू० २४०० ) इति छः। इच्छति। एषिता, एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष १३५२ स्पर्धायाम्। मिषति। मेषिता। किल १३५३ श्वैत्यक्रीडनयोः। तिल १३५४ स्नेहने। चिल १३५५ वसने। चल १३५६ विलसने। इल १३५७ स्वप्नक्षेपणयोः। विल १३५८ संवरणे। दन्त्योष्ठ्यादिः। बिल १३५९ भेदने। ओष्ठ्यादिः। णिल १३६० गहने। हिल १३६१ भावकरणे। शिल १३६२ षिल १३६३ उञ्छे। मिल १३६४ श्लेषणे। लिख १३६५ अक्षरविन्यासे। लिलेख। कुट १३६६ कौटिल्ये। 'गाङ्कुटादिभ्यः—' (सू० २४६१) इति ङित्त्वम्। चुकुटिथ। 'अञ्णित' इति किम्—चुकोट। कुटिता। पुट १३६७

---

तङ् आर्षः। षुधातुः षोपदेशः। कुर शब्दे। करोतेरेवेति। व्याख्यानमेवात्र शरणम्। वृहूधातुः ऋदुपधः। ऊदित्त्वाद्वेट्कः। पवर्गादिरिति। पवर्गतृतीयादिरित्यर्थः तृहू स्तृहू तृंहू इति। त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। ऊदित्वाद्वेट्। तर्ढेति। तृंहस्तासि ढत्वधत्वष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत्, अतार्क्षीत्, अस्तर्हीत्, अस्तार्क्षीत्, इति सिद्धवत्कृत्याह अतृंहीत्, अताङ्क्षीदिति। तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः, ढस्य कः षत्वम्। अनुस्वारस्य परसवर्णो ङकार इति भावः। अताढामिति। तृंहस्तसस्तामि सिच इडभावपक्षे लोपे हलन्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढलोपा इति

---

सिद्धमित्याहुः। कुर शब्दे। करोतेरेवेति। सुप्रसिद्धत्वात्। कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः। मुर संवेष्टने। इगुपधलक्षणः कः। मुरो दैत्यः। मुरारिविष्णुः। क्षुर विलेखने। विलेखनं छेदनम्। केशान् क्षुरति। 'इगुपध—' इति कः। क्षुरः शस्त्रम्। तिल स्नेहने। तिलति। 'इगुपध—' इति कप्रत्यये तिलः। तिल गतौ तेलतीति शपि ः। लिख अक्षरविन्यासे। लिखितुं लिखिष्यतीति प्रयोगः प्रामादिकः। यत्तु कैश्चित् कुटस्यादिः कुटादिः कुट आदिर्येषां ते कुटादयः कुटादिश्च कुटादयश्च कुटादय इत्येकशेषं स्वीकृत्य लिखितुमित्यादि समर्थितम्। तदसत्। लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः। न चेष्टापत्तिः वृत्तिकारहरदत्तादिग्रन्थविरोधात्। 'गाङ्लिखादिभ्यः' इत्येव सूत्रितव्ये कुटादिभ्य इति पठनस्य स्वारस्यभङ्गापत्तेश्च। किं च 'शकुनिष्वालेखने' इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत्। लिखापयतीति प्रयोगस्तु मनोरमायामित्थं समर्थितः।

संश्लेषणे। कुच १३६८ संकोचन। गुज १३६९ शब्दे। गुड १३७० रक्षायाम्। डिप १३७१ क्षेपे। छुर १३७२ छेदने। 'न भकुर्छुराम्' (सू० १६२९) इति न दीर्घः। छुर्यात्। स्फुट १३७३ विकसने। स्फुटति। पुस्फोट। मुट। १३७४ आक्षेपमर्दनयोः। त्रुट १३७५ छेदने। 'वा भ्राश–' (सू० २३२१) इति श्यन्वा। त्रुट्यति, त्रुटति। तुत्रोट। त्रुटिता। तुट १३७६ कलहकर्मणि। तुटति। तुतोट। तुटिता। चुट १३७७ छुट १३७८ छेदने। जुट १३७९ बन्धने। कड १३८० मदे। लुट १३८१ संश्लेषणे। कुड १३८२ घनत्वे। घनत्वं सान्द्रता। चकर्ड। कुडिता। कुड १३८३ बाल्ये। पुड १३८४ उत्सर्गे। घुट १३८५ प्रतिघाते। तुड १३८६ तोडने। तोडनं भेदः। थुड १३८७ स्थुड १३८८ संवरणे। थुडति। तुथोड। तुस्थोड। खुड छुड इत्येके। स्फुर १३८९ स्फुल ११९० संचलने। स्फुर स्फुरणे, स्फुल संचलने इत्येके। २५३७ **स्फुरतिस्फुलत्योर्निर्निविभ्यः।** (८–३–७६) षत्वं वा स्यात्। निष्फुरति, निःस्फुरति। स्फर इत्यकारोपधं केचित्पठन्ति। पस्फार। स्फुड १३९१ चुड १३९२ व्रुड १३९३ संवरणे। क्रुड १३९४ भृड १३९५ निमज्जने इत्येके। गुरी १३९६ उद्यमने। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। णू १३९७ स्तवने। दीर्घान्तः। 'परिणूतगुणोदयः'। इतश्चत्वारः परस्मैपदिनः। नुवति। अनुवीत्। धू १३९८ विधूनने धुवति। गु १३९९ पुरीषोत्सर्गे। जुगुविथ, जुगुथ। गुता। गुष्यति अगुपीत्। 'ह्रस्वादङ्गात्' (सू० २३६९) अगुताम् अगुषुः। ध्रु १४०० गतिस्थैर्ययोः। ध्रुव इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रुविता। ध्रुविष्यति। ध्रुव्यात्। अध्रुवीत अध्रुविष्टाम्। कुङ् १४०१ शब्दे। दीर्घान्त इति कैयटादयः। कुविता। अकुविष्ट। ह्रस्वान्त इति न्यासकारः। कुता। अकुत। वृत्। कुटादयो वृत्ताः।

पृङ् १४०२ व्यायामे। प्रायेण व्याङ्पूर्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे व्यापप्राते। व्यापरिष्यते। व्यापृत व्यापृषाताम्। मृङ् १४०३ प्राण-

---

भावः। एवं अस्ताढीम्। अताण्ढीम्। **स्फुर स्फुरणे।** **स्फुरतिस्फुलत्योः।** मूर्धन्य इत्यधिकृतम्। 'सिवादीनां वा–' इत्यतो वेत्यनुवर्तते, तदाह **षत्वं वा स्यादिति।** **णू स्तवन इति।** णोपदेशः। **परिणूतेति।** 'श्र्युकः किति' इति नेट्। **कुङ् शब्दे।** **दीर्घान्त इति।** ततश्चायं सेट्।

**पृङ् व्यायाम इति।** ह्रस्वान्तोऽयममिट्। 'ऋद्धनोः स्ये' इति इटं मत्वाह **व्यापरिष्यते इति।** मृङ्धातुरनिट्। म्रियतेः। 'अनुदात्तङितः—'

---

अपनम् आपः प्राप्तिः लिखस्यापो लिखापस्तं करोति। **स्फुट विकसने।** स्फुटत्यर्थोऽस्मादिति स्फोटः स च पदस्फोटवाक्यस्फोटादिभेदेनानेकविधः। **कड मदे।** कुटादिकार्याभावेऽपि डान्तानुरोधेनायं कुटादौ पठितः। भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुमविकल्पार्थः। पूर्वं पाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः। **स्फुरतिस्फुलत्योः।** 'सिवादीनाम्—' इत्यतो वेत्यनुवर्तनादाह **षत्वं वा**

त्यागे। २५३८ म्रियतेर्लुङ्लिङोश्च। ( १—३—६१ ) लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् स्यान्नान्यत्र। ङित्वं स्वरार्थम्। म्रियते। ममार। ममर्थ। मम्रिव। मर्तासि। मरिष्यति। मृषीष्ट। अमृत।

अथ परस्मैपदिनः सप्त। रि १४०४ पि १४०५ गतौ। लघूपधगुणादन्तरङ्गत्वादियङ्। रियति। पियति। रेता। पेता। धि १४०६ धारणे। क्षि १४०७ निवासगत्योः। षू १४०८ प्रेरणे। सुवति। सविता। कॄ १४०९ विक्षेपे किरति किरतः। चकार चकरतुः। करिता, करीता। कीर्यात्। अकारीत्। २५३९ किरतौ लवने। ( ६—१—१४० ) उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे। उपस्किरति। 'अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्'

---

इत्यत आत्मनेपदमित्यनुवर्तते। चकारेण 'शदेः शितः' इत्यतः शित इत्यनुकृष्यते। प्रकृतिभूतादित्यध्याहार्यम्, तदाह लुङ्लिङोरिति। तङ स्यादिति। आत्मनेपदं स्यादित्यर्थः, म्रियमाण इत्यत्र आनस्यापि इष्टत्वात्। ननु ङित्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह नान्यत्रेति इति। ङित्वं व्यर्थमित्यत आह ङित्वं स्वरार्थमिति। 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्—' इत्येतदर्थः। म्रियते इति। शे कृते रिङियणाविति भावः। ऋदन्तत्वाद् भारद्वाजमतेऽपि नेडित्याह ममर्थेति। मम्रिवेति। क्रादिनियमादिट्। मर्ता। 'ऋद्धनोः स्ये' इति इटं मत्वाह मरिष्यतीति। रि पि गताविति। द्वाविमावनिटौ। ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्यत आह अन्तरङ्गत्वादियङिति। कॄ विक्षेप इति। दीर्घान्तोऽयं सेट्। किरतीति। 'ऋत इद्धातोः' इति इत्वं रपरत्वम्। चकरतुरिति। कित्वेऽपि 'ऋच्छत्यृताम्' इति गुण इति भावः। 'वृतो वा' इति मत्वा करिता, करीतेति। किरतौ लवने। उपादिति। 'उपात् प्रतियत्न-'इत्यतस्तदनुवृत्तेरिति भावः। सुडागम इति। 'सुट् कात्पूर्वः' इत्यतस्तदनुवृत्तेरिति

---

स्यादिति। परिणूतेति। 'श्र्युकः किति' इतीण्निषेधः। म्रियतेर्लुङ्लिङोश्च। चात् शित इति अनुकृष्यते, तदाह शितश्च प्रकृतिभूतादिति। तङिति। आत्मनेपदमित्यर्थः। तेन म्रियमाणे इति सिद्धम्। स्वरार्थमिति। मा हि मृतेत्यत्र 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः। ङित्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्तः स्यात्। न च सिज्लोपस्यासिद्धत्वाद् ङितः परत्वं लसार्वधातुकस्य दुरुपपादमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम् ङित्वसामर्थ्यात् सिज्लोपस्यासिद्धत्वं नेति सुवचत्वात्। अमृतेत्यत्राडागमस्यैवोदात्तत्वाद् मृङो ङित्वस्य न किंचित्प्रयोजनमिति भ्रमनिवारणाय मा हि मृतेति माङ् प्रयोग 'तिङ्ङतिङः' इति तिङन्तनिघातेऽपि ङित्वं व्यर्थमेव स्याद् इति हिशब्दप्रयोगः। हिप्रयोगे तु 'हि च' इत्यनेन तिङन्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम्। रि पि गतौ। परत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह अन्तरङ्गत्वादिति। किरतौ लवने। 'उपात्प्रतियत्ने'

( वा० ३६९९ )। उपास्किरत् उपचस्कार। २५४० हिंसायां प्रतेश्च। (६-४-१४१) उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ १४१० निगरणे। २५४१ अचि विभाषा (८—२—२१) गिरतेः रेफस्य लत्वं स्यादजादौ। गिरति, गिलति। जगार, जगाल। जगरिथ, जगलिथ। गरिता, गलिता। दृङ् १४११ आदरे। आद्रियते आद्रियेते आदद्रे। आदद्रिषे। आदर्ता। आदरिष्यते। आदृषीष्ट। आदृत आदृषाताम्। धृङ् १४१२ अवस्थाने। ध्रियते।

अथ परस्मैपदिनः षोडश। प्रच्छ १४१३ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ पप्रच्छतुः। पप्रच्छिथ, पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। वृत्। किरादयो वृत्ताः। सृज १४१४ विसर्गे। 'विभाषा सृजिदृशोः' (सू० २४०४) ससर्जिथ,

---

भावः 'अडभ्यासव्यवायेऽपि' इति वार्तिकम्। 'सुट् कात्पूर्वः' इत्यनुवृत्तिलभ्यम्। हिंसायां प्रतेश्च। चकारादुपादिति समुच्चीयते, तदाह उपादिति। गॄ निगरण इति। निगरणं भक्षणम्। सेट्। अचि विभाषा। 'ग्रो यङि' इत्यतो ग्र इत्यनुवर्त्तते। 'कृपो रो लः' इत्यतो रो ल इति तदाह गिरतेरिति। अजादाविति। 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः। तेन गिरावित्यादौ नेति 'मृजेर्वृद्धिः' इति सूत्रभाष्ये स्पष्टम्। दृङ आदर इति। ह्रस्वान्तोऽयम्। अनिट्। आद्रियत इति। रिङ् इयङ्। 'ऋद्धनोः स्ये' इति इटं मत्वाह आदरिष्यत इति। आदृषीष्टेति। 'उश्च' इति कित्त्वान्न गुणः। आदृतेति। 'ह्रस्वादङ्गात्' इति सलोपः। प्रच्छ ज्ञीप्सायामिति। ज्ञातुमिच्छा ज्ञीप्सा। अनिडयम्। पृच्छतीति। शस्य ङित्त्वाद् 'ग्रहिज्या—' इति रेफस्य संप्रसारणम् ऋकारः पूर्वरूपं चेति भावः। पप्रच्छतुरिति। संयोगात् परत्वेन कित्वाभावान्न संप्रसारणमिति भावः। भारद्वाजनियमात्थलि वेडिति मत्वाह पप्रच्छिथ, पप्रष्ठेति। इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः। पप्रच्छिव। प्रष्टेति। छस्य व्रश्चेति षः, तकारस्य ष्टुत्वेन टः। न च षत्वस्यासिद्धत्वात् पूर्वं तुकि ततः छस्य षत्वे, ष्टुत्वयोः प्रटष्टेति स्यादिति वाच्यम्, व्रश्चेति सूत्रे सतुकस्य छस्य ग्रहणात्। किरादयो वृत्ता इति। न चैवं सति 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चग्रहणं व्यर्थं

---

इति सूत्रादुपादिति। वर्तते। लवने किम्, उपकिरति। हिंसायां प्रतेश्च। चादुपात् 'उरोविदारं प्रतिचस्करे नखैः' इति माघः। कर्मणि लिट्। 'ऋच्छत्यॄताम्' इति गुणः। दृङ् आदरे। 'तथाद्रियन्ते न बुधाः सुधामपि' इति श्रीहर्षः। प्रच्छ ज्ञीप्सायाम्। ज्ञातुमिच्छा ज्ञीप्सा। अत्र ज्ञपिर्ज्ञाने। 'आप्ज्ञप्यृधामीत्', 'अत्र लोपः—' इत्यभ्यासलोपः। ण्वुलि प्रच्छकः। पृच्छाशब्दात् 'तत्करोति—' इति णिजन्ताण्ण्वुलि तु पृच्छकः। पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः। किरादयो वृत्ता इति। एते च भूपाकर्मकिरादिसनाम्' इति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते। 'किरश्च पञ्चभ्यः' इत्यत्र पञ्चभ्य इत्येतदुत्तर-

सस्रष्ठ । स्रष्टा । स्रक्ष्यति । 'सृजिदृशोर्झल्यमकिति' ( सू० २४०५ ) इत्यमागमः । सृजेत् । सृज्यात् । अस्राक्षीत् । टु मस्जो १४१५ शुद्धौ । मज्जति । ममज्ज । 'मस्जिनशोर्झलि' ( सू० २५१७ ) इति नुम् । 'मस्जेरन्त्यात्पूर्वो नुम् वाच्यः' (वा० ३२१) । संयोगादिलोपः ममङ्क्थ, ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षुः । रुजो १४१६ भङ्गे । रोक्ता । रोक्ष्यति । अरौक्षीत् अरौक्ताम् । भुजो १४१७ कौटिल्ये । रुजिवत् । छुप १४१८ स्पर्शे । छोप्ता । अच्छौप्सीत् । रुश । १४१९ रिश १४२० हिंसायाम् । तालव्यान्तौ । रोष्टा । रोक्ष्यति । लिश १४२१ गतौ । अलिक्षत् । स्पृश १४२२ संस्पर्शने । स्प्रष्टा, स्पर्ष्टा । स्प्रक्ष्यति, स्पर्क्ष्यति । अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत् । विच्छ १४२३ गतौ । 'गुपूधूप—' ( सू० २३०३ ) इत्यायः । आर्धधातुके वा । विच्छायति । विच्छायांचकार । विविच्छ । विश १४२४ प्रवेशने । विशति । वेष्टा । मृश १४२५ आमर्शने । आमर्शनं स्पर्शः । अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् । णुद १४ ६ प्रेरणे ।

---

किरादीनां षष्ठत्वादिति वाच्यम्, तस्य 'रुदादिभ्यः सार्वधातुके' इत्युत्तरार्थत्वात् । सृज विसर्गे । अनिट् । सृजति । ससर्ज ससृजतुः । अजन्ताकारवत्त्वाभावेऽपि 'विभाषा सृजिदृशोः–' इति थलि वेट् इति मत्वाह ससर्जिथ, सस्रष्ठेति । इडभावे 'व्रश्च—' इति जस्य षः, थस्य ष्टुत्वेन ठः, पित्त्वेन अकित्त्वात् 'सृजिदृशोः—' इत्यमागम इति भावः । ससृजिव । टु मस्जो शुद्धौ । मज्जतीति । सस्य श्चुत्वेन शः, तस्य जश्त्वेन ज इति भावः । ममङ्क्थेति । मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थ इति स्थिते 'स्कोः—' इति सकारलोपे ममज् थ इति स्थिते जस्य कुत्वेन गकारे, 'मस्जिनशोः—' इति नुमि तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन क इति बोध्यम् । यद्यपि अकारात् परत्र नुमि सत्यपि इदं सिध्यति, तथापि अन्त्यात् पूर्वो नुमित्यस्य मग्न इत्यादौ नलोपः फलम् । अन्यथा उपधात्वाभावान्नस्य लोपो न स्यादिति भावः । एवं मङ्क्तेति । मङ्क्ष्यति इत्यत्र तु सस्य षत्वं विशेषः । 'रुजो भङ्गे' इत्यारभ्य 'विच्छ गतौ' इत्यतः प्रागनिटः । 'अनुदात्तस्य चर्दुपधस्य—' इत्यम्विकल्पं मत्वाह स्प्रष्टा, स्पर्ष्टेति । णुद प्रेरणे । णोपदेशोऽयम् । 'विश प्रवेशने' इत्यारभ्य 'शद्लृ शातने' इत्यन्ता अनिटः । तत्र अदुपधस्य थलि वेट् अन्यस्य तु नित्यमेवेट् । मृशेः 'अनुदात्तस्य च—' इत्यम्विकल्पः, तदाह अम्राक्षीत्, अमार्क्षीदिति । 'स्पृशमृश—' इति सिज्वेति भावः । सिजभावे 'शल इगुपधात्—' इति क्सं मत्वाह अमृक्षदिति । णुदधातुर्णोपदेशः । ननु तनादिगण एवास्मिन् स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत

---

सूत्रेऽनुवृत्त्यर्थमिति बोध्यम् । ससर्जिथेति । 'विभाषा सृजिदृशः' इति थलि वेट् । विच्छ गतौ । तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो न तु शप् । तेन विच्छायति विच्छायन्तीति नुम्विकल्पः । केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छति विच्छन्तीति नुम्विकल्पं विच्छति विच्छतः विच्छन्तीत्यादिरूपाणि वोदाजहुस्तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्तत्वाच्छ-

कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनःपाठः । पद्लृ १४२७ विशरणगत्यवसादनेषु । सीदति इत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती, सीदन्ती । ज्वलादौ पाठस्तु णार्थः । सादः । स्वरार्थश्च । शवनुदात्तः । शस्तूदात्तः । शद्लृ १४२८ शातने । स्वरार्थ एव पुनः पाठः । शता तु नास्ति । 'शदेः शितः' (सू० २३६२) इत्यात्मनेपदोक्तेः ।

अथ षट् स्वरितेतः । मिल १४२९ संगमे । मिल संश्लेषणे इति पठितस्य पुनःपाठः कर्त्रभिप्राये तङर्थः । मिलति, मिलते । मिमेल, मिमिले । मुच्लृ १४३० मोक्षणे । २५४६ शे मुचादीनाम् । ( ७-१-५९ ) नुम् स्यात् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् मुक्षीष्ट । अमुचत, अमुक्त अमुक्षाताम् । लुप्लृ १४३१ छेदने । लुम्पति । लुम्पते । अलुपत्, अलुप्त । विद्लृ १४३२ लाभे । विन्दति, विन्दते । विवेद, विविदे । व्याघ्रभूत्यादिमते सेट्कोऽयम् । वेदिता । भाष्यादिमतेऽनिट्कः । वेत्ता । परिवेत्ता । परिवेजने । ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः । तृन्तृचौ । लिप १४३३ उपदेहे । उपदेहो वृद्धिः । लिम्पति, लिम्पते । लेप्ता । "लिपिसिच—' ( सू० २४१८ )

---

आह कर्त्रभिप्रायेऽपीति । पद्लृधातोर्भ्वादौ पठितादेव सीदति इत्यादिसिद्धेः इह पाठो व्यर्थ इत्यत आह इह पाठ इति । सीदन्ती इति शविकरणात् शत्रन्ताद् ङीप 'आच्छीनद्योः—' इति नुम्विकल्पार्थ इह पाठ इत्यर्थः । भ्वादावेव पाठे तु 'शप्श्यनोर्नित्यम्' इति नित्यो नुम् स्यादिति भावः । तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह ज्वलादाविति । 'ज्वलितिकसन्तेभ्यः—' इति कर्तरि णप्रत्ययार्थ इति भावः । तदुदाहृत्य दर्शयति साद इति । उभयत्र पाठस्य फलान्तरमाह स्वरार्थश्चेति । तदेव विशदयति शवनुदात्त इति । 'अनुदात्तौ सुप्पितौ' इति पित्स्वरेणेति भावः । शस्तूदात्त इति । 'प्रत्ययः' 'आद्युदात्तश्च' इत्यनेनेति भावः । ननु 'शद्लृ शातने' इत्यस्य भ्वादौ पाठादेव सिद्धे इह पाठो व्यर्थ इत्यत आह स्वरार्थ एवेति । प्रागुक्तपित्त्वापित्त्वकृतस्वरभेदार्थ एवेत्यर्थः । ननु शत्रन्ताद् ङीपि उक्तरीत्या नुम्विकल्पार्थोऽपि कुतो न स्यादित्यत आह शता तु नास्तीति । शदेर्लटः शानजेव, नतु शत्रादेश इत्यर्थः । कुत इत्यत आह शदेः शित इतीति । मिल संगमे । पठितस्येति । अस्मिन्नेव तुदादिगणे परस्मैपदिषु पठितस्येत्यर्थः । तङर्थ इति । पूर्वत्र पाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थ इत्यर्थः । मुचॢ मोक्षणे । शेमुचादीनाम् । नुम् स्यादिति । शेषपूरणमिदम् । 'इदितो नुम्—' इत्यतस्तदनुवृत्तेरिति भावः । मुक्षीष्टेति । 'लिङ्सिचौ—' इति कित्त्वान्न गुण इति भावः अमुचदिति । लृदित्त्वादङिति भावः । लुङि तङ्याह अमुक्तेति । 'झलो झलि' इति सिज्लोप इति भावः । लिप उपदेहे । तङि तु वेति । 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेनेति शेषः ।

---

वेव । तेन विच्छायन्तीति नित्यमेव 'शप्श्यनोः—' इति नुम् । पठितस्येति । अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः । तङर्थ इति । पूर्वपाठस्तु

इत्यङ् । तङि तु वा । अलिपत, अलिपत, अलिप्त । षिच १४३४ क्षरणे । सिञ्चति, सिञ्चते । असिचत, असिचत, असिक्त । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषेच ।

अथ त्रयः परस्मैपदिनः । कृती १४३५ छेदने । कृन्तति । चकर्त । कर्तिता । कर्तिष्यति, कर्त्स्यति । अकर्तीत् । खिद १४३६ परिघाते । खिन्दति । चिखेद । खेत्ता । अयं दैन्ये दिवादौ रुधादौ च । पिशि १४३७ अवयवे । पिंशति । पेशिता । अयं दीपनायामपि । 'त्वष्टा रूपाणि पिंशतु' वृत् । मुचादयस्तुदादयश्च वृत्ताः ।

॥ इति तिङन्ते तुदादिप्रकरणम् ॥

—०—

---

षिच क्षरणे । अभिषिञ्चतीति । 'उपसर्गात्सुनोति–' इति षः । अभ्यषिञ्चदिति 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम् । अभिषिषेचेति । 'स्थादिष्वभ्यासेन–' इति षः ।

कृती छेदन इति । इदित्त्वं 'श्वीदित—' इत्येतदर्थम् । 'सेऽसिचि—' इति वेडिति मत्वाह कर्तिष्यति, कर्त्स्यतीति । पिशि अवयव इति । अवयव क्रियाया-मित्यर्थः । रूपाणि पिंशत्विति । प्रकाशयत्वित्यर्थः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां शविकरणं समाप्तम् ।

—०—

---

संश्लेषणे कर्त्रभिप्रायेऽपि परस्मैपदार्थः । षिच क्षरणे । षिचिरिति केचिदिरितं पठन्ति । तत्तु फलाभावादुपेक्ष्यम् । इह 'लिपिसिचिह्वश्च' इति च्लेरङ् विधीयते स चाप्राप्तविधिः । इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्तो विधिरिति फलाभावः । पिंशत्विति । दीपयत्वि-त्यर्थः । इति तुदादयः ।

—❀—

## अथ तिङन्ते रुधादिप्रकरणम् ॥ ४६ ॥

रुधिर् १४३८ आवरणे। नव स्वरितेत इरितश्च। २५४३ रुधादिभ्यः श्नम्। (३-१-७८) शपोऽपवादः मित्त्वादन्त्यादचः परः। नित्यत्वाद्गुणं बाधते। रुणद्धि। श्नसो-रल्लोपः। (सू० २४६९)। णत्वस्यासिद्धत्वादनुस्वारः परसवर्णः तस्यासिद्धत्वाण्णत्वं। 'न पदान्त–' (सू० ५१) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्। रुन्धः रुन्धति। रुन्द्धे। रोद्धा। रोत्स्यति। रोत्स्यते। रुणद्धु, रुन्धात्। रुन्द्धि। रुणधानि। रुणधै। अरुणत् अरुन्धाम्। अरुणत, अरुणः। अरुणधम्। अरुधत्, अरौत्सीत्, अरुद्ध। भिदिर् १४३९ विदारणे। भिनत्ति। भिन्ते। भेत्ता। भेत्स्यति। अभिनत्,

---

अथ श्नम्विकरणा धातवो निरुप्यन्ते। **रुधादिभ्यः श्नम्।** कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययः स्यात् स्वार्थे इत्यर्थः, तदाह **शपोऽपवाद इति।** श्नमि शमा-वितौ। मित्त्वस्य फलमाह **मित्त्वादन्त्यादचः पर इति।** प्रत्ययत्वात् शकारस्येत्संज्ञा। शकारनिर्देशस्तु 'श्नसोरल्लोपः' इत्यत्र विशेषणार्थः। न तु सार्वधातुकसंज्ञार्थः, फलाभा-वात्। न च 'सार्वधातुकमपित्' इति ङित्त्वे गुणनिषेधः फलमिति शङ्क्यम्, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाभावादेव गुणाप्रसक्तेः। ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणद्धि इति स्यादित्यत आह **नित्यत्वाद्गुणं बाधत इति।** कृते अकृते च गुणे प्रवृत्तेः श्नम् स्थित्यः तस्मिन् सति लघूपधत्वाभावान्न गुण इति भाव। **रुणद्धीति।** रुनध् ति इति स्थिते 'झषस्तथोः–' इति धत्वे णत्वमिति भावः। रुनध् तस् इति स्थिते प्रक्रियां दर्शयति। **श्नसोरल्लोप इति।** क्ङिति सार्वधातुके तद्विधेरिति भावः। रुन्ध् तस् इति स्थिते नस्य णत्वमाशङ्क्याह **णत्वस्यासिद्धत्वादिति।** ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह **तस्यासिद्धत्वादिति।** परसवर्णसंपन्नस्येत्यर्थः। नन्विह अल्लोपस्य 'अचः परस्मिन्–' इति स्थानित्वात् कथमनुस्वारपरसवर्णावित्यत आह **न पदान्तेति।** **रुन्द्ध इति।** 'झषस्तथोः–' इति धः। **रुन्धन्तीति।** रुणत्सि रुन्द्धः रुन्द्ध। रुणध्मि रुन्ध्वः रुन्ध्मः। **रुन्द्धे इति।** रुन्धाते रुन्धते। रुन्त्से रुन्द्ध्वे। रुन्धे रुन्ध्वहे रुन्ध्महे। रुरोध। रुरोधिथ। **अरुणदिति।** लङि हल्ङ्यादिना तिपो लोपः। धस्य चर्त्वविकल्पः। सिपि तु हल्ङ्यादिना लुप्ते 'दश्च' इति रुत्वविकल्पं मत्वाह **अरुणत्, अरुण इति।** रुन्ध्यात्। रुन्धीत रुत्सीष्ट। इरित्त्वादङ्विकल्पं मत्वाह **अरुधत्, अरौत्सी-दिति।** अङभावे सिचि हलन्तलक्षणा वृद्धिः। लुङस्तङ्याह **अरुद्धेति।** 'झलो

---

**रुधादिभ्यः श्नम्।** प्रत्ययत्वेऽपि मित्वादन्त्यादचः परः। प्रत्ययसंज्ञा-फलं तु शस्येत्संज्ञा। शस्योच्चारणं तु 'श्नसोरल्लोपः', 'श्नान्नलोपः' इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं फलाभावात्। न चापित्सार्वधातुकस्य ङित्त्वे गुणनिषेधः फल-मिति शङ्क्यम्, इगन्तस्याङ्गत्वाभावात्। **अरुण इति।** सिपि दश्चेति रुर्वा।

अभिनः । अभिनदम् । अभिन्त । अभिदत्, अभैत्सीत्, अभित्त । छिदिर् १४४० द्वैधीकरणे । अच्छिदत्, अच्छैत्सीत् । रिचिर् १४४१ विरेचने । रिणक्ति, रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत्, अरैक्षीत् । अरिक्त । विचिर् १४४२ पृथग्भावे । विनक्ति । विङ्क्ते । क्षुदिर् १४४३ संपेषणे । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत्, अक्षुत्त । युजिर् १४४४ योगे । योक्ता । छृदिर् १४४५ दीप्तिदेवनयोः । छृणत्ति छृन्ते । चच्छर्द । 'सेऽसिचि—' (सू० २५०६) इति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दीत्, अच्छर्दिष्ट । उतृदिर् १४४६ हिंसानादरयोः । तृणत्ती-त्यादि । कृती १४४७ वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । ञि इन्धी १४४८ दीप्तौ । अथ आत्मनेपदिनः । **२५४४ श्नान्नलोपः ।** (६–४–२३) श्नमः परस्य नस्य लोपः स्यात् । 'श्नसोरल्लोपः' (सू० २४६९) । इन्द्धे । इन्से । इन्धिता । इनधै । ऐन्ध । ऐन्धाः । खिद १४४९ दैन्ये । खिन्ते । खेत्ता । विद १४५० विचारणे । विन्ते । वेत्ता ।

---

झलि' इति सिज्लोपः । **भिनत्तीति** । भिन्तः भिन्दन्ति । भिनत्सि भिन्थः भिन्थ । भिनद्मि भिन्द्वः भिन्द्मः । **भिन्त्ते इति** । भिन्दाते भिन्दते । भिन्त्से भिन्दाथे भिन्द्ध्वे । भिन्दे भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे बिभिदिषे । **अभिनत्, अभिन इति** । 'दश्च' इति रुर्वेति भावः । **अभिन्त्तेति** । लङि तङि रूपम् । लुङः परस्मैपदे आह **अभिदत्, अभैत्सीदीति** । इरित्त्वादङ् वेति भावः लुङि । तङ्याह **अभित्तेति** । 'झलो झलि' इति सिज्लोपः । अभित्सातामित्यादि । **उछृदिरिति** । उकार इत् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । **ञि इन्धी दीप्तौ** । ईदित्त्वं 'श्वीदितः—'इत्येतदर्थम् । श्नमि कृते इन न् ध् ते इति स्थिते **श्नान्नलोपः** । श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम्, तदाह **श्नमः परस्य नस्येति** । नकारस्येत्यर्थः । अकार उच्चारणार्थः । तथा च इन् ध् ते इति स्थिते आह **श्नसोरल्लोप इति** । तथा च इन् ध् ते इति स्थिते 'झषस्तथोः-' इति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह **इन्द्धे इति** । यद्यपि 'अनिदिताम्-' इत्येवात्र नलोपः सिध्यति । तथापि अनक्ति इत्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति बोध्यम् । इन्धते । इन्द्ध्वे । इन्द्धाम् इन्त्स्व । इन्द्ध्वम् । **इनधै इति** । श्नमि उत्तरमस्य इट एत्वे आटि वृद्धौ इध न् ध् ऐ इति स्थिते श्नान्नलोपे अटः पित्त्वेन ङित्त्वाभावात् 'श्नसोरल्लोपः' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न लोप इत्यावश्यकम्, आटः पित्त्वेन ङित्त्वाभावाद् 'अनिदिताम्—' इत्यस्याप्रवृत्तेः । इनधावहै । लङ्याह

---

एवमभिन इत्यत्रापि । उच्छृदिर् । उकारः क्त्वायामिड्विकल्पार्थः । छृत्वा । छर्दित्वा । इट्पक्षे 'न क्त्वा सेट्' इति कित्त्वनिषेधाद् गुणः । **श्नान्नलोपः** । अस्य मुख्योदाहरणम् । अनक्ति । भनक्ति । श्नान्नित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह **श्नमः परस्येति** । एवं च 'यजयाच—' इति विश्नशब्दस्यापि नुटि विश्नानामित्यत्र

अथ परस्मैपदिनः। शिष्लृ १४५१ विशेषणे। शिनष्टि शिष्टः शिंषन्ति। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। जश्त्वम्। ष्टुत्वम्। 'झरो झरि-' (सू० ७१) इति वा डलोपः। अनुस्वारपरसवर्णौ। शिण्ढि, शिण्ड्ढि। शिनषाणि। अनिट्। लृदित्वादङ्। अशिषत् पिष्लृ १४५२ संचूर्णने। शिपिवत्। पिनष्टि। भञ्जो १४५३ आमर्दने। भनक्ति। बभञ्जिथ बभङ्क्थ। भङ्क्ता। भुज १४५४ पालनाभ्यवहारयोः। भुनक्ति। भोक्ता। भोक्ष्यति। अभुनक्। तृह १४५५ हिसि १४५६ हिंसायाम्। २५४५ तृणह इम्।

---

ऐन्द्धेति। ऐन्द्धा इति। 'झषस्तथोः-' इति थस्य धः। इन्धीत। लुङि ऐन्धिष्ट। शिष्लृ विशेषणे। अनिट्। शिशेषिथेति। अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्। शिनष् हि इति स्थिते अल्लोपे शिन्ष् हि इति स्थिते आह हेर्धिरिति। शिन् ष् धि इति स्थिते आह जश्त्वमिति। 'झलां जश् झशि' इति षस्य ड इति भावः। ष्टुत्वमिति। धस्य ढ इति भावः। यद्यपि जश्त्वस्यासिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्तः। तथापि जश्त्वं ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं क्रमस्तु न विवक्षितः। झर इति। जश्त्वसंपन्नस्य डस्य लोपविकल्प इत्यर्थः। अनुस्वारपरसवर्णाविति। नकारस्य 'नश्च-' इत्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः। 'न पदान्त-' इति निषेधान्नल्लोपः स्थानिवत्। ढस्य लोपपक्षे उदाहरति शिण्ढीति। ढस्य लोपाभावे उदाहरति शिण्ड्ढीति। वस्तुतस्तु सानुस्वार एव पाठ उचितः, 'दीर्घादाचार्याणाम्' इत्युत्तरम् अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदः स्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्याम्' 'शश्छोऽटि' इति षट्सूत्रपाठोत्तरं 'झलां जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रपाठ इति भाष्यसंमताष्टाध्यायीपाठे परसवर्णदृष्ट्या 'झलां जश् झशि' इत्यस्य 'झरो झरि-' इत्यस्य चासिद्धत्वेन यय्परत्वाभावे परसवर्णाप्राप्तेरिति शब्देन्दुशेखरे स्थितम्। शिष्टात् शिष्टम् शिष्ट। शिनषाणीति। आटः पित्त्वेन ङित्वाभावात् 'श्नसोः-' इत्यल्लोपो नेति भावः। अशिनडिति। लङस्तिपा हल्ङ्यादिलोपे षस्य जश्त्वमिति भावः। अशिष्टाम् अशिषन् अशिनट् अशिष्टम्। अशिष्ट। अशिनषम् अशिष्व अशिष्म। भञ्जो आमर्दने। भनक्तीति। श्नमि भ न न् ज् ति इति स्थिते 'श्नान्नलोपः' इति नलोप इति भावः। भङ्क्तः भञ्जन्तीत्या-द्यूह्यम्। भारद्वाजनियमात्थलि वेडिति मत्वाह बभञ्जिथ, बभङ्क्थेति। भङ्क्तेति। अनिडिति भावः। भुज पालनेति। 'भुजोऽनवने' इति तङ् वक्ष्यते-भुङ्क्ते भुञ्जाते इत्यादि। तृह हिसि हिंसायाम्। आद्य ऋदुपधः। सेट्। श्नमि कृते

---

लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयोः प्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः। इन्धे। इन्त्से। श्नमो नकारस्यानुस्वारपरसवर्णौ। 'अनिदिताम्' इति नलोपस्तु न भवति। अल्लोपस्य 'असिद्धवदत्र-' इत्यसिद्धत्वात्स्थानिवत्त्वाद्वा। भञ्जो। ओदित्करणं निष्ठानत्वार्थम्। भग्नः। भुज पालनादौ। 'भुजोऽनवने' इत्यात्मनेपदं वक्ष्यते।

( ७–३–९२ ) तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । हिनस्ति । जिहिंस । हिंसिता । उन्दी १४५७ क्लेदने । उनत्ति उन्तः उन्दन्ति । उन्दांचकार । औनत् औन्ताम् औन्दन् । औनः,

---

णत्वे तृणह् ति इति स्थिते तृणह इम् । तृणह इति षष्ठी । कृतश्नमः तृहधातोर्निर्देशः । 'नाभ्यस्तस्य–' इत्यतः पितीति 'उतो वृद्धिः–' इत्यतो हलीति चानुवर्तते । फलितमाह तृहः श्नमि कृते इति । मित्त्वादन्त्यादचः परः । श्नमि कृते इत्यनुक्तौ तु येन नाप्राप्तिन्यायेन इमागमेन श्नम् बाध्यते, 'सत्यपि संभवे बाधनं भवति' इति न्यायात् । अन्यथा 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रेण दधि न बाध्येत । श्नमा शप् च न बाध्यते, देशभेदेन उभयसंभवादिति भावः । तृणेढीति । तृणह ति इति स्थिते इमागमे आद्गुणे तृणेह् ति इति स्थिते ढत्वधत्वष्टुत्वढलोपा इति भावः । तृण्ढ इति । तसि श्नमि कृते, तृणह् तस् इति स्थिते, तसः अपित्त्वादिमागमाभावे 'श्नसोः–' इत्यल्लोपे ढत्वधत्वष्टुत्वढलोपा इति भावः । तृंहन्ति । तृणेक्षि तृण्ढः तृण्ढ । तृणेह्मि तृंह्वः तृंह्मः । ततर्हेति । ततृहतुः । ततर्हिथ । ततृहिव । तर्हितेति । सेडिति भावः । तर्हिष्यति । तृणेढु, तृण्ढात् तृण्ढाम् तृंहन्तु । तृण्ढि, तृण्ड्ढ, तृण्ढात् तृण्ढम् तृण्ढ । तृणहानि तृणहाव तृणहाम । अतृणेडिति । लङस्तिपि श्नमि इम् हल्ङ्यादिलोपः, ढत्वजश्त्वे इति भावः । अतृण्ढाम् अतृंहन् । अतृणेट् अतृण्ढम् अतृण्ढ । अतृणहम् अतृंह्व अतृंह्म । तृंह्यात् । तृह्यात् । अतर्हीत् । अतर्हिष्यत् । हिंसिधातोरुदाहरति हिनस्तीति । इह श्नमि इदित्त्वान्नुमि च कृते 'श्नान्न लोपः' इति नुमो लोप इति भावः । हिंस्तः हिंसन्ति । हिनस्सि हिंस्थः हिंस्थ । हिनस्मि हिंस्वः हिंस्मः । जिहिंसेति । किति इदित्त्वान्नलोपो न । जिहिंसतुः । जिहिंसिथ । हिंसितेति । सेडिति भावः । हिंसिष्यति । हिनस्तु हिंस्ताम् । हौ श्नमि नुमि कृते 'श्नान्नलोपः' इति नुमो लोपे हेरपित्त्वेन ङित्त्वात् 'श्नसोः–' इत्यल्लोपे 'धि च' इति सलोपे, हिन्धि इति रूपम् । हिंस्तात् । हिनसानि । अहिनत् अहिंस्ताम् अहिंसन् । सिपि रुर्वा–अहिनः अहिनत् अहिंस्तम् अहिंसम् अहिंस्व । हिंस्यात् हिंस्याताम् । आशीर्लिङि श्नमभावान्नुमेव । इदित्त्वान्नलोपो न । हिंस्यादित्येव । हिंस्यास्ताम् । अहिंसीत् अहिंसिष्यत् । उन्दी क्लेदने । उन्दन्तीति । उनत्सि उन्त्थः । उनद्मि उन्द्वः । उन्दा-

---

भुङ्क्ते । भुञ्जाते । तृणह इम् । तृह इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो माभूदित्येवमर्थम् । न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यम्, ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात् । 'नाभ्यस्तस्याचि पिति–' इत्यतः पितीति 'उतो वृद्धिः–' इत्यतो हलीति च वर्तते, तदाह हलादौ पितीति । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते किं तु पितीति अनुवर्तत एव । तेन तृण इत्यत्र नातिप्रसङ्गः । न च हलीत्यननुवृत्तौ तृणहानित्यत्रातिप्रसङ्ग इति वाच्यम्, अचि नेत्यनुवर्तनात् ।

[1]परिकल्पने। चहयति। अचीचहत्। कथादौ वक्ष्यमाणस्य तु अदन्तत्वे नाग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचचहत्। चप इत्येके। चपयति। रह १६२८ त्यागे इत्येके। अरीरहत्। कथादेस्तु अररहत्। वल १६२९ प्राणने। वलयति। चिञ् १६३० चयने। २५६९ चिस्फुरोर्णौ। (६—१—५४) आत्त्वं वा स्यात्। २५७० अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ। (७—३—३६) एषां पुक्

---

न च वेष्टनेऽप्यर्थे यमेरमन्तत्वादेव सिद्धे मित्त्वविधिर्व्यर्थ इति वाच्यम्, 'न कम्यमिचमाम्' इति मित्त्वप्रतिषेधप्रकरणस्थे 'यमोऽपरिवेषणे' इति घटाद्यन्तर्गतसूत्रे अपरिवेषणे इति पर्युदासेन भोजनतोऽन्यत्र वेष्टनेऽर्थे मित्त्वनिषेधस्य प्राप्तौ मित्त्वप्रापणार्थत्वाद् 'यमोऽपरिवेषणे' इत्यत्र परिवेषणशब्देन भोजनाया एव विवक्षितत्वेन वेष्टने यमेर्मित्त्वनिषेधस्य प्रसङ्गात्। अत एव यमिर्भोजनतोऽन्यत्र न मिदिति व्याख्यातं मूलकृता। भोजनायां तु 'यमोऽपरिवेषणे' इति मित्त्वनिषेधविधौ भोजनायाः पर्युदासादेव तत्र मित्त्वनिषेधाभावादमन्तत्वादेव मित्त्वप्राप्तेरिह चुरादौ परिवेषणशब्देन वेष्टनमेव विवक्षितं न तु भोजनेत्यास्तां तावत्। चह परिकल्पन- इति। इत आरभ्य 'चिञ् चयने' इत्येतत्पर्यन्तं चेत्यनुवर्तते। अतस्तेषां मित्त्वाद् णिचि ह्रस्वः, तदाह चहयतीति। नन्वनेनैव सिद्धे अग्रे चुराद्यन्तर्गणे कथादावस्य पाठो व्यर्थ इत्यत आह कथादाविति। कथादयोऽदन्ता इति वक्ष्यन्ते। तस्माण्णिचि अल्लोपे चहयतीत्यादौ अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावे मित्वाद्ध्रस्वे च न विशेषः। तथापि अदन्तात् चङि णौ अल्लोपे सति अग्लोपितया सन्वत्त्वदीर्घयोरभावे अचचहदिति रूपमस्ति फलमित्यर्थः। चप इत्येके इति। 'चह परिकल्पने' इत्यस्य स्थाने चप इत्येके पठन्तीत्यर्थः। 'रह त्यागे' इत्येके इत्यपि तथैव व्याख्येयम्। एवं च ज्ञपादिषु पञ्चसु चहधातुः चपधातुः रहधातुर्वा अन्यतमस्तृतीयः वलधातुश्चतुर्थः चिञ्धातुः पञ्चमः इति कृत्वा ज्ञपादिपञ्चानां मतत्रयेऽपि पञ्चत्वात् ज्ञपादिपञ्चकत्वस्य न विरोधः। 'रह त्यागे' इत्यस्यापि कथादिपाठफलमाह कथादेस्तु अररहदिति। अदन्तत्वेन अग्लोपित्वान्न दीर्घसन्वत्त्वे इति भावः। वल प्राणने। च इत्यनुवृत्त्या मित्त्वस्यानुकर्षणाद्ध्रस्वं मत्वाह वलयतीति। चिस्फुरोर्णौ। 'आदेच उपदेशे—' इत्यत आदिति 'विभाषा लीयतेः' इत्यतो विभाषेति चानुवर्तते इति मत्वा शेषं पूरयति आत्त्वं वा स्यादिति। चिञो णिचि आत्त्वे चा इ इति स्थिते अर्तिह्री। अर्ति ह्री व्ली री क्नूयी क्ष्मायी आत् एषां द्वन्द्वात् षष्ठी। पुक् णौ इति छेदः, तदाह—एषां पुक्

---

न तु णिजन्तस्य। तथा च भोजनावद्वेष्टनाया अपि परिवेषणशब्दार्थत्वादुभयत्राप्यमन्तत्वेनैव मित्त्वं सिध्यति। वेष्टने तु अपरिवेषण इत्यनेन अमन्तत्वप्रयुक्तमित्यस्य निषेधेऽपि 'यम च परिवेषणे' इत्यनेन मित्त्वं सिध्यतीति दिक्। चिस्फुरोर्णौ। 'आदेच उपदेशे'—इत्यत आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणं च' तदाह आत्त्वं वा स्यादिति। अर्तिह्री। परत्वादन्तरङ्गत्वाच्च आदौ पुक् पश्चाद्-

---

१ 'परिकल्कने' इति क्वाचित्कः पाठः।

स्याण्णौ। चपयति, चययति। ञित्करणसामर्थ्यादस्य णिज्विकल्पः। चयते। प्रणिचयति, प्रनिचयति। 'नान्ये मितोऽहेतौ' (ग० सू० १९८)। अहेतौ स्वार्थे णिचि ज्ञपादिभ्योऽन्ये मितो न स्युः। तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न। घट्ट १६३१ चलने। मुस्त १६३२ सङ्घाते। खट्ट १६३३ संवरणे। षट्ट १६३४ स्फिट्ट १६३५ चुबि १६३६ हिंसायाम्। पुल १६३७ सङ्घाते। पूर्ण इत्येके। पुण इत्यन्ये। पुंस १६३८ अभिवर्धने। टकि १६३९ बन्धने। टङ्कयति, टङ्कति। धूस १६४० कान्तिकरणे। धूसयति। दन्त्यान्तः। मूर्धन्यान्त इत्येके। तालव्यान्तः इत्यपरे। कीट १६४१ वर्णे। चूर्ण १६४२ संकोचने। पूज १६४३ पूजायाम्। अर्क १६४४ स्तवने। तपने इत्येके। शुठ १६४५ आलस्ये। शुठि १६४६ शोषणे। शुण्ठयति, शुण्ठति। जुड १६४७ प्रेरणे। गज १६४८ मार्ज १६४९ शब्दार्थौ। गाजयति। मार्जयति। मर्च १६५० च। मर्चयति। घृ १६५१ प्रस्रवणे। स्रावणे इत्येके। पचि १६५२ विस्तारवचने। पञ्चयति। पञ्चते इति व्यक्तार्थस्य शपि गतम्। तिज १६५३ निशाने। तेजयति। कृत १६५४ संशब्दने।

---

स्याण्णौ इति। पुकि ककार इत्, उकार उच्चारणार्थः कित्त्वादन्तावयवः। चाप् इ इति स्थिते चेत्यनुवर्त्य मित्त्वस्यानुकर्षणेन मित्त्वाद्ध्रस्वे चपि इत्यस्मात्तिवादौ परिनिष्ठितमाह चपयतीति। आत्त्वाभावपक्षे त्वाह चययतीति। चेर्णिचि वृद्धौ आयादेशे मित्त्वादुपधा- ह्रस्व इति भावः। ननु चिञ्धातोरिह ञित्करणं व्यर्थम्, ण्यन्ताद् णिचश्चेत्येव उभयपदसिद्धेः। चौरादिकस्यास्य नित्यं ण्यन्तत्वेन चयति चयते इति केवलस्याण्यन्तस्य शशशृङ्गायमाणत्वा- दित्यत आह ञित्करणसामर्थ्यादिति। एवं च णिजभावपक्षे उभयपदार्थमिह ञित्करणमर्थ- वदिति भावः। 'शेषे विभाषाऽकखादौ—' इति णत्वविकल्पं मत्वाह प्रणिचयति, प्रनिचयति इति। 'नान्ये मितोऽहेतौ' इति चुरादिगणसूत्रम्। अहेताविति च्छेदः। 'हेतुमति च' इति सूत्रेण विहितो णिच् हेतुशब्देन विवक्षितः। स न भवतीत्यहेतुः स्वार्थणिच्। तस्मिन्परे इति लभ्यते। किमपेक्षया अन्ये इत्याकाङ्क्षायां इतः प्राक् पठितज्ञपादिचिञन्तेभ्य इति लभ्यते, तदाह अहेतौ स्वार्थे णिचीत्यादिना। अहेताविव्यस्य व्याख्यानं स्वार्थे णिचीति। तेनेति। ज्ञपादिचिञन्तव्यतिरिक्तचुरादीनां मित्त्वनिषेधेनेत्यर्थः। शमादीनामिति। शम आलोचने अम रोगे इत्यादीनामग्रे चुरादौ पठिष्यमाणानामित्यर्थः। अमन्तत्वेति 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इत्यमन्तत्वनिमित्तकमित्यर्थः। कृत शब्दने।

---

गुणः। अर्पयति। ह्लेपयति। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति। चपयतीति। वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते। 'आतोऽनुपसर्गे' इति कबाधनाय 'ह्वावामश्च' इत्यारम्भादिति भावः। ज्ञपादिभ्य इति। मुख्यमते पञ्च ज्ञपादयः। मतान्तरे तु सप्त। पूर्ण इत्येके। पूणेत्यन्ये इति। ईदृशेषु पाठशुद्धिर्निर्णेतुमशक्या। अतएव क्षीरस्वामिनोक्तम्— 'पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः। न विद्मः किं जहीमोऽत्र किमुपाददमहे

२५७१ उपधायाश्च । (७-१-१०१) धातोरुपधाभूतस्य ऋत इत्स्यात् । रपरत्वम् । 'उपधायां च' ( सू० २२६५) इति दीर्घः । कीर्तयति । 'उर्ऋत्' (सू० २५६७) अचीकृतत्, अचिकीर्तत् । वर्ध १६५५ छेदनपूरणयोः । कुबि १६५५ आच्छादने । कुम्बियति । कुभि इत्येके । लुबि १६५६ तुबि १६५८ अदर्शने । अर्दने इत्येके । ह्लप १६५९ व्यक्तायां वाचि । क्लप इत्येके । चुटि १६६० छेदने । इल१६६१ प्रेरणे । एलयति । ऐलिलत् । म्रक्ष १६६२ म्लेच्छने । म्लेच्छ १६६३ अव्यक्तायां वाचि । ब्रूस १६६४ वर्ह १६६५ हिंसायाम् । केचिदिह गर्ज गर्द शब्दे, गर्ध अभिकाङ्क्षायाम्, इति पठन्ति । गुर्द १६६६ पूर्वनिकेतने । जसि १६६७ रक्षणे । मोक्षणे इति केचित् । जंसयति, जंसति । ईड १६६८ स्तुतौ । जसु १६६९ हिंसायाम् । पिडि १६७० सङ्घाते । रुष १६७१ रोषे । रुट इत्येके । डिप १६७२ क्षेपे । ष्टुप १६७३ समुच्छ्राये ।

आ कुस्मादात्मनेपदिनः 'कुस्म नाम्नो वा' इति वक्ष्यते । तमभिव्याप्येत्यर्थः । अकर्तृगामिफलार्थमिदम् । चित १६७४ सञ्चेतने । चेतयते । अची-

---

उपधायाश्च ।। 'ऋत इद्धातोः' इत्यनुवर्तते, तदाह **धातोरित्यादिना** । चङि 'उर्ऋत्' इत्युपधाया ऋत्वपक्षे आह **अचीकृतदिति** । उपधाया ऋत्वे कृत् इत्यस्य द्वित्वे उरदत्वे लघुपरतया सन्वत्त्वादित्वे 'दीर्घो लघोः' इति दीर्घं इति भावः । ऋत्वाभावपक्षे आह **अचिकीर्तदिति** । ऋत इत्वे रपरत्वे 'उपधायां च' इति दीर्घे कीर्त् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे कुत्वमिति भावः । लघुपरकत्वाभावेन सन्वद्भावविषयत्वाभावान्नाभ्यासदीर्घः आकुस्मादित्यत्र आङ्विभिधाविति मत्वा **तमभिव्याप्येति** । ननु 'णिचश्च' इति सिद्धे आत्मनेपदविधानं व्यर्थमित्यत आह **अकर्तृगामीति** । ननु 'दशि

वयम्' इति । पुल । पूर्णादिषु पाठे भ्रंशः । व्रजधातोर्मार्गसंस्कारोऽर्थ उत संस्कार एवेत्यर्थभ्रंशः । आगमभ्रंशात् शास्त्रभ्रंशात् । चूर्ण संकोचने । प्रेरणे । पठितस्य पुनः पाठोऽर्थभेदकृतः । **मर्च चेति** । क्वचिद्धातुपाठेऽस्याहष्टत्वेऽपि नायमप्रामाणिक इति मन्तव्यम् । 'मिदचोऽन्त्यात्परः' इति सूत्रे कैयटेनास्योपन्यस्तत्वात् । 'मर्तो मर्तं मर्चयति द्वयेन' इति प्रयोगदर्शनाच्च । उपधायाश्च । 'ऋत इद्धातोः' इति वर्तते, तदाह **धातोरुपधाया इति** । ननु 'ऋत इद्धातोः' इति सूत्रे धातोर्ऋत इति वैयधिकरण्येन व्याख्याने सिद्धमिष्टमिति किमनेन सूत्रेणेति । मैवम् । तथा हि सति ऋकारीयतीत्यत्रापि इत्वप्रसङ्गात् । **अर्दन इत्येक इति** । अत्र वदन्ति—अर्दने लुबितुबी भ्वादौ पठितौ तयोस्तत्र पाठो वृथा स्यात् । इदित्त्वादेव लुम्बति तुम्बतीत्यादिरूपसिद्धेः । अदर्शने त्वर्थेऽर्थभेदाद् भ्वादिपाठः सार्थक इत्यर्दनार्थत्वं चौरादिकयोरयुक्तमित्यस्वरसादेक इत्युक्तमिति । म्रक्ष म्लेच्छने । म्रक्षणेऽप्ययम् । तच्च तैलादिनाऽभ्यञ्जनम् । म्रक्षयति । अमम्रक्षत् । **गुर्द पूर्व निकेतने** । गुर्दयति । पूर्वयति । केचित्तु पूर्वनिकेतने इति पठित्वा गुर्दधातुः पूर्वनिवासे वर्तते इति व्याचक्षते । **जसु हिंसायाम्** । क्त्वायामिड्विकल्पार्थमुदित्करणमिति तत्सामर्थ्यादस्य णिजनित्यः ।

चितत। दशि १६७५ दंशने। दंशयते। अददंशत। इदित्त्वाण्णिजभावे दंशति। आकुस्मीयमात्मनेपदं णिच्संनियोगेनैवेति व्याख्यातारः। नलोपे सञ्जिसाहचर्याद् भ्वादेरेव ग्रहणम्। दसि १६७६ दर्शनदंशनयोः। दंसयते, दंसति। दस इत्यप्येके। डप १६७७ डिप १६७८ संघाते। तत्रि १६७९ कुटुम्बधारणे। तन्त्रयते। चान्द्रास्तु धातुद्वयमिति मत्वा कुटुम्बयते इत्युदाहरन्ति। मत्रि १६८० गुप्तपरिभाषणे। स्पश १६८१ ग्रहणसंश्लेषणयोः। तर्जने। वस्त १४८४ गन्ध १६८५ अर्दने। वस्तयते। गन्धयते। विष्क १६८६ हिंसायाम्। हिष्क इत्येके। निष्क १६८७ परिमाणे। लल १६८८ ईप्सायाम्। कूण १६८९ संकोचे। तूण १६९० पूरणे। भ्रूण १६९१ आशाविशङ्कयोः। शठ १६९२ श्लाघायाम्। यक्ष १६९३ पूजायाम्। स्यम १६९४ वितर्के। गूर १६९५ उद्यमने। शम १६९६ लक्ष १६७७ आलोचने। 'नान्ये मितः—'इति मित्त्वनिषेधः। कुत्स १६९८ अवक्षेपणे। त्रुट १६९९ छेदने। कुट इत्येके। गल १७०० स्रवणे। भल १७०१ आभण्डने। कूट। १७०२ आप्रदाने। अवसादने इत्येके। कुट्ट १७०३ प्रतापने। वञ्चु १७०४ प्रलम्भने। वृष १७०५ शक्तिबन्धने।

---

दंशने' णिजभावे दंशति इति कथम्। आकुस्मीयत्वेन णिजभावेऽपि तङो दुर्वारत्वादित्यत आह आकुस्मीयमिति। 'दंशसञ्ज्स्वञ्जां शपि' नलोपमाशङ्क्याह नलोपे सञ्जीति। स्पश ग्रहणेति। अपस्पशत। 'अत्स्मृदॄत्वर—' इति अभ्यासस्य अत्त्वकित्त्वापवादः। गूर उद्यमने। अयं दीर्घोपधः। गूरयते। तुदादौ तु 'गुरी उद्यमने' इति ह्रस्वोपधः। दिवादौ तु 'धुरी, गूरी हिंसागत्योः' इति

तुदादौ तु 'गुरी उद्यमने' इति ह्रस्वोपधः दिवादौ तु 'धुरी, गूरी हिंसागत्योः' इति

दीर्घोपध एवेति केचित्। ह्रस्वोपध इत्यन्ये। विदधातोरर्थभेदे त्रिकरणभेदं संगृह्णाति

---

जासयति। जसति। जसित्वा। जस्त्वा। जस्त्वम्। चित संचेतने। सचेतनं मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालिकं ज्ञानम्। दंशतीति। इह 'दंशसञ्ज—' इति नलोपमाशङ्क्याह सञ्जिसाहचर्यादिति। स्पश। स्पाशयते। 'अत्स्मृदॄत्वर—'इत्यादिनाऽभ्यासस्य अत्वम्। इत्वापवादः। अपस्पशत्। तर्ज भर्त्स तर्जने। तर्जयते। भर्त्सयते। 'तर्जयन्निव केतुभिः' इति प्रयोगस्तु णिजन्तादस्माद्भौवादिकात् तर्जतेर्वा हेतुमण्णिचि बोध्यः। भ्रूण। भ्रूणयते 'भ्रूणोऽर्भके स्त्रैण गर्भे' इत्यमरः गूर उद्यमने। दीर्घोपधोऽयम्। गूरयते। ह्रस्वोपधस्तु दिवादौ तुदादौ चेति मनोरमायां स्थितम्। यद्यपि तुदादौ गुरी उद्यमने इति पाठाद्ध्रस्वोपध एव तथापि दिवादौ घूरी गूरी हिंसागत्योरिति पाठान्नास्ति ह्रस्वोपध इति नव्याः। शम लक्ष। ननु 'निशामय तदुत्पत्तिम्' इत्यत्र शामय इत्येतत् शमु उपशम इत्यस्माण्णिचि रूपं चेद् अमन्तत्वान्मित्त्वे सति ह्रस्वेन भाव्यमित्याशङ्क्य कथमनेन सिद्धमिति वदन्ति। आकुस्मीयत्वात्तङि निशामयस्वेति रूपस्य सर्वसंमतत्वादिति चेत्। अत्राहुः—स्वार्थण्यन्तादस्मद्धेतुमण्णिचि निशामयेति रूपम्। न चार्थासंगतिः। 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते इति सिद्धान्तादिति। कुत्स अवक्षेपणे। 'यूनश्च कुत्सायाम्' इति निर्देशादङ्। कुत्सा। 'ण्यासश्रन्थ—' इति युच्। कुत्सना।

शक्तिबन्धनं प्रजननसामर्थ्यं, शक्तिबन्धश्च । वर्षयते । मद १७०६ तृप्तियोगे । मादयते । दिवु १७०७परिकूजने । गृ १७०८ विज्ञाने । गारयते । विद १७०९ चेतनाख्याननिवासेषु । वेदयते ।

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ।
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् ॥

मान १७१० स्तम्भे । मानयते । यु १७११ जुगुप्सायाम् । यावयते । कुस्म १७१२ नाम्नो वा (ग० सू० १९९) । कुस्म इति धातुः कुत्सितस्मयने वर्तते । कुस्मयते । अचुकुस्मत । अथवा कुस्म इति प्रातिपदिकम् । ततो धात्वर्थे । णिच् । इत्याकुस्मीयाः । चर्च १७१३ अध्ययने । बुक्क १७१४ भषणे । शब्द १७१५ उपसर्गादाविष्कारे च । चाद्भाषणे । प्रतिशब्दति । प्रतिश्रुतमाविष्करो-तीत्यर्थः । अनुपसर्गाच्च आविष्कारे इत्येव । शब्दयति । कण १७१६ निमीलने

---

सत्तायां विद्यते इत्यादिश्लोकेन । कुस्म नाम्नो वा । गणसूत्रम् । कुस्मेति पृथक्पदम् अविभक्तिकम्, तदाह कुस्म इति धातुरिति । कुत्सितस्मयने वर्तते इति शेषपूरणं व्याख्या-नादिति भावः । कुस्मयते इति । आकुस्मीयत्वादकर्तृगेऽपि फले आत्मनेपदम् । आकुस्मा-दात्मनेपदिन इत्यत्र आङभिविधावित्याश्रयणादिति भावः । अचुकुस्मतेति । उकारस्य गुरुतया अभ्यासस्य लघुपरकत्वाभावान्न सन्वत्त्वमिति भावः । नाम्नो वेत्यंशं व्याचष्टे अथवेति । नाम प्रातिपदिकम्, तस्माद्वा णिज्भवतीत्यर्थः । तच्च प्रातिपदिकं कुस्मशब्दा-त्मकमेव गृह्यते प्रत्यासत्त्या । तथा च कुस्मेति धातोः कुस्मेति प्रातिपदिकाद्वा णिजिति फलितम् । तत्र धातोः णिचः स्वार्थिकत्वमभिप्रेत्य प्रातिपदिकाद् णिचि विशेषमाह तत इति । तस्मात् प्रातिपदिकादित्यर्थः । धात्वर्थे इति । करोतीत्यर्थे आचष्टे इत्यर्थे वेत्यर्थः । न च 'तत्करोति तदाचष्टे' इत्येव प्रातिपदिकात् णिच् सिद्ध इति वाच्यम्, 'आकुस्मादात्मनेपदिनः' इत्यात्मनेपदनियमार्थत्वात् । इत्याकुस्मीयाः । शब्द उपसर्गा-दिति । उपसर्गात्परः शब्दधातुः आविष्कारे वर्तते इत्यर्थः । अनुपसर्गाच्चेति । अनुपसर्गात्परोऽपि शब्दधातुः णिचं लभते इत्यर्थः । आविष्कारे इत्यस्यैवानुवृत्त्यर्थं

---

भल । आभण्डनं निरूपणमित्याहुः । वञ्चु प्रलम्भने । ल्युटि वञ्चनम् । उदित्करणस्य क्त्वा-यामिड्विकल्पार्थत्वाण्णिजनित्यः । वञ्चयति । वञ्चति । वचित्वा । वञ्चित्वा । वक्त्वा । 'वञ्चिलुञ्च्यृतश्च' इति सेटः क्त्वः कित्त्वविकल्पनात् पाक्षिको नलोपः । इडभावे तु नित्यम् । निष्ठायां तु वक्तम् । 'यस्य विभाषा' इतीण्निषेधो नाम्नो वेति वाशब्दं व्याचष्टे अथ वेति । प्रातिपदिकमिति । 'अन्येष्वपि दृश्यते' इति सूत्रे अन्येभ्योऽपीति वक्ष्यमाणत्वात्कुपूर्वात्स्म-यतेर्डप्रत्यये टिलोपे 'कुगति-' इति समासे च निष्पन्नमित्यर्थः । यद्यपि कुपूर्वस्य स्मिङो लडादिषु कुस्मयते इत्यादि सिद्धं तथापि प्रकुस्मयते इत्यादि न सिध्येदुपसर्गस्य धातुना व्यव-धानायोगात् । कुस्मयांचक्रे इत्याद्यर्थमपि कुस्मेति पाठोऽर्थवान् । इत्याकुस्मीयाः । चर्च । सर्वोऽपि चुरादिर्णिच् पाक्षिकं इति पक्षे । 'गुरोश्च हलः' इत्यप्रत्ययः । चर्चा । कण निमी-

काणयति। 'णौ चङ्युपधाया ह्रस्वः' ( सू० २३१४ ) 'काण्यादीनां वा' ( धा० ४६१३ ) इति विकल्प्यते। अचीकणत् अचकाणत्। जभि १७१७ नाशने। जम्भयति, जम्भति। पूद १७१८ क्षरणे। सूदयति। असूषुदत्। जसु १७१९ ताडने। जासयति, जसति। पश १७२० बन्धने। पाशयति। अम १७२१ रोगे। आमयति। 'नान्ये मित–' इति निषेधः। अम गत्यादौ शपि गतः। तस्माद्धेतुमण्णौ 'न कम्यमिचमाम्' इति निषेधः। आमयति। चट १७२२ स्फुट १७२३ भेदने। विकासे शशपोः स्फुटति स्फोटते इत्युक्तम्। घट १७२४ सङ्घाते। घाटयति। 'हन्त्यर्थाश्च' ( ग० सू० २०० )। नवगण्यामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्ते इत्यर्थः। दिवु १७२५ मर्दने। उदित्वाद्देवतीत्यपि। अर्ज १७२६ प्रतियत्ने। अयमर्थान्तरेऽपि द्रव्यमर्जयति। घुषिर १७२७ विशब्दने। घोषयति। 'घुषिरविशब्दने' ( सू० ४०६३ ) इति सूत्रे 'अविशब्दने' इति निषेधाल्लिङ्गादनित्योऽस्य णिच्। घोषति। इरित्त्वादङ् वा। अघुषत्, अघोषीत्।

---

पृथगुक्तिः। शब्द आविष्कारे चेरयेतावत्येवोक्ते अनुपसर्गाद्भ्राषणेऽपि स्यात्, तदाह आविष्कारे इत्येवेति। काण्यादीनामिति। इदं वार्तिकं 'भ्राजभासभाप–' इति सूत्रे भाष्ये पठितम्। 'काणि राणि श्राणि भाणि हेठि लोपयः पट्कोण्यादयः' इति भाष्यम्। अचीकणदिति। ह्रस्वत्वपक्षे लघुपरत्वादभ्यासस्य सन्वत्त्वमिति भावः। शशपोरिति। शविकरणे शब्विकरणे चेत्यर्थः। हन्त्यर्थाश्चेति। गणसूत्रमिदम्। हन हिंसागत्योरिति हनधातोर्हिंसा गमनं चार्थः। एतदर्थकाः ये धातवो भ्वादिषु नवसु गणेषु पठिताः ते सर्वेऽपि चुरादौ पठिताः प्रत्येतव्या इत्यर्थः। ततश्च तेभ्यः स्वार्थे णिजपि पक्षे भवतीति फलितम्, तदाह नवगण्यामित्यादि। दिवु मर्दने। उदित्त्वादिति। उदित्करणम् 'उदितो वा' इति क्त्वायामिड्विकल्पार्थम्। द्यूत्वा, देवित्वा। इडभावे ऊठ्। इटि तु 'न क्त्वा सेट्' इति क्त्वनिषेधाद् गुण इति स्थितिः। अस्य नित्यण्यन्तत्वे सति णिचा व्यवहितत्वेन क्त्वायामिड्विकल्पस्य अप्रसक्तेरुदित्करणं व्यर्थं सज्ञापयति अस्य दिवुधातोः णिज्विकल्प इतीति भावः। घुषिर् विशब्दने। विशब्दनं शब्देन स्वाभिप्रायाविष्करणं प्रतिज्ञानं च। भ्वादौ त्वयं धातुरविशब्दनार्थकः पठितः। घोषयतीति। शब्देन स्वाभिप्रायमाविष्करोतीत्यर्थः, प्रतिजानीते इति वा। लिङ्गादिति। इण्निषेधप्रकरणे 'घुषिर् अविशब्दने' इति सूत्रम्। अविशब्दनार्थकाद् घुषधातोः निष्ठायामिण्न स्यादित्यर्थः। यथा घुष्टा रज्जुः। प्रसारितेत्यर्थः अविशब्दने इति किम्? अवघुषितं वाक्यम्। प्रतिज्ञातमित्यर्थः। अत्र विशब्दनार्थकत्वान्नेण्निषेध इति स्थितिः। तत्र विशब्दनार्थकस्य घुषधातोः चौरादिकत्वेन ण्यन्तत्वनियमाण्णिचा व्यवधानात्ततः

---

लने। एकनेत्रनिमीलन एवायं शब्दः स्वभावात्। काणः। कण्यादीनामिति। एते हेतुमण्ण्यन्तेषु वक्ष्यन्ते। हन्त्यर्थाश्च। तेन घातयति हन्तीत्येतौ समानार्थौ। अर्ज। प्रतियत्नो गुणाधानम्। अर्जयतीति। संगृह्णातीत्यर्थः। घुषिर्। अविशब्दनं प्रतिज्ञानम्। निषेधाल्लिङ्गादिति। घुषिरविशब्दन इति सूत्रेण अवि-

ण्यन्तस्य तु अजूघुषत् । आङः क्रन्द १७२८ सातत्ये, भौवादिकः क्रन्दधातुराह्वानाद्यर्थे उक्तः । स एवाङ्पूर्वो णिचं लभते सातत्ये । आक्रन्दयति । अन्ये तु 'आङ्पूर्वो घुषिः क्रन्दसातत्ये' इत्याहुः । आघोषयति । लस १७२९ शिल्पयोगे । तसि १७३० भूष १७३१ अलङ्करणे । अवतंसयति, अवतंसति । भूषयति । अर्ह १७३२ पूजायाम् । ज्ञा १७३३ नियोगे । आज्ञापयति । भज १७३४ विश्राणने । शृधु १७३५ प्रसहने । अशशर्धत्, अशीशृधत् । यत १७३६ निकारोपस्कारयोः । रक १७३७ लग १७३८ आस्वादने । रघ इत्येके । रग इत्यन्ये । अञ्चु १७३९ विशेषणे अञ्चयति । उदित्त्वमिड्विकल्पार्थम् । अत एव विभाषितो णिच् । अञ्चति । एवं शृधुजसुप्रभृतीनामपि बोध्यम् । लिगि

परा निष्ठा नास्त्येवेति इण्निषेधे विशब्दनपर्युदासो व्यर्थः सन् चौरादिकस्यास्य विशब्दनार्थकस्य घुषेः णिचो विकल्पं गमयति । एवं च अवघुषितं वाक्यमित्यत्र चौरादिकघुषेर्विशब्दनार्थकस्य निष्ठायाम् इण्निषेधो नेति भाष्ये स्पष्टम् । इरित्त्वादङ्वेति । णिजभावपक्षे इति शेषः । ननु इरित्त्वादेव णिज्विकल्पे सिद्धे 'घुषिरविशब्दने' इति इण्निषेधसूत्रे अविशब्दने इति पर्युदासस्य णिज्विकल्पज्ञापकत्वाश्रयणक्लेशो भाष्ये व्यर्थ इति चेत् न—अत एव भाष्यादिरित्त्वाभावविज्ञानात् । एवं च 'घुषिर् विशब्दने' इत्यत्र घुषिरित्यस्य इका निर्देशमाश्रित्य प्रथमान्तत्वमेवाश्रयणीम् । इरित्त्वादङ्वेति मूलं तु भाष्यविरोधादुपेक्ष्यमेवेत्यास्तां तावत् । आङः क्रन्द सातत्य इति । आङः परः क्रन्दधातुः आह्वानसातत्येऽर्थे णिचं लभते इत्यर्थः । यद्वा आङ् इत्यनन्तरं घुषिरित्यनुवर्तते । क्रन्दसातत्ये इत्यर्थनिर्देशः, तदाह अन्ये त्विति । लस शिल्पयोग इति । कौशले इत्यर्थः । तसि भूषेति । अत्र तसिः प्रायेण अवपूर्वः, तदाह अवतंसयतीति । ज्ञा नियोग इति । आङ्पूर्वः, तदाह आज्ञापयतीति । आदन्तत्वात् पुक् । अजिज्ञपत् । यत निकारेति । तालव्यान्तःस्यादिः । यत्नो वा प्रैषो वा निकारः । यातयति । अयीयतत् अञ्चु विशेषण इति । व्यावर्तने इत्यर्थः । उदित्त्वमिति । 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थमित्यर्थः । ण्यन्तात्तु णिचा व्यवधानाद् इड्विकल्पस्य न प्रसक्तिरिति भावः । नन्वस्य नित्यण्यन्तत्वादण्यन्तत्वम् असिद्धमित्यत आह

शब्दने निष्ठाया इण्निषिध्यते विशब्दनार्थदितस्मादनन्तरा निष्ठा नास्त्येव णिचा व्यवधानात् । अतो घुषिरविशब्दन इति भौवादिकादेव निष्ठाया इण्निषेधो भवेदिति किं विशब्दनप्रतिषेधेन । ततश्चानेनैव विशब्दनप्रतिषेधेनानित्योऽस्य णिजिति ज्ञाप्यते इति भावः । इरित्करणादपि णिज्विकल्पः सिध्यतीति केचित् । शिल्पयोग इति । क्रियाकौशलं शिल्पम् । यत निकारोपस्कारयोः । यत्नो वा प्रैषो वा निकारः । निकारोपस्कारयोरिति पाठान्तरम् । क्रियानिघण्टौ 'यत्ने प्रैषे निराकारे पादपे चाप्युपस्कृतौ । नित्योऽयं वान्यवनयोः प्रतिदाने' इत्युक्तम् । अस्यार्थः—यत्नाद्यर्थेषु चतुर्षु यतधातुं प्रयुञ्जीत । निसः परभागे चेत्प्रयुज्यते तदाऽयं वान्यवनयोः प्रतिदाने च वर्तत इति । ऋणं निर्यातयति । प्रतिददातीत्यर्थः । अञ्चु विशेषणे ।

१७४० चित्रीकरणे । लिङ्गयति, लिङ्गति मुद १७४१ संसर्गे । मोदयति सक्तून्घृतेन । त्रस १७४२ धारणे । ग्रहणे इत्येके । वारणे इत्यन्ये । उध्रस १७४३ उञ्छे । उकारो धात्ववयव इत्येके । नेत्यन्ये । ध्रासयति । ध्रसति उध्रासयति । मुच १७४४ प्रमोचनं मोदने च । वस १७४५ स्नेहच्छेदापहरणेषु । चर १७४६ संशये । च्यु १७४७ सहने । हसने चेत्येके । च्यावयति । च्युस इत्येके । च्योसयति । भुवोऽवकल्कने १७४८ । अवकल्कनं मिश्रीकरणमित्येके । चिन्तनमित्यन्ये । भावयति । कृपेश्च १७४९ कल्पयति । 'आ स्वदः सकर्मकात्' ( ग० सू० २०१ ) स्वदिमभिव्याप्य संभवत्कर्मभ्य एव णिच् । ग्रस १७५० ग्रहणे । ग्रासयति फलम् । पुष १७५१ धारणे । पोषयत्याभरणम् । दल १७५२ विदारणे । दालयति । पट १७५३ पुट १७५४ लुट १७५५ तुजि १७५६ मिजि १७५७ पिजि १७५८ लुजि १७५९ भजि १७६० लघि १७६१ त्रसि १७६२ पिसि १७६३ कुसि १७६४ दशि १७६५ कुशि ११६६ घट १७६७ घटि १७६८ बृहि १७६९ बर्हं १७७० बल्ह १७७१ गुप १७७२ धूप १७७३ विच्छ १७७४ चीव १७७५ पुथ १७७६ लोकृ १७७७ लोचृ १७७८ णद १७७९ कुप १७८० तर्क १७८१ वृतु १७८२ वृधु १७८३ भाषार्थाः । पाटयति । पोटयति । लोटयति । तुञ्जयति । तुञ्जति । एवं परेषाम् । घाटयति । घण्टयति । २५७२ नाग्लोपिशास्वृदिताम् । (७—४—२) णिच्यग्लोपिनः शास्तेः ऋदितां चोपधाया ह्रस्वो न स्याच्चङ्परे णौ । अलुलोचत् । वर्तयति । वर्धयति ।

---

अत एवेति । च्यु सहन इति । च्यावयति । अचुच्यवत् । भुवोऽवकल्कने इति । अवकल्कनवृत्तेर्भूधातोर्णिच् स्यादित्यर्थः । कृपेश्चेति । अवकल्कनवृत्तेः कृपेः णिच् स्यादित्यर्थः । कल्पयतीति । 'कृपो रो लः' इति लत्वम् । आस्वदः सकर्मकादिति । आङभिविधौ, तदाह स्वदिमभिव्याप्येति । तत्र 'ष्वद आस्वादने' इत्यस्य अकर्मकत्वादाह संभवत्कर्मभ्य इति । इत आरभ्य आस्वदीयाः सकर्मकाः । स्वदिस्त्वकर्मकः । पट पुटेति । एकत्रिंशद् धातवः । आद्यास्त्रयष्टान्ताः । आद्यद्वितीयौ पवर्गप्रथमादी । चतुर्थाद्या एकादश इदितः । त्रिसिपिसी इदुपधौ । अदुपधौ इत्येके । षोडशसप्तदशाविदितौ । अलुलोकत् अलुलोचत् इत्यत्र उपधाह्रस्वे प्राप्ते नाग्लोपि । 'णौ चङ्युपधायाः—' इत्यनुवर्तते । णावित्यावर्तते । एकमग्लोपिन इत्यत्रान्वेति । द्वितीयं तु निषेधे परनिमित्तम्, तदाह णिच्यग्लोपिन इत्यादि । अलुलोकदिति । ऋदित्त्वान्नाग्लोपीति निषेधेन उपधा-

---

विशेषणं व्यावर्तनम् । 'भुवोऽवकल्कने' । भूधातोर्णिच् स्यात् । भावयतीति । मिश्रीकरोति चिन्तयति वेत्यर्थः । कृपेश्च । कृपेर्णिच् स्यादवकल्कने । आस्वदः । अभिव्याप्येति । आकुस्मादिति पूर्वत्र आधृषादागर्वादिति परत्र च आङोऽभिविध्यर्थतायाः सर्वसंमतत्वेन तन्मध्यपतितेऽत्रापि तथैव व्याख्यानमुचितमिति भावः । अन्ये स्वाङ्पूर्वकात्स्वदः सकर्मकाण्णिजिति व्याचख्युः । आस्वदीयेषु धातवः सर्वे सकर्मकाः । घाटयतीति । अयं चुरादावेव संघाते गतः, पुनः पाठस्तु अर्थ-

दित्त्वाद् वर्तते। वर्धते। रुट १७८४ लजि १७८५ अजि १७८६ दसि १७८७ भृशि १७८८ रुशि १७८९ शीक १७९० रुसि १७९१ नट १७९२ पुटि १७९३ जि १७९४ १७९५ रघि १७९६ लघि १७९७ अहि १७९८ रहि १७९९ महि १८०० च। लडि १८०१ तड १८०२ नल १८०३च। पूरी १८०४आप्यायने। ईदित्त्वं निष्ठायामिण्निषेधाय। अत एव णिज्वा। पूरयति, पूरति। रुज १८०५ हिंसायाम्। ष्वद १८०६ आस्वादने। स्वाद इत्येके। असिष्वदत्। दीर्घस्य त्वपोपदेशत्वाद् असिस्वदद्। इत्यास्वदीयाः।

'आ धृषाद्वा' ( ग० सू० २०२ ) इति ऊर्ध्वं विभाषितणिचो धृषधातुमभिव्याप्य। युज १८०७ पृच १८०८ संयमने। योजयति, योजति। अयौक्षीत्। पर्चयति, पर्चति। पर्चिता। अपर्चीत्। अर्च १८०९ पूजायाम्। षह १८१० मर्षणे। साहयति। 'स एवायं नागः सहित कलभेभ्यः परिभवम्'। ईर १८११ क्षेपे। ली १८१२ द्रवीकरणे। लाययति, लयति। लेता। वृजी १८१३ वर्जने।

---

ह्रस्वाभावे सति लघुपरकत्वाभावान्नाभ्यासदीर्घ इति भावः। **उदित्त्वादिति**। 'वृतु वृधु' इत्युदित्त्वम् 'उदितो वा' इत्यण्यन्तात् क्त्वायामिड्विकल्पार्थम्। ण्यन्तात्तु णिचा व्यवधानाद् नेड्विकल्पप्रसक्तिः। अतो णिज्विकल्पो विज्ञायते इति भावः। **पूरी आप्यायने**। **इण्निषेधायेति**। अण्यन्तात् क्त्वायामिण्निषेधार्थमीदित्त्वम्। ण्यन्तात्तु णिचा व्यवधानादप्रसक्तेः। अतो णिज्विकल्पो विज्ञायते इत्यर्थः। स्वदधातुः षोपदेशः, तदाह **असिष्वददिति**। आदेशसकारत्वात्षः। अभ्यासेकारस्य संयोगपरकत्वेन गुरुत्वान्नाभ्यासदीर्घः। **दीर्घस्य त्विति**। दीर्घमध्यस्य त्वित्यर्थः। **अपोपदेशत्वादिति**। ह्रस्वमध्यस्यैव स्वेदः षोपदेशेषु परिगणनादिति भावः। **इत्यास्वदीयाः**।

**आ धृषाद्वेति**। गणसूत्रम्। **विभाषितणिच इति**। विकल्पितणिच्काः प्रत्येतव्या इत्यर्थः। आङभिव्याप्ताविति मत्वाह **धृषधातुमभिव्याप्येति**। णिजभावपक्षे आह **अयौक्षीदिति**। **अर्च पूजायामिति**। अयमनुदात्तेदिति शाकटायनः। अर्चयते। अर्चते। अस्य भ्वादौ पाठः अनार्षः। अनेनैव सिद्धेः। नच परस्मैपदार्थं भ्वादावर्चेः पाठ इति वाच्यम्, भ्वादौ तस्याप्यात्मनेपदीयतायाः शाकटायनसंमतत्वेन माधवोक्तेः। एवमत्रत्यानामावृषीयाणां भ्वादौ परस्मैपदिषु पाठः प्रामादिक एवेत्याहुः। **ली द्रवीकरणे**। **लाययतीति**। 'लीलोः—' इति नुक्

---

भेदात्। **स्वाद इत्येके इति**। अस्मिन्मते पूर्वत्राप्यास्वादः सकर्मकादिति पाठ्यम्। ननु दीर्घपाठो व्यर्थः। ह्रस्वपाठेऽप्युपधावृद्धया स्वादयतीति रूपाणां तुल्यत्वादत आह **दीर्घस्य त्विति**। 'सः स्विदिस्वदिसहीनां च' इति सूत्रेण अभ्यासेणः परस्य सस्य सकारो न तु षत्वमिति वक्ष्यमाणत्वात्सन्नन्तेऽपि सिस्वादयिषितीत्यादि रूपं तुल्यमेवेत्यभिप्रेत्याह **असिस्वददिति**। इत्यास्वदीयाः। **आधृषाद्वा**। व्याख्यानात, योग्यतावलाद्वा णिजिति संबध्यते। **अयौक्षीदिति**। णिजभावपक्षे अनिट्कोऽयमिति भावः। **ली द्रवीकरणे**। लिनातिलीयत्योर्यका निर्देश इति माध्व-

वर्जयति, वर्जति । वृञ् १८१४ आवरणे । वारयति, वरति, वरते । वरिता, वरीता । जॄ १८१५ वयोहानौ । जारयति, जरति । जरिता, जरीता । ज्रि १८१६ च । ज्राययति, ज्रयति । ज्रेता । रिच १८१७ वियोजनसम्पर्चनयोः । रेचयति, रेचति । रेक्ता । शिष १८१८ असर्वोपयोगे । शेषयति, शेषति । शेष्टा । अशिक्षत् । अयं विपूर्वोऽतिशये । तप १८१९ दाहे । तापयति, तपति । तप्ता । तृप १८२० तृप्तौ । 'संदीपने' इत्येके । तर्पयति, तर्पति । तर्पिता । छृदी १८२१ संदीपने । छर्दयति, छर्दति । छर्दिता । छर्दिष्यति । 'सेऽसिचि–' (२५०६) इति विकल्पो न । साहचर्यात्तत्र रौधादिकस्यैव ग्रहणात् । चृप छुप दृप सन्दीपने इत्येके । चर्पयति । छर्पयति । दृभी १८२२ भये । दर्भयति, दर्भति । दर्भिता । दृभ १८२३ संदर्भे । अयं तुदादावीदित् । श्रथ १८२४ मोक्षणे । हिंसायामित्येके । मी १८२५ गतौ । माययति, मयति । । मेता । ग्रन्थ १८२६ बन्धने । ग्रन्थयति, ग्रन्थति । शीक १८२७ आमर्षणे । चीक १८२८ च । अर्द १८२९ हिंसायाम् । स्वरितेत् । अर्दयति, अर्दति, अर्दते । हिसि १८३० हिंसायाम् । हिंसयति, हिंसति । हिनस्ति इति श्नमि गतम् । अर्ह १८३१ पूजायाम् । आङः षद १८३२ पद्यर्थे । आसादयति, आसीदति । 'पाघ्रा—' ( सू० २३६० ) इति सीदादेशः आसत्ता । आसात्सीत् । शुन्ध १८३३ शौचकर्मणि । शुन्धिता । अशुन्धीत अशुन्धिष्टाम् । छद १८३४ अपवारणे । स्वरितेत् । जुष १८३५

---

तु न, लासाहचर्याद् हेतुमण्णावेवास्य प्रवृत्तेः । लेतेति । 'विभाषा लीयतेः' इत्यात्वं तु न, तत्र श्नाश्यन्विकरणयोरेव यका निर्देश इति भाष्यात् । **वृञ् आवरणे । वरिता, वरीतेति ।** 'वृतो वा' इति दीर्घः । आशीर्लिङि व्रियात् । आत्मनेपदे तु 'लिङ्सिचोः–' इति वेट् । वृषीष्ट, वरिषीष्ट । इडभावपक्षे 'उश्च' इति कित्त्वान्न गुणः । 'न लिङि' इति इटो न दीर्घः । अवृत । **ज्रि चेति** । ह्रस्वान्तोऽयम् । **रिच वियोजन इति** । अनिडयम् । ततश्च णिजभावपक्षे नेट्, तदाह **रेक्तेति** । **शिष असर्वेति** । अयमप्यनिट्, तदाह **शेष्टेति** । **अशिक्षदिति** । 'शल इगुपधात्—' इति क्सः । **अयं विपूर्वोऽतिशयः इति** । वर्तते इति शेषः । अयमस्माद्विशिष्ट इत्यत्र अधिक इति गम्यते । **तृप तृप्ताविति** । अनिट्सु श्यना निर्देशादयं सेट्, तदाह **तर्पितेति** । **छृदी संदीपन इति** । ईदित्त्वं निष्ठाया-

---

कारोक्तत्वाद् 'विभाषा लीयतेः' इत्यात्वमिह न प्रवर्तत इति ध्वनयति । **लेतेति । वरीतेति ।** 'वृतो वा' इति वा दीर्घः । लिङि वूर्यात् । आत्मनेपदे तु वृषीष्ट । वरिषीष्ट । 'लिङ्सिचोरात्मनेपदेषु' इति वेट् । 'न लिङि' इति इटो दीर्घनिषेधः । इडभावपक्षे 'उश्च' इति कित्वान्न गुणः । लुङि अवारीत् । अवारिष्टाम् । अवारिषुः । 'सिचि च परस्मैपदेषु' इति दीर्घनिषेधः । आत्मनेपदे तु । अवरिष्ट । अवरीष्ट । इडभावे सिचो लोपः । अवृत । **रिच** । णिजभावे अयमनिडित्याह **रक्तेति** । **अशिक्षदिति** । 'शल इगुपधात्—' इति क्सः । **तृप** । अनिट्सु श्यना निर्देशादयं सेडिति ध्वनयति **तर्पितेति** । **छृदी** । ईदित्वान्निष्ठायामनिट् । श्रवर्णा-

---

परितर्कणे। परितर्कणमूहो हिंसा वा। परितर्पणे इत्यन्ये। परितृप्तिक्रिया। जोषयति, जोषति। प्रीतिसेवनयोर्जुषत इति तुदादौ। धूञ् १८३६ कम्पने। णाविति विकृत्य 'धूञ्प्रीञोर्नुग्वक्तव्यः' ( वा० ४५१९ )। धूनयति। धवति, धवते। केचित्तु 'धूञ्प्रीणोः—' इति पठित्वा प्रीणातिसाहचर्याद् धुनातेरेव नुकमाहुः। धावयति। अयं स्वादौ क्र्यादौ तुदादौ च, स्वादौ ह्रस्वश्च तथा च कविरहस्ये—

'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्।
वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च'॥

प्रीञ् १८३७ तर्पणे। प्रीणयति। 'धूञ्प्रीणो–' इति हरदत्तोक्तपाठे तु प्राययति, प्रयति प्रयते। श्रन्थ १८३८ ग्रन्थ १८३९ सन्दर्भे। आप्लृ १८४० लम्भने। आपयति, आपति। आप्ता। आपत्। स्वरितेदयमित्येके। आपते। तनु १८३१ श्रद्धोपकरणयोः। उपसर्गाच्च दैर्घ्ये। तानयति वितानयति तनति वितनति। चन श्रद्धोपहननयोः इत्येके। चानयति चनति। वद १८३२ सन्देशवचने। वादयति। स्वरितेत् वदति, वदते। अनुदात्तेदित्येके। ववदतुः। ववदिथ। ववदे। वद्यात्। वच १८४३ परिभाषणे। वाचयति, वचति। वक्ता। अवाक्षीत्। मान १८४४ पूजायाम्। मानयति, मानति। मानिता। विचारणे तु भौवादिको नित्यसन्नन्तः। स्तम्भे तु मानयते। इत्याकुस्मीयाः। मन्यते इति दिवादौ। मनते इति तनादौ च। भू १८४५ प्राप्तावात्मनेपदी। भावयते, भवते। णिच्संनियोगेनैवात्मनेपदमित्येके। भवति। गर्ह १८४६ विनिन्दने। मार्ग १८४७ अन्वेषणे। कठि १८४८ शोके। उत्पूर्वोऽयमुत्कण्ठायाम्। कण्ठते इत्यात्मनेपदी गतः। मृजु १८४९ शौचालङ्कारयोः। मार्जयति, मार्जति। मार्जिता, मार्ष्टा। मृष १८५० तितिक्षायाम्। स्वरितेत्। मर्षयति मर्षति मर्षते। मृष्यति, मृष्यते इति दिवादौ। सेचने शपि मर्षति। धृष १८५१ प्रसहने। धर्षयति, धर्षति। इत्याधर्षीयाः।

---

मिण्निषेधार्थम्। धुवति स्फुटितेति। शविकरणस्य रूपम्। शस्य ङित्त्वाद् गुणाभावे उवङ्। प्रीञ् तर्पणे। प्रीणयतीति। 'धूञ्प्रीञोः—' इति वार्तिकान्नुगिति भावः। हरदत्तेति। अनेन भाष्यासंमतत्वं सूचितम्। उपसर्गाच्चेति। दैर्घ्ये तु उपसर्गादनुपसर्गाच्च परस्तनुधातुराधृषीयो वेदितव्य इत्यर्थः। श्रद्धोपकरणयोस्त्वनुपसर्गादेवेति भावः। वच परिभाषणे। अवाक्षीदिति। 'अस्यतिवक्ति—' इति लुका निर्देशादङ् नेति भावः। 'वचिस्वपि—' इति संप्रसारणम्, उच्यात्। इत्याधृषीयाः।

---

नस्य णत्वम्। छृण्णः। छृण्णवान्। ह्रस्वाच्चेति। धुञ् कम्पने इत्यर्थः। अवाक्षीदिति। 'अस्यतिवक्ति—' इति लुक् निर्देशादङ् नेति भावः। 'वचिस्वपि—' इति संप्रसारणम्। उच्यात्। धृष। प्रसहने। केचिदित्वादितमाहुस्तन्मते धृष्टो मुख्यमते तु धृषितः। नन्वत्र 'निष्ठा शीङ—' इत्यादिना सेण्निष्ठायाः कित्त्वनिषेधाद् गुणेन भाव्य-

अथादन्ताः। कथ १८५२ वाक्यप्रबन्धे। अल्लोपस्य स्थानिवद्भावान्न वृद्धिः। कथयति। अग्लोपित्वान्न दीर्घसन्वद्भावौ। अचकथत्। वर १८५३ ईप्सायाम् वरयति। वारयतीति गतम्। गण १८५४ संख्याने। गणयति। २५७३ ई चगणः। (७—४—६७) गणेरभ्यासस्य ईत्स्याचङ्परे णौ। चादत्। अजगणत्, अजीगणत्। शठ १८५५ श्वठ १८५६ सम्यगवभाषणे। पठ १८५७ वठ १८५८ ग्रन्थे। रह १८५९ त्यागे। अररहत्। स्तन १८६० गदी १८६१

---

**अथादन्ता इति**। वक्ष्यन्ते इति शेषः। अन्ते अकारो नेत्संज्ञकः, नाप्युच्चारणार्थ इति भावः। तत्र कथधातोर्णिचि अतो लोपे कथि इत्यस्मात् तिपि शपि गुणे अयादेशे कथयतीति रूपं वक्ष्यति। तत्र णिचमाश्रित्य उपधावृद्धिमाशङ्क्याह **अल्लोपस्य स्थानिवद्भावादिति**। 'अचः परस्मिन्—' इत्यनेनेति भावः। अत्रेदमवधेयम्। स्थानिनि सति निमित्तव्याघातान्न भवति तस्याभावस्य अशास्त्रीयत्वान्नातिदेशः। अन्यथा नायक इत्यत्र ईकारस्थानिकस्य ऐकारस्य आयादेशानापत्तेः। ईकारे स्थानिनि सति आयभावस्य दृष्टत्वेन तस्याप्यैकारे अतिदेशप्रसङ्गात्। 'अचः परस्मिन्—' इत्यत्र तु स्थानिनि सति यत् शास्त्रीयं कार्यं प्रसज्यते तस्य, तदभावस्य चाशास्त्रीयस्याप्यतिदेश इति भाष्ये स्पष्टम्। अतोऽत्र थकारादकारे सति प्रसक्तस्य उपधावृद्ध्यभावस्य अशास्त्रीयत्वेऽप्यति इति सिद्धम्। लुङि चङि अचकथत इत्यत्र सन्वत्त्वमाशङ्क्याह **अग्लोपित्वादिति**। सन्वत्त्वविषये जायमानोऽभ्यासदीर्घः सन्वत्त्वं नापेक्षत इति पृथगुक्तिः। एवं **वरादौ** सर्वत्र ज्ञेयम्। **गण संख्याने**। चङि अल्लोप स्थानिवत्त्वात् दीर्घसन्वद्भावयोरभावे अजगणदित्येव प्राप्ते आह **ई च गणः**। 'सन्वल्लघुनि—'इत्यतः चङ्परे इति, 'अत्र लोपः—' इत्यतः अभ्यासस्येति चानुवर्तते, तदाह **गणेरभ्यासस्येति**। 'अत्स्मृदृत्वर—' इति पूर्वसूत्रादद्ग्रहणं चकारादनुकृष्यते, तदाह **चाददिति**।

---

मिति चेत्। अत्राहुः—आदित्साहचर्यादादित एव ञिधृषेत्यस्य तत्र ग्रहणात्। न च आदितो निष्ठाया इड् दुर्लभ इति शङ्क्यम्। 'विभाषा भावादिकर्मणोः' इति सत्संभवादिति। इत्याधृषीया युजादयः। **अथादन्ता इति**। वक्ष्यमाणेषु धातुषु अन्त्यावयवोऽकारो न तूच्चारणार्थं इत्यर्थः। **स्थानिवत्त्वान्न वृद्धिरिति**। 'अचः परस्मिन्—'इति सूत्रेणेत्यर्थः। न च स्थानिनि सति यत्कार्यं तदेव स्थानिवदित्यनेनातिदिश्यते न त्वादेशप्रयुक्तं वार्यते। अन्यथा नायकः पावक इत्यादि न सिध्येदिति वृद्धिरत्र दुर्वारेति वाच्यम्, 'अचः परस्मिन्' इत्यत्र स्थानिवदित्यनुवर्त्य शब्दाविकारपक्षाश्रयेण भावाभावावुभावप्यतिदिश्येते इति सिद्धान्तात्। स्थानिनि सत्यभवन्त्या वृद्धेरादेशेऽप्यभावात्। स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यत्र तु 'न पदान्त—' इति सूत्रस्थयलोपादिग्रहणमेव लिङ्गमिति दिक्। **ई च गणः**। 'अत्स्मृदृत्वर—' इत्यत्र योऽत् स चकारेण समुच्चीयते। **स्तन गदी**। गदीत्यत्र इका निर्देशादनो लोपः। अनेकाच्त्वेनाषोपदेशत्वात्षत्वं न। तिस्तनयिषति 'स्तनि-

देवशब्दे । स्तनयति । गदयति । अजगदत् । पत १८६२ गतौ वा । वा णिजन्तः । वा अदन्त इत्येके । आद्ये पतयति, पतति । पतांचकार । अपतीत् । द्वितीये पातयति अपीपतत् । पष १८६३ अनुपसर्गात् । गतावित्येव । पषयति । स्वर १८६४ आक्षेपे । स्वरयति । रच १८६५ प्रतियत्ने । रचयति । कल १८६६ गतौ संख्याने च । चह १८६७ परिकल्कने । परिकल्कनं दम्भः शाठ्यं च । मह १८६८ पूजायाम् । महयति । महति इति शपि गतम् । सार १८६९ कृप १८७० श्रथ १८७० दौर्बल्ये । सारयति । कृपयति । श्रथयति । स्पृह १८७२ ईप्सायाम् । भाम १८७३ क्रोधे । अबभामत् । सूच १८७४ पैशुन्ये । सूचयति । अपोपदेशत्वान्न षः । असूसुचत् । खेट १८७५ भक्षणे । तृतीयान्त इत्येके । खोट इत्यन्ये । क्षोट १८७६ क्षेपे । गोम १८७७ उपलेपने । अजुगोमत् । कुमार १८७८ क्रीडायाम् । अचुकुमारत् । शील १८७९ उपधारणे । उपधारणमभ्यासः । साम १८८० सान्त्वप्रयोगे । अससामत् । साम सान्त्वने इत्यतोऽतस्य तु असीपमत् । वेल १८८१ कालोपदेशे । वेलयति । काल इति पृथग्धातु-

**स्तनगदी देवशब्द इति** । पर्जन्यगर्जने इत्यर्थः । स्तनश्च गदिश्चेति द्वन्द्वः । गदीति इका निर्देशः । गदेत्यकारान्ताद् इकि अल्लोपे गदीति निर्देशः । एवं च प्राकरणिकमदन्तत्वं न व्याहन्यते । **पत गतौ वेति** । गतावर्थे पतधातुः णिचं वा लभत इत्यर्थः, तदाह **वा णिजन्त इति** । आधृषीयत्वाभावाद् विकल्पविधिः यद्वा वाशब्दस्य अदन्तत्व एवान्वयः । णिच् तु नित्य एव, तदाह **वा अदन्त इत्येके इति** । प्रथमपक्षे तु अदन्तत्वमेव, तदाह **आद्ये पतयतीति** । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । **पतांचकारेति** । णिजभावेऽप्यदन्तत्वात् 'कास्यनेकाच्—' इत्यामिति भावः । चङि अपपतत् । अग्लोपित्वान्न दीर्घसन्वत्त्वे । **द्वितीये पातयतीति** । तकारादकारस्य उच्चारणार्थत्वादुपधावृद्धिरिति भावः । **अपीपतदिति** । अग्लोपित्वाभावाद्दीर्घसन्वत्त्वे इति भावः । **कृपयतीति** । अदन्तस्य त्वस्य धात्वन्तरत्वात् । 'कृपो रो लः' इति न भवति । **स्पृह ईप्सायाम्** । आप्तुमिच्छा ईप्सा । **अबभामदिति** । चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः । **सूच पैशुन्ये** । **अपोपदेशत्वादिति** । अनेकाच्त्वादिति भावः । **खेट भक्षणे** । **तृतीयान्त इति** । टवर्गतृतीयान्त इत्यर्थः । **साम सान्त्वप्रयोगे** । सान्त्वप्रयोगः अकटुभाषणम् । **अससामदिति** । अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः । ननु साम सान्त्वने इति कथादेः प्राक् चुरादौ पाठो व्यर्थः अनेनैव सिद्धेरित्यत आह **साम सान्त्वन इत्यतीतस्य तु असीपमदिति** । पूर्वपठिते सामधातौ मकारादकारस्य उच्चारणार्थतया उपधाह्रस्वः दीर्घसन्वत्त्वे चेत्यर्थः । यद्यपि साम सान्त्वप्रयोगे इत्येव प्राक् चुरादौ पठितम्,

हृषिपुषि—' इति णेरिष्णुचि 'अयामन्ता—' इत्ययादेशः । 'स्तनयित्नुर्बलाहकः' । **पत गतौ वा** । गणसूत्रमिदम् । **कृपयतीति** । 'कृपो रो लः' इति न प्रवर्तते । तत्र कृपू सामर्थ्य इत्यस्य ग्रहणात्, कृपप्रकृतिकणिजन्तस्य तु धात्वन्तरत्वात् । स्पृह ।

रित्येके । कालयति । पल्पूल १८८२ लवनपवनयोः । वात १८८३ सुखसेवनयोः । गतिसुखसेवनेषु इत्येके । वातयति । अववातत् । गवेष १८८३ मार्गणे । अजगवेषत् । वास १८८६ उपसेवायाम् । निवास १८८६ आच्छादने । भाज १८८७ पृथक्कर्मणि । सभाज १८८८ प्रीतिदर्शनयोः । प्रीतिसेवनयोरित्यन्ये । सभाजयति । ऊन १८८९ परिहाणे । ऊनयति । 'ओः पुयण्जि–' ( सू० २४७७ ) इति सूत्रे पययोरिति वक्तव्ये वर्गप्रत्याहारजकारग्रहो लिङ्गं णिचि अच आदेशो

---

तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति भावः । **गवेष मार्गणे** । मार्गणम् अन्वेषणम् । चङि अल्लोपस्य स्थानिवत्त्वान्नोपधाह्रस्वः, तदाह **अजगवेषदिति** । **निवास आच्छादने** । अनिनिवासत् । **ऊन परिहाणे** । परिहाणं न्यूनीभावः । **ऊनयतीति** । णावतो लोप इति भावः । ननु लुङि चङि ऊन इ अ त् इति णिलोपे 'चङि' इत्यजादेर्द्वितीयस्य नशब्दस्य द्वित्वे अतो लोपे अग्लोपित्वेन सन्वत्त्वाभावादभ्यासे इत्त्वदीर्घयोरभावे आटो वृद्धिः औननदिति रूपं वक्ष्यति । तदनुपपन्नम्, द्वित्वात्प्रागेव परत्वादतो लोपे कृते निशब्दस्य द्वित्वे औनिननदित्येवमभ्यासे इकारश्रवणप्रसङ्गात् । न च द्वित्वे कार्ये अतो लोपस्य 'द्विर्वचनेऽचि' इति निषेधः शङ्क्यः, अल्लोपनिमित्तस्य णिचो द्वित्वनिमित्तत्वाभावाद् इत्यत आह **ओःपुयण्जीत्यादि** । 'ओः पुयण्ज्यपरे' इति सूत्रे ओः पययोरपरयोरित्येव वक्तव्ये पु इति पवर्गस्य यणिति प्रत्याहारस्य जकारस्य च ग्रहणं लिङ्गमित्यन्वयः । कुत्र लिङ्गमित्यत आह **णिचीत्यादि** । द्वित्वे कार्ये णिज्निमित्तकः

---

आप्तुमिच्छा ईप्सा । **अवभामदिति** । अल्लोपस्य स्थानिवत्त्वात् 'णौ चङि–' इत्युपधाह्रस्वो न । **सूच** । पिशुनो दुर्जनस्तस्य कर्म पैशुन्यम् । **अषोपदेशत्वादिति** । अनेकाच्त्वादिति भावः । **सामसान्त्वन इत्यतोनस्य त्विति** । अयं तु धातुरितः प्राङ् मूलपुस्तके न कुत्रापि दृष्टः पुस्तकान्तरेषु मृग्यः । केचित्तु साम सान्त्वने इत्यस्य क्वाप्यपठितत्वेऽपि षान्त्व सामप्रयोगे इति प्राक्पठितमेव । तत्र च षान्त्व सामेति धातुद्वयं प्रयोगे वर्तते । प्रयोगश्च सान्त्वप्रयोगपरः । स च सान्त्वनमेवेत्येवं ग्रन्थकाराशयं वर्णयित्वा स्थितस्य गतिं समर्थयन्ते । **गवेष** । मार्गणमन्वेषणम् । **ऊन परिहाणे** । अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपेन 'अजादेर्द्वितीयस्य' इति णिचा सह द्वित्वे औनिननदित्यनिष्टं प्रसज्येत, किं तु औननदित्येवं रूपमिष्टम् । तच्च नशब्दस्य द्वित्वं विना न संभवति । न च 'द्विर्वचनेऽचि' इति सूत्रेण द्वित्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावान्निषेधाद्वा नशब्दस्य द्वित्वं सिध्यतीति वाच्यम्, णिचो द्वित्वनिमित्तत्वाभावादत आह **ओः पुयण्जीत्यादि** । संपूर्णसूत्रं लिङ्गमिति केषांचिद् भ्रमं निवर्तयितुमाह **पययोरिति** । अयं भावः—'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्ध–' इति सूत्राभ्यां पूङ्यौतिभ्यां परस्य सन इडागमे कृते 'द्विर्वचनेऽचि' इति स्थानिवद्भावादादेशनिषेधाद्वा उवर्णान्तस्यैव द्वित्वमिति पुपविषते युयविषतीत्यनिष्टं प्रसज्येत । ततश्चाभ्यासोवर्णस्येत्वार्थं पययोरित्यपेक्षितम् । अन्यथा पिपविषते यियविषतीति न सिध्येदिति । **वर्गप्रत्याहारेति** । पुयण्जीति वर्गादिग्रहण-

१ स्याद् द्वित्वे इति। यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां

प्रच आदेशो न स्यादित्यत्र लिङ्गमिति पूर्वेणान्वयः। तथाहि 'ओः पुयण्ज्यपरे' इति सूत्रम्। प्रनि परे यदङ्गं तदवयवाभ्यासोवर्णस्य इकारः स्याद् अवर्णपरकेषु पवर्गयण्जकारेषु परत इति तदर्थः। पूङ् पिपावयिषति, भू बिभावयिषति, यु यियावयिषति, रु रिरावयिषति, लूञ् लिलावयिषति, जु जिजावयिषति इत्युदाहरणानि। अत्र द्वित्वं प्रत्ययनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद् वृद्ध्यावादेशयोः कृतयोः अभ्यासेऽवाकारस्य ह्रस्वे सति 'सन्यतः' इत्येव इत्त्वसिद्धेः पवर्गयणप्रत्याहारजकारग्रहणं व्यर्थम्। पकारयकारग्रहणं तु न व्यर्थम्। पिपावयिषति यियावयिषतीत्यत्र उक्तरीत्या 'सन्यतः' इति इत्वसिद्धावपि पिपविषते यियविषतीत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात् सनि अभ्यासे इत्त्वार्थं तदावश्यकत्वात्। तत्र हि 'इको झल्' इति सनः कित्त्वात् 'श्र्युकः किति' इति प्राप्तमिण्निषेधं बाधित्वा 'स्मिपूङ्रञ्ज्वशां सनि' इति 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति च सूत्राभ्यामिटि कृते इडादेः सनो द्वित्वनिमित्तत्वेन इटोऽपि द्वित्वनिमित्ततया 'द्विर्वचनेऽचि' इति गुणावादेशयोर्निषेधे सति पू यु इत्यनयोर्द्वित्वे अभ्यासे अकाराभावेन 'सन्यतः' इत्यस्याप्रवृत्त्या तत्र इत्त्वार्थं पययोरित्यावश्यकम्। वर्गप्रत्याहारजकारग्रहणं तु 'द्वित्वे कार्ये णावच आदेशो न' इत्यनाश्रयणे व्यर्थमेव। तदाश्रयणे तु बिभावयिषतीत्यादिषु णिचि लुप्ते सति 'चङि' इति द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वे अभ्यासे अकाराभावेन 'सन्यतः' इत्यस्याप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणमर्थवत्। अतः द्वित्वे कार्ये णावच आदेशो नेति विज्ञायत इत्यर्थः। ननु 'कॄत संशब्दने' अस्माद् णौ 'उपधायाश्च' इति ॠत इत्वे रपरत्वे कितं इत्यस्मात् लुङि चङि णिलोपे द्वित्वे हलादिशेषे कस्य चुत्वे उत्तरखण्डे इकारस्य 'उपधायां च' इति दीर्घे अचिकीर्तदिति रूपमिष्यते। तन्न युज्यते, द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया इत्त्वात्प्रागेव कॄत् इत्यस्य द्वित्वे, उरदत्वे, रपरत्वे, हलादिशेषे, कस्य चुत्वे, उत्तरखण्डे, 'ॠत इत्त्वे, रपरत्वे, उपधादीर्घे, अचकीर्तदित्यापत्तेरित्यत आह यत्र द्विरुक्तावित्यादि। यत्र धातौ चङि द्विर्वचने कृते अभ्यासोत्तरखण्डस्य आद्योऽच्

फलं तु अबोभवत् अमीमवत् अरीरवत् अलीलवत् अजोजवत् बिभावयिषति मिमावयिषति रिरावयिषति लिलावयिषतीत्यादिरूपसिद्धिरिति वाच्यम्। तद् दुरुपपादम्। णिचि परत्वादन्तरङ्गत्वाच्च वृद्ध्यादौ कृते द्वित्वे सत्यभ्यासे उवर्णस्य दुर्लभत्वादकारस्य 'सन्यतः' इतीत्वेन रूपसिद्धेश्च। ततो वर्गादिग्रहणं व्यर्थं सदुक्तार्थे ज्ञापकमिति भावः। ज्ञापनफलं तु यत्र 'ओः पुयण्जि–' इत्यस्याप्राप्तिस्तत्र बोध्यम्। तद्यथा—चुक्षावयिषति। चङि अचुक्षवत्। उडुरिवाचरति उडवति। 'सर्वप्रातिपदिकेभ्यः–' इत्याचारे क्विप् तदन्ताद्धातोर्णौ सन्। उडुडावयिषति। चङि औड्डवत्। तु इति सौत्रो धातुस्ततो णौ सन्। तुतावयिषति। चङि अतूतवत्। नुनावयिषति। अनूनवत्। पुस्फारयिषति। अपुस्फुरत्। 'चिस्फुरोर्णौ' इति वा आत्वम्। अपुस्फरदित्यादिष्वभ्यासे उकारश्रवण

परिनिष्ठिते रूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात्। तेन अचिकीर्तत् इति सिद्धम्। प्रकृते तु नशब्दस्य द्वित्वम्, तत उत्तर-

---

अवर्णो लभ्यते तत्रैव द्वित्वे कार्ये णावच आदेशो नेत्ययं निषेध इत्यन्वयः। यद्यपि धातोरवयवस्य एकाचो द्वित्वे कृते अभ्यासोत्तरखण्डे द्वितीयस्याचोऽभावादाद्योऽजिति व्यर्थमेव। तथापि स्पष्टार्थं तदित्याहुः। नन्वभ्यासोत्तरखण्डस्याद्योऽजवर्णो लभ्यते इत्यत्र किमवर्णो द्वित्वप्रवृत्तिवेलायां विवक्षित उत परिनिष्ठिते रूपे विवक्षितः ? नाद्यः, क्षुधातोर्ण्यन्तात् सनि चुक्षावयिषतीत्यत्र क्षु इत्यस्य द्वित्वे कृते अभ्यासोत्तरखण्डे प्रक्रियादशायामवर्णाभावेन वृद्ध्यावादेशयोनिषेधाप्रवृत्त्या द्वित्वाद् प्रागेव परत्वाद् वृद्ध्यावादेशयोः क्षाव् इत्यस्य द्वित्वे चिक्षावयिषतीत्यापत्तेः। न द्वितीयः, ऊन इ अ त इति स्थिते सति न इत्यस्य द्वित्वे अभ्यासोत्तरखण्डे अल्लोपे सत्यवर्णाभावेन णौ अल्लोपस्य निषेधाप्रवृत्त्या द्वित्वात् प्रागेव परत्वादतो लोपे सति नि इत्यस्य द्वित्वे औनिनदित्यापत्तेरित्यत आह **प्रक्रियायां परिनिष्ठिते रूपे वेति**। न त्वमुकत्रैवेत्याग्रह इति भावः। सजातीये पुयण्जाम् अभ्यासोत्तरखण्डे अवर्णात्परत्वनियमादिति भावः। **सिद्धमिति**। प्रक्रियायां परिनिष्ठिते वा उत्तरखण्डे अवर्णाभावाद्‌ऋत इत्त्वस्य न निषेध इति भावः। एवं च चुक्षावयिषति इत्यत्र क्षु इत्यस्य द्वित्वे प्रक्रियादशायामभ्यासोत्तरखण्डे अवर्णाभावेऽपि परिनिष्ठिते रूपे तत्सत्त्वाद् णौ गुणावादेशयोर्भवत्येव द्वित्वे कार्ये निषेधः। औननदित्यत्रापि णौ भवत्येवाल्लोपस्य निषेध इत्याह **प्रकृते त्विति**। औननदित्यत्रेत्यर्थः। **नशब्दस्येति**। अल्लोपात्प्रागेव नशब्दस्य द्वित्वाश्रयणे प्रक्रियादशायामुत्तरखण्डे अवर्णलाभादल्लोपस्य निषेधे सति नशब्दस्यैव द्वित्वं न तु निशब्दस्येति भावः।

---

भवति ज्ञापनात्, अन्यथा चिक्षावयिषतीत्यादि प्रसज्येत। तदेतत्सकलमभिप्रेत्य वार्तिककृतोक्तम् 'ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य' इति। स्थानिवद्भावः प्रतिषेधस्याप्युपलक्षणम्। **अच आदेशो न स्यादिति**। प्रतिषेधपक्षो मुख्य इत्यभिप्रेत्येदमुक्तम्। प्रतिषेधः स्थानिवद्भावस्याप्युपलक्षणमिति बोध्यम्। नन्वेवं कृ‌त संशब्दन इति धातोर्णौ चङि इरादेशात्प्रागेव कृ‌त इत्यस्य द्वित्वे उरदत्वे च अचकीर्तदिति स्यान्न तु अचिकीर्तदित्यत आह **यत्र द्विरुक्ताविति**। **आद्योजिति**। चङ्सहितस्योत्तरखण्डत्वमभ्युपेत्येदमुक्तम्। अन्ये तु आद्यग्रहणं स्पष्टप्रतिपत्त्यर्थं धातोरवयवस्यैकाचो द्वित्वे सत्यभ्यासोत्तरखण्डे अज्द्वयासंभवादित्याहुः औजढत् औननदित्यादौ परिनिष्ठिते अवर्णस्यालाभादाह **प्रक्रियायामिति**। चुक्षावयिषतीत्यादौ प्रक्रियायामवर्णो न लभ्यते इत्याह **परिनिष्ठिते रूपे वेति** वाशब्दोऽनास्थायाम्, क्वचिदवर्णपरत्वं विवक्षितं न तु अमुकत्रैवेत्याग्रह इति भावः। **सजातीयापेक्षत्वादिति**। पुयण्जीत्यभ्यासोत्तरखण्डे अवर्णपरा भवन्ति। अतस्तथैव ज्ञापकमित्यर्थः। अतएव भाष्यकृता पवर्गादेरन्यस्मिन्नपि हलि अवर्णपरे एव स्थानिवत्त्वमिति अचिकीर्तदित्यादौ नातिव्याप्तिरिति सिद्धान्तितम्। ननु 'ओः पुयण्जि—' इति सूत्रे णिचि इति नास्ति, तथा च णिच्यच आदेशो न स्यादित्यर्थे

ण्डेल्लोपः, औननत् । मा भवानूननत् । ध्वन १८९० शब्दे । अदध्वनत् ।

तत इति । नशब्दस्य द्वित्वानन्तरमुत्तरखण्डे अल्लोप इति भावः । अत्र नशब्द-द्वित्वार्थमेव ऊनधातोरदन्तत्वं स्थितम् । फलान्तरं सूचयन्नाह मा भवान् ऊन-

कथमिदं ज्ञापकं भवेत् । न च सामान्यतो द्वित्वे कार्ये अच आदेशो न स्यादित्येव ज्ञाप्यतामिति वाच्यम्, दिध्वनीयिषति निनवनीयिषतीत्यादावभ्यासे उकारश्रवणप्रसङ्गादिति चेत् । अत्राहुः—येन नाव्यवधानमित्येकेन प्रत्ययेन द्वित्वनिमित्तप्रत्ययस्य व्यवधानमाश्रीयते । तच्च णेरेव संभवतीति णिज्विषयकमेव ज्ञापकम्, दिध्वनीयिषतीत्यत्र तु ल्युटा क्यचा व्यवधानादनेकव्यवधानमिति न तद्विषयकं ज्ञापनमिति । अस्मिन्मते आचारक्विबन्ताद्ध्वनशब्दात्सनि दुध्वनिषतीति स्यात्, तच्च नेष्यते, णौ स्यानिवद्भावस्य ज्ञापकमिति वार्तिकोक्तेः । स्यानिवत्त्वेन प्रतिषेधेन वा णावेवाभ्यासे उकारेण भवितव्यम् । अतो वार्तिककारवचनादेव णौ स्यानिवदिति स्वीकर्तव्यम् । तथा च न पूर्वोदाहरणे दोष इति दिक् । फलितमाह प्रकृते त्विति । औननदिति । 'नोननयति ध्वनयति—' इति चङ्निषेधस्त्विह न तत्र छन्दसीत्यनुवृत्त्या 'मा त्वावतो जरितुः काममूनयीः' इत्यादिवेदे एव तन्निषेधात् । यद्यपि परिनिष्ठित एवावर्णपरत्वमित्याशयेन उवर्णादेश एव स्यानिवत्स्यान्नान्य इति वदतां बोपदेवादीनां मते औनिनदित्येव भाव्यम्, अवर्णादेशस्य स्यानिवत्त्वे तु परिनिष्ठितरूपे अवर्णपरत्वालाभात्तथापि अचिकीर्तदित्यादौ स्यानिवत्त्वमाशङ्क्य उत्तरभागे अवर्णाभावादिति भाष्यकारोक्तपरिहारपर्यालोचनया उवर्णादेश एव स्यानिवदिति नियमो नास्तीत्यौननदिति रूपं निर्बाधमेव । किं च उवर्णादेश एवेति नियमे 'लोपः पिबतेरीच्चाभ्यासस्य' इति सूत्रे अपीप्यदित्यत्र पिबतेर्णौ 'शाच्छासा—' इत्यादिना युकि चङि उपधालोपे तस्य स्यानिवत्त्वात्पायशब्दस्य द्वित्वमिति वृत्तिग्रन्थो विरुध्यते । अपि च 'शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तया' इति वैयाघ्रपद्यवार्तिकस्य औजढदिति प्रयोगोऽपि विरुध्येत । एतद्धि पूर्वत्रासिद्धमित्यस्य प्रयोजनकथनवार्तिकम् । तद्यथा—शुष्किकेत्यत्र तु 'उदीचामातः—' इतीत्वविकल्पो न, 'शुषः कः' इति कत्वस्यासिद्धत्वेन यक्पूर्वत्वाभावात् । शुष्कजङ्घेत्यत्र कत्वस्यासिद्धत्वादेव 'न कोपधायाः' इति पुंवद्भावनिषेधो न । क्षामिमानित्यत्र तु 'मादुपधाया—' इति वत्वं न । 'क्षायो मः' इति मत्वस्यासिद्धत्वात् । वहेः क्तान्ताण्णिचि चङि औजढदित्यत्र ढत्वस्यासिद्धत्वाण्णौ कृतस्य टिलोपस्य स्यानिवत्त्वाच्च ह्तशब्दस्य द्वित्वं 'कुहोश्चुः' 'अभ्यासे चर्च' । सन्वद्वित्वं तु अनग्लोपीति प्रतिषेधान्न भवति । एवं काशिकायामपि 'पूर्वत्रासिद्धम्' इति सूत्रे औजढदित्युदाहृत्य ऊढिमाख्यदौजिढदित्येतत्तु क्तिन्नन्तस्य ऊढिशब्दस्य भवतीत्युक्तम्, तदपि विरुध्येत, उवर्णादेश एव स्यानिवदिति नियमे णौ कृतस्य टिलोपस्यात्र स्यानिवत्त्वाभावेन ह्तिशब्दस्य वा द्वित्वासंभवात् । एवं चाङ्कधातोर्णिच्यल्लोपे चङि स्यानिवत्त्वात्कशब्दस्य द्वित्वे आञ्चकदिति रूपमेव सर्वसंमतं न त्वाञ्चिकदिति बोपदेवोक्तमिति बोध्यम् । नन्वचिकीर्तदित्यादौ स्यानिवत्त्वमाशङ्क्योत्तरभाग अवर्णाभावादिति वदन्भाष्यकारो न बोपदेवग्रन्थस्य प्रतिकूलः उत्तरभागे परिनिष्ठित-

कूट १८११ परितापे । परिदाहे इत्यन्ये । संकेत १८९२ ग्राम १८९३ कुण १८९४ गुण १८९५ चामन्त्रणे । चात्कूटोऽपि । कूटयति । संकेतयति । ग्रामयति । कुणयति । गुणयति । पाठान्तरम्—केत श्रावणे निमन्त्रणे च । केतयति । निकेतयति । कुण गुण चामन्त्रणे चकारात्केतेति । कूण १८९६ संकोचने इति स्तेन १८९७ चौर्ये । अतिस्तेनत् ।

अा गर्वादात्मनेपदिनः । पद १८९८ गतौ । पदयते । अपपदत । गृह १८९९ ग्रहणे । गृहयते । मृग १९०० अन्वेषणे । मृगयते । मृग्यति । इति कण्ड्वादिः । कुह १९०१ विस्मापने । शूर १९०२ वीर १९०३ विक्रान्तौ । स्थूल १९०४ परिबृंहणे स्थूलयते । अतुस्थूलत । अर्थ १९०५ उपयाच्ञायाम् । अर्थयते । आर्तथत । सत्र १९०६ सन्तानक्रियायाम् । अससत्रत । अनेकाच्त्वान्न षोपदेशः । सिसत्रयिषते । गर्व १९०८ माने । गर्वयते । अदन्त-

---

नदिति । अग्लोपित्वान्नोपधाह्रस्व इति भावः । पाठान्तरमिति । केत श्रावणे इत्यादि ज्ञेयमित्यर्थः । चकारात्केतेति । समुच्चीयते इति शेषः । संकोचने इतीति । इतिशब्दः पाठान्तरसमाप्तौ । स्तेन चौर्ये । अनेकाच्त्वान्न षोपदशोऽयमिति मत्वाह अतिस्तेनदिति ।

गृह ग्रहणे । ऋदुपधोऽयम । गृहयते इति । अल्लोपस्य स्थानिवत्त्वान्न गुण इति भावः । लुङि अजगृहत । अग्लोपित्वान्न सन्वत्त्वम् । मृग अन्वेषणे । मृगयते इति । इहाप्यल्लोपस्य स्थानिवत्त्वान्न गुणः । 'मार्ग अन्वेषणे' इत्याघृषीयस्य तु मार्गयति मार्गति इति च गतम् । अर्थ उपायाच्ञायाम् । अर्थयते इति । अर्थ इ इति स्थिते अतो लोपः । न तु ' अचो ञ्णिति' इति वृद्धिः, वृद्धेर्लोपो बलीयानिति न्यायात् । 'अर्थवेदयोः—' इत्यापुक्तु न, तत्र प्रातिपदिकस्य ग्रहणात् । गर्व माने । अभिमाने इत्यर्थः । ननु कथादावस्य पाठो व्यर्थः, अदन्तत्वे फलाभावात् । न च सन्वत्त्वनिवृत्तये अग्लोपित्वाय अदन्तत्वमिति शङ्क्यम्, लघुपरकत्वाभावादेव तदप्रसक्तेः । नाप्यल्लोपस्य स्थानिवद्भावाद् उपधावृद्धिनिवृत्त्यर्थमदन्तत्वमिति शङ्क्यम्, गकारादकारस्यानुपधात्वादेव तदप्रसक्तेरित्यत आह

---

रूपे अवर्णपरत्वमुवर्णादेशस्यैव संभवति नान्यस्येत्याशयेनैव भाष्यकारेण तथोक्तमिति वक्तुं शक्यत्वादिति चेत् । मैवम् । तथा हि सति यत्र 'ओः पुयण्जि—' इत्यस्याप्राप्तिस्तत्राप्युवर्णादेश एव स्थानिवद् ज्ञापकस्य सजातीयापेक्षत्वादित्येवमेव भाष्यकारो वदेत्, ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगादिति दिक् । सङ्केत । चत्वारोऽत्र धातवः । पाठान्तरमिति । संकोचन इत्येतत्पर्यन्तम् । अनेकाच्त्वेनाषोपदेशत्वात्षत्वं नेति ध्वनयति अतिस्तेनदिति । गृहयते इति । अल्लोपस्य स्थानिवत्त्वान्न गुणः । लुङि अजगृहत् । अग्लोपान्न सन्वद्भावः । मृगयते इति । मार्गयति मार्गतीति तु मार्ग अन्वेषण इत्याघृषीयस्य । अर्थ । अर्थयते इति । 'वृद्धेर्लोपो बलीयान्, इत्यल्लोपान्न वृद्धिः । वोपदेवस्तु वृद्धौ कृतायां पुकि चार्थापयते इति रूपमाह तद्भ्रमसात् । न च 'अर्थवेदसत्यानाम्—' इत्यापुक् स्यादेवेति वाच्यम्,

त्वसामर्थ्याण्णिज्विकल्पः। धातोरन्त उदात्तः, लिटि आम् च फलम्। एवमग्रेऽपि। इत्यागर्वीयाः।

सूत्र १९०८ वेष्टने। सूत्रयति। असुसूत्रत्। मूत्र १९०९ प्रस्रवणे। मूत्रयति, मूत्रति। रूक्ष १९१० पारुष्ये। पार १९११ तीर १९१२ कर्मसमाप्तौ। अपपारत्। अतितीरत्। पुट १९१३ संसर्गे। पुटयति। घेक १९१४ दर्शने इत्येके। अदिघेकत्। कत्र १९१५ शैथिल्ये। कत्रयति, कत्रति। कर्त इत्यप्येके। कर्तयति, कर्तति। 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (ग०सू०२०३)। प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोप-

---

अदन्तत्वसामर्थ्याण्णिज्विकल्प इति। ननु गर्वते इत्यत्र णिजभावेऽप्यदन्तत्वं निष्फलमिति कथं तस्य विकल्पज्ञापकतेत्यत आह धातोरन्त उदात्त इति। तेन गर्वते इत्यत्र वकारादकार उदात्तः फलति। अदन्तत्वाभावे तु गकारादकार उदात्तः स्यादिति भावः। लिट्याम् चेति। गर्वांचक्रे इत्यत्र 'कास्यनेकाचः—' इत्याम्प्रत्ययोऽप्यदन्तत्वस्य फलमित्यर्थः। अन्यथा अनेकाच्त्वाभावादाम् न स्यादिति भावः। एवमग्रेऽपीति। 'मूत्र प्रस्रवणे' इत्यादावित्यर्थः। इत्यागर्वीयाः।

सूत्र वेष्टने। अनेकाच्त्वादषोपदेशत्वार्थमस्य अदन्तत्वमिति न ततोऽस्य णिज्विकल्पः। कत्र शैथिल्ये। कर्त इत्यपीति। अदन्तत्वसामर्थ्यादस्य णिज्विकल्प इति मत्वाह कर्तयति, कर्ततीति। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। चुरादिगणसूत्रमिदम्। इष्ठवदिति सप्तम्यन्ताद्वतिः। तेन भुवमाचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च' इति यिडागमो न भवति, तदाह। इष्ठे यथेति। अत्र धात्वर्थे इत्यनेन करणम् आख्यानं दर्शनं वचनं श्रवणमित्यादि गृह्यते। पुंवद्भावेति। अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याढे—' इति पुंवत्त्वम्। द्रढिष्ठ

---

तत्र प्रातिपदिकस्य ग्रहणात्। अदन्तत्वसामर्थ्यादिति। कथादिपूपधावृद्धिदीर्घसन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वस्य गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादन्तत्वं सार्थकम्। इह त्वदन्तत्वे प्रागुक्तफलाभावाण्णिचः पाक्षिकत्वं ज्ञापयतीति भावः। ननु अदन्तत्वसार्थकत्वाय वाल्लोप इति प्राचोक्तमेवाभ्युपगम्यतामिति चेत्। अत्राहुः—चिन्तयतेरिदित्त्वं सामान्यापेक्षं ज्ञापकमिति मते इह अदन्तत्वस्य फलं स्पष्टमेव। विशेषापेक्षं ज्ञापकमिति मते तु तत्र तत्र आकार इकार ईकार उकार ऊकारश्चेत्यनुबन्धा यथा ज्ञापकतया स्वीकृताः तथा अदन्ततापि णिज्विकल्पमेव ज्ञापयतु, क्लृप्तेनैव णिज्विकल्पेन कृतार्थत्वे अपूर्वस्य लोपवाक्यस्य कल्पनाया अन्याय्यत्वात्। एवं हि सति मतद्वयेप्येकरूपमेव फलं लभ्यत इति। असुसूत्रदिति। अनेकाच्त्वान्न षत्वम्। प्रातिपदिकादिति। यदि सुबन्ताण्णिच् स्यात्तदा स्रजयतीत्यादौ कुत्वं स्यादिति भाव इति केचित्। तन्न, इष्ठवद्भावेन भत्वे कुत्वस्याप्रसक्तेः। अत्र बहुलं णिच् स्यात्। स च णिच् इष्ठवद्भवतीत्यन्वयात्पक्षे वाक्यमपि भवतीत्याह पटुमाचष्ट इति। धात्वर्थं इत्यनेन करणाख्यानादिर्गृह्यत इति भावः। ननु

विन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः, अपीपटत्। 'णौ चङि—' ( सू० २३१४ )

---

इत्यत्र 'र ऋतो हलादेर्लघोः' इति रभावः। अतिशयेन साधुः साधिष्ठ इत्यत्र टिलोपः। अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुक्' इति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यत्र मतुपो लुक्। अतिशयेन स्थूलः स्थविष्ठ इत्यादौ 'स्थूलदूरयुव–' इत्यादिना यणादिलोपः पूर्वस्य च गुणः। अतिशयेन प्रियः प्रेष्ठ इत्यादौ 'प्रियस्थिर–' इत्यादिना प्रस्थाद्यादेशः। अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र भत्वान्न कुत्वम्। एते इष्ठे इव णावपि परतः स्युरित्यर्थः। **पटयतीति**। पटुमाचष्टे इत्याद्यर्थे णिच्। इष्ठवत्त्वात् 'टेः' इति टिलोप इति भावः। ननु उकारस्य टेर्लोपे सति अग्लोपित्वात् सन्वत्त्वं न स्यादित्यत आह **परत्वाद् वृद्धौ सत्यां टिलोप इति**। 'अचो ञ्णिति' इति उकारस्य वृद्धौ कृतायामौकारस्य टेर्लोपः। अकृतायां तु वृद्धौ उकारस्य टेर्लोपः। ततश्च, 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः' इति न्यायेन टिलोपः अनित्यः। वृद्धिस्तु टिलोपे कृते सति नैव भवतीति साप्यनित्या। एवं च वृद्धिटिलोपयोरुभयोर्मध्ये परत्वाद् उकारस्य वृद्धिः औकारः। तस्यावादेशात्प्रागेव परत्वाद् वार्णादाङ्गस्य बलीयस्त्वाच्च औकारस्य टेर्लोप इत्यर्थः। एवं च अनग्लोपित्वात् सन्वत्त्वमिति मत्वाह **अपीपटदिति**। एतच्च 'मुण्डमिश्र—' इति सूत्रे

---

बहून्याचष्टे भावयतीत्यत्र 'इष्ठस्य यिट् च' इति णिचोऽपि यिट् स्यात्। अत्राहुः—टेरिति सूत्रे 'णाविष्ठवत्प्रातिपदिकस्य' इति वार्तिके प्रातिपदिकग्रहणं प्रत्ययकार्याणामतिदेशो माभूदित्येवमर्थम्। तेनात्र णिचो यिण्न भवति, तदभावे भूभावेनापि न भवितव्यं संनियोगशिष्टत्वात् किं तु बहयतीत्येव भवितव्यमिति मतान्तरम्। एतच्च तत्रैव सूत्रे कैयटे स्पष्टमिति। अन्ये त्वाहुः—इष्ठवदिति हि सप्तम्यन्तात्प्रतिर्णावित्युपमेये सप्तमीदर्शनात्तेन इष्ठनि परे पूर्वस्य यत्कार्यं तदतिदिश्यते न त्विष्ठनोऽपीति। **पुंवद्भावेति**। अतिशयेन पट्वी पटिष्ठेत्यत्र 'भस्याढे तद्धिते' इति पुंवद्भावः। क्रशिष्ठः द्रढिष्ठः इत्यत्र 'र ऋतो हलादेः—' इति रभावः। साधिष्ठ इत्यादौ टिलोपः अतिशयेन स्रग्वी स्रजिष्ठ इत्यत्र 'विन्मतोर्लुक्' इति विनो लुक्। अतिशयेन गोमान् गविष्ठ इत्यादौ मतुपो लुक्। स्थविष्ठ इत्यादौ 'स्थूलदूर—' इत्यादिना यणादिलोपः। प्रेष्ठ इत्यादौ 'प्रियस्थिर—' इत्यादिना प्रस्थाद्यादेशः। **तद्वण्णावपीति**। पुंवद्भावस्योदाहरणमेणीमाचष्टे एतयति। टिलोपेनैव सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायां पुंवद्भावग्रहणं दरदमाचष्टे दारदयतीत्यादिसिद्ध्यर्थमिति बोध्यम्। द्रढयतीत्यादौ रभावः। स्रग्विणमाचष्टे स्रजयतीत्यत्र विनो लुक्। गोमन्तमाचष्टे गवयतीत्यत्र मतुपो लुक्। अङ्गवृत्तपरिभाषया वृद्धिरत्र न भवति। प्रियमाचष्टे प्रापयति। स्थिरमाचष्टे स्थापयतीत्यादौ तु वृद्धिर्भवत्येव। 'द्वयोः' इति निर्देशने तस्याः परिभाषायाः अनित्यत्वज्ञापनादिति दिक्। **परत्वाद् वृद्धाविति** लोपः शब्दान्तरप्राप्त्याऽनित्यः। वृद्धिरप्यनित्या। उभयोरनित्ययोः परत्वाद् वृद्धिः। तस्यां कृतायामौकारस्यावादेशात्प्रागेव परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाच्च लोप इत्यर्थः। एवं चानग्लोपित्वाद्दीर्घसन्वद्भावौ

इत्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति स्थितम्, अपपटत्। 'तत्करोति तदाचष्टे' (ग० सू० २०४)। पूर्वस्यैव प्रपञ्चः। करोत्याचष्टे इति वाक्यमात्रं णिजर्थः। लडर्थस्त्वविवक्षितः। 'तेनातिक्रामति' (ग० सू० २०५)। अश्वेनाति-

---

भाष्यकैयटयोः स्पष्टम्। **स्थितमिति।** तथा च वृद्धेः प्रागुकारस्य लोपे अग्लोपित्वान्न सन्वत्त्वमित्यर्थः। भाष्ये उभयथा दर्शनाद्रूपद्वयमपि साध्विति बोध्यम्। शब्देन्दुशेखरे तु 'वृद्धेः लोपो बलीयान्' इति 'णौ चङि—' इति सूत्रभाष्यमेव प्रमाणम्, 'मुण्डमिश्र—' इति सूत्रभाष्यं त्वेकदेश्युक्तिरिति प्रपञ्चितम्। अत्र पुंवद्भावादिकमुदाह्रियते। एनीमाचष्टे एतयति, पुंवद्भावाद् ङीब्नकारयोर्निवृत्तिः। दृढमाचष्टे द्रढयति, 'र ऋतः—' इति रभावः। स्रग्विणमाचष्टे स्रजयति, 'विन्मतोः—' इति विना लुक्। गोमन्तमाचष्टे गवयति, मतुपो लुक्, अङ्गवृत्तपरिभाषया न वृद्धिः स्थूलमाचष्टे स्थवयति इत्यादिषु यणादिलोपः। प्रियमाचष्टे प्रापयति, स्थिरमाचष्टे स्थापयति इत्यादिषु प्रस्थस्फाद्यादेशाः। अत्र वृद्धिर्भवत्येव, द्वयोरिति निर्देशेन अङ्गवृत्तपरिभाषाया अनित्यत्वाश्रयणात्। स्रग्विणमाचष्टे स्रजयति, सुबन्ताद् विहितस्य विनो लुकि अन्तर्वर्तिविभक्त्या पदत्वात् प्राप्तं कुत्वं भत्वान्न भवति। **तत्करोति तदाचष्टे।** इदमपि चुरादिगणसूत्रम्। प्रातिपदिकादित्यनुवर्तते। तत्करोति तदाचष्टे इति चार्थे प्रातिपदिकाण्णिच् स्यादित्यर्थः। आचारक्विबिव प्रातिपदिकादेवेदम्। ननु 'प्रातिपदिकाद्धात्वर्थे—' इत्येव सिद्धे किमर्थमिदमित्यत आह **पूर्वस्यैव प्रपञ्च इति।** ननु करोति आचष्टे इति वर्तमाननिर्देशादकरोदित्याद्यर्थेषु न स्यादित्यत आह **करोत्याचष्टे इत्यादि।** **लडर्थ इति।** उपलक्षणम्। तेन भूते भविष्यति द्वित्वे बहुत्वे च प्रत्ययो भवत्येव। **तेनातिक्रामति।** इदमपि

---

स्त इत्याह **अपीपटदिति।** इह टिलोपस्य स्थानिवद्भावेन व्यवधानाद्दीर्घसन्वद्भावौ नेति न भ्रमितव्यम्। स्थानिवत्त्वेऽप्यङ्गस्य णिच्परत्वानपायात् चङ्परे णौ यल्लघ्विति पक्षेऽपि अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति दीर्घसन्वद्भावौ स्त एव। केचित्तु चङ्परे णौ यल्लघ्विति पक्षे पटुशब्दोकारस्य वृद्धौ कृतायां णिच्परं लघु दुर्लभमिति सन्वद्भावाप्राप्त्या अपपटदित्येव रूपम्। प्रथमं टिलोपः पश्चाद् द्विर्वचनमिति मत्वा अभ्यासस्य आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति मनोरमोक्तं यत्, तन्नादर्तव्यम्। 'णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति निषेधपक्षस्य मुख्यतया प्रागुक्तत्वेन प्रथमं टिलोपस्य दुरुपपादत्वादित्याहुस्तन्मन्दम्। अपीपटदित्यत्र द्वितीयाच्पर्यन्तस्य प्रथमावयवस्य द्वित्वमिति हि निर्विवादम्। तथा च द्वितीयस्याचो द्वित्वकरणात्प्रथमं टिलोपः स्यादेवेति। **वृद्धेर्लोप इति।** कृताकृतप्राप्तिमात्रेण लोपो नित्यः। वृद्धिस्त्वनित्या, टिलोपे सति स्थानिनः पूर्वत्र कर्तव्यातायां लोपस्य स्थानिवत्त्वात्, स्वविधौ स्वस्य स्थानिवत्त्वाभावाच्च। अस्मिंस्तु पक्षे 'मुण्डमिश्र—' इति सूत्रे हलिकल्योरदन्तत्वनिपातनस्य वैयर्थ्यमेव। वृद्धेः प्राक् टिलोपे सति अग्लोपित्वसंभवात्। तथा चादन्तत्वनिपातनसामर्थ्याट्टिलोपात्पूर्वं वृद्धिरेवेत्यनग्लोपित्वादपीपटदित्येव रूपं साध्विति प्रतीयते। भाष्यद्वयप्रामा-

क्रामति अश्वयति। हस्तिनातिक्रामति हस्तयति। 'धातुरूपं च' ( ग० सू० २०६ ) णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। चशब्दोऽनुक्तसमुच्चयार्थः। तथा च वार्तिकम्— 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकम्' ( वा० १७६६ ) इति। कंसवधमाचष्टे कंसं घातयति। इह कंसं हन् इति स्थिते,

---

गणसूत्रम्। 'प्रातिपदिकाद्धात्वर्थे—'इत्यस्यैव प्रपञ्चः। वाचा अतिक्रामति वाचयति इत्यत्र कुत्वं तु शङ्क्यम, असुबन्तादेव प्रतिपदिकात् प्रत्ययोत्पत्तेः। धातुरूपं चेति। इदमपि गणसूत्रम्। णिच्प्रकृतिरिति प्रतिपद्येत इति चाध्याहृत्य व्याचष्टे णिच्प्रकृतिर्धातुरूपं प्रतिपद्यत इति। ननु प्रातिपदिकाद् धात्वर्थे णिज् भवति णिच्प्रकृतिर्धातुरूपं च प्रतिपद्यते- इति प्रतीयमानार्थाश्रयणे भुक्तमाचष्टे भुक्तयतीति न स्यात्। भुक्तशब्दस्य भुजधातुरादेशः स्यादित्यत आह चशब्दोऽनुक्तसमुच्चयार्थ इति। किमनुक्तं समुच्चीयते इत्यत आह च वार्तिकमिति। आख्यानात् कृत इति। 'हेतुमति च' इति सूत्रे इदं वार्तिकं स्थितम्। आख्यानं वृत्तकथाप्रबन्धः, तद्वाचिनः कृदन्तात् कंसवधादिशब्दात् तदाचष्टे इत्यर्थे णिचि कृते णिच्प्रकृत्यवयवभूतस्य कृतो लुक्, तस्यैव कृतो या प्रकृतिः हनादिधातु- प्रकृतिवच्च कारकम् इत्यंशस्तु मूल एव व्याख्यास्यते। कंसवधमाचष्टे कंसं घातय- तीत्युदाहरणम्। हननं वधः, 'हनश्च वधः' इति भावे हनधातोः अप्प्रत्ययः प्रकृतेः वधादेशश्च। कंसस्य वधः कंसवधः, तदन्वाख्यानपरवाक्यसन्दर्भो विवक्षितः। तमाचष्टे इत्यर्थे णिच्। अप्प्रत्ययस्य कृतो लुक् प्रकृतिभूतस्य हनधातोर्वधादेशस्य च निवृत्तिः। तथा च फलितं दर्शयति इह कंसं हन् इति स्थिते इति।

---

ण्याद्रूपद्वयमपि साध्विति बहवः। लडर्थस्त्विति। करोत्याचष्टे इति हि कर्तरि वर्तमाने लडेकवचनम्। लडर्थाविवक्षायां तु ण्यन्ताद्भावकर्मणोः भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययो भवत्येवेति भावः। यद्यप्येकत्वादिसंख्या लडर्थो न भवति, तथापि लडादेशतिङर्थोऽपीह लडर्थ- त्वेन गृहीत इति ज्ञेयम्। तेनातिक्रामति। तृतीयाप्रकृतिभूतात्प्रातिपदिकाण्णिच्। तृतीया- न्ताण्णिजित्यन्ये। एवं तत्करोतीत्यत्रापि द्वितीयाप्रकृतिभूताद् द्वितीयान्ताद्वा णिच्। न च सुबन्ताण्णिचि वाचं करोत्याचष्टे वाचाऽतिक्रामति वा वाचयतीत्यत्र कुत्वं स्यादिति शङ्क्यम्, इष्ठवद्भावेन भसंज्ञया पदसंज्ञाया बाधात्। यशस्विनमाचष्टे यशसयति स्रजयतीत्यादौ विनो लुकि प्राप्तस्य पदकार्यस्य बाधार्थं भसंज्ञातिदेशस्यावश्यकत्वात् 'तत्करोति—' इत्यादिनिर्देशानुगुणत्वाच्च सुबन्ताण्णिजिति पक्ष एव ज्यायानित्याहुः। णिच्प्रकृ- तिरिति। वधशब्दो णिच्प्रकृतिरिदानीं तु कृल्लुक्यवशिष्टभाग एव कृतिरित्यर्थः। आख्यानात्कृत इति। यद्यपि वधशब्दः कृदन्तः स आख्यानं न भवति, तथा- प्याख्यानवाची कृदन्तश्च कंसवधशब्दो भवत्येव, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्। कृल्लुगिति। 'हनश्च वधः' इति विहितस्य अप्प्रत्ययस्य लुक्। प्रकृ- तिप्रत्ययापत्तिरिति। विकारपरित्यागेन स्वरूपेणावस्थितिरित्यर्थः, तदेतत्सकलमभि-

---

२५७४ हनस्तोऽचिण्णलोः । ( ७—३—३२ ) हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति । नन्वत्राङ्गसंज्ञा धातुसंज्ञा च कंसविशिष्टस्य प्राप्ता । ततश्चाड्द्वित्वयोर्दोषः । किं च कुत्वतत्वे न स्याताम्, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । सत्यम्, प्रकृतिवच्च इति चकारो भिन्नक्रमः—कारकं च, चात्कार्यम् । हेतुमण्णिचः प्रकृतेर्हन्त्यादेर्हेतुमण्णौ यादृशं कारकं धातावन-

---

हनस्तोऽचिण्णलोः । हन इति षष्ठी । त इत्यत्र अकार उच्चारणार्थः, तदाह हन्तेस्तकार इति । अन्तादेश इत्यलोऽन्त्यपरिभाषया सिद्धम् । ञिति णिति चेति । 'अचो ञ्णिति' इत्यतस्तदनुवृत्तेरिति भावः । तथा च हनो नकारस्य तत्वे 'हो हन्तेः—' इति कुत्वेन हस्य घकारे घातीति ण्यन्तं फलितम् । ततो लटि घातयति इति रूपं स्थितम् । कृतो लुकि समासनिवृत्तौ सुब्लुकोऽपि निवृत्तौ कंसमिति च स्थितम् । 'आख्यानात् कृतः—' इति वार्तिकस्थं प्रकृतिवच्च कारकमित्यंशं शङ्कोत्तरत्वेन योजयिष्यन् शङ्कामवतारयति नन्विति । कंसविशिष्टस्येति । कंसवधशब्दस्येत्यर्थः । तस्मादेव णिचो विधानादिति भावः । ननु कंसवधशब्दस्य अङ्गत्वे का हानिरित्यत आह ततश्चेति । कंसवधशब्दस्याङ्गत्वाद् अड्द्वित्वयोर्विषये दोषः स्यात् । कंसशब्दात्पूर्वमडागमः स्यात् । कंस् इत्यस्य द्विर्वचनं स्यात् । इष्यते तु कंसमजीघतत् इत्येवं हनधातोरेवोभयमित्यर्थः । किं चेति । कंसं घातयतीति कुत्वतत्वे न स्यातामित्यर्थः । कुतः इत्यत आह धातोरिति । धातोर्हन् इत्यादितत्तत्स्वरूपेण ग्रहणे सति तत्प्रत्यये—धातोर्विहितप्रत्यये कार्यविज्ञानमिति परिभाषयेत्यर्थः । तेन वार्त्रघ्नमित्यत्र 'हनस्तोऽचिण्णलोः' इति न भवतीति 'हनस्तोऽचिण्णलोः' इति सूत्रे भाष्ये स्पष्टम् । तथा च प्रकृते कंसं घातयतीत्यत्र 'हो हन्तेः—इति कुत्वं हनस्तोऽचिण्णलोः' इति तत्वं च न स्याताम्, अत्र णिचः प्रातिपदिकाद्विहितत्वेन धातोर्विहितत्वाभावादित्यर्थः । अत्र प्रत्ययलक्षणेन कृदन्ततया कृत्प्रकृत्यर्थस्य कर्मत्वेन कंसस्येति षष्ठी स्यादित्यप्याक्षेपो बोध्यः, तत्परिहारस्यापि वक्ष्यमाणत्वात् । तामिमां शङ्कामर्धाङ्गीकारेण परिहरति सत्यमिति । कंसवधशब्दस्यैवाङ्गत्वमित्याद्यङ्गीक्रियते, दोषापादनं तु नाङ्गीक्रियत इत्यर्थः । प्रकृतिवच्चेतीति । 'आख्यानात् कृतः—' इति वार्तिके प्रकृतिवच्चेति चकारो भिन्नक्रमः, प्रकृतिवदित्यनन्तरपठितः चकारः कारकमित्यस्मादूर्ध्वं निवेशनीय इति भावः । तदेवाभिनीय दर्शयति कारकं चेति । चकारोऽप्ययमनुक्तसंग्रहार्थ इत्याह चात्कार्यमिति । समुच्चीयत इति शेषः । तथा च कारकं कार्यं च प्रकृतिवदिति फलितम् । अत्र प्रकृतिशब्देन हेतुमण्णिचः प्रकृति-

---

प्रेत्याह कंसं हन् ई इति स्थिते इति । कंसविशिष्टस्येति । तस्मादेव णिचो विधानादिति भावः । दोष इति । कशब्दात्पूर्वमडागमः कंस इत्यस्य द्विर्वचनं स्यादित्यर्थः । किं चेति । एवं च कंसमजीघनदितीष्टं न सिध्येदिति भावः । तत्प्रत्यये । धातोर्विहितप्रत्यये । तेन वार्त्रघ्नमित्यत्र 'हनस्त—' इति तत्वं न भवतीति ज्ञेयम् । उक्तदोषान्परिहरति सत्यमिति । प्रकृतिवच्चेति चकारोऽनुक्तसंग्रहार्थ इत्याह चात्कार्यमिति । यद्यप्यन्यतरातिदेशेनाप्यड्द्विवचने सिध्यतः, तथापि धातावनन्त-

न्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः कंसमजीघतत् । 'कर्तृकरणाद्धात्वर्थे' ( ग० सू० २०७ ) कर्तुर्व्यापारार्थं यत्करणं न तु चक्षुरादिमात्रमित्यर्थः । असिना हन्ति असयति ' वल्क १९१६ दर्शने । चित्र १९१७

---

विवक्षिता, व्याख्यानात् । प्रकृताविव प्रकृतिवत् । सप्तम्यन्ताद्वतिः, तदाह प्रकृतेर्हेन्यादेर्हेतुमण्णाविति । प्रयुज्यमाने सतीति शेषः । कारकमित्यस्य विवरणं द्वितीयान्तमिति । द्वितीयातृतीयादिकारकविभक्त्यन्तमित्यर्थः । हन्ति कंसं कृष्णः तं प्रेरयतीत्यर्थे कंसं घातयति, कंसमजीघतदित्यादौ हेतुमण्ण्यन्ते प्रयुज्यमाने यद् द्वितीयादिकारकविभक्त्यन्तं यच्च कार्यं कुत्वतत्वाड्द्वित्वादि तत्सर्वम् 'आख्यानात् कृतः—' इत्यस्योदाहरणे कंसवधमाचष्टे कंसं घातयति, कंसवधमाचष्ट कंसमजीघतदित्यादावपि भवतीति फलितम् । तत्र कारकमित्यनेन कंसात् षष्ठी निरस्ता, उदाहृतहेतुमण्ण्यन्तस्थले कृद्योगाभावेन कर्मणि द्वितीयाया एव सत्त्वात् । कार्यमित्यनेन तु कुत्वतत्वे कंसस्य अड्द्वित्वनिरासश्चेति बोध्यम् आख्यानशब्दश्च कथंचिद् वृत्तानुवादपरः, न तु भारतादिप्रसिद्धकंसवधादिकथापरः । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । द्वितीयान्तमित्यत्र द्वितीयाग्रहणमुपलक्षणम् तेन पुष्ययोगमाचष्टे पुष्येण योजयतीति सिध्यतीति भाष्ये स्पष्टम् । कर्तृकरणाद्धात्वर्थे । इदमपि गणसूत्रम् । प्रतिपदिकाद्धात्वर्थे इत्यस्यैव प्रपञ्चः । कर्तुः करणं कर्तृकरणम्, न तु कर्ता च करणं च इति द्वन्द्वः व्याख्यानात्, तदाह कर्तुर्व्यापारार्थमिति । अभिमतफलोत्पादनार्थमित्यर्थः । साधकतममिति यावत् । नन्वेवं सति करणाद्धात्वर्थे इत्येव सिद्धे कर्तृग्रहणं व्यर्थमित्यत आह न तु चक्षुरादिमात्रमिति । कर्तृग्रहणं विहाय करणादित्येवोक्तौ चक्षुरादीन्द्रियमेव सुप्रसिद्धत्वात् करणादिति शब्देन गम्येत । अतः कर्तृग्रहणमित्याहुः । वस्तुतस्तु 'साधकतमं करणम्' इति शास्त्रप्रसिद्धकरणस्य ग्रहणौचित्यात् कर्तृगहणं स्पष्टार्थमेव । केचित्तु कर्तृकरणादिति द्वन्द्वमाश्रित्य देवदत्तेन वाचयति देवदत्तयतीति कर्तुरुदाजह्रुः ।

---

भूतद्वितीयान्तादिलाभाय कारकातिदेशः । कार्यातिदेशस्तु कुत्वतत्वादिलाभायेति विवेकः । इह भारतभागवतादिप्रसिद्धे कंसवधाद्युपाख्याने एव णिजिति नाग्रहः, किं तूपाख्यानमात्रे । तेन राजागमनमाचष्टे राजानमागमयतीत्यादि सिध्यति । इह कृत्प्रकृतौ राज्ञः कर्तृत्वेऽपि गमेर्हेतुमण्णौ 'गतिबुद्धि—' इत्यनेन तस्य कर्मत्वमिति द्वितीयान्तमेव रूपातिदेशबलात्स्वीक्रियते । देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीत्यत्र तु देवदत्तस्य कर्तृत्वानपायात्तृतीयैव भवति । रुक्मिणीहरणमाचष्टे इत्यादौ 'हृक्रोरन्यतरस्याम्' इति विकल्पाद् रुक्मिणी रुक्मिण्या वा हारयतीति प्रयोगः । कर्तृकरणादिति । कर्तृग्रहणाभावे चक्षुषा पश्यति चक्षयतीत्यादावेव स्यान्न तु करिभिरवबध्नाति अवकरयतीत्यादौ । लोके इन्द्रियाणामेव करणत्वेन सुप्रसिद्धत्वात्, अतस्तत्संग्रहार्थं कर्तृग्रहणमिति मनोरमायां स्थितम् । नव्यास्तु—साधकतमत्वेन विवक्षितं यत् तत्करणशब्देन गृह्यते, न तु लोकप्रसिद्धकरणमेव । अन्यथा 'कर्तृकरणयोस्तृतीया' इत्यादावपि लोकप्रसिद्धकरणग्रहणप्रसक्त्या बाणेन हत इत्यादिरूपं न सिध्येत् । तथा च कर्तृग्रहणं विनाप्यवकरयतीति रूपसिद्धौ न किंचिद्बाधकमिति व्याख्याय कर्तृ-

चित्रीकरणे । आलेख्यकरण इत्यर्थः । कदाचिद्दर्शने । चित्र इत्ययमद्भुतदर्शने णिचं लभते । चित्रयति । अंस १९१८ समाघाते । वट १९१९ विभाजने । लज १९२० प्रकाशने । वटि लजि इत्येके । वण्टयति । लञ्जयति । अदन्तेषु पाठवलाददन्तत्वे वृद्धिरित्यन्ये । वण्टापयति । लञ्जापयति । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति गणापयति इत्यादि । मिश्र १९२१ सम्पर्के । संग्राम १९२२ युद्धे । अयमनुदात्तेत्, अकारप्रश्लेषात् । अससङ्ग्रामत । स्तोम १९२३ श्लाघायाम् । अतुस्तोमत् । छिद्र १९२४ कर्णभेदने । करणभेदन इत्यन्ये । कर्ण इति धात्वन्तरमित्यन्ये । अन्ध १९२५ दृष्ट्युपघाते । उपसंहार इत्यन्ये । आन्दधत् । दण्ड १९२६ दण्डनिपातने । अङ्क १९२७ पदे लक्षणे च । आञ्चकत् । अङ्ग १९२८ च । आञ्जगत् । सुख १९२९ दुःख १९३० तत्क्रियायाम् । रस १९३१ आस्वादनस्नेहनयोः । व्यय १९३२ वित्त-

---

कदाचिद्दर्शने इति । चित्रेत्यनुवर्तते, तदाह चित्र इत्ययमिति । कदाचिद्दर्शने इत्यस्य विवरणम्—अद्भुतदर्शने इति । चित्र चित्रीकरणकदाचिद्दर्शनयोरित्येव सुवचम् । वटि लटि इत्येके इति । ननु कथादावनयोः पाठो व्यर्थः । इदितोरनयोः टकारजकारान्तयोरदन्तत्वस्याप्रसक्तेः फलभावाच्चेत्यत आह अदन्तेष्विति । अदन्तेषु पाठवलाद् वण्ट लञ्जेति कदाचिददन्तत्वमप्यनयोर्विज्ञायते । अदन्तत्वस्य च फलाभावादतो लोपं बाधित्वा 'अचो ञ्णिति' इति वृद्धो 'अर्तिह्री–' इति पुगित्यर्थः, फलितमाह वण्टापयतीति । शाकटायनस्त्विति । ऋषिविशेषोऽयम् । संग्राम युद्धे । गणसूत्रमिदम् । युद्धवाचि संग्रामेति प्रातिपदिकं करोत्यर्थे णिचं लभत इत्यर्थः । ननु 'प्रातिपदिकाद्धात्वर्थे—' इत्येव सिद्धे किमर्थमिदमित्यत आह अनुदात्तेदिति । एतदात्मनेपदार्थमिति भावः । ननु संग्रामशब्दस्य प्रातिपदिकस्य अकारान्तत्वात् कथमनुदात्तेत्वमित्यत आह अकारप्रश्लेपादिति । संग्रामशब्दादनुदात्तानुनासिकं पररूपेण प्रश्लिष्य निर्देशादिति भावः । अससंग्रामतेति । लुङि चङि संग्रामशब्दस्य ण्यन्तस्य अङ्गत्वात् ततः प्रागडिति भावः । एतच्च भृशादिसूत्रे कैयटे स्पष्टम् । अग्लोपित्वान्नोपधाह्रस्वः । सुख दुःख तत्क्रियायाम् । सुखानुकूले दुःखानुकूले च व्यापारे इत्यर्थः । सुख दुःखेति प्रातिपदिकाभ्यां तत्करोतीत्यर्थे णिच् स्यादिति यावत् । 'प्रातिपदिकाद्धात्वर्थे—' इत्येव

---

करणादित्यत्र समाहारद्वन्द्वं मत्वा देवदत्तेन पाचयति देवदत्तयतीत्युदाजह्रुः । कदाचिद्दर्शने । चित्रकरणकदाचिद्दर्शनयोरिति सुवचम् । अदन्तेषु पाठवलादिति । अदन्तस्य फलान्तराभावादतोलोपं बाधित्वा वृद्धिरित्यर्थः । संग्राम । संग्रामेति युद्धवाचि प्रातिपदिकं करोत्यर्थे णिचं लभते । अनुदात्तेदिति । एतच्च 'भृशादिभ्यो भुवि–' इति सूत्रे कैयटेनोक्तम् । अकारप्रश्लेपादिति । तेन प्रश्लिष्टस्येत्संज्ञा प्रकृत्यकारस्य तु इष्ठवदिति टिलोपः । तथा च अग्लोपादससंग्रामतेत्यत्र नोपधाह्रस्वः । सुख दुःख । तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ परामृश्येते । 'प्रातिपदिकाद्धात्वर्थे–' इत्येव सिद्धे अनयोः पाठः सोपसर्गात्प्रत्ययार्थ इत्येके । सुख-

समुत्सर्गे। अवव्ययत्। रूप १९३३ रूपक्रियायाम्। रूपस्य दर्शनं करणं वा रूपक्रिया। छेद १९३४ द्वैधीकरणे। अचिच्छेदत्। छद १९३५ अपवारणे इत्येके। छदयति। लाभ १९३६ प्रेरणे। व्रण १९३७ गात्रविचूर्णने। वर्ण १९३८ वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णकरणम्। सुवर्णं वर्णयति। कथां वर्णयति। विस्तृणातीत्यर्थः। हरिं वर्णयति। स्तौतीत्यर्थः 'बहुलमेतन्निदर्शनम्' (ग० सू० २०८)। अदन्तधातुनिदर्शनमित्यर्थः। बाहुलकादन्येऽपि बोध्याः। तद्यथा—पर्ण १९३९ हरितभावे। अपपर्णत्। विष्क १९४० दर्शने। क्षिप १९४१ प्रेरणे। वस १९४२ निवासे। तुत्थ १९४३ आवरणे। एवमान्दोलयति। प्रेङ्खोलयति। विडम्बयति। अववीरयति इत्यादि। अन्ये तु दशगणीपाठो बहुलम् इत्याहुः। तेनापठिता अपि सौत्रलौकिकवैदिका बोध्याः। अपरे तु नवगणीपाठो बहुलम् इत्याहुः। तेनापठितेभ्योऽपि क्वचित्स्वार्थे णिच्। 'रामो राज्यमचीकरत्' इति यथेत्याहुः। चुरादिभ्य एव बहुलं णिजित्यर्थ इत्यन्ये। सर्वे पक्षाः प्राचां ग्रन्थे स्थिताः। 'णिङङ्गान्निरसने' (ग० सू० २०९)। अङ्गवाचिनः प्रातिपदिकान्निरसनेऽर्थे णिङ् स्यात्। हस्तौ निरस्यति। हस्तयते। पादयते। 'श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च' (ग० सू० २१०)। श्वेताश्वादीनां चतुर्णामश्वादयो लुप्यन्ते, णिङ् च धात्वर्थे। श्वेताश्वमाचष्टे तेनातिक्रामति वा,

आभ्यां णिजित्याहुः। बहुलमेतन्निदर्शनम्। गणसूत्रमिदम्। एतेषां कथादीनाम् अदन्तानां निदर्शनं पाठ इत्यर्थः, तदाह अदन्तेति। बहुलग्रहणस्य फलमाह बाहुलकादिति। अपपर्णदिति। अग्लोपित्वान्न सन्वत्त्वमिति भावः। क्षिप प्रेरणे। क्षिपयति। अग्लोपस्य स्थानिवत्त्वान्न गुणः। एवमग्रेऽपि। वस निवासे। वसयति। अदन्तत्वान्नोपधावृद्धिः। आन्दोलयतीत्यादौ अदन्तत्वेन अग्लोपित्वान्नोपधाह्रस्वः। तदेवं बहुलमेतन्निदर्शनम् इत्यस्य कथाद्यदन्तविषयत्वमुक्त्वा मतान्तरमाह अन्ये त्विति। भ्वादिः, अदादिः, जुहोत्यादिः, दिवादिः, स्वादिः, तुदादिः, रुधादिः, तनादिः, क्र्यादिः, चुरादिरिति दशगणी, तद्बहिर्भूता अपि सौत्राः जुप्रभृतयः, लौकिकाः प्रेङ्खोलादयः, वैदिकाः 'तद्रक्षांसि रात्रिभिरसुभ्नन्' इत्यादौ सुभादयश्च संगृहीता भवन्तीत्यर्थः। मतान्तरमाह अपरे त्विति। चुरादिभिन्ना उदाहृता ये नव गणाः तेभ्योऽपि क्वचित् स्वार्थे णिच् बहुलग्रहणादस्माल्लभ्यत इत्यर्थः। मतान्तरमाह चुरादिभ्य एवेति। वस्तुतस्तु भूवादिसूत्रे पाठेन धातुसंज्ञेति भाष्यप्रतीकमुपादाय स पाठो नोपलक्षणार्थः, किंतु इयत्ताप्रतिपादनार्थ इति कैयट आह। एवं च बहुलमेतन्निदर्शनम् इति गणसूत्रमनार्षमिति शब्देन्दुशेखरे स्थितम्। णिङङ्गान्निरसने इति। गणसूत्रम्। स्पष्टम्। ङित्वान्नित्यमात्मनेपदम्। श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च। इदमपि गणसूत्रम्। श्वेताश्वादीनामिति। श्वेताश्व अश्वतर गालोडित आह्वरक एषामित्यर्थः। अश्वादय इति। श्वेताश्वशब्दे अश्वशब्दः, अश्वतरशब्दे तरशब्दः,

दुःखाभ्यां तत्क्रियायामेव णिच् स्यान्न त्वाचष्ट इत्यस्मिन्नर्थे इत्येतदर्थः पाठ इत्यन्ये।

श्वेतयते। अश्वतरमाचष्टे अश्वयते। गालोडितं वाचां विमर्शः, तत्करोति गालोडयते। आह्वरयते। केचित्तु णिचमेवानुवर्तयन्ति। तन्मते परस्मैपदमपि। 'पुच्छादिषु धात्वर्थे इत्येव सिद्धम्' (ग० सू० २११)। णिजन्तादेव बहुवचनादात्मनेपदमस्तु। मास्तु 'पुच्छभाण्ड–' (सू० २६७६) इति णिङ्विधिः। सिद्धशब्दो ग्रन्थान्ते मङ्गलार्थः।

इति तिङन्ते चुरादिप्रकरणम्।

---

गालोडितशब्दे इतशब्दः, आह्वरकशब्दे कशब्दश्च लुप्यन्ते इत्यर्थः। णिङ् चेति। चकारलभ्यमिदम्। धात्वर्थे इति। 'प्रातिपदिकाद्धात्वर्थे' इत्यतस्तदनुवर्तते। निरसन इति निवृत्तमिति भावः। विमर्श इति। विवेचनमित्यर्थः। केचित्त्विति। श्वेताश्वेत्यादिसूत्रे णिचमेवानुवर्तयन्ति न तु णिङमित्यर्थः णिच्णिङोः फलभेदं दर्शयति। तन्मते इति। पुच्छादिषु धात्वर्थे इत्येव सिद्धमिति। धातुपाठं रचयितुर्भीमसेनस्य वाक्यमिदमित्याहुः 'प्रातिपदिकाद्धात्वर्थे–' इति णिचि सिद्धे 'पुच्छभाण्डचीवराण्णिङ्' इति न कर्तव्यमित्यर्थः। ननु नित्यात्मनेपदार्थं 'पुच्छभाण्ड—' इति णिङ्विधिरावश्यक इत्यत आह णिजन्तादेव बहुलवचनादिति। 'बहुलमेतन्निदर्शनम्' इति बहुलग्रहणादित्यर्थः। ननु पुच्छादिषु धात्वर्थे इत्येव णिजित्येव सिद्धे सिद्धशब्दो व्यर्थं इत्यत आह सिद्धशब्द इति। धातुपाठात्मकग्रन्थसमाप्तौ सिद्धशब्दप्रयोगो मङ्गलार्थ इत्यर्थः। पस्पशाह्निकभाष्ये 'हि सिद्धे शब्दार्थसंबन्धे' इति वार्तिके ग्रन्थस्यादिमवार्तिकव्याख्यावसरे सिद्धशब्दोपादानं मङ्गलार्थमित्युक्तम्। 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भूवादिसूत्रस्थभाष्याद् ग्रन्थान्तेऽपि मङ्गलस्य कर्तव्यतासिद्धिः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां चुरादिनिरूपणं समाप्तम्।

---

पुच्छादिष्विति। भीमसेनस्य वाक्यम्। ग्रन्थान्त इति। भू सत्तायामित्यादिधातुपाठस्यान्त इत्यर्थः।

इति तत्त्वबोधिन्यां चुरादिप्रकरणम्।

---

## अथ तिङन्ते णिच्प्रकरणम् ॥ ५३ ॥

२५७५ तत्प्रयोजको हेतुश्च । ( १—४—५५ ) कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् । २५७६ हेतुमति च । ( ३—१—२६ ) प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच्स्यात् । भवन्तं प्रेरयति भावयति । 'णिचश्च'

---

अथ 'हेतुमति च' इति णिज्विधिं वक्ष्यन् हेतुसंज्ञामाह **तत्प्रयोजको हेतुश्च** । 'स्वतन्त्रः कर्ता' इति पूर्वसूत्रोपात्तः कर्ता तच्छब्देन परामृश्यते । तस्य कर्तुः प्रयोजकः, प्रवर्तयिता तत्प्रयोजकः, तदाह **कर्तुः प्रयोजको हेतुसंज्ञ इति** । चकारः पूर्वसूत्रोपात्तां कर्तृसंज्ञां समुच्चिनोति, तदाह **कर्तृसंज्ञश्चेति** । देवदत्तः पचति, तं प्रेरयति यज्ञदत्त इत्यत्र देवदत्तस्यैव पाकानुकूलव्यापारात्मकपचधात्वर्थाश्रयत्वरूपकर्तृत्वसत्त्वात् प्रयोजकस्य तदभावादिह कर्तृसंज्ञाविधिः । प्रयोजकस्य प्रयोज्यकर्त्रा अन्यथासिद्धत्वाद्धेतुत्वाप्राप्तौ हेतुसंज्ञाविधिः । **हेतुमति च** । 'सत्यापपाश—' इत्यतो णिजित्यनुवर्तते । हेतुः प्रयोजक आधारतया अस्यास्तीति हेतुमान्–प्रयोजकनिष्ठः प्रेषणादिव्यापारः, तस्मिन् वाच्ये णिच्स्यादित्यर्थः । 'धातोरेकाचो हलादेः—' इत्यतो धातोरित्यनुवर्तते, तदाह **प्रयोजकव्यापार इति** । प्रेषणादावित्यादिशब्देन अध्येषणानुमत्युपदेशानां ग्रहणम् । तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम् आज्ञेत्यर्थः । समानस्याधिकस्य च सख्याचार्यादेः प्रवर्तना अध्येषणा । अनुमतिः राजादेः संमतिः ज्वरितस्य कषायपाने हितावबोधनेन प्रवर्तना उपदेशः । हननाद्भीत्या पलायमानस्य निरोधाचरणमपि प्रयोजकव्यापारः प्रयोजकनिष्ठप्रवर्तनायां णिजिति फलितम् । एते तु विशेषाः प्रकरणादिना अवगम्यन्ते । कुलालो घटं करोतीत्यत्र तु न णिच् प्रयोज्यप्रयोजकोभयसमभिव्याहार एव तत्प्रवृत्तेरित्यन्यत्र विस्तरः । **भवन्तमिति** । देवदत्तो यज्वा भवति । तं प्रेरयति याजक इत्याद्यर्थे

---

**तत्प्रयोजको हेतुश्च** । तच्छब्देन 'स्वतन्त्रः कर्ता' इति पूर्वसूत्रोपात्तः कर्ता परामृश्यते तस्य कर्तुः प्रयोजकः प्रेरकः तद्व्यापारानुकूलव्यापारवानित्यर्थः । चकार एकसंज्ञाधिकारबाधनार्थस्तदाह **हेतुसंज्ञः कर्तृसंज्ञश्चेति** । हेतुसंज्ञायाः प्रयोजनं 'भीस्म्योर्हेतुभये' 'भियो हेतुभये षुक्' इत्यादौ प्रयोजकस्य हेतुत्वेन व्यवहारः । कर्तृसंज्ञायास्तु 'लः कर्मणि च भावे च—' इति सूत्रेण प्रयोजके वाच्ये लकारादयः । **हेतुमति च** । स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन हेतुर्यत्रास्ति स हेतुमान्व्यापारः, तस्मिन्वाच्ये णिजित्याहुः । **प्रयोजकव्यापार इति** । प्रयोजकश्चेतनसाधारण्येन विवक्षितः । स च क्वचित्सिद्धः क्वचित्फलरूपः देवदत्तः पाचयति गमयतीत्यादौ सिद्धः । भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः । **प्रेषणादाविति** । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणा । आज्ञेत्यर्थः । आदिशब्देनाध्येषणानुमत्यादीनामुपादानम् । समानस्याधिकस्य वा ऋत्विगाचार्यादेः प्रवर्तना अध्येषणम्, प्रार्थनेत्यर्थः । अनुमतिस्तु राजादेः संमतिः, तां विना यागादिक्रिया न निष्पद्यत इत्यनुमतिमात्रेण राजादिः प्रयोजकः । अनुमत्यादीत्यादिशब्दे

(सू० २५६४) इति कर्तृगे फले आत्मनेपदम् । भावयते । भावयांबभूव २५७७ ओः पुयण्ज्यपरे । (७—४—८०) सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्वं स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । मूङ् । अमीम-

---

भूधात्वर्थस्य भवनस्य मुख्यकर्ता यज्वा, तस्य यज्वभवने प्रवर्तयिता याजकादिः प्रयोजकः, तन्निष्ठायां प्रेरणायां भूधातोर्णिच् वृद्ध्यावादेशौ, भावीति णिजन्तम् । तस्माद्भवनानुकूल-व्यापारार्थकाद् लटि भावयतीति रूपम् । भवन्तं प्रेरयतीति फलितोऽर्थः । भावयांबभूवेति । कर्तृगामिन्यपि क्रियाफले भूधातोरनात्मनेपदित्वाद् अनुप्रयुज्यमानादपि नात्मनेपदमिति भावः । ओःपुयण् । उ इत्यस्य ओरिति षष्ठी । पुयण्जि इति छेदः । पुश्च यण् च ज् चेति समाहार-द्वन्द्वात्सप्तमी । अः परो यस्मादिति बहुव्रीहिः । 'सन्यतः' इत्यस्मात्सनीत्यनुवर्तते । अङ्गस्ये-त्यधिकृतम् । 'अत्र लोपः–' इत्यस्मादभ्यासस्येति, 'भृञामित्' इत्यस्मादिदिति चानुवर्तते, तदाह सनि परे इत्यादिना । अबीभवदिति । भू इ अत् इति स्थिते द्वित्वे कार्ये णौ अच आदेशस्य निषेधाद् वृद्ध्यावादेशाभ्यां प्रागेव भू इत्यस्य द्वित्वे उत्तर-खण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे अभ्यासे अकाराभावेन 'सन्यतः' इत्य-स्याप्रवृत्त्या सन्वत्त्वादनेन इत्वे दीर्घे इति भावः । अपीपवदिति । पूङ्धातो रूपम्

---

नात्रोपदेशानुग्रहयोरुपादानम् । ज्वरितः कषायं पिबेदित्युपदेशमात्रेण वैद्यादिः प्रयोजकः ।। यस्तु केनचिद्धन्तुमिष्टं पलायमानं निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन प्रयोजकः । सर्वेऽप्येते विशेषाः कथं णिच्प्रत्ययगम्या इति चेत् । अत्राहुः—सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः, विशेषास्त्वर्थप्रकरणादिगम्या इति । नन्वेवं णिचो लोडादीनां च पर्यायता स्यात्ततश्च इदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति णिजपि प्रयुज्यतेति चेत् । मैवम् । कर्तुः प्रयोजको हि हेतुः प्रैषविषयो यः संबोध्यो देवदत्तादिः स तु नाद्यापि प्रश्नकर्तृत्वेनावधारितः । तथा च प्रयोज्यप्रवृत्त्युपहिता या । प्रयोजकनिष्ठप्रवृत्तिः सा णिजर्थस्तदनुपहिता प्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः । उक्तं च—'द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते । सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः' इति । अस्यार्थः—कर्तृत्वेनानवधारितस्य देवदत्तादेस्तु प्रैषे प्रच्छ ज्ञीप्सायामित्यादेर्लोड् भवति । प्रयोज्यप्रवृत्त्युपहितप्रवृत्त्याश्रयस्य प्रयुक्तिस्तु यदा सा णिचो विषय इति । किं च प्रयोक्तृनिष्ठा प्रयुक्तिर्लोडर्थः, प्रयोक्त्रप्रयोक्तृकर्तृका तु णिजर्थः । पच देवदत्तेत्यत्र हि वक्तैव प्रेरकः । पाचयतीत्यादौ वक्तृभिन्नः, पाच-यामीत्यादौ तु वक्तेति दिक् । ओः पुयण्जि । पुयण्जीति समाहारद्वन्द्वात्सप्तम्येक-वचनम् । अपर इति बहुव्रीहिः । 'अत्र लोपोऽभ्यासस्य' इत्यतः अभ्यासस्येत्यनु-वर्तते । 'भृञामित्' इत्यत इद्ग्रहणं 'सन्यतः' सनीति च । अङ्गस्येति तु अधिक्रियत एव, तदेतदभिप्रेत्याह सनि परे यदङ्गमित्यादि । अपरे किम्, बुभू-षति । पवर्गयण्जीति किम्, ऊर्णुनविषति । अबीभवदित्यादि । भू सत्तायाम् । पूङ् पवने । मूङ् बन्धने । यु मिश्रणादौ । रु शब्दे । लूञ् छेदने । जु गतौ । सौत्रोऽयं धातुः 'जुचंक्रम्य–' इत्यत्र निर्दिष्टः । ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावा-

वत्। अयीयवत्। अरीरवत्। अलीलवत्। अजीजवत्। २५७८ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा। (७—४—८१) एषामभ्यासोकारस्य इत्त्वं वा स्यात्सन्यवर्णपरे धात्वक्षरे परे। असिस्रवत्, असुस्रवत्। 'नाग्लोपि–' (सू० २५७२) इति ह्रस्वनिषेधः। अशशासत्। अडुढौकत्। अचीचकासत्। मतान्तरे अचचकासत्। अग्लोपि इति सुब्धातुप्रकरणे उदा-

---

मूड्ङित्यस्माद्धातोरमीमवदिति रूपमित्यर्थः। अयीयवदिति। युधातो रूपम्। अरीरवदिति। रुधातो रूपम्। अलीलवदिति। लूञ्धातो रूपम्। अजीजवदिति। जुः सौत्रो धातुः जुचङ्क्रम्येत्यत्र निर्दिष्टः। ननु भू भू इति द्वित्वोत्तरं वृद्ध्यावादेशयोः कृतयोः उपधाह्रस्वे तस्य स्थानिवत्त्वेन लघुपरत्वाभावात् सन्वत्त्वाप्रसक्त्या कथमिहाभ्यासोवर्णस्य इत्त्वमिति चेद् न, आरम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृतेरित्यलम्। स्रवतिशृणोति। अपर इत्यनुवर्तते,न तु पुयण्जि इति, पवर्गजकारयोर संभवात् स्रवत्यादौ यणः सत्त्वेऽप्यव्यभिचारात्, तदाह अवर्णपरे धात्वक्षर इति। अक्षरशब्दो वर्णपरः। असिस्रवत्, असुस्रवदिति। द्विहल्व्यवधानेन लघुपरकत्वाभावान्न सन्वत्त्वमिति भावः। अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्। अथ शासुधातोरशशासदित्यत्राह नाग्लोपीति। अडुढौकदिति। ढौकृ गतावित्यस्य ऋदित्त्वादिति भावः। अचीचकासदिति। चकासृ दीप्तौ। ऋदित्त्वान्नोपधाह्रस्वः। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इति पक्षे सन्वत्त्वम् अभ्यासदीर्घश्चेति भावः। मतान्तरे त्विति। अङ्गं यत्र द्विरुच्यते इति मते चङ्परे णौ यल्लघु तत्परो योऽङ्गस्य अभ्यास इति मते चेत्यर्थः। अग्लोपीतीति। अग्लोपिन उपधाह्रस्वनिषेधे मा भवान्ननदिति उदाहृतम्। अतितिरायदित्याद्युदाहरणन्तरं सुब्धातुनिरूपणे वक्ष्यते इत्यर्थः। ननु 'चुर स्तये' इत्यस्मात्स्वार्थे णिचि उपधागुणे चोरि इति रूपम्। तस्माद्धेतुमण्णौ प्रथमस्य णेर्लोपे सति चोरि इत्येव हेतुमण्ण्यन्तम्। तस्माल्लटि तिपि शपि गुणे अयादेशे चोरयतीत्येव रूपमिष्यते। तन्नोपपद्यते, हेतुमण्णौ परे प्रथमस्य णेर्लोपं बाधित्वा परत्वाद् वृद्धौ आयादेशे

---

देशौ भवतस्ततः कृतस्य 'णौ चङि–' ह्रस्वस्य स्थानिवद्भावेन लघुपरत्वाभावात्सन्वद्भावाप्रवृत्त्याऽबीभवदित्यादावभ्यासोवर्णस्येत्वं दुर्लभमिति चेत्। अत्राहुः— आरम्भसामर्थ्यादेव न स्थानिवत्त्वमिति। स्रवतिशृणोति। अपर इत्यनुवर्तते न तु पुयण्जीति, पवर्गजकारयोरसंभवाद्यणः संभवेऽप्यव्यभिचारात्तदाह अवर्णपरे धात्वक्षरे इति। अक्षरशब्दोऽत्र वर्णपरः। अवर्णपरे किम् शुश्रूषयति। शृणोत्यादेरुदाहरणं तु अशिश्रवत्, अशुश्रवत्। अदिद्रवत्। अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अचिच्यवत्, अचुच्यवत्। अडुढौकदिति। ढौकृ गतौ। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इति पक्षाश्रयेणाह अचीचकासदिति। मतान्तर इति। 'अङ्गं यत्र द्विरुच्यते' इति मते चङ्परे णौ यल्लघु तत्परो योऽङ्गस्याभ्यास इति मते चेत्यर्थः। सुब्धातुप्रकरण इति। अतितिरायत्। असस-

हरिष्यते । ण्यन्ताण्णिचि पूर्वविप्रतिषेधादपवादत्वाद्वा वृद्धिं बाधित्वा णिलोपः । चोरयति । 'णौ चङि—' ( सू० २३१४ ) इति ह्रस्वः । 'दीर्घो लघोः' ( सू० २३१८ )। न चाग्लोपित्वाद् द्वयोरप्यसम्भवः, ण्याकृतिनिर्देशात् । अचूचुरत् । २५७९ णौ च संश्चङोः । ( ६—१—३१ ) सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात् 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' ( प० १२९ )

---

चोराय् इ इत्यस्माल्लटि चोरायय्तीत्यापत्तेरित्यत आह ण्यन्ताण्णिचीति। ण्यन्ताण्णिचि वृद्धिं बाधित्वा णिलोप इत्यन्वयः। कुत इत्यत आह पूर्वविप्रतिषेधादिति। 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति वार्तिकेनेति भावः। अपवादत्वाद्वेति। 'कमु कान्तौ' इति धातौ द्विधा प्रपञ्चितत्वादिति भावः। अथ ण्यन्ताण्णौ प्रथमस्य णेर्लोपे चोरि इत्यस्माल्लुङि चङि अचोर् इ अ त् इति स्थिते प्रक्रियां दर्शयति णौ चङीति ह्रस्व इति। ततो हेतुमण्णेर्लोपे चुर् इत्यस्य द्वित्वे सन्वद्भावविषयत्वादाह दीर्घो लघोरिति। यथा च अचूचुरदिति सिद्धम्। ननु उपधाह्रस्वः अभ्यासदीर्घश्चेति द्वयमपि चङ्परे णौ विहितम्। तदुभयमप्यत्र प्रत्ययलक्षणमाश्रित्य प्रथमणिचमादाय न संभवति, तस्य द्वितीयणिचा व्यवहितत्वेन चङ्परकत्वाभावात्। नापि द्वितीयणिचमादाय तदुभयसंभवः, द्वितीयणिच्प्रकृतेः प्रथमण्यन्तस्य णिलोपमादाय अग्लोपित्वादित्याशङ्क्य परिहरति न चेति। अग्लोपित्वाद् द्वयोरपि उपधाह्रस्वाभ्यासदीर्घयोरसंभवो न शङ्क्य इत्यर्थः। कुत इत्यत आह ण्याकृतिनिर्देशादिति। चङ्परे णावित्यत्र णावित्यस्य चङ्परकणित्त्वजात्याश्रयैकानेकणिज्व्यक्तिपरकत्वं विवक्षितम्। तथा च णिद्वयस्य चङ्परकत्वाभावेऽपि णित्वस्य चङ्परकत्वमस्तीति ह्रस्वदीर्घयोरस्ति प्रवृत्तिरिति भावः। अत्र जातिनिर्देशः अयुक्त इति शब्देन्दुशेखरे प्रपञ्चितम्। टु ओ श्वि गतिवृद्ध्योः अस्माद्धेतुमण्णौ वृद्ध्यायादेशयोः श्वायीत्यस्माद् लडादौ श्वाययतीति रूपम्। लुङि चङि अश्वि इ अ त् इति स्थिते विशेषमाह णौ च संश्चङोः। 'विभाषा श्वेः' इति सूत्रमनुवर्तते। 'ष्यङः संप्रसारणम्' इत्यतः संप्रसारणमिति च, तदाह सन्पर इत्यादिना। नन्वन्तरङ्गत्वात् संप्रसारणात्पूर्वं वृद्ध्यायादेशयोः कृतयोः पश्चात् संप्रसारणे पूर्वरूपे अशीशवदिति स्यात्, अशूशवदिति न स्यात्, इत्यत आह संप्रसारणं तदाश्रयं च कार्यं बलवदिति। इदं वचनं 'लिट्यभ्यासस्य—' इति सूत्रभाष्ये स्थितम्। एवं च अश्वि इ अ त् इत्यत्र

---

ध्रायत् । अविविष्वद्रायत् । अदिदेवद्रायत् । इत्याद्युदाहरिष्यत इत्यर्थः। वृद्धिं बाधित्वेति । 'ण्यल्लोपावियङ्—' इत्यादिवचनाण्णिलोपांशप्रत्याख्यानपक्षेऽपवादत्वाद्वेत्यर्थः। असंभव इति । तथा च अचुचोरदित्येव रूपमिति भावः। ण्याकृतिनिर्देशादिति । चङ्परे णावित्यत्र चङ्परे णित्वे इत्यर्थः। तेन णिद्वये सत्यपि णित्वं चङ्परमस्तीति ह्रस्वदीर्घयोरस्ति संभव इति भावः। एतेन अवीवदद्वीणां परिवादकेनेत्यादौ सन्वद्भावो व्याख्यातस्तत्रापीत्यमेव, पूर्वपक्षसिद्धान्तयोस्तुल्यत्वात् । णौ च । विभाषा श्वेरित्यनुवर्तते। संश्चङोरिति णावित्यस्य विशेषणं 'ह्वः संप्र—'

---

इति वचनात्संप्रसारणं पूर्वरूपम् । अशूशवत् । अलघुत्वान्न दीर्घः । अशिश्वयत् ।

**२५८० स्तम्भुसिवुसहां चङि ।** ( ८—३—११६ ) उपसर्गनिमित्त एषां सस्य षो न स्याच्चङि । अवातस्तम्भत् । पर्यसीषिवत् । न्यसीषहत् । आटिटत् । आशिशत् । बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात्प्रागेव, ओणेरॄदित्करणाल्लिङ्गात् । मा

---

वृद्ध्यायादेशाभ्यां प्रागेव वकारस्य संप्रसारणमुकार इति फलितम् । **पूर्वरूपमिति** । ततश्च शु इत्यस्य द्वित्वे उत्तरखण्डस्य णिचमाश्रित्य वृद्ध्यावादेशयोरुपधाह्रस्वे सन्वत्त्वविषयत्वादभ्यासदीर्घे फलितमाह **अशूशवदिति** । संप्रसारणाभावपक्षे अशिश्वयदित्यत्र अभ्यासदीर्घमाशङ्क्याह **अलघुत्वादिति** । संयोगपरकत्वादिति भावः । अवपूर्वात्स्तम्भेर्ण्यन्तादवष्टम्भयतीत्यादि । 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम् । चङि अवातस्तम्भदित्यत्र षत्वे प्राप्ते **स्तम्भुसिवु** । 'उपसर्गनिमित्तस्य प्रतिषेधः' इति वार्तिकम् । 'न रपरसृपी' त्यतो नेत्यनुवर्तते । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । मूर्धन्य इत्यधिकृतम्, तदाह, **उपसर्गनिमित्त इत्यादि** । स्तम्भुः सौत्रो धातुः । 'षिवु तन्तुसन्ताने' 'षह मर्षणे' । **पर्यसीषिवत्, न्यसीषहदिति** । 'परिनिविभ्यः सेव–' इत्युपसर्गनिमित्तं षत्वं न । अभ्यासनिमित्तं तु षत्वं भवत्येव । **आटिटत् आशिशत् इति** । आट् इ अ त्, आश् इ अ त् इति 'णौ चङि–' इत्युपधाह्रस्वात् प्रागन्तरङ्गत्वात् 'चङि' इति द्वित्वमाशङ्क्याह **बहिरङ्गोऽपीति** । उपधाह्रस्वः चङ्परण्यपेक्षत्वाद् बहिरङ्गः । द्वित्वं तु चङ्मात्रापेक्षत्वादन्तरङ्गम् । अथापि द्वित्वात् प्रागेव उपधाह्रस्व इत्यर्थः । कुत इत्यत आह **ओणेरिति** । 'ओणृ अपनयने' इति धातोः ऋदित्करणम् औणिणदित्यत्र 'नाग्लोपि–' इति उपधाह्रस्वप्रतिषेधार्थम् । यदि तु उपधाह्रस्वात्प्रागेव अन्तरङ्गत्वाद् द्वित्वं स्यात् तदा ओण् इ अ त् इत्यत्र 'अजादेर्द्वितीयस्य' इति णि इत्यस्य णिचा सह द्वित्वे सति पश्चादोकारस्य चङ्परे णौ उपधात्वाभावादेव ह्रस्वस्याप्रसक्तत्वाद् ऋदित्करणं व्यर्थं स्यात् । द्वित्वात्प्रागेव उपधाह्रस्व इत्यभ्युपगमे तु ओण् इ अ त् इत्यस्यामवस्थायां प्राप्तस्य ह्रस्वस्य निषेधार्थमृदित्करणमर्थवत् । अतः बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेवेति विज्ञायत इत्यर्थः । ननु आटिटत् आशिशत् इत्यत्र द्वित्वप्रवृत्त्यनन्तरमुपधाह्रस्वस्याभावेऽपि 'आटश्च' इति वृद्धौ आटिटत् आशि-

---

इत्यतः संप्रारणमनुवर्तत एवेत्याह **सन्परे चङ्पर इति** । **वचनादिति** । इयं च परिभाषा 'लिट्यभ्यासस्योभयेषाम्' इत्यत्र वच्यादीनां ग्रह्यादीनामनुवृत्त्यैवेष्टसिद्धावुभयेषांग्रहणसामर्थ्याल्लभ्यते । अन्यथा वव्रश्चेत्यत्र हलादिःशेषे कृते वस्य संप्रसारणं स्यादित्याहुः । **स्तम्भुसिवु** । स्तम्भुः सौत्रः । षिवु तन्तुसंताने । षह मर्षणे । स्तन्भतेः 'स्तन्भेः' इत्यनेन प्राप्तिरन्ययोस्तु 'परिनिविभ्यः–' इत्यनेनेति विवेकः । **आटिटत्** । **आशिशदिति** । णिचा सह द्वित्वात्सन्वद्भावो नेति तद्विषये विहितो यो 'दीर्घो लघोः' इति दीर्घः स न प्रवर्तते ऋदित्करणाल्लिङ्गादिति । यदि पूर्वं द्विर्वचनं भवेत्तदा णिशब्दस्य द्वित्वे सत्युपधाह्रस्वस्याप्राप्तेस्तत्प्रति-

भवानिदिवत् । एजादावेधवातौ विधानान्न वृद्धिः, मा भवान्प्रेदिवत् । 'नन्द्राः—' (सू० २४४६) इति नदराणां न द्वित्वम् । औन्दिदत् । आड्डिडत् । आर्चिचत् । उब्ज आर्जवे । उपदेशे दकारोपधोऽयम् । 'भुजन्युब्जौ पाण्युपता-

---

शत् इति सिध्यत्येवेति किमनेन ज्ञापनेनेत्यत आह मा भवानिदिधदिति । एध् इ अ त् इति स्थिते पूर्वं द्वित्वप्रवृत्तौ धि इत्यस्य द्वित्वे पश्चादेकारस्य ह्रस्वो न स्यात् । द्वित्वात्प्रागेव उपधाह्रस्वे तु इध् इ अ त् इति स्थिते धि इत्यस्य द्वित्वे माङ्योगादाडभावे इदिधदिति इष्टं सिध्यतीत्यर्थः । ननु मा भवान् प्रेदिधदित्यत्र प्र इदिधदिति स्थिते कृतेऽपि ह्रस्वे एकदेशविकृतन्यायेन एधधातुत्वाद् 'एत्येधत्यूठ्सु' इति वृद्धिः स्यादित्यत आह एजादावेधताविति । अवर्णादेजाद्योरेत्येधत्योरिति व्याख्यातत्वादिति भावः । औन्दिददिति । उन्द् इ अ त् इति स्थिते दि इत्यस्य द्वित्वमिति भावः । आड्डिडदिति । अड्डधातुर्दोपधः ष्टुत्वसंपन्नो डकारः । अड्डि अ त् इति स्थिते ष्टुत्वस्यासिद्धत्वेन दकारात्परस्य डि इत्यस्य द्वित्वमिति भावः । आर्चिचदिति । अर्च् इ अ त् इति स्थिते रेफात् परस्य चि इत्यस्य द्वित्वमिति भावः । उब्ज आर्जव इति । ननु चङि ब्जि इत्यस्य द्वित्वे हलादिशेषे औबिब्जदिति रूपं स्यात् । औब्जिजदित्येव तु इष्यते, तत्राह उपदेशे दकारोपधोऽयमिति । ततश्च 'न न्द्राः—' इति दकारस्य द्वित्वनिषेधाद् जि इत्यस्यैव द्वित्वमिति भावः । तर्हि दकारः कुतो न श्रूयत इत्यत आह भुजन्युब्जाविति । ननु द्वित्वात् प्रागन्तरङ्गत्वाद् दकारस्य बकारादेशे सति 'न न्द्राः—' इति निषेधस्य कथमिह प्रवृत्ति-

---

येधार्थमृदित्करणं व्यर्थं स्यादतस्तदुक्तेऽर्थे ज्ञापकमेव । एजादावेधताविति । 'एत्येधत्यूठ्सु' इति सूत्रे एजाद्योरेत्येधत्योरिति व्याख्यातत्वादिति भावः । न च मा भवान्प्रेदिधदित्यत्र 'णौ चङि—' इति ह्रस्वे कृते नायमेधतिरिति वृद्धेरप्रवृत्तौ किमेधतेरेजादिविशेषणेनेति वाच्यम्, एकदेशविकृतस्यानन्यत्वात् । न चैवमपि 'अजादेर्द्वितीयस्य' इति धिशब्दस्याने धिधिशब्दादेशे सति वस्नसोरिव प्रकृतिप्रत्ययविभागसंमोह इति वाच्यम्, 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इति भाष्ये सिद्धान्तितत्वात् । अन्यथा इहैव प्रेदिधदित्यत्र णिलोपो न स्यात् । जिघांसतीत्यादौ सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यादिति दिक् । उब्ज आर्जव इति । अयमुपध्मानीयोपध इति वार्तिककृतोक्तम् । तस्य 'झलां जश् झशि' इति जश्त्वेन बकारे कृते उब्जिता उब्जितुमिति रूपम् । एतच्चायोगवाहानां शर्षु पाठस्य फलम् । भाष्यकारादयस्तूपध्मानीयोपधपाठे उब्जिजिषतीति रूपं न सिध्येत् । यदि 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्याश्रित्य बकारोत्तरं द्वित्वं क्रियते, यदि वा अस्यानित्यतामाश्रित्य बकारात्पूर्वमेवोपध्मानीयस्य द्वित्वमुभयथापि इष्टरूपासिद्धिः, आद्ये उबिब्जिषति, द्वितीये तूपध्मानीयस्याच्त्वात्तदादेः 'अजादेर्द्वितीयस्य' इति द्वित्वे हलादिःशेषे द्वितीयोपध्मानीयस्य जश्त्वेन बकारे पश्चात्प्रथमस्यापि तथैव बकारे उब्ब्जिषतीत्यापत्तेः । ततश्चेष्टसिद्धये दकारोपधोऽयं स्वीकार्यः । भुजन्युब्जाविति निपातनादुपधादकारस्य बो भवतीति वाक्यं कल्प्यते, तच्च 'स्तोः श्चुना श्चुः' इत्यस्याग्रे । तदय-

पयोः' ( सू० २८७७ ) इति सूत्रे निपाताद्दस्य वः। स चान्तरङ्गोऽपि द्वित्वविषये 'न न्द्राः—' ( सू० २४४६ ) इति निषेधाज्जिशब्दस्य द्वित्वे कृते प्रवर्तते। न तु ततः प्राक्, दकारोच्चारणसामर्थ्यात्। औब्जिजत्। अजादेरित्येव। नेह—

रित्यत आह स चेति। ननु द्रु गतौ द्रावयति चङि द्रु इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः उपधाह्रस्वे 'स्रवति शृणोति—' इत्यभ्यासस्य इत्वे अदिद्रवदिति इष्यते। तन्नोपपद्यते, 'न न्द्राः—' इति दकारस्य द्वित्वनिषेधादित्यत आह अजादेरित्येवेति। 'न न्द्राः—' इत्यत्र अजादेरित्यनुवर्तत एवेत्यर्थः। आदिभूतादच इति व्याख्यातं प्राक्। ततश्च। आदिभूतादचः परा नदरा द्विर्न भवन्तीति फलितम्। नेहेति। प्रकृते आदिभूतादचः परत्वाभावान्न दकारद्वित्वनिषेध इत्यर्थः। अदिद्रपदिति पाठे द्राधातोर्णिचि पुकि द्रापि इत्यस्माद्रूपम्। ननु लावस्थायामडिति पक्षे अचः परत्वमस्त्येवेति चेत् 'नु 'नन्द्राः—' इत्यत्र 'लिटि धातोः—' इत्यतो धातोरित्यनुवर्त्य

मर्थः—श्चुना योगे उद्जेर्दकारस्य वकार इति। 'अभ्युद्गः समुद्गः' इत्यत्र तु उब्जिता उब्जितुमित्यत्रेव चवर्गयोगो नास्तीति न वकारः। दकारोपधे चास्मिन्स्वीकृते 'न न्द्राः—' इति निषेधाज्जिशब्दस्य द्वित्वे ततो वकारे च उब्जिजिषतीति सिध्यति रूपम्। न च 'पूर्वत्रा-सिद्धीयमद्विर्वचने' इति वकारोत्तरं द्विर्वचने सति स्यादेवानिष्टमिति वाच्यम्, द्विर्वचने हि त्रैपादिकं सिद्धं न तु तन्निषेधेऽपि। तथा च निषेधे त्रिपादीस्थस्यासिद्धत्वात् 'न न्द्राः—' इति निषेधः प्रवर्तते। यद्वा तादृशवाक्यमिह न कल्प्यते किं तु 'भुजन्युब्जौ—' इति निपातनेन दस्य ब इति। न चैवं बकारसहितस्य द्वित्वप्रसङ्गः, धातौ दकारोच्चारणसामर्थ्यात्। न चाभ्युद्ग इत्यादावपि वकारश्रवणप्रसङ्गः, अकुत्वविषय एव वकारनिपातनाभ्युपगमात्। यद्वा अभ्युद्ग इत्यादि रूपं द्व्युपसर्गाद्गमेर्डप्रत्यये ज्ञेयम्। उद्जेस्तु घञि अनभिधानात् प्रयोगाभाव इति वदन्ति तदेतद्भाष्यादिमतमभिप्रेत्याह उपदेशे दकारोपध इत्यादि। अजादेरित्येवेति। 'न न्द्राः—' इत्यत्र अजादेरित्यनुवर्तते, तेन आदिभूतादचः परा एव नदरा द्विर्नोच्यन्ते, नान्ये इत्यर्थः। ननु लावस्थायामेव अडिति भाष्यकारोक्तपक्षे अदिद्रवदित्यत्र अजादित्वमस्त्येव, न्याय्यश्च प्रथममट्,परत्वादन्तरङ्गत्वाच्चेति चेत्। अत्राहुः—द्वितीयस्येत्यप्य-त्रानुवर्तते तत्सामर्थ्याच्च नित्यं द्वितीयस्येति तदर्थः। तेन लावस्थायामटि कृतेऽपि धातुसंज्ञा-प्रवृत्तिकाले अजादित्वाभावान्नोक्तदोषः। नित्यं द्वितीयस्यैकाचो ये नदरास्तेषामेव निषेधात्। न चैवं नित्यं द्वितीयस्येति व्याख्यैव इष्टसिद्धावजादेरित्यस्यात्रानुवृत्तिर्मास्त्विति वाच्यम्' इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। अजादेरित्युक्तौ त्वादिभूतादचः परत्वं दकारस्य नेति सिद्धमिष्टम्। न च अजादेरित्युक्तावपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेव, आद्यवयवस्य हल्त्वान्नकारस्य द्वित्वनिषेधाप्रसङ्गादिति वाच्यम्, अजादेरिति कर्मधारयात् पञ्चमीत्युक्तत्वात्। इह च एकदेशे स्वरितत्वं प्रतिज्ञाय अच इत्येवानुवर्त्यताम्। अथवा आदे-रित्यस्याप्यनुवर्तनमस्तु तस्य नावयवपरत्वम्, किंतु पूर्ववर्तिमात्रपरत्वं शब्दाधिकाराश्रयणादिति ज्ञेयम्। नन्वेवमुत्तरार्थतया द्वितीयस्येति ग्रहणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्तव्यमिति

अदिद्रवत्। २५८१ रभेरशब्लिटोः। (७-१-६३) रभेर्नुम्स्यादचि न तु शब्लिटोः। २५८२ लभेश्च। (७-१-६४) अररम्भत्। अललम्भत्। 'हेरचङि' (सू० २५३१) इति सूत्रे अचङि इत्युक्तेः कुत्वं न। अजीहयत्। 'अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्' (सू० २५६६) असस्मरत्। अददरत्। तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः। २५८३ विभाषा वेष्टिचेष्ट्योः। (७-४-९६) अभ्यासस्यात्त्वं वा स्याच्चङ्परे णौ। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्। 'भ्राजभास—' (सू० २५६५) इत्यादिना वोपधाह्रस्वः। अबिभ्रजत्। 'काण्यादीनां वेति वक्तव्यम्' (वा० ४६१३)। ण्यन्ताः कणरणभणश्रणलुपहेठाः

---

धातुसंज्ञाकालिकादादेरचः परा नदराः द्विर्नेति व्याख्यानादित्याहुः। रभेरशब्लिटोः। 'इदितो नुम्धातोः' इत्यतो नुमिति 'रधिजभोरचि' इत्यतः अचीति चानुवर्तते, तदा रभेर्नुमित्यादि। लभेश्च। लभेरपि नुम् स्याद् अचि, न तु शब्लिटोरित्यर्थस्य स्पष्टत्वादनुक्तिः। अररम्भदिति। नुमि कृते संयोगपरत्वेन अकारस्य लघुत्वाभावान्न सन्वत्त्वमिति भावः। 'हि गतौ वृद्धौ च' इत्यस्माच्चङि अजीहयदित्यत्र 'हेरचङि' इति हकारस्य कुत्वं नेत्याह हेरचङीति। 'अत् स्मृदृत्वर—' इति सूत्रं चुरादौ 'प्रथ प्रख्याने' इति धातौ व्याख्यातम्। असस्मरदिति। अत्र 'सन्यतः' इतीत्त्वे प्राप्ते अत्त्वम्। अत एव ज्ञापकादनेकहल्व्यवधानेऽपि लघुपरत्वमित्युक्तं प्राक्। संयोगपरत्वेन लघुत्वाभावान्नाभ्यासदीर्घः। अददरदिति। दृ विदारणे इत्यस्य रूपम्। अत्रापि 'सन्यतः' इत्यस्यापवादः अत्त्वम्। 'दीर्घो लघोः' इति दीर्घमाशङ्क्याह तपरत्वसामर्थ्यादिति। अतत्वरत्। अपप्रथत्। अमम्रदत्। अतस्तरत्। अपस्पशत्। विभाषा वेष्टिचेष्ट्योः। 'अत्र लोपः—' इत्यस्मादभ्यासस्येत्यनुवर्तते। 'अत् स्मृदृत्वर—' इत्यतः अदिति 'सन्वल्लघुनि—' इत्यतः चङ्परे इति। चङ् परो यस्मादिति बहुव्रीहिः, णावित्यार्थिकम्, तदाह अभ्यासस्यात्त्वमिति। अबिभ्रजदिति। उपधाह्रस्वपक्षे लघुपरत्वात् सन्वत्त्वादभ्यासस्य इत्वम्। 'दीर्घो लघोः' इति न, संयोगपरत्वादलघुत्वात्। काण्यादीनां वेति। 'णौ चङ्युपधायाः—' इति ह्रस्व इति शेषः। ण्यन्ताः कणरणेति। 'कण निमीलने, रण शब्दे, भण शब्दे, श्रण दाने, लुप छेदने, हेठ

---

भाष्यं विरुध्येतेति चेत्। मैवम्। यस्मिन्सूत्रे पठितं तत्र मास्त्विति तदाशयात्। न च अजादेरित्येतावत्युक्ते यस्य कस्यचिदेकाचो द्वित्वं स्यादिति वाच्यम्, प्रथमस्यैकाचः पूर्वेणैव सिद्धेः पुनरारम्भो द्वितीयस्य द्वित्वार्थमिति सुवचत्वात्। रभेरशब्लिटोः। 'रधिजभोः—' इत्यतोऽचीति 'इदितः—' इत्यतो नुमिति चानुवर्तते। अचि किम्, आरब्धम्। अशब्लिटोः किम्, रभते, रेभे। लभेश्च। योगविभागः 'आङो यि—' इत्यत्र लभेरेवानुवृत्तिर्यथा स्यादिति। काण्यादीनामिति। कण निमीलने। रण शब्दे। भण शब्दे। श्रण दाने। लुप्लृ छेदने। हिठ[1] विबाधायाम्। पट्।

---

१ धातु पाठे तु 'हेठ' इति दृश्यते।

काण्यादयः षड् भाष्ये उक्ताः। ह्वायिवाणिलोठिलापयश्चत्वारोऽधिका न्यासे। चाणिलोटी इत्यप्यन्यत्र। इत्थं द्वादश। अचीकणत्, अचकाणत्। २५८४ स्वापेश्चङि। ( ६—१—१८ ) ण्यन्तस्य स्वपेश्चङि संप्रसारणं स्यात्। असूषुपत्। २५८५ शाच्छासाह्वाव्यावेपां युक्। ( ७—३—३७ ) णौ परे। पुकोऽपवादः।

---

विबाधायाम् इति षड् धातवो ण्यन्ताः काण्यादयो भाष्ये पठिता इत्यर्थः। ह्वायीति। 'ह्वेञ् स्पर्धायां शब्दे च' आत्वे युकि च निर्देशः, 'वण शब्दे' दन्त्योष्ठ्यादिः, 'लुट प्रतीघाते' टवर्गद्वितीयोपधः' 'लप व्यक्तायां वाचि' इति चत्वारो ण्यन्ता भाष्योक्तेभ्योऽधिका न्यासग्रन्थे पठिता इत्यर्थः। चाणिलोटी इति। 'चण दाने' तालव्यादिः। 'लुट स्तेये' टवर्गप्रथमान्तो भ्वादिः। चुरादौ भाषार्थकोऽपि। एतावपि ण्यन्तौ द्वौ भाष्यन्यासग्रन्थाभ्यामन्यत्र क्वचिद् ग्रन्थे पठितौ इत्यर्थः। इत्थं द्वादशेति। अनेन मतभेदेन काण्यादयो द्वादशेत्यर्थः। अचीकणदिति। उपधाह्रस्वाभावपक्षे रूपम्। अरीरणत्, अरीराणत्। अवीभणत्, अबभाणत्। अशिश्रणत्, अशश्राणत्। अलूलुपत्, अलुलोपत्। अजीहिठत्, अजिहेठत्। अजूहवत्, अजुहावत्। अवीवणत्, अववाणत्। अलूलुठत् अलुलोठद्। लीलपत्, अललापत्। अचीचणत्, अचचाणत्। अलूलुटत् अलुलोटत्। स्वापेश्चङि संप्रसारणमिति। ष्यङः संप्रसारणमित्यतस्तदनुवृत्तेरिति भावः। असूषुपदिति। 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात्कृते संप्रसारणे द्वित्वं पूर्वरूपं सन्वत्त्वदीर्घौ षत्वमिति भावः। शाच्छासा। शो तनूकरण, छो छेदने, षो अन्तकर्मणि, ह्वेञ् स्पर्धायां शब्दे च, व्येञ् संवरणे, एषां कृतात्वनिर्देशः। 'वेञ् तन्तुसंताने' 'पा पाने' भ्वादिः। एषां द्वन्द्वात् षष्ठीबहुवचनम्। णौ परे इति। शेषपूरणमिदम्। आदन्तलक्षणपुकोऽपवादः। युकि ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तागमः। अत्र 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्' इति वचनात्

---

ह्वेञ् स्पर्धायां शब्दे च। वण शब्दे। लुट प्रतिघाते। लुप्लृ छेदने। लोपीति णिजन्तनिर्देशः। लापयति इति पाठान्तरे लप व्यक्तायां वाचि। केचित्तु लपहेठ इति पठन्ति। न्यासे चत्वारः। श्रण दाणे। लुठ स्तेये। भ्वादिः। चुरादौ दण्डकपाठे भाषार्थकोऽपि। अरीरणत्, अरराणत्। अवीभणत्, अबभाणत्। अशिश्रणत्, अशश्राणत्। अलूलुपत्, अलुलोपत्। अजीहिठत्, अजिहेठत्। स्वापेश्चङि। चङि किम्, स्वापयति। असूषुपदिति। इह संप्रसारणोत्तरं द्वित्वम्। शाच्छासा। शो तनूकरणे। छो छेदने। षोऽन्तकर्मणि। ह्वेञ् स्पर्धायाम्। व्येञ् संवरणे। वेञ् तन्तुसंताने। पा पाने। 'लुग्विकरणालुग्विकरण—' इति परिभाषया 'पा रक्षणे' इति नेह गृह्यते। तस्य तु पालयतीति रूपमनुपदं वक्ष्यति। शाययति अशीशयत् छाययति। अचिच्छयत्। साययति। असीषयत्। ह्वाययति अजूहवत्। व्याययति। अविव्ययत्। वाययति। अवीवयत्। पाययति। अपीप्यत्। इह शाच्छासादीनां कृतात्वानां निर्देशः पुकः प्राप्तिं ध्वनयितुम्। तत्प्रयोजनं त्वस्मिन्

शाययति । छाययति । साययति । ह्वाययति । व्याययति २५८६ । ह्वः संप्रसारणम् । ( ६—६—३२ ) सन्वरे चङ्परे च णौ ह्वः संप्रसारणं स्यात् । अजूहवत्, अजुहावत् । २५८७ लोपः पिबतेरीच्चाभ्यासस्य । ( ७—४—४ ) पिबतेरुपधाया लोपः स्याद् अभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । 'अर्तिह्री—' ( सू० २५७० ) इति पुक् । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । स्थापयति । २५८८ तिष्ठतेरित् । ( ७—४—५ )

'पा रक्षणे' इति न गृह्यते । तस्य तु पालयतीति रूपमनुपदमेव वक्ष्यति । शाययतीति । लुङि अशीशयत् । छाययतीति । अचिच्छयत् । साययतीति । असीषयत् । ह्वाययतीति । लुङि तु विशेषो वक्ष्यते व्याययतीति । अविव्ययत् । वाययति । अवीवयत् । पाययति । लुङि तु विशेषो वक्ष्यते । ह्वः संप्रसारणम् । ह्वेञः कृतात्वस्य ह्व इति षष्ठी । 'णौ च संश्चङोः' इत्यनुवृत्तिमभिप्रेत्याह सन्पर इत्यादि । अजूहवदिति । ह्वा इ अ त् इति स्थिते 'संप्रसारणं तदाश्रयं च कार्यं बलवद्' इति वचनात् कृते संप्रसारणे पूर्वरूपे च हु इत्यस्य द्वित्वे उत्तरखण्डस्य वृद्ध्यावादेशयोः कृतयोरुपधाह्रस्वे सन्वत्त्वदीर्घाविति भावः । अत्र कृते संप्रसारणे पूर्वरूपे च ह्वारूपाभावान्न युक् । पाधातोर्णौ युगागमे पायि इत्यस्माल्लुङि चङि द्वित्वादौ अपीपय् अ त् इति स्थिते लोपः पिबतेः । चङ्परे णाविति । 'णौ चङ्युपधायाः—' इत्यतस्तदनुवृत्तेरिति भावः । अपीप्यदिति । 'नानर्थकेऽलोऽन्त्यविधिः—' इत्यस्य अनभ्यासविकार इति निषेधादभ्यासान्त्यस्य ईत्वम् । इह उपधालोपे कृते अग्लोपित्वादलघूपधत्वात् सन्वत्त्वदीर्घयोरप्राप्तावीत्त्वविधिः । अर्तिह्री इति पुगिति । क्रमेणोदाह्रियते इति शेषः । अर्पयतीति । ऋधातोरुदाहरणम् । वृद्धिं बाधित्वा नित्यत्वात् पुक्, गुणः । ह्रेपयतीति । 'ह्री लज्जायाम्' इत्यस्य रूपम् । व्लेपयतीति । व्ली विशरणे इत्यस्य रूपम् । रेपयतीति । री क्षये इत्यस्योदाहरणम् । 'क्नूयी शब्दे' इत्यस्य क्नोपयतीत्युदाहरिष्यन्नाह यलोप इति । क्नूयीधातोर्णौ पुकि 'लोपो व्योः—' इति यलोप इत्यर्थः । ततः क्नूप् इ इति स्थिते अलघूपधत्वेऽपि पुगन्तत्वाद् गुणः । क्ष्मापयतीति । 'क्ष्मायी विधूनने' अस्माण्णौ पुकि यलोपः । आदन्तस्योदाहरति स्थापयतीति । लुङि चङि अतिष्ठप् अ त् स्थिते तिष्ठतेरित् । 'णौ चङ्युपधायाः—'इत्यनु-

प्रकरणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः । तेन व्यापयति, क्नापयतीत्यादि सिद्धम् । ह्वः संप्र । 'णौ च संश्चङोः' इति वर्तते, तदाह सन्पर इत्यादि । अजूहवत् अजुहावदिति । 'काण्यादीनां वा—' इति ह्रस्वविकल्पः । अपीप्यदिति । उपधालोपस्य द्वित्वे कर्तव्ये प्रतिषेधात् कृते लोपे स्थानिवद्भावाद्वा पायशब्दस्य द्वित्वे हलादिः शेषे ईकारः । स च अनभ्यासविकार इति निषेधादन्त्यस्यादेशः । इहाग्लोपित्वादलघूपधत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्तावित्वं विधीयते । व्लेपयतीत्यादि । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उन्दे च । क्ष्मायी विधूनने । तिष्ठतेरिति । तकारो मन्दप्रयोजनः । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । अता-

उपधाया इदादेशः स्याच्चङ्परे णौ । अतितिप्रिपत् । २५८६ जिघ्रतेर्वा । ( ७—४—६ ) अजिघ्रिपत्, अजिघ्रपत् । 'उर्ऋत्' ( सू० २५६७ )। अचीकृतत्, अचिकीर्तत् । अवीवृतत्, अववर्तत् । अमीमृजत्, अममार्जत् । 'पातेर्णौ लुग्वक्तव्यः' ( वा० ४५२० )। पुकोऽपवादः । पालयति । २५९० वो विधूनने जुक् । ( ७—३—३८ ) वातेर्जुक्स्याण्णौ कम्पेऽर्थे । वाजयति । कम्पे किम्—केशान्वापयति । 'विभाषा लीयतेः' ( सू० २५०९ )। २५९१ लीलोर्नुग्लु-

---

वर्तते, तदाह उपधाया इति । जिघ्रतेर्वा । घ्रावातोरुपधाया इद्वा स्याच्चङ्परे णावित्यर्थः । अजिघ्रप् अत् इति स्थिते उपधाया इत्त्वविकल्पः । उर्ऋदिति । धातोरुपधाया ऋकारस्य ऋद्वा चङ्परे णाविति व्याख्यातं चुरादौ । अचीकृतदिति । कृत् इ अ त् इति स्थिते ऋत्त्वपक्षे कृत इत्यस्य द्वित्वे उरदत्त्वे हलादिशेषे अभ्यासचुत्वे सन्वत्त्वाद् इत्त्वे तस्य दीर्घे रूपम् । अचिकीर्तदिति । कृत इ अ त् इति स्थिते 'उर्ऋत्' इत्युपधाया ऋत्त्वाभावपक्षे उपधायाश्चेति इत्त्वे रपरत्वे किर्त इत्यस्य द्वित्वे उत्तरखण्डे उपधायां चेति दीर्घे रूपम् । अवीवृतदिति । 'वृतु वर्तने' । णिचि लघूपधगुणं बाधित्वा उर्ऋत् । चङि वृत् इत्यस्य द्वित्वे उरदत्त्वे सन्वत्त्वाद् इत्त्वं दीर्घश्चेति भावः । अववर्तदिति । ऋत्त्वाभावपक्षे वृत् इत्यस्य द्वित्वे उरदत्त्वे उत्तरखण्डस्य लघूपधगुणे रूपम् । लघुपरकत्वाभावान्न सन्वत्त्वदीर्घौ । अमीमृजदिति । उपधाया ऋत्वपक्षे रूपम् । अममार्जदिति । उपधाया ऋत्त्वाभावपक्षे द्वित्वे उरदत्वे उत्तरखण्डे 'मृजेर्वृद्धिः' इति वृद्धौ रपरत्वे रूपम् । लघुपरत्वाभावान्न सन्वत्वम् । पातेर्णौ लुगिति । लुगागम इत्यर्थः । पुकोऽपवाद इति । आदन्तलक्षणपुकोऽपवाद इत्यर्थः । यद्यपि 'पाल रक्षणे' इति धातोरेव सिद्धम्, तथापि पुको निवृत्तिः फलम् । वो विधूनने । 'ओ वै शोषणे' इति धातोः कृतात्वस्य व इति षष्ठ्यन्तम् । 'अर्तिह्री—' इत्यतो णावित्यनुवर्तते, तदाह वातेरित्यादि । पुकोऽपवादो जुक् । केशान्वापयतीति । सुगन्धीकरोतीत्यर्थः । अत्र वैधातोः पुगेव । वावातोस्त्विह न ग्रहणम्, लुग्विकरणत्वात् । केचित्तु वातेरेवात्र ग्रहणम्, नतु वेञः, नापि वै इत्यस्य, लाक्षणिकत्वात् सानुबन्धकत्वाच्चेत्याहुः ।

---

स्थपत् । लटि तास्थापयतीति । 'उर्ऋत्' । चुरादौ व्याख्यातम् । अचिकीर्तदिति । ऋदादेशाभावपक्षे 'उपधायाश्च' इतीत्वे रपरत्वम् 'उपधायां च' इति दीर्घः । पुकोऽपवाद इति । आदन्तत्वात्पुकः प्राप्तिः । एवं च लुगागमस्य पुङ्निवृत्तिरेव फलम् । पालयतीति रूपस्य पाल रक्षणे इति धातुनापि सिद्धेरिति भावः । वो विधू । लुग्विकरणाऽलुग्विकरणपरिभाषया ओवै शोषण इत्यस्यैव ग्रहणम्, न तु वा गतिगन्धनयोरित्यस्य । लक्षणप्रतिपदोक्तपरिभाषा त्वस्मिन्प्रकरणे न प्रवर्तते इत्युक्तं प्राक् । ओवै शोषणे इत्यस्य रूपमिति वदन् वामनोऽप्यत्रानुकूलः । वज गताविति धातुना वाजयतीति रूपे सिद्धे जुगागमस्य पुङ्निवृत्तिरेवेहापि फलम् । वातेरिति । वायतेरिति वक्तुं युक्तम् । आत्वविधायकसूत्रं स्मारयति विभाषा लीयतेरिति । लीयतेरिति यका निर्देशो न तु श्यना । अन्यथा विभाषा लीङ

कावन्यतरस्यां स्नेहनिपातने । ( ७-३-३९ ) लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ वा स्तो णौ स्नेहद्रवे । विलीनयति, विलाययति । विलालयति, विलापयति वा घृतम् । ली ई इति ईकारप्रश्लेषादात्त्वपक्षे नुग्न । स्नेहद्रवे किम्-लोहं विलापयति । 'प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम्' ( वा० ३४८३ ) २५६२ लियः संमाननशालिनीकरणयोश्च । ( १-३-७० )

---

आत्त्वविधायकसूत्रं स्मारयति विभाषा लीयतेरिति लीलीङोरात्त्वं वा स्यादेज्विषये ल्यपि च इति व्याख्यातं प्राक् श्यन्विकरणे । तत्र 'लीयतेः' इति यका निर्देशः, न तु श्यना । तेन 'ली श्लेषणे' इति श्नाविकरणस्य 'लीङ् श्लेषणे' इति श्यन्विकरणस्य च ग्रहणमिति च प्रागुक्तं न विस्मर्तव्यम् । लीलोः । ली ला इत्यनयोः षष्ठीद्विवचनम् । णाविति । 'अर्तिह्री-' इत्यतस्तदनुवृत्तेरिति भावः । स्नेहस्य तैलस्य निपातनं द्रावणं स्नेहनिपातनम्' तदाह स्नेहद्रवे इति । आत्त्वाभावपक्षे आह विलीनयतीति । लीलीङोरीकारान्तयोर्नुकि रूपम् । द्रवीकरोतीत्यर्थः । लीलीङोरात्त्वनुगभावपक्षे आह विलाययतीति । लाधातोर्लुगागमे आह विलालयतीति । अत्र लातेरादादिकस्य कृतात्त्वलीयतेश्च ग्रहणम्, व्याख्यानात् विलापयतीति । लुगागमाभावे रूपम् । ननु कृतात्त्वस्य लीधातोरपि एकदेशविकृतन्यायेन लीत्वान्नुक् स्यादित्यत आह ली ई इति । लोहं विलापयतीति । नुग्लुकोरभावादात्त्वपक्षे पुक् । आत्त्वाभावे तु वृद्ध्यायादेशाविति भावः । प्रलम्भनाभिभवेति । प्रलम्भनं वञ्चना । अभिभवः तिरस्कारः । पूजा प्रसिद्धा । एष्वर्थेषु लीलीङोः एज्विषये नित्यमात्त्वं वक्तव्यमित्यर्थः । लियः संमानन । लिय इति लीलीङोर्ग्रहणम् । 'अनुदात्तङितः-' इत्यत आत्मनेपद-

---

इत्येवावक्ष्यत् । तेन लीलीङोरुभयोरप्यात्वं भवति । लीलोः । लीङ् श्लेषणे दिवादिः । ली श्लेषणे क्र्यादिः । लाग्रहणेन ला आदाने अदादिः कृतात्वौ लीलीङौ च त्रयोऽपि गृह्यन्ते । लीयतेरिति औचित्यादिहापि यका निर्देश इत्युभयोरपि ग्रहणम् । न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्' इति परिभाषया सूत्रेऽपि लीङो न ग्रहणमिति वाच्यम्, इयं हि परिभाषा 'वामदेवाड् ड्यड्ड्यौ' इत्यत्र डित्वेन ज्ञापिता । ज्ञापनं च उत्सर्गतः सजातीयापेक्षमिति प्रत्ययग्रहणविषयत्वमस्याः कल्प्यते । यथा सदव्ययतव्यसमानाधिकरणेनेत्यत्र तव्यस्यैव ग्रहणं न तु तव्यतः, अत एव 'जॄव्रश्च्योः क्त्वि' इति सूत्रे जॄणातिजीर्यत्योरुभयोर्ग्रहणमिति । न्यासकृतोक्तम् । अतोऽत्र लीलीङोर्ग्रहणमिति सम्यगेव । न चैवं 'दिव औत्' इत्यत्र निरनुबन्धपरिभाषया दिविति प्रातिपदिकस्यैव ग्रहणं न तु धातोरिति ग्रन्थः कथं संगच्छत इति वाच्यम्, उत्सर्गतः प्रत्ययग्रहणविषयत्वेन क्वचिदन्यत्रापि प्रवृत्तौ बाधकाभावादिति वदन्ति । विलीनयतीति । लीलीङोरिकारान्तयोर्नुकि रूपम् विलाययतीति । नुगभावपक्षे तयोरेव रूपम् । विलालयतीति । लातेः कृतात्वयोर्लीलीङोश्च लुकि रूपम् विलापयतीति । लुगभावपक्षे आदन्तानां तेषामेव रूपम् । लोहं विलापयतीति । नुग्लुकोरभावादात्वपक्षे पुक् । आत्वाभावे तु वृद्ध्यायादेशौ । प्रलम्भनेति । प्रलम्भनं वञ्चनम् । अशिति किम्, लीयते । लिनाति । लियः संमानन ।

लीङ्लियोर्ण्यन्तयोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः प्रलम्भने चार्थे । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । अभिभवतीत्यर्थः । बालमुल्लापयते वञ्चयतीत्यर्थः । **२५९३ बिभेतेर्हेतुभये** । ( ६-१-५६ ) बिभेतेरेच आत्वं वा स्यात्प्रयोजकाद्भयं चेत् । **२५९४ भीस्म्योर्हेतुभये** । ( १-३-६८ ) आभ्यां ण्यन्ताभ्यामात्मनेपदं स्याद्धेतोश्चेद्भयस्मयौ । सूत्रे भयग्रहणं धात्वर्थोपलक्षणम् । मुण्डो भापयते । **२५९५ भियो हेतुभये पुक्** । (७-३-४०) भी ई इति ईकारः प्रश्लिष्यते । ईकारान्तस्य भियः पुक्स्याण्णौ हेतुभये । भीषयते । **२५९६ नित्यं स्मयतेः** । ( ६-४-५७ ) स्मयतेरेचो नित्यमात्वं स्याण्णौ हेतोः स्मये । जटिलो विस्मापयते । हेतोश्चेद्भयस्मयावित्युक्तेर्नेह—कुञ्चिकयैनं भाययति, विस्माययति । कथं तर्हि 'विस्माप-

---

मिति 'णेरणौ'इत्यतो णेरिति चानुवर्तते । 'णिचश्च' इति सिद्धे अकर्त्रभिप्रयार्थमिदम् । संमाननं पूजालाभः । शालिनीकरणम् अभिभवः चकाराद् 'गृधिवञ्च्योः–' इति पूर्वसूत्रात्प्रलम्भनग्रहणं समुच्चीयते, तदाह **लीङ्लियोरित्यादिना** । **बिभेतेर्हेतुभये** । 'आदेच उपदेशे–' इत्यत एच इति आदिति चानुवर्तते । 'विभाषा लीयतेः' इत्यतो विभाषेति, 'चिस्फुरोः–' इत्यतो णाविति च । हेतुभयं प्रयोजकाद्भयम् । तदाह **बिभेतेरेच इत्यादिना** । **भीस्म्योर्हेतुभये** । 'अनुदात्तङितः–' इत्यत आत्मनेपदमिति 'णेरणौ–' इत्यतो णेरिति चानुवर्तते । हेतुः प्रयोजकः, तदाह **आभ्यां ण्यन्ताभ्यामित्यादि** । अकर्त्रभिप्रायार्थमिदम् । ननु हेतोश्चेद् भयस्मयावित्यनुपपन्नम्, सूत्रे स्मयग्रहणाभावादित्यत आह **सूत्रे भयेति** । सूत्रे भयग्रहणं स्मिङ्धात्वर्थस्य स्मयस्याप्युपलक्षणमित्यर्थः । **मुण्डो भापयते इति** । अत्र आत्वं पुक् आत्मनेपदं च । भिय आत्वाभावपक्षे विशेषमाह **भियो हेतुभये पुक्** । **भी ई इति** । द्वयोः सवर्णदीर्घे भीशब्दात् षष्ठीति भावः । इदं च स्थानिवत्सूत्रे भाष्ये स्पष्टम् । ईकारप्रश्लेषफलमाह **ईकारान्तस्येति** । तेन आत्वपक्षे न पुगिति फलितम् । **णाविति** । 'अर्तिह्री–' इत्यतस्तदनुवृत्तेरिति भावः । **नित्यं स्मयतेः** । 'आदेच उपदेशे–' इत्यत एच इति आदिति चानुवर्तते । 'चिस्फुरोः–' इत्यतो णाविति 'बिभेतेर्हेतुभये' इत्यतो हेतुभये इति च । तत्र भयग्रहणं स्मयस्याप्युपलक्षणम्, अत्र तु स्मय एव विवक्षितः, स्मयतेर्भीत्यर्थकत्वासंभवात्, तदाह **स्मयतेरेच इत्यादि** । 'विभाषा लीयतेः' इत्यतो विभाषानुवृत्तिनिवृत्तये नित्यग्रहणम् । अथ 'बिभेतेर्हेतुभये' इति 'नित्यं स्मयतेः' इति च आत्वविधौ 'भीस्म्योर्हेतुभये' इति आत्मनेपदविधौ च हेतुग्रहणस्य प्रयोजनमाह **हेतोश्चेद् भयस्मयावित्युक्तेर्नेहेति** । **कुञ्चिकयैनमिति** । केशवन्धविशेषः कुञ्चिका । तस्याश्च करणतया

---

चात्प्रलम्भने । **बिभेतेर्हेतुभये** । हेतुः प्रयोजकः । इह 'आदेच उपदेशे–' इत्यत एच आदित्यनुवर्तते 'विभाषा लीयतेः' इत्यतो विभाषा 'चिस्फुरो–' इत्यतो णाविति च तदाह **बिभेतेरेच इत्यादि** । **भीस्म्योः** । व्यत्ययेन षष्ठीत्याह **आभ्यामिति** । 'णेरणौ–' इत्यतो णेरित्यनुवृत्तेर्ण्यन्ताभ्यामेव विविरकर्त्रभिप्रायार्थः ।

यन्विस्मितमात्मवृत्तौ' इति । 'मनुष्यवाचा' इति करणादेव हि तत्र स्मयः । अन्यथा शानजपि स्यात् । सत्यम् । विस्माययन् इत्येव पाठ इति सांप्रदायिकाः । यद्वा मनुष्यवाक्प्रयोज्यकर्त्री विस्मापयते, तया सिंहो विस्मापयन्निति ण्यन्ताण्णौ शता इति व्याख्येयम् । २५९७ स्फायो वः । ( ७—३—४१ ) णौ । स्फावयति । २५९८ शदेरगतौ तः । ( ७—३—४२ ) शदेर्णौ तोऽन्तादेशः स्यान्न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः । गमयतीत्यर्थः । २५९९ रुहः

---

प्रयोजककर्तृत्वाभावाद् आत्वं पुक् च नेति भावः । आक्षिपति कथमिति । रघुवंशकाव्ये

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम् ।
विस्मापयन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥

इति श्लोके विस्मापयन्निति कथमित्याक्षेपः । प्रयोजकाद्भयाभावेन आत्वपुगनुपपत्तेरिति भावः । ननु मनुष्यवागेव तत्र प्रयोजिकेत्यत आह मनुष्येति । मनुष्यवाचेति तृतीयान्तगम्यकरणाद् मनुष्यवागात्मकादेव हि तत्र स्मयः । ननु करणभूतापि मनुष्यवाक् प्रयोजिका कुतो नेत्यत आह अन्यथेति । मनुष्यवाचः स्मयप्रयोजकत्वमभ्युपगम्य आत्वाश्रयणे 'भीस्म्योर्हेतुभये' इत्यात्मनेपदमपि स्यादित्यर्थः । स्मयोऽत्र प्रयोजकमूलको नेति युक्तमेव । किन्त्वात्वपुगाक्षेपो न युज्यते इत्यर्धाङ्गीकारेण परिहरति सत्यमिति । विस्माययन्नित्येवेति । णौ आयादेशे स्मायि इत्यस्माल्लटः शतरि शपि णेर्गुणे अयादेशे विस्माययन्नित्येव कालिदासो महाकविः प्रायुङ्क्त । विस्मापयन्निति पकारपाठस्तु लेखकप्रमादकृत इति भावः । यद्वेति । राजा दिलीपो विस्मयते । तं सिंहोच्चारिता मनुष्यवाक् प्रयोजयति विस्मापयते मनुष्यवाग् राजानम् । अत्र मनुष्यवाक् प्रयोजककर्त्री । राजा तु प्रयोज्यकर्तेति स्थितिः । अत्र स्मयस्य प्रयोजककर्तृभूतमनुष्यवाङ्मूलकत्वादात्वे पुक् । मूले प्रयोज्यकर्त्रीत्येव पाठः । प्रयोजककर्त्रीत्यर्थः, प्रयोज्यः कर्ता यस्याः सा प्रयोज्यकर्त्री इति बहुव्रीह्याश्रयणात् । प्रयोजककर्त्रीत्येव पाठः सुगमः । तां विस्मापयमानां प्रयोजककर्त्रीं मनुष्यवाचं प्रयोजयति सिंहो विस्मापयति । स्मापि इति ण्यन्ताद् णौ प्रथमणेर्लोपे स्मापि इत्यस्मात् शतृप्रत्यये शपि णेर्गुणे अयादेशे विस्मापयन्निति भवतीत्यभिप्रेत्याह तया सिंह इति । प्रयोजककर्तरि तृतीया । आत्मनेपदं भीस्मिप्रकृतिकण्यन्तादेव, नतु ण्यन्तप्रकृतिकण्यन्तादिति भावः । स्फायो वः । णाविति शेषपूरणम् । 'अर्तिह्री-' इत्यतस्तदनुवृत्तेरिति भावः । शदेरगतौ तः । 'अर्तिह्री—' इत्यतो णावित्यनुवृत्तिं मत्वाह शदेर्णाविति । तोऽन्तादेश इति । तकार इत्यर्थः अकार उच्चारणार्थः । रुहः पो ।

---

ईकारान्तस्येति । तेन आत्वपक्षे भाययते इत्येव न त्वत्र पुगित्यर्थः । करणादेव हीति । तथा च करणात् स्मये आत्वाभावेन पुग्दुर्लभ इति भावः । प्रयोज्यकर्त्रीति । यद्यपि प्रथमणिजर्थं प्रति मनुष्यवागेव प्रयोजिका अतएव आत्वं प्रवृत्तम्, तथापि द्वितीयणिजर्थाभिप्रायेणेदमुक्तमिति मनोरमायाम् । केचित्तु प्रयोज्यस्य कर्त्री प्रयोजककर्त्रीति यावदिति प्रथमणिजभिप्रायेणेवेदं सुयोजमित्याहुः ण्यन्ताण्णाविति । राजा विस्मयते तं मनुष्यवाग्विस्मापयते तया सिंहो विस्मापयन्नित्यर्थः । एवं

पोऽन्यतरस्याम् । (७—३—४३) णौ । रोपयति, रोहयति । २६०० क्रीङ्जीनां णौ (६-१-४८) एषामेच आत्वं स्याण्णौ । क्रापयति । जापयति । अध्यापयति । २६०१ णौ च संश्चङोः । (२-४-५१) सन्परे चङ्परे च णौ इङो गाङ् वा स्यात् । अध्यजीगपत् । अध्यापिपत् । २६०२ सिध्यतेरपारलौकिके । ( ६-१-४९ ) ऐहलौकिकेऽर्थे विद्यमानस्य सिध्यतेरेच आत्वं स्याण्णौ । अन्नं साधयति । निष्पादयतीत्यर्थः । अपारलौकिके किम्-तापसः सिध्यति, तत्त्वं निश्चिनोति । तं प्रेरयति सेधयति तापसं तपः । २६०३ प्रजने वीयतेः । ( ६—१—५५ ) अस्यैच आत्वं वा स्याण्णौ प्रजनेऽर्थे । वापयति,

---

णाविति । शेषपूरणम् । क्रीङ्जीनां णौ । 'डु क्रीञ् द्रव्यविनिमये, इङ् अध्ययने, जि जये' एषां द्वन्द्वः । एच आत्वमिति । 'आदेच उपदेश-' इत्यतस्तदनुवृत्तेरिति भावः । क्रापयति । जापयतीति । आत्वे पुक् । लुङि अचिक्रपत्, अजीजपत् । अध्यापयतीति । इङ आत्वे पुकि रूपम् । अधि इ इ अ त् इति स्थिते । णौ च संश्चङोः । विषयसप्तमीयमित्याकरे स्पष्टम् । णौ विवक्षिते इति लभ्यते । 'इङश्च' इत्यत इङ इति 'गाङ् लिटि' इत्यतो गाङिति 'विभाषा लुङ्लृङोः' इत्यतो विभाषेति चानुवर्तते, तदाह सन्परे चङ्परे चेत्यादि । सन्परे चङ्परे च णौ विवक्षिति इत्यर्थः । अध्यजीगपदिति । णौ इङो गाङादेशे पुकि उपधाह्रस्वे अधि गप् इ अ त् स्थिते गप् इत्यस्य द्वित्वे हलादिशेषे अभ्यासह्रस्वे सन्वत्त्वादित्वे दीर्घे अभ्यासचुत्वे रूपम् । न च द्वित्वे कार्ये 'णावजादेशो न' इति द्वित्वात् प्राग् गाङादेशस्य निषेधः शङ्क्य, अभ्यासोत्तरखण्डे अवर्णसत्त्व एव तन्निषेधप्रवृत्तेरुक्तत्वात् । द्वित्वे कार्ये गाङादेशस्य निषेधे सति गाङः पूर्वम् 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वे सति प्रक्रियायां परिनिष्ठिते वा धातोरुत्तरखण्डे अवर्णाभावादिति भावः अध्यापिपदिति । गाङभावे 'क्रीङ्जीनां णौ' इत्यात्वे पुकि अधि आ प् इ अ त् इति स्थिते, पि इत्यस्य द्वित्वे रूपमिति भावः । सिध्यतेरपारलौकिके । 'आदेच उपदेशे-' इत्यस्मादादेच इति 'क्रीङ्जीनाम्-' इत्यस्माण्णाविति चानुवर्तते, तदाह ऐहलौकिके इत्यादि । अन्नमिति । तन्निष्पादनं तृप्त्यर्थत्वादैहलौकिकमिति भावः । तत्त्वमिति । आत्मस्वरूपमित्यर्थः । सेधयति तापसं तप इति । तत्त्वं निश्चाययतीत्यर्थः । आत्मतत्त्वनिश्चय आमुष्मिकफलक इति भावः । प्रजने वीयतेः । 'आदेचे उपदेशे-' इत्यस्मादादेच इति 'चिस्फुरोः-' इत्यतो णाविति 'विभाषा लीयतेः'

---

च प्रथमणिचि हेतुर्मनुष्यवागिति आत्वपुकावुपपन्नौ । क्रीङ्जीनाम् । डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । जि जये । अचिक्रपत् । अजीजपत् । अध्यजीगपदिति । नात्र णिज्निमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः, यत्राभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात् । इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततश्चङ्परनिमित्तो गाङ् ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभं कीर्तयतिसाम्यादिति नोक्तशङ्कावकाशः । अध्यापिपदिति । पि-

वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । 'ऊदुपधाया गोहः' ( सू० २३६४ )। गूहयति । २६०४ दोषो णौ (६-४-९०) दुष इति सुवचम् । दुष्यतेरुपधाया ऊत्स्यात् । दूषयति । २६०५ वा चित्तविरागे । ( ६-४-९१ ) विरागोऽप्रीतता । चित्तं दूषयति, दोषयति वा कामः । 'मितां ह्रस्वः' ( सू० २५६८ )। भ्वादौ चुरादौ च मित उक्ताः । घटयति । 'जनीजॄष्-' जनयति । जॄणातेस्तु जारयति । 'रञ्जेर्णौ मृगरमणे

---

इत्यतो विभाषेति चानुवर्तते, तदाह अस्यैच इत्यादि । वीयतेरिति न श्यना निर्देशः, 'वी गतिप्रजनस्थानार्जनोपार्जनेषु' इत्यस्य लुग्विकरणस्यत्वात् । किंतु यका निर्देशोऽयम् । तेन व्येञोऽपि ग्रहणम्, तस्यापि संप्रसारणे वीधातुना तुल्यत्वादिति केचित् । वस्तुतस्तु व्येञो न ग्रहणम् । तस्य प्रजनार्थकत्वाभावात् । तस्य णौ 'शाच्छासा—' इति पुगपवादयुग्विधानेन व्याययतीति रूपे विशेषाभावाच्चेति शब्देन्दुशेखरे प्रपञ्चितम् । गर्भं ग्राहयतीति । पुरोवातकाले गावो गर्भं गृह्णन्तीति प्रसिद्धः । अथ 'गुहूसंवरणे' इत्यस्य गुणनिमित्ते अजादौ प्रत्यये परे उपधाया ऊत्वविधिं स्मारयति ऊदुपधाया गोह इति । गूहयतीति लघूपध-गुणापवाद ऊत्वमिति भावः । दोषो णौ । ऊदुपधाया इत्यनुवर्तते । 'दुष वैकृत्ये' इति श्यन्विकरणः । तस्य कृतलघूपधगुणस्य निर्देशः । ततश्च । गुणविषयकमेवेदम् । दुष्यतेरुप-धाया ऊत्स्यादिति । णाविति शेषः । दूषयतीति । लघूपधगुणापवाद ऊत् । दुषो णावित्येव सुवचम् । वा चित्तविरागे । ऊदुपधाया इति, दोषो णाविति चानुवर्तते । चित्तविरागे दुष उपधाया ऊद्वा स्याद् णाविति फलितम् । विरागपदस्य विवरणं अप्रीततेति । इच्छाविरह इत्यर्थः । चित्तमिति । चित्तं दुष्यति स्नानसंध्यावन्दनादिनित्यकर्मसु विरक्तं भवति । तत्प्रयोजयति काम इत्यर्थः । मितां ह्रस्व इति । णौ मितामुपधाया ह्रस्व इति प्राग्व्याख्यात-मपि स्मारयति । जनीजॄषिति । इदमपि व्याख्यातं स्मार्यते । जॄणातेस्त्विति । श्नाविकरणस्य

---

शब्दस्यात्र द्वित्वम् सिध्यतेरपार । श्यना निर्देशाज्जौवादिकस्याग्रहणम् । तत्त्वं निश्चिनो-तीति । तत्त्वनिश्चयश्चात्मविषयकः स च परलोके उपयुज्यते । प्रजने । वीयतेरिति वी गतिप्रजनादावादादिकस्य यका निर्देशः । अत्र केचिदुत्प्रेक्षयन्ति—वीतेरिति वक्तव्ये यका निर्देशाद्व्येञोऽपि ग्रहणम् । तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात् । अतो द्वयोरपि प्रजनेऽर्थे आत्वं वा स्यात् । तत्र आत्वे तदभावे च यद्यपि व्येञो व्याययतीति रूपं तुल्यं 'शाच्छासा—' इति पुकोऽपवादतया युग्विधानात् तथापि णिजन्तात्क्विपि व्याः व्यौ व्याः आत्वाभावपक्षे व्यैः व्यायौ व्याय इत्यस्ति विशेषः । विभाषाविधानसामर्थ्यात्पक्षेऽपि 'आदेच उपदेशेऽशिति' इति न प्रवर्तते । अनेकार्थत्वाच्च धातूनां व्ययतेरपि प्रजनोऽर्थ इति । दोषो णौ । दुष वैकृत्ये दिवादिः । णौ किम्, दोषः । चित्तमिति । चिती संज्ञान इत्यस्मात् क्तः । दूषयति, दोषयति वेति । चित्तं दुष्यति स्नानसंध्यादौ विरक्तं भवति, तत्प्रयुङ्क्त इत्यर्थः । जॄणातेस्त्विति । अपित्त्वादस्य मित्त्वं नेति भावः । आखे-

नलोपो वक्तव्यः' ( वा० ४०६७ )। मृगरमणमाखेटकम् । रजयति मृगान् । 'मृग–' इति किम्–रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगान् तृणदानेन । चुरादिषु ज्ञपादिश्चिञ् । 'चिस्फुरोर्णौ' ( सू० ३५६९ )। चपयति, चययतीत्युक्तम् । चिनोतेस्तु चापयति, चाययति । स्फारयति स्फोरयति । अपुस्फरत्, अपुस्फुरत् ।

२६०६ उभौ साभ्यासस्य । ( ८—४—२१ ) साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् । २६०७ णौ

---

अषित्त्वाद् न मित्त्वमिति भावः । **रञ्जेर्णाविति** । णेः कित्त्वाभावाद् अनिदितामित्यप्राप्तौ वचनम् । मृगरमणपदस्य विवरणम् **आखेटकमिति** । मृगयेत्यर्थः **रजयति मृगानिति** । 'रञ्ज रागे' शब्विकरणः । 'रञ्जेश्च' इति शपि नलोपः । रजन्ति मृगाः–ग्राह्या भवन्ति । तान् मृगान् तादृग्व्यापारविषयान् करोति–मृगवधासक्तो राजादिरित्यर्थः । नकारलोपः । **रञ्जयति पक्षिण इति** । पक्षिणो रजन्ति—ग्राह्या भवन्ति । तान् तादृग्व्यापारविषयान् करोतीत्यर्थः । पक्षिग्रहणमिदं न मृगयेति मन्यते । **रञ्जयति मृगान् तृणदानेनेति** । धावतो[1] मृगान् रक्षणाय तृणसमर्पणेन कण्डनस्थानगान् करोतीत्यर्थः । **चुरादिष्विति** । चुरादिषु ज्ञपादिपञ्चकान्तर्गतश्चिञ्धातुरस्ति । तस्मात् स्वार्थणिचि कृते 'चिस्फुरोः—' इति आत्वपक्षे पुकि मित्त्वादुपधाह्रस्वे चपयतीति रूपम् । आत्वाभावे तु वृद्धौ आयादेशे मित्त्वाद् ह्रस्वे चययतीति रूपमुक्तं चुरादावित्यर्थः । **चिनोतेस्त्विति** । श्नुविकरणस्य तु चिञ्धातोर्हेतुमण्णौ 'चिस्फुरोः–' इति आत्वे पुकि मित्त्वाभावाद्ध्रस्वाभावे चापयतीति रूपम् । आत्वाभावे वृद्धौ आयादेशे मित्त्वाभावाद्ध्रस्वाभावे चाययतीति रूपमित्यर्थः । **स्फोरयति, स्फारयतीति** । 'चिस्स्फुरोः–' इत्यात्वविकल्पः । **अपुस्फरत्, अपुस्फुरदिति** । स्फुर् इ अ त् इति स्थिते द्वित्वे कर्तव्ये णावच आदेशस्य निषिद्धतया स्फुरित्युकारवतो द्वित्वे ततश्चिस्फुरोर्णाविति उत्तरखण्डे आत्वविकल्पः । आत्वपक्षे उपधाह्रस्व इति भावः । **उभौ साभ्यासस्य** । रनितेरित्यनुवर्तते । 'अन प्राणेत' इति धातोरित्यर्थः । 'रषाभ्यां नो णः–' इत्यधिकृतम् । 'उपसर्गादसमासेऽपि–' इत्यत उपसर्गादित्यनुवर्तते, तदाह **साभ्यासस्येत्यादिना** । **निमित्ते सतीति** । उपसर्गस्थे रेफे सतीत्यर्थः **प्राणिणदिति** । प्र अन् इ अ त् इति स्थिते 'अनितेः' इति णत्वस्यासिद्धत्वाद् नि इत्यस्य

---

**टकमिति** । मृगयेत्यर्थः । **रजयतीति** । रजन्ति मृगाः, ग्रहणमरणाद्यनुकूलव्यापारविषया भवन्ति, तान्मृगांस्तादृग्व्यापारविषयान्करोतीत्यर्थः । **ज्ञपादिश्चिञ् इति** । तेन मित्त्वाद्ध्रस्व इति भावः । स्वादिगणस्थस्य तु मित्त्वं नेत्युदाहरति **चापयतीत्यादि** । **अपुस्फुरदिति** । द्वित्वे कर्तव्ये अजादेशस्य स्थानिवत्त्वान्निषेधाद्वा स्फुरित्युकारवतो द्वित्वम्, ततः 'चिस्फुरोर्णौ' इति वा आत्वम् । **उभौ सा** । 'रषाभ्याम्–' इति सूत्रे न इति षष्ठ्यन्तं प्रथमाद्विवचनान्ततया विपरिणम्यत इत्याह **उभौ नकाराविति** । ननु साभ्यासस्येत्युक्त्या उभयोरपि भविष्य-

---

१ क्वचिद् 'धातवः' इति पाठः ।

गमिरबोधने। (२-४-४६) इणो गमिः स्याण्णौ। गमयति। बोधने तु प्रत्याययति। 'इण्वदिकः' (वा० १५७७)। अधिगमयति। 'हनस्तोऽचिण्णलोः' (सू० २५७४)। 'हो हन्तेः' (सू० ३५८) इति कुत्वम्। घातयति। ईर्ष्ययति।

---

द्वित्वे उत्तरखण्डे नकारस्याभ्यासनकारेण व्यवधानाण्णत्वे अप्राप्ते उभयोर्नकारयोरनेन णत्वमित्यर्थः। न च 'पूर्वत्रासिद्धीयमद्विर्वचने' इति निषेधाद् द्वित्वे कर्तव्ये णत्वस्यासिद्धत्वविरहेण परत्वात् कृते णत्वे ततः पश्चाद् द्वित्वे प्राणिणदिति सिद्धमिति वाच्यम्, अत एव 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वविज्ञानात्। तेन ऊर्णुनावेत्यत्र णत्वात् पूर्वमेव नुशब्दस्य द्वित्वे कृते अभ्यासोत्तरखण्डे णत्वाभावासिद्धिरित्यन्यत्र विस्तरः। **णौ गमिरबोधने।** 'इणो गा लुङि' इत्यत इण इत्यनुवर्तते, तदाह **इणो गमिरिति।** मकारादिकार उच्चारणार्थः। **गमयतीति।** प्रापयतीत्यर्थः। **प्रत्याययतीति।** बोधयतीत्यर्थः। लुङि प्रत्यायियत्। इणो णिचि 'इणो यण्' इति यणं बाधित्वा परत्वाद् वृद्धौ आयादेशे आय् इ अ त् इति स्थिते यि इत्यस्य द्वित्वम्। न च 'द्वित्वे कार्ये णावजादेशस्य निषिद्धत्वाद् वृद्धेर्निषेधः शङ्क्यः, 'अजादेर्द्वितीयस्य' इति णिचो द्वित्वे उत्तरखण्डे अवर्णाभावात्। 'इक् स्मरणे' इत्यस्य इण्वत्त्वमुक्तं स्मारयति **इण्वदिक इति। अधिगमयतीति।** स्मारयतीत्यर्थः। हन्तेर्ञिति णिति च तकारादेशमुक्तं णौ स्मारयति **हनस्तोऽचिण्णलोरिति। कुत्वमिति।** हस्येति शेषः। उपधावृद्धिं मत्वाह **घातयतीति।**

---

तीत्युभौग्रहणं व्यर्थमिति चेत्। अत्राहुः—साहित्यमात्रं विवक्षितं न तुल्ययोग इत्यभ्युपगमे द्वयोर्युगपन्न सिध्येदित्युभौग्रहणम्। न च तुल्ययोगविवक्षायां 'तेन सहेति तुल्ययोगे' इति समासोऽत्र न स्यादिति शङ्क्यम्, तुल्ययोगग्रहणं प्रायिकं सकर्मकः सलोमक इत्युक्तत्वादिति। कैयटे तु उभावित्यस्मिन्नसति साभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यनाश्रीयमाणे अकृतणत्वस्य द्विर्वचने कृते अनन्तरस्यानितेरिति पूर्वेणैव णत्वस्य सिद्धत्वाद् व्यवहितनकारार्थमिदं णत्वं स्यात्। अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादिति उभावित्युच्यत इति स्थितम्। साभ्यासस्येति किम्, प्राण् नमति। असत्यस्मिन् 'अनितेः' इति षष्ठी संबन्धसामान्ये स्यात्ततश्चानन्तर्यादिसंबन्धोऽपि गृह्येत। सति त्वस्मिन्नवयवावयविभावसम्बन्धो लभ्यते। अतोऽर्थवत्साभ्यासग्रहणम्। यदि त्विष्टानुरोधेनानितेरिति षष्ठी अवयवसंबन्धे व्याख्यायते अनितेश्च नकारद्वयाभावात्सामर्थ्याद् द्विर्वचनं प्राप्त एवानितिगृह्येत तदा साभ्यासस्येति मन्दप्रयोजनम्। इह पूर्वं णत्वं कृत्वा द्वित्वे कृते प्राणिणदित्यादिसिद्धावयमारम्भः 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्यानित्यत्वज्ञापनार्थः। तेन ऊर्णुनावेत्यत्र णत्वात्पूर्वमेव नुशब्दस्य द्वित्वादभ्यासोत्तरखण्डे णत्वाभावः सिद्धः। **प्रत्याययतीति।** प्रतिपूर्वस्येणो ज्ञानार्थता। लुङि प्रत्यायियत्। इह इणो णिचि कृते 'इणो यण्' इति यणं बाधित्वा परत्वाद् वृद्धिः। न च 'ओः पुयण्जि—' इति ज्ञापकात्पूर्वं द्वित्वं पश्चाद् वृद्धिरिति शङ्क्यम्, 'अजादेर्द्वितीयस्य' इति णिचो'

'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' ( वा० ३४०६ )। तृतीयव्यञ्जनस्य तृतीयैकाच इति वार्थः। आद्ये षकारस्य द्वित्वं वारयितुमिदम्। द्वितीये तु 'अजादेर्द्वितीयस्य' ( सू० २१७६ ) इत्यस्यापवादतया सन्नन्ते प्रवर्तते। ऐर्ष्यियत्, ऐर्षिष्यत्। द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाभ्यासे श्रूयते। हलादिशेषात्। द्वित्वं तु द्वितीयस्यैव। तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः। निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ

---

लुङि अजीघतत्। ईर्ष्ययतीति। ईर्ष्यतेर्णौ रूपम्। वक्तव्यमिति। द्वित्वमिति शेषः। इति वार्थ इति। 'न न्द्राः—' इति सूत्रभाष्ये स्पष्टमिदम्। आद्य इति। तृतीयस्य व्यञ्जनस्येति पक्ष इत्यर्थः। षकारस्येति। अन्यथा ईर्ष्य् इ अ त् इति स्थिते 'न न्द्राः—' इति रेफं वर्जयित्वा षकारसहितस्य ष्यि इत्यस्य द्वित्वं स्यात्। ततश्च उत्तरखण्डे णिलोपे ऐर्षिष्यदिति स्यात्। ऐर्ष्य् यदितीष्टं न स्यात्। अतस्तृतीयव्यञ्जनस्येत्युक्तम्। एवं च यकारमात्रस्य द्वित्वे णिलोपे संयुक्तद्वियकारमिष्टं सिध्यतीत्यर्थः। द्वितीय इति। तृतीयैकाच इति व्याख्याने इत्यर्थः। सन्नन्ते प्रवर्तत इति। उक्तवार्तिकमिति शेषः। सनि इटि ईर्ष्य् इस इति स्थिते ईर्ष्य् इति प्रथमैकाच् ष्यिस् इति द्वितीयैकाच् स इति तृतीयैकाजिति स्थितिः तत्र तृतीयैकाचः संभवात्तस्य द्वित्वविधिः। अन्यथा 'अजादेर्द्वितीयस्य' इति स्यादिति भावः। [1]ऐर्ष्य् यदिति। यकारमात्रस्य द्वित्वे णिलोपे संयुक्तद्वियकारं रूपम्। अथ द्वितीयव्याख्यायां रूपमाह ऐर्षिष्यदिति। तदुपपादयति द्वितीयव्याख्यायामिति। ण्यन्ताच्चङि ईर्ष्य इ अ त् इति स्थिते 'न न्द्राः—' इति निषेधाद्रेफं वर्जयित्वा 'अजादेर्द्वितीयस्य' इति ष्यि इत्यस्य द्वित्वम्, न तु यकारमात्रस्य, प्रथमव्याख्याने एव तृतीयव्यञ्जनस्येत्युक्तेः। तत्र ष्यि इत्यस्य द्वित्वे कृतेऽपि अभ्यासे षकार एव हल् इकारशिरस्कः श्रूयते, न तु यकारोऽपीत्यर्थः। कुत इत्यत आह हलादिशेषादिति। ननु तृतीयस्यैकाच इति द्वितीयव्याख्यायाम् इह द्वितीयस्यैकाचः कथं द्वित्वमित्यत आह द्वित्वं तु द्वितीयस्यैवेति। एकाच इति शेषः कुत इत्यत आह तृतीयाभावेनेति। *ईर्ष्य् इ अ त् इत्यत्र ईर्ष्य् इति प्रथमैकाच्, ष्यि इति*

---

द्वित्वेऽभ्यासोत्तरखण्डस्यावर्णपरत्वाभावात्। इति वार्थ इति। व्याख्यानद्वयमप्याकरारूढमिति भावः। षकारस्येति। रेफस्य तु 'न न्द्राः—' इत्यनेन निषेधादिति भावः। द्वितीये त्विति। तृतीयस्यैकाच इति पक्षे सन्नन्ते प्रवर्तत इति। वचनसामर्थ्यादिति भावः। ऐर्ष्यियदिति। तृतीयव्यञ्जनस्येति पक्षे इदमुदाहरणम्। ऐर्षिष्यदिति रूपस्यासाधुत्वमाशङ्क्योपपादयति द्वितीयव्याख्यायामित्यादिना द्वियीयस्यैवेति। एकाच इति शेषः। अप्रवृत्तेरिति। किंतु सन्नन्त एव प्रवर्तते। तत्र ह्यनुपदम् ईर्ष्यियिषति इत्युदाहरिष्यति। अर्थ उपयाच्ञायामित्यस्य आगर्वीयत्वादात्मनेपदेन भाव्यमिति प्रार्थयन्तीति माघकाव्यादिप्रयोगोऽसाधुरित्याशङ्क्य तत्समर्थनायाह निवृत्तप्रेषणादिति। उक्तं च—'निवृत्तप्रेषणा-

---

१ तृतीयव्यञ्जनमात्रस्याज्रहितस्यैव द्वित्वमिति मतेनेदम्।

शुद्धेन तुल्योऽर्थः । तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इत्यादिना सिद्धम् । एवं सकर्मकेषु सर्वमूह्यम् ।

इति तिङन्ते णिच्प्रकरणम्

---

द्वितीयैकाच्, न तु चङि परे तृतीयैकाजस्ति । अतोऽत्र तृतीयैकाच इति वार्तिकं न प्रवर्तते । तस्माद् द्वितीयस्यैव एकाचो द्वित्वमित्यर्थः । एवं च तृतीयस्यैकाच इति वार्तिकं सन्नन्त एव प्रवर्तते । ईर्ष्यतेरामः सत्त्वेन ततः परस्य लिटोऽभावादिति वोध्यम् । ननु 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इति माघकाव्ये प्रार्थयन्ति न चौरादिकस्वार्थिकणिजन्तम्, तस्यागर्वीयतया आत्मनेपदप्रसङ्गात् । नापि हेतुमण्ण्यन्तम् । स्वाभीष्टं याचते इत्यर्थे तदसंभवात् । नहि प्रयोजकव्यापाराभावे तत्प्रवृत्तिरस्तीत्यत आह निवृत्तेति । निवृत्तं प्रेपणं यस्मात् स निवृत्तप्रेपणः—संप्रति अविवक्षितप्रेपण इत्यर्थः । तस्माद्धातोः भूतपूर्वगत्या प्रेपणमादाय हेतुमण्णौ कृते शुद्धेन णिज्विहीनेन धातुना तुल्योऽर्थः प्रतीयते इत्यर्थः । तदुक्तम् 'निवृत्तप्रेपणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति । इदं च 'णेरणौ—' इति सूत्रे भाष्ये स्पष्टम् ।

इति श्रीवासुदेवदीक्षितविदुपा विरचितायां सिद्धान्तकौमुदीव्याख्यायां वालमनोरमाख्यायां हेतुमण्णिचो निरूपणं समाप्तम् ।

---

द्धातोः प्राकृतेऽर्थे णिजुच्यते' इति । तेनेत्यादि । प्रार्थनां कुर्वन्तीति विवक्षितार्थे प्रयोगः सिद्ध इति भावः । केचित्तु परस्मैपदसिद्ध्यर्थं प्रार्थनं प्रार्थः, तं कुर्वन्ति प्रार्थयन्तीति व्याचक्षते, तदसत्, धातुसंज्ञाप्रयोजकप्रत्यये चिकीर्षिते उपसर्गाणां पृथक्करणस्य वक्ष्यमाणतया 'अर्थवेद—' इत्यापुगागमस्य दुर्वारत्वात् ।

इति तत्त्वबोधिन्यां ण्यन्तप्रक्रियाप्रकरणम् ।

---

# अथ तिङन्ते सन्प्रकरणम् ॥ ५४ ॥

**२६०८ धातोः कर्मणः समानकर्तृकादिच्छायां वा।** (३-१-७) इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायाम्। धातोर्विहितत्वादिह सन आर्धधातुकत्वम्। इट्। द्वित्वम्। 'सन्यतः' (सू० २३१७)। पठितुमिच्छति पिपठिषति। कर्मणः किम्—गमनेनेच्छतीति। करणान्माभूत्। समानकर्तृकात् किम्—शिष्याः पठन्त्वितीच्छति गुरुः। वाग्रहणात्पक्षे वाक्यमपि। 'लुङ्सनोर्घस्लृ' (सू० २४२७)। 'एकाच उपदेशे—' (सू० २२४६) इति नेट्। सस्य तत्वम्। अत्तुमिच्छति जिघत्सति। 'ईर्ष्यतेस्तृतीयस्य—' (वा० ३४०२) इति यिसनोर्द्वित्वम्। ईर्ष्यियिषति, ईर्ष्यिषिषति। २६०९ रुद-

अथ सन्प्रक्रियाः निरूप्यन्ते। **धातोः कर्मणः।** 'गुप्तिज्किद्भ्यः—' इत्यतः सन्नित्यनुवर्तते। इच्छायाः श्रुतत्वात्तां प्रत्येव कर्मत्वं विवक्षितम्। तथा समानकर्तृकत्वमपि इच्छानिरूपितमेव विवक्षितम्। कर्मेति स्ववाचकशब्दद्वारा धातौ सामानाधिकरण्येनान्वेति। एवं च इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारः तद्वाचकाद्धातोरिच्छायां सन् वा स्यादिति फलति, तदाह **इषिकर्मण इत्यादि।** इषिरिच्छा। इषिणा एककर्तृकत्वाद् इषिकर्मीभूतव्यापारवाचकाद्धातोरित्यर्थः। ननु समानकर्तृकादित्युक्त्यैव धातोरिति लब्धम्। धात्वर्थव्यापाराश्रयस्यैव कर्तृत्वादित्यत आह **धातोरिति।** धातोरिति विहितस्यैव प्रत्ययस्यार्धधातुकत्वम्, नतु धातोः परस्य। अन्यथा जुगुप्सते इत्यत्र धातोरित्यविहितस्यापि 'गुप्तिज्किद्भ्यः—' इति सन आर्धधातुकत्वापत्तौ लघूपधगुणापत्तेरिति भावः। अस्य सन आर्धधातुकत्वे फलमाह **इडिति। द्वित्वमिति।** 'सन्यङोः' इत्यनेनेति भावः। अभ्यासस्य इत्वविधिं स्मारयति **सन्यत इति। पठितुमिच्छतीति।** भावस्तुमुनर्थः। 'अव्ययकृतो भावे' इत्युक्तेः। धात्वर्थ एव भाव इत्युच्यते। तथा च पठितुमित्यस्य पठनक्रियैवार्थः। तस्मिन् पठने इच्छाकर्मत्वम् इच्छासमानकर्तृकत्वं च सना गम्यते। तथा च स्वकर्तृकं पठनमिच्छतीत्यर्थे पिपठिषतीति शब्दो वर्तत इत्युक्तं भवति। अथ 'अद भक्षणे' इति धातोः सनि घस्लृभावं स्मारयति **लुङ्सनोर्घस्लृ इति।** घस् स इति स्थिते इटमाशङ्क्याह **एकाच इति। नेडिति।** घस् स स्थिते आह **सस्य तत्वमिति।** 'सः स्यार्धधातुके' इत्यनेनेति भावः। **जिघत्सतीति।** द्वित्वे अभ्यासजश्त्वचुत्वे इति भावः। **यिसनोर्द्वित्वमिति।** तृतीयस्य व्यञ्जनस्येति पक्षे ईर्ष्य इस इत्यत्र यकारमात्रस्य द्वित्वे, सनः षत्वे, संयुक्तद्वियकारं रूपमिति भावः, तदाह **ईर्ष्यियिषतीति**[1]। तथा च सन्नन्ते ईकाररेफषकारयकारद्वित्वेकारषकाराः। तृतीयस्यैकाच इति पक्षे ईर्ष्य् इस इत्यत्र स इत्यस्य द्वित्वे अभ्यासेत्त्वे सकारद्वयस्यापि षत्वे रूपं मत्वाह **ईर्ष्यि-**

**धातोः कर्मणः।** **इषिकर्मण इत्यादि।** इच्छायामिति श्रुतत्वात्कर्मत्वं कर्तृत्वं च तदपेक्षमेव गृह्यत इति भावः। **पठितुमिच्छतीति।** एकनिष्ठा पाठ-

[1] तृतीयव्यञ्जनमात्रस्य द्वित्वमिति बालमनोरमामतेनेदम्।

[1]विदमुषग्रहिस्वपिप्रच्छः संश्च । ( १—२—८ ) एभ्यः सन् क्त्वा च कितौ स्तः । रुरुदिषति । विविदिषति । मुमुषिषति । २६१० सनि ग्रहगुहोश्च । ( ७—२—१२ ) ग्रहेर्गुहेरुगन्ताच्च सन इण्न स्यात् । 'ग्रहिज्या—' ( सू० २४१२ ) इति संप्रसारणम् । सनः षत्वस्यासिद्धत्वाद्भष्भावः । जिघृक्षति । सुषुप्सति ।

---

पिपतीति । अत्र तु सन्नन्ते ईकाररेफपकारयकारेकारपकारेकारपकाराकाराः । रुद विद । इका निर्देशात् संप्रसारणे गृहीति निर्देशः । स्वपीति इकारस्तु उच्चारणार्थः, न त्विका निर्देशः, सुपीति संप्रसारणप्रसङ्गात् । चकारात् 'मृडमृदगुध—' इति पूर्वसूत्रस्थं क्त्वेति समुच्चीयते, तदाह सन् क्त्वा चेति । कितावितिं । 'असंयोगाल्लिट्—' इत्यतस्तदनुवृत्तेरिति भावः । रुदसाहचर्याद्वित्तेरेव ग्रहणमिति केचित् । अविशेषात्सर्वस्येत्यन्ये । "हलन्ताच्च' इति सिद्धे रुदविदमुषां ग्रहणं 'रलो व्युपधात्—' इति विकल्पबाधनार्थम् । ग्रहेस्तु क्त्वायां 'न क्त्वा सेट्' इति निषेधबाधनार्थम् । स्वपिप्रच्छ्योस्तु क्त्वायां कित्त्वेऽपि सनः अप्राप्तकित्त्वविधानार्थम् । रुरुदिषतीत्यादौ सनः कित्त्वाल्लघूपधगुणाभावः । सनि ग्रहगुहोश्च । चकारात् 'श्र्युकः किति' इत्यत उक इत्यनुकृष्यते, न तु श्रयतिः, तस्य 'सनीवन्तर्ध—' इति विकल्पस्य वक्ष्यमाणत्वात् । 'नेड्वशिकृति' इत्यतो नेडिति चानुवर्तते, तदाह ग्रहेरित्यादि । ग्रहधातोर्नित्यमिटि प्राप्ते गुहेः ऊदित्त्वात्तद्विकल्पे प्राप्ते वचनम् । ग्रहिज्येति । ग्रह् स इति रेफस्य संप्रसारणम् ऋकार इत्यर्थः । ननु गृह् स इति स्थिते हस्य ढत्वे भष्भावापेक्षया परत्वात् कत्वे सस्य षत्वे च कृते अषन्तत्वाभावे कथं भष्भाव इत्यत आह सनः षत्वस्येति । कत्वस्यासिद्धत्वादित्येव सुवचम् । जिघृक्षतीति । गृह् स इति स्थिते हकारादिणः परस्य सस्य षत्वं परत्वात् प्राप्तं

---

गांचरा वर्तमानेच्छेत्यर्थः । यिसनोरिति । तृतीयव्यंजनस्येति पक्षे यकारस्य द्वित्वम्, तृतीयस्यैकाच इति पक्षे तु सन इत्यर्थः । रुदविद । रुदसाहचार्याद् वेत्तेरेव ग्रहणम् । इह रुदविदमुषाणां ग्रहणं 'रलो व्युपधात्—'इति विकल्पे प्राप्ते ग्रहेः 'न क्त्वा सेट्' इति निषेधात्क्त्वाया अप्राप्ते स्वपिप्रच्छ्योस्तु क्त्वः कित्त्वेऽपि सनः कित्त्वस्याप्राप्तौ वचनम् । रुदित्वा । विदित्वा । मुषित्वा । एतेषु गुणाभावः कित्त्वस्य फलम् । गृहीत्वा । सुप्त्वा । पृष्ट्वा । एतेषु संप्रसारणमपि फलम् । सनि ग्रहगुहोश्च । ग्रहेर्नित्यं गुहेर्विकल्पेन प्राप्ते निषेधोऽयम् । सनः षत्वस्यासिद्धत्वाद्भष्भाव इति । कुत्वस्यासिद्धत्वाद्भष्भाव इत्येव सुवचम् । केचित्तु ढत्वे सति भष्भाव इत्यध्याहारेण योजयन्ति । तथा च जगृह् स इति स्थिते इणः परत्वेन सस्य षत्वं प्राप्तं तस्यासिद्धत्वाद् ढत्वे भष्भावः । ततश्च कत्वे कवर्गात्परस्य षत्वमिति त्रिविक्रमः । अन्ये तु षत्वे ढत्वे च कृते पश्चाद्भष्भावे कर्तव्ये सकारपरत्वाभावाद्भष्भावो न स्यादित्याशङ्कायां सनः षत्वस्यासिद्धत्वादिति ग्रन्थः प्रवृत्त इति कार्यासिद्धिपक्षावलम्बनेन व्याचक्षते जिघृक्षतीति । गुहेर्जुघुक्षति । सूत्रे चकारात् 'श्र्युकः किति' इत्यत उक इत्यनुकृष्यते । उगन्ताद् बुभूषति, चुक्षूषति । श्रयतिस्तु नानुकृष्यते तस्य

---

१ 'गृहि' इति बालमनोरमासम्मतः पाठः ।

२६११ किरश्च पञ्चभ्यः । ( ७—२—७५ ) कॄ, गॄ, दृङ्, धृङ्, प्रच्छ एभ्यः सन इट् स्यात् । पिपृच्छिषति । चिकरिषति । जिगरिषति । जिगलिषति । अत्रेटो दीर्घो नेष्टः । दिदरिषते । दिधरिषते । कथम् 'उद्दिधीर्षुः' इति । भौवादिकयोर्धृङ्धृञोरिति गृहाण । २६१२ इको झल् । ( १—२—९ ) इगन्ता-

---

तस्यासिद्धत्वाद् हस्य ढत्वे भष्भावः, ततः कत्वे कात्परस्य षत्वमिति क्रम इति भावः । गृहेः जुघुक्षतीत्युदाहार्यम् । उगन्ताद् बुभूषति । अत्र श्र्युकः कितीत्यनेन तु न सिध्यति, तत्र किति एव निषेधात् । परत्वादिडागमे 'इको झल्' इत्यस्याप्राप्तेः । स्पष्टं चेदं शब्देन्दुशेखरे । सुषुप्सतीति । सनः कित्त्वाद् 'वचिस्वपि—' इति संप्रसारणं लघूपधगुणाभावश्च । किरश्च पञ्चभ्यः । किर इति पञ्चमी । किरादिभ्य इति विवक्षितम् । तुदादौ 'कॄ विक्षेपे, गॄ निगरणे, दृङ् आदरणे, धृङ् अवस्थाने, प्रच्छ ज्ञीप्सायाम्' इति स्थिताः, तदाह कॄ गॄ इत्यादिना । सन इडिति । 'स्मिपूङ्रञ्ज्वशां सनि' इत्यतः 'इडत्त्यर्ति—' इत्यतश्च तदनुवृत्तेरिति भावः । किरतिगिरत्योः 'इट् सनि वा' इति विकल्पे अन्येषां च 'एकाच—' इति च निषेधे प्राप्ते वचनमित्युक्तम् । पिपृच्छिषतीति । सनः कित्त्वाद् 'ग्रहिज्या—' इति संप्रसारणम् । चिकरिषतीति । कॄधातोः सनि इटि रूपम् । जिगरिषतीति । 'गॄ निगरणे' इत्यस्मात्सनि इटि रूपम् । जिगलिषतीति । 'अचि विभाषा' इति लत्वविकल्प इति भावः । इट् सनि वेत्यस्यायमपवादः । चिकरिषति इत्यत्र 'वॄतो वा' इति दीर्घमाशङ्क्याह दीर्घो नेष्ट इति । वार्तिकमिदं वृत्तौ स्थितम् । भाष्ये तु न दृश्यते । दिदरिषते, दिधरिषते इति । दृङो धृङश्च सनि इटि रूपम् । पूर्ववत्सनः इत्यात्मनेपदम् । कथमिति । उद्दिधीर्षुरिति कथमित्यन्वयः । किरादित्वेन इट्प्रसङ्गादिति भावः । भौवादिकयोरिति । 'धृङ् अवस्थाने, धृञ् धारणे' इत्यनयोर्भौवादिकयोः सनि किरादित्वाभावादिडभावे 'अज्झनगमां सनि' इति दीर्घे 'ऋत इद्धातोः' इति इत्वे, रपरत्वे, 'हलि च' इति दीर्घे, षत्वे, उद्दिधीर्ष इत्यस्मात् 'सनाशंसभिक्ष उः' इत्युप्रत्यये उद्दिधीर्षुरिति रूपमिति गृहाण जानीहीति शङ्ककं प्रति उत्तरम् । इको झल् । इगन्तादिति । सना आक्षिप्तधातुविषेणत्वात्तदन्त-

---

'सनीवन्तर्ध—' इति विकल्पविधानात् । किरश्च पञ्चभ्य । पञ्चग्रहणमुत्तरार्धं स्पष्टप्रतिपत्तय इहैव कृतम् । एवं च प्रच्छधातोरनन्तरं गणपाठस्थं वृत्करणं त्यक्तुं शक्यम् । अत्रत्य पञ्चभ्य इत्येनेनैव वृत्करणं यत्तदपाणिनीयमिति व्याख्येयमित्याहुः । केचित्तु—'भूषाकर्मकिरादिसनाम्—' इति वार्तिके किरादिज्ञानार्थं वृत्करणमावश्यकमित्याहुः । अत्रेट इति । 'वॄतो वा' इति प्राप्ते भाष्यकारेष्टिरियम् । भौवादिकयोरिति । तथा च 'अज्झनगमाम्—' इति वक्ष्यमाणेन दीर्घ इति भावः । इको झल् । 'रुदविद—' इत्यतः सन्ननुवर्तते, सनाक्षिप्तो धातुरिका विशेष्यते, विशेषणेन च तदन्तविधिरित्याह इगन्तादिति । इगन्तात् किम्, पिपासति, तिष्ठासति ।

झलादिः सन्कित्स्यात् । बुभूषति । दीङ्—दातुमिच्छति दिदीषते । एज्विषयत्वाभावात् 'मीनातिमिनोति-' (सू० २५०८) इत्यात्त्वं न । अत एव 'सनि मीमा-' (सू० २६२३) इति सूत्रे मावातोः पृथङ्मीग्रहणं कृतम् । २६१३ हलन्ताच्च । (१-२-१०) इक्समीपाद्धलः परो झलादिः सन्कित्स्यात् । गुहू, जुघुक्षति । विभित्सति । इकः किम्-यियक्षते । झल् किम्-विवर्धिषते । हल्ग्रहणं जातिपरम् । तृंहू-तितृक्षति, तितृंहिषति । २३१४ अज्झनगमां

---

विधिरिति भावः । सन् किदिति । 'रुदविदमुषग्रहि-' इत्यतः 'असंयोगाल्लिट् कित्' इत्यतश्च तदनुवृत्तेरिति भावः । बुभूषतीति । कित्त्वान्न गुणः । उकः परत्वान्नेट् दिदीषते इति । सनः कित्त्वान्न गुणः । दीङो ङित्वात् 'पूर्ववत्सनः' इत्यात्मनेपदम् एज्विषयत्वाभावादिति । कित्त्वे गुणनिषेधादिति भावः । अत एवेति । यद्येज्विषयादन्यत्राप्यात्वं स्यात् तदा मीमेति पृथक् ग्रहणमनर्थकं स्यात् । 'गामादाग्रहणेष्वविशेषः' इत्युक्तेरिति भावः । हलन्ताच्च । 'इको झल्' इति पूर्वसूत्रमनुवर्तते । 'रुदविदमुष-' इत्यतः सनिति 'असंयोगाल्लिट-' इत्यतः किदिति च । हलिति लुप्तपञ्चमीकं पदम् । अन्तशब्दः समीपवाची, तदाह इक्समीपादित्यादि । जुघुक्षतीति । सनः कित्त्वान्न गुणः । 'सनि ग्रहगुहोश्च' इत्युदित्त्वेऽपि नित्यं नेट् । हस्य ढत्वे भष्भावे कत्वषत्वे इति भावः । विभित्सतीति । भिदेः सनः कित्वान्न गुणः यियक्षते इति । अत्र हलः इक्समीपत्वाभावान्न कित्त्वम् सति तु कित्त्वे यजेः संप्रसारणं स्यादिति भावः । विवर्धिषते इति । वृधेः सनि रूपम् । अत्र सन इटि झलादित्वं नेति भावः । ननु 'तृंहू हिंसायाम्' तुदादिः नोपधोऽयम् । कृतानुस्वारस्य निर्देशः । अस्मात्सनः 'अनिदिताम्-' इति नलोपार्थं कित्त्वमिष्यते । तन्नोपपद्यते । न ह्यत्र इक्समीपादनुस्वारात् सन् परो भवति, हकारेण व्यवधानात् । हकारात्तु परः सन इक्समीपाद्धलः परो न भवति, अनुस्वारेण व्यवधानादित्यत आह हल्ग्रहणं जातिपरमिति । हल्त्वजात्याक्रान्तैकानेकव्यक्तिपरमित्यर्थः । तृंहिति । तृंहूधातोः प्रदर्शनमिदम् । तितृक्षतीति । ऊदित्त्वादिडभावपक्षे रूपम् । सनः कित्वान्नलोपो लघूपधगुणाभावश्च । ढत्वकत्वषत्वानि । इट्पक्षे आह तितृंहिषतीति । झलादित्वाभावेन कित्त्वाभावान्नलोपो नेति भावः । अज्झनगमां ।

---

झलीति किम्, शिशयिषते । कित्स्यादिति । 'असंयोगाल्लिट् कित्' इत्यतः किदनुवर्तत इति भावः । एज्विषयत्वाभावादिति । कित्त्वेन गुणाप्राप्तेरित्यर्थः । अत एवेति यद्येज्विषयादन्यत्राप्यात्वं भवेत्तदा मीग्रहणं तत्र न कुर्याद्गामादाग्रहणेष्वविशेषादिति भावः । हलन्ताच्च । इगित्यनुवर्तते तदवयवत्वं हलो न संभवतीति समीपवाच्यत्रान्तशब्द इत्याशयेन व्याचष्टे । इक्समीपादिति । सौत्रत्वाद्विशेषणस्यान्तशब्दस्य परनिपातः । तितृक्षतीति । कत्त्वे सति 'अदिताम्—' इति नलोपः । अज्झनगमाम् । गमा सामान्येन ग्रहणे गम्लृ गतावित्यस्मात् संजिगंसते इत्यत्रातिप्रसङ्गः स्यादतः 'सनि च' 'इङश्च' इति सूत्राभ्यां विहितस्येणि-

**सनि ।** ( ६–४–१६ ) अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्याज्झलादौ सनि । 'सन्लिटोर्जेः' ( सू० २३३१ ) । जिगीषति । 'विभाषा चेः' ( सू० २५२५ ) । चिकीषति, चिचीषति । जिघांसति । **सनि च** ( २–४–४७ ) इणो गमिः स्यात् सनि, न तु बोधने । जिगमिषति । बोधने प्रतीषिषति । 'इण्वदिकः' ( वा० १५७७ ) । अधिजिगमिषति । कर्मणि तङ् । 'परस्मैपदेषु' इत्युक्तेर्नेट् । 'झलादौ सनि' इति दीर्घः । जिगांस्यते । अधिजिगांस्यते । अजा-

---

सनि अच्, हन् गम् एषां द्वन्द्वः । 'नोपधायाः' इत्यत उपधाया इत्यनुवृत्तं हनगमोरन्वेति, न त्वजन्ते, असंभवात् । अङ्गस्येत्यधिकृतम् । अचस्तद्विशेषणत्वात्तदन्तविधिः, गमधातुरिह अजादेश एव विवक्षित इति प्रकृतसूत्रभाष्ये स्पष्टम् । 'ढ्रलोपे पूर्वस्य–' इत्यतो दीर्घ इत्यनुवर्तते, तदाह **अजन्तानामित्यादिना । झलादौ सनीति ।** 'च्छ्वोः शूठ्–' इति सूत्रभाष्ये 'अज्झनगमाम्–' इत्यत्र सनं झला विशेषयिष्याम इत्युक्तेरिति भावः । अथ जिधातोरभ्यासात् परस्य कुत्वविधिं स्मारयति **सन्लिटोर्जेरिति । जिगीषतीति ।** जेर्दीर्घे अभ्यासात्परस्य कुत्वम् । अथ चिञ्धातोरभ्यासात्परस्य कुत्वविकल्पं स्मारयति **विभाषा चेरिति । चिकीषति, चिचीषतीति ।** अजन्तत्वाद्दीर्घः । **जिघांसतीति ।** हनेः सनि 'अज्झन–' इत्यकारस्य दीर्घः, न त्वन्त्यस्य नकारस्य । दीर्घश्रुत्या अच इत्युपस्थितेः । द्वित्वम्, 'अभ्यासाच्च' इति कुत्वम् । 'नश्च' इत्यनुस्वारः । **सनि च ।** 'इणो गा लुङि' इत्यत इण इति 'णौ गमिरबोधने' इत्यतो गमिरबोधने इति चानुवर्तते, तदाह **इणो गमिरित्यादि । जिगमिषतीति ।** गमेरिति इट् । अत्र 'अज्झनगमाम्—' इति दीर्घो न, झलादौ सनीत्युक्तेः । **प्रतीषिषतीति ।** बोधयितुमिच्छतीत्यर्थः । अत्र बोधनार्थत्वादिणो न गमिः । इ स इति स्थिते 'अजादेर्द्वितीयस्य' इति सनो द्वित्वे अभ्यासेत्त्वम् । प्रतिना सवर्णदीर्घे सकारद्वयस्यापि षत्वमिति भावः । 'इक् स्मरणे' इत्यस्याह **इण्वदिक इति ।** अनेन वार्तिकेन इक्धातुरिण्वद्भवतीत्यर्थः । ततश्च 'सनि च' इति भावः । **कर्मणि तङिति ।** इण्धातोरिग्धातोश्च सन्नन्तात्कर्मणि लटस्तङित्यर्थः । 'भावकर्मणोः' इत्यनेनेति भावः । **परस्मैपदेष्विति ।** 'गमेरिट् परस्मैपदेषु' इत्युक्तेस्तङि नेडित्यर्थः । **झलादाविति ।** 'अज्झन—' इति झलादौ सनि विहितो दीर्घ इत्यर्थः । **जिगांस्यते**

---

ङोरादेशस्य 'इण्वदिकः' इति इक आदेशस्य च ग्रहणमित्याशयेनाह **अजादेश गमेरिति ।** एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते । तथाहि—इह सनीत्येव सूत्रं कर्तव्यम् । दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणादजन्ताङ्गस्य दीर्घः, चिचीषति । ततो हनिगम्योरित्यपरं कर्तव्यम् । एवं चाज्ग्रहणमतिरिच्यमानं प्रवृत्तिभेदेन गमेर्विशेषणार्थम् । अजन्तस्य दीर्घो भवति अजादेशगमेश्चेति । झलादाविति किम्, जिगमिषति । 'गमेरिट् परस्मैपदेषु' इति इट् । **सनि च ।** 'णौ गमिरबोधने' इत्यतोऽबोधन इत्यनुवर्तते । **प्रतीषिषतीति ।** तक्रकौण्डिन्यन्यायस्यानित्यत्वात्सन्रूपस्याभ्यासस्येत्वम् । अनित्यत्वे लिङ्गं तु 'नित्यं कौटिल्ये गतौ' इत्यत्र नित्य-

देशस्येत्युक्तेर्गच्छतेर्न दीर्घः। जिगंस्यते। संजिगंसते। २६१६ इङश्च। (२-४-४८) इङो गमिः स्यात्सनि। अधिजिगांसते। २६१७ रलो व्युपधाद्धलादेः संश्च। (१-२-२६) उश्च इश्च वी। ते उपधे यस्य तस्माद्धलादेः, रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। 'द्युतिस्वाप्योः संप्रसारणम्' (सू० २३४४)। दिद्युतिषते, दिद्योतिषते। रुरुचिषते, रुरोचिषते। लिलिखिषति, लिलेखिषति। रलः किम्—दिदेविषति। व्युपधात् किम्—विवर्तिषते। हलादेः किम्—एषिषिषति। इह नित्यमपि द्वित्वं गुणेन बाध्यते। उपधाकार्यं हि द्वित्वात्प्रबलम्, ओणेर्ऋदित्करणस्य सामान्यापेक्षज्ञापकत्वात्। २६१८

---

इति। गन्तुमिष्यते इत्यर्थः। इणो रूपम्। अधिजिगांस्यते इति। स्मर्तुमिष्यत इत्यर्थः। इको रूपम्। जिगंस्यते इति। गम्लृधातोः सन्नन्तात्कर्मणि तङि रूपम्। गमेरजादेशत्वाभावान्न दीर्घः। इङश्च। गमिः स्यात् सनीति। 'णौ गमिः—' इत्यतः 'सनि च' इत्यतश्च तदनुवृत्तेरिति भावः। इङो ङित्त्वात् 'पूर्ववत्सनः' इति। तङ्। परस्मैपदेष्वित्युक्तेर्नेट्। 'अज्झन—' इति दीर्घ इति भावः। रलो। क्त्वासनाविति। चकारेण 'पूङः क्त्वा च' इत्यतः क्त्वाया अनुकर्षादिति भावः। सेटाविति। 'न क्त्वा सेट्' इत्यतस्तदनुवृत्तेरिति भावः। वा किताविति। 'नोपधात्थफान्ताद्वा' इत्यतः 'असंयोगाल्लिट् कित्' इत्यतश्च तदनुवृत्तेरिति भावः। दिद्युतिषत इति। 'द्युत दीप्तौ' अनुदात्तेत। सनि द्वित्वे कित्त्वाद् 'द्युतिस्वाप्योः—' इत्यभ्यासस्य संप्रसारणे पूर्वरूपे सनः कित्त्वान्न लघूपधगुण इति भावः। सनः कित्त्वाभावे आह दिद्योतिषते इति। 'पूर्ववत्सनः' इत्यात्मनेपदम्। एषिषिषतीति। इष्धातोः सन् इट्, हलादित्वाभावेन कित्त्वाभावाद्गुणे एष् इस ति इति स्थिते 'अजादेर्द्वितीयस्य' इति षिस् इत्यस्य द्वित्वे हलादिशेषे सनः षत्वे रूपम्। नन्विह सत्यपि कित्त्वे नित्यत्वात् परमपि गुणं बाधित्वा षिस् इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाभावादेव गुणाप्रसक्तेर्हलादेरिति व्यर्थमित्यत आह इह नित्यमपि द्वित्वं गुणेन बाध्यत इति। कुत इत्यत आह उपधाकार्यं हि द्वित्वात्प्रबलमिति। तच्च कुत इत्यत आह ओणेरिति। ओणेः ऋदित्करणस्य ज्ञापकत्वादित्यन्वयः। तथाहि ओणृधातोः ण्यन्ताल्लुङि 'णौ चङ्युपधायाः—' इति ह्रस्वस्य 'नाग्लोपिशास्वृदिताम्' इति निषेधे सति औणि अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानोणिणदिति रूपम्। अत्र उपधाह्रस्वनिषेधार्थमोणेः ऋदित्करणम्। उपधाह्रस्वे कृते तु उण् इ अ त् इति स्थिते णि इत्यस्य द्वित्वे मा भवानुणिणदिति स्यात्। ओकारो न श्रूयत इति स्थितिः। यदि तु नित्यत्वाद् उपधाह्रस्वात् प्रागेव ओण् इ अ त् इत्यस्यां दशायां द्वित्वं स्यात्। तदा ओकारस्य उपधात्वाभावादेव ह्रस्वाप्रसक्तेस्तन्निषेधार्थमृदित्करण-

---

ग्रहणमिति वक्ष्यते। संजिगंसते इति। 'समो गम्यृच्छिभ्याम्' इति तङ्। 'पूर्ववत्सनः' इति सन्नन्तादपि भवति। रलो व्युपधा। 'न क्त्वा सेट्' इत्यतः सेडिति वर्तते। चकारेण क्त्वायाः संग्रहः। 'असंयोगात्—' इत्यतः किदिति,

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयुर्णुभरज्ञपिसनाम्।** ( ७-२-४९ ) इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा स्यात् । इडभावे 'हलन्ताच्च' (सू० २६१३) इति कित्त्वम् । 'छ्वोः—' ( सू० २५६१ ) इति वस्य ऊठ् । यण् । द्वित्वम् । दुद्यूषति, दिदेविषति । 'स्तौतिण्योरेव—' (सू० २६२७) इति वक्ष्यमाणनियमान्न षः । सुस्यूषति, सिसेविषति । २६१६ **आप्ज्ञप्यृधामीत्।** ( ७-४-५५ ) एषामच ईत्स्यात्सादौ सनि । २६२० **अत्र लोपोऽभ्यासस्य।** (७-४-५८) 'सनि मीमा-' (सू० २६२३) इत्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । आप्तुमिच्छति ईप्सति । अर्धितुमिच्छति । रपरत्वम् । चर्त्वम् । ईर्त्सति,

---

मत्वर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकम् उपधाकार्यं द्वित्वात् प्रबलमिति विज्ञायते इत्यर्थः । ननु भवतु उपधाह्रस्वो द्वित्वात् प्रबलः । प्रकृते तु उपधागुणः कथं द्वित्वात् प्रबलः स्यादित्यत आह **सामान्यापेक्षेति** । उपधाह्रस्वस्य उपधाकार्यत्वेन रूपेण द्वित्वात् प्राबल्यविज्ञानादित्यर्थः । वस्तुतस्तु 'णौ चङ्युपधायाः—' इति सूत्रे यदयमोणिमृदितं करोति तज्ज्ञापयति द्विर्वचनाद्ध्रस्वत्वं बलीय इति भाष्ये विशिष्य उपधाह्रस्वग्रहणात् सामान्यापेक्षत्वं ज्ञापकस्य चिन्त्यमिति शब्देन्दुशेखरे प्रपञ्चितम् । **सनीवन्तर्ध** । सनि इवन्तेति च्छेदः । इवन्त, ऋध, भ्रस्ज, दम्भु, श्रि, स्वृ, यु, ऊर्णु, भर, ज्ञपि, सन्, एषां द्वन्द्वः । इव् अन्ते येषां ते इवन्ताः । 'स्वरति—' इत्यतो वेति 'इण्निष्ठायाम्' इत्यत इडिति चानुवर्तते, तदाह **इवन्तेभ्य इत्यादि** । इवन्तस्य दिव्धातोरुदाहरिष्यन्नाह **इडभावे इति** । **वस्येति** । वकारस्येत्यर्थः । **यणिति** । ऊकारादिकारस्य इति शेषः । **द्वित्वमिति** । द्यु इत्यस्येति शेषः । **दुद्यूषतीति** । 'अज्झन—' इति दीर्घः । इट्पक्षे आह **दिदेविषतीति** । अझलादित्वान्न सनः कित्त्वम्, अतो नोठ्, किन्तु लघूपधगुण इति भावः । इवन्तस्योदाहरणान्तरं सिवुधातोः सुस्यूषतीति वक्ष्यते । तत्र द्वितीयस्य षत्वमाशङ्क्याह **स्तौतिण्योरिति** । **सुस्यूषतीति** । सिवुधातोः सनि इडभावे दुद्यूषतीतिवद्रूपम् । इट्पक्षे आह **सिसेविषतीति** । ऋधधातोः सनि ईर्त्सतीति रूपं वक्ष्यन्नाह **आप्ज्ञप्यृधामीत्** । **सादौ सनीति** । 'सनि मीमाघुरभ—' इत्यतः सनीति अच इति चानुवर्तते । 'सः स्यार्धधातुके' इत्यतः सीत्यनुवृत्तं सनो विशेषणम् । तदादिविधिरिति भावः । **अत्र लोपोऽभ्यासस्य** । 'सनि मीमा—' इति 'आप्ज्ञप्यृधामीत्' इति 'दम्भ इच्च' इति 'मुचोऽकर्मकस्य गुणो वा' इति पूर्वसूत्रचतुष्टयविहितकार्यमत्रेत्यनेन परामृश्यते, तदाह **सनि मीमेत्यारभ्येति** । सूत्रचतुष्टयकार्ये कृते सतीत्यर्थः । **ईप्सतीति** । आप्धातोः सनि आकारस्य इत्त्वे 'अजादेर्द्वितीयस्य' इति प्स इत्यस्य द्वित्वे अभ्यासलोप इति भावः । **रपरत्वमिति** । ऋधेः सनि इडभावे ऋकारस्य ईत्त्वे रपरत्वमित्यर्थः । **चर्त्वमिति** । ईर्ध् स इति

---

'नोपधात्—' इत्यतो वेति चानुवर्तते, तदाह **क्त्वासनावित्यादि** । सेट् किम्, भित्त्वा, छित्त्वा, बुभुक्षते । **आप्ज्ञप्यृ** । 'सनि सीमा—' इत्यतः अच इत्यनुवर्तते, 'सः स्यार्धधातुके' इत्यतः सीति च, तदाह **अच ईत्स्यात्सादाविति** । सीत्यस्य

अर्दिधिषति । विभ्रज्जिषति, विभर्जिषति, विभ्रक्षति, विभर्क्षति । २६२१ दम्भ इच्च । ( ७—४—५६ ) दम्भेरच इत्स्यादीच सादौ सनि । अभ्यासलोपः । 'हलन्ताच्च' ( सू० २६१३ ) इत्यत्र हल्ग्रहणं जातिपरमित्युक्तम् । तेन सनः कित्त्वान्नलोपः । धिप्सति, धीप्सति, दिदम्भिषति । शिश्रीषति, शिश्रयिषति । 'उदोष्ठ्यपूर्वस्य' ( सू० २४९४ ) । सुस्वूर्षति, सिस्वरिषति । युयूषति, यियविषति ।

---

स्थिते धस्य चर्त्वे 'न न्द्राः—' इति रेफं वर्जयित्वा 'अजादेर्द्वितीयस्य' इति त्स इत्यस्य द्वित्वे अभ्यासस्य लोप इति भावः । 'पूर्वत्रासिद्धीयमद्वित्वे' इति वचनात् चर्त्वे कृते द्वित्वमिति बोध्यम् । इट्पक्षे आह अर्दिधिषतीति । सनः सादित्वाभावादोत्त्वाभावे गुणे रपरत्वे अर् ध् इ स इति स्थिते धिस् इत्यस्य द्वित्वमिति भावः । भ्रस्ज्धातोः सन इटि 'भ्रस्जो रोपधयोः—' इति रमागमाभावे आह विभ्रज्जिषतीति । सस्य श्चुत्वेन शः, शस्य जश्त्वेन जः । किङ्दभावाद् 'ग्रहिज्या—' इति संप्रसारणं न । विभर्जिषतीति । इटि रमागमपक्षे भ्रस्ज् इस इति स्थिते भकारादुपरि सकारात्प्राग् रेफागमे भकाराद्रेफस्य सकारस्य च निवृत्तौ भर्ज् इस इति स्थिते भर्ज् इत्यस्य द्वित्वे हलादिशेषे अभ्यासस्य इत्त्वे जश्त्वे सनः षत्वे च रूपम् । तदेवमिट्पक्षे रमागमतदभावाभ्यां रूपद्वयम् । विभ्रक्षतीति । इडभावे रमागमाभावे च रूपम् । जस्य कुत्वं सस्य षः । विभर्क्षतीति । इडभावे रमागमे च रूपम । तदेवमिडभावपक्षे रमागमतदभावाभ्यां द्वे रूपे । दम्भ इच्च । 'सनि मीमा—' इत्यतः सनीति अच इति चानुवर्तते । चकाराद् 'आप्ज्ञप्यृधाम्—' इति सूत्रादीदिति समुच्चीयते 'सः सि—' इत्यतः सीत्यनुवृत्तं सनो विशेषणं तदादिविधिः, तदाह दम्भेरच इत्यादि । अभ्यासलोप इति । 'अत्र लोपः —' इत्यनेनेति शेषः । दिम्भ् स इति स्थिते इक्समीपादनुस्वाराद्व्यवहितपरत्वाभावेऽपि हलन्तादित्यस्य प्रवृत्तिमुपपादयति हलन्ताच्चेत्यत्रेति । हल्ग्रहणं हल्त्वजात्याक्रान्तैकानेकव्यक्तिपरमिति प्रागुक्तमित्यर्थः । ततः किमित्यत आह तेनेति । धिप्सतीति । 'सनीवन्त—' इति इडभावे इत्त्वे रूपम् । धीप्सतीति । इडभावे ईत्त्वे च रूपम् । दिदम्भिषतीति । इट्पक्षे सनो झलादित्वाभावादकित्त्वान्नलोपो नेति भावः । शिश्रीषतीति । 'सनीवन्त—' इति इडभावे अज्झनेति दीर्घः । सनः कित्त्वान्न गुणः । इट्पक्षे आह शिश्रयिषतीति । अझलादित्वान्न कित्त्वम्, नाप्यज्झनेति दीर्घः । स्वृधातोः सनि ऋकारस्य उत्त्वविधिं स्मारयति उदोष्ठ्येति सुस्वूर्षतीति । 'सनीवन्त—' इति इडभावे ऋकारस्य 'अज्झन—' इति दीर्घे कृते उत्त्वे रपरत्वे 'उपधायां च' इति दीर्घे इति भावः । सिस्वरिषतीति । स्वृ इत्यस्य द्वित्वे उरदत्वे इत्त्वमिति भावः । युयूषतीति । 'सनीवन्त—' इति इडभावे 'अज्झन—' इति दीर्घः । यियविषतीति । इट्पक्षे 'द्विर्वचनेऽचि' इति गुणनिषेधाद् यु इत्यस्य द्वित्वे 'ओः पुयण्जि—' इतीत्वमिति भावः ।

---

सनो विशेषणात्सादाविति लाभः । ईप्सतीति । 'अजादेर्द्वितीयस्य' इति प्सशब्दस्य द्वित्वम् । विभ्रज्जिषतीति । इटि तदभावे च रमागमविकल्पाच्चत्वारि रूपाणि । सुस्वूर्षतीति । 'अज्झनगमाम्—' इति दीर्घे सत्युत्वम् । यियु-

ऊर्णुनूषति ऊर्णुनुविषति । न च परत्वाद् गुणावादेशयोः सतोरभ्यासे उकारो न श्रूयेतेति वाच्यम्, 'द्विर्वचनेऽचि' ( सू० २२४३ ) इति सूत्रेण द्वित्वे कर्तव्ये स्थानिरूपातिदेशनिषेधाद्वा न च सन्नन्तस्य द्वित्वं प्रति कार्यित्वान्निमित्तता कथमिति वाच्यम्, 'कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते, न त्वननुभवन्नपि' ( प० ११ )। न चेह सन् द्वित्वमनुभवति । बिभरिषति । ज्ञपिः पुगन्तो मित्संज्ञकः पकारान्तश्चौरादिकश्च । इडभावे 'इको

---

ऊर्णुनूषतीति । 'सनीवन्त—' इति इडभावपक्षे 'न न्द्राः—' इति रेफं वर्जयित्वा नुस इत्यस्य द्वित्वे 'अज्झन—' इति दीर्घः । 'इको झल्' इति सनः कित्त्वान्न गुणः । इट्पक्षे तु 'विभाषोर्णोः' इति सनः ङित्त्वविकल्पं मत्वाह ऊर्णुनुविषतीति, ऊर्णुनविषतीति । ङित्त्वपक्षे गुणाभावान्नुशब्दस्य द्वित्वे उत्तरखण्डे उवङ् । ङित्त्वाभावपक्षे तु इत्यस्य द्वित्वे उत्तरखण्डस्य गुणावादेशाविति भावः । उभयत्राप्यभ्यासे उवर्णः श्रूयते । ननु ङित्त्वाभावपक्षे ऊर्णु इस इति स्थिते द्वित्वात् प्रागेव परत्वाद् गुणे अवादेशे च कृते नव्शब्दस्य द्वित्वे अभ्यासस्यात इत्वे ऊर्णिनविषतीति अभ्यासे इकार एव श्रूयेत, न तु उकार इत्याशङ्क्य निराकरोति द्विर्वचनेऽचीति । अस्मिन् सूत्रे स्थानिवदित्यनुवर्त्य रूपातिदेशं चाश्रित्य द्वित्वनिमित्ते अचि परे यः अजादेशः स द्वित्वे कर्तव्ये स्थानिरूपं प्रतिपद्यते इत्येकोऽर्थः । 'न पदान्त—' इत्यतो नेत्यनुवर्त्य द्वित्वनिमित्ते अचि यः अजादेशः स न स्याद् द्वित्वे कर्तव्ये इत्यन्योऽर्थः । तत्र प्रथमव्याख्याने तु कृतस्यापि गुणस्य स्थानिभूतोकाररूपप्रतिपत्त्या नु इत्यस्य द्वित्वे अभ्यासे उकार एव श्रूयते । द्वितीयव्याख्यानेऽपि द्वित्वात् प्राग् गुणस्य निषिद्धतया नुशब्दस्यैव द्वित्वे अभ्यासे उकार एव श्रूयते इति भावः । ननु ऊर्णु इस इति सन्नन्तस्य द्वित्वरूपकार्यभाक्त्वेन तदन्तर्गतस्य इस इत्यस्यापि कार्यित्वान्न द्वित्वनिमित्तत्वम्, 'न हि कार्यी निमित्ततया आश्रीयते' इत्युक्तेः, तथा च द्वित्वे कर्तव्ये द्वित्वनिमित्ताच्परकादेशस्य क्रियमाणो निषेधः कथमिह गुणस्य प्रसज्यत इत्याशङ्क्य निराकरोति न च सन्नन्तस्येति । कार्यमनुभवन्निति । अत्र व्याख्यानमेव शरणम् । न चेह सन्निति । किंतु नुशब्द इत्यर्थः । बुभूर्षतीति । सनीवन्तेति इडभावपक्षे भृ स इति स्थिते 'अज्झन—' इति दीर्घे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे उत्तरखण्डस्य 'हलि च' इति दीर्घः । सनः कित्त्वान्न गुण इति भावः । इट्पक्षे आह बिभरिषतीति । भृ इस इति स्थिते द्वित्वे उरदत्वे रपरत्वे हलादिशेषे अभ्यासस्य अत इत्वे उत्तरखण्डस्य गुणे रपरत्वमिति भावः । ज्ञपिः पुगन्तो मित्संज्ञक इति । 'सनीवन्त—' इति सूत्रे गृह्यते इति शेषः । 'मारणतोषणनिशामनेषु ज्ञा' इति घटादौ, ततो हेतुमण्णौ पुकि घटादित्वेन मित्वाद् उपधाह्रस्वे ज्ञपीति ण्यन्तो गृह्यत इत्यर्थः । पकारान्तश्चौरादिकश्चेति । 'ज्ञप मिच्च' इति यः स्वतः पकारान्तः पठितः चुरादौ, न तु पुगन्तः सोऽपि 'सनीवन्त—' इति सूत्रे गृह्यत इत्यर्थः । इडभावे

---

विपतीति । 'द्विर्वचनेऽचि' इत्यादेशनिषेधाद् द्वित्वे कृते अभ्यासस्योवर्णस्येत्वम् । ऊर्णुनूषतीति । इडभावे 'अज्झनगमाम्—' इति दीर्घः । इट्पक्षे तु 'विभाषोर्णोः' इति

झल्' ( सू० २६१२ ) इति कित्त्वान्न गुणः। 'अज्झन–' ( सू० २६१४ ) दीर्घः परत्वाण्णिलोपेन बाध्यते 'आप्ज्ञप्––' ( सू० २६१६ ) इति ईत्। ज्ञीप्सति, जिज्ञपयिषति। अमितस्तु जिज्ञापयिषति। 'जनसन––' ( सू० २५०४ ) इत्यात्त्वम्। सिषासति, सिसनिषति। 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' ( वा० ५०५९ )। २६१२ तनोतेर्विभाषा। ( ६—४—१७ ) अस्योपधाया दीर्घो वा स्याज्झलादौ सनि। तितांसति, तितनिषति। 'आशङ्कायां सन्वक्तव्यः' ( वा० १७०७ ) श्वा मुमूर्षति। कूलं पिपतिषति। २६२३ सनि मीमाघुरभलभशकपतपदामच इस्। ( ७—४—५४ ) एषामच इस्स्यात्सादौ सनि। अभ्यासलोपः। 'स्कोः––' ( सू० ३८० ) इति सलोपः। पित्सति। दिदरिद्रिषति दिदरिद्रासति। डु मिञ्, मीञ् आभ्यां सन्। कृतदीर्घस्य

---

इति। उभयविधादपि ण्यन्ताद् ज्ञपि इत्यस्मात् सनि इडभावपक्षे णेः परस्य सनः 'इको झल्' इति कित्त्वाण्णेर्गुणोः। नेत्यर्थंपरत्वादिति। णेर्लोपे सति अचोऽभावान्न दीर्घ इति भावः। तथा च ज्ञीप् इत्यस्य द्वित्वे हलादिशेषे 'अत्र लोपः–' इत्यभ्यासलोपे परिनिष्ठितमाह ज्ञीप्सतीति। इट्पक्षे आह जिज्ञपयिषतीति। अमितस्त्विति। मारणादिव्यतिरिक्तार्थकस्य घाटादिकस्य हेतुमण्ण्यन्तस्य 'ज्ञा नियोगे' इति चौरादिकण्यन्तस्य च मित्त्वाभावेन उपधाह्रस्वाभावात् 'सनीवन्त–' इत्यत्र ज्ञपिग्रहणेनाग्रहणान्नित्यमेव इडिति भावः, तदाह जिज्ञापयिषतीति। सनधातोः सनि आह जनसनेत्यात्त्वमिति। नकारस्येति शेषः। सिषासतीति। आत्त्वे कृते सा इत्यस्य द्वित्वे अभ्यासस्य ह्रस्वे अत इत्त्वे षत्वे रूपम्। न च 'स्तौतिण्योरेव–' इति नियमान्न ष इति शङ्क्यम्, सनः षत्वे सत्येव तत्प्रवृत्तेः। इट्पक्षे त्वाह सिसनिषतीति। अत्र 'जनसन–' इत्यात्त्वं तु न, सनो झलादित्वाभावात्। 'स्तौतिण्योरेव–' इति नियमान्न ष इति भावः। तनिषतीति। प्राप्तविभाषेयम्। तनोतेर्विभाषा। उपधाया दीर्घ इति। 'नोपधायाः–' इत्यतो 'ढ्लोपे–' इत्यतश्च तदनुवृत्तेरिति भावः। झलादौ सनीति। 'अज्झन-'इत्यतस्तदनुवर्तते। तत्र झलादाविति भाष्ये स्थितमिति भावः। आशङ्कायामिति। आशङ्काविषयक्रियावृत्तेर्धातोः स्वार्थे सन्नित्यर्थः। श्वा मुमूर्षतीति। शङ्कितमरणो भवतीत्यर्थः। कूलंपिपतिषतीति। शङ्कितपतनं भवतीत्यर्थः। 'तनिपति–' इति इट्पक्षे रूपम्। पतेः सनि इडभावपक्षे त्वाह सनि मीमा। सादौ सनीति। 'सः सि–' इत्यतः सीत्यनुवृत्तेरिति भावः। अभ्यासलोप इति। 'अत्र लोपः–' इत्यनेनेति भावः। पिस्त् स ति इति स्थिते आह स्कोरिति। दरिद्रातेः सनि 'तनिपति––' इति इड्विकल्पमुदाहरति दिदरिद्रिषति दिदरिद्रासतीति। डु मिञिति। 'डु मिञ्

---

वा ङित्त्वम्। न चेह सन्निति। किं तु नुशब्द इत्यर्थः। क्त्त्वान्न गुण इति। णिचः स्थाने इत्यर्थः। श्वा मुमूर्षतीति। एकत्वविषया मरणशङ्केति बोधः। मरणशङ्काविषयो भवतीत्यन्ये। 'पूर्ववत्सनः' इत्यात्मनेपदमिह न शङ्क्यम्, 'शदेः––' इत्यादिसूत्रद्वये सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयमिति वक्ष्यमाणत्वात्। सन्नि

मिनोतेरपि मीरूपाविशेषादिस् । 'सः सि–' (सू० २३४२) इति तः, मित्सति मित्सते । मा माने–मित्सति । माङ्मेङोः–मित्सते । दोदाणोः–दित्सति । देङ्–दित्सते । दाञ्–दित्सति । धेट्–धित्सति । धाञ्–धित्सति, धित्सते । रिप्सते । लिप्सते । शक्लृ–शिक्षति । शक मर्षणे इति दिवादिः स्वरितेत्–शिक्षति, शिक्षते । पित्सति । 'राधो हिंसायां सनीस् वाच्य' (वा० ४६३५)। रित्सति । हिंसायाम् किम्—आरिरात्सति । २६३४ मुचोऽकर्मस्य गुणो वा । (७—४—५७) सादौ सनि । अभ्यासलोपः । मोक्षते,

---

प्रक्षेपणे' स्वादिः, 'मीङ् हिंसायाम्' क्र्यादिः, आभ्यां सन्नित्यर्थः । 'सनि मी—' इत्यत्र मीग्रहणेन एतयोरुभयोर्ग्रहणमिति भावः । ननु मी इति दीर्घश्रवणाद् डु मिञ् इत्यस्य ह्रस्वान्तस्य कथं ग्रहणमित्यत आह कृतदीर्घस्येति । डु मिञ्धातोः सनि 'अज्झन–' इति कृतदीर्घस्य तथा 'मीञ् हिंसायाम्' इति स्वतःसिद्धदीर्घस्य च मीरूपाविशेषादुभयोरपि ग्रहणमित्यर्थः । सः सीति । उभयोरपि धात्वोः मी स इति स्थिते 'सनि मीमा–' इति ईसादेशे द्वित्वे 'अत्र लोपः–' इत्यभ्यासलोपे 'सः सि–' इति सस्य तकार इत्यर्थः । मित्सति, मित्सते इति । प्रकृतेर्ञित्त्वात् 'पूर्ववत्सनः' इति उभयपदित्वम् । माङ्मेङोरिति । मेङः सनि 'आदेचः–' इत्यात्वे कृते मारूपत्वाविशेषात् 'सनि मीमा–' इत्यत्र उभयोरपि ग्रहणमिति भावः । दोदाणोरिति । 'दो अवखण्डने' इति धातोः सनि आत्वे कृते दारूपाविशेषाद् घुत्वादुभयोर्ग्रहणमिति भावः । दित्सतीति । 'हलन्ताच्च' इति कित्वान्नोपधागुणः । देङिति । तस्यापि कृतात्त्वस्य दारूपत्वेन घुत्वादिति भावः । दाञिति । 'डु दाञ् दाने' इति धातुरपि घुत्वाद् गृह्यत इति भावः । धेडिति । अस्यापि कृतात्त्वस्य घुत्वात् 'सनि सीमा–' इत्यत्र ग्रहणमिति भावः । रिप्सते इति । रभधातो रूपम् । लिप्सते इति । लभधातो रूपम् । पित्सतीति । पत्लृधातो रूपम् । पदधातोः पित्सते इति रूपम् । सनि इस् वाच्य इति । आकारस्येति शेषः । रित्सतीति । सनि इसादेशः । 'अत्र लोपः–' इत्यभ्यासलोपः । मुचोऽकर्मकस्य । सनीति । शेषपूरणमिदम् । 'सः सि–' इत्यतः सीति 'सनि मीमा–' इत्यतः सनीति चानुवृत्तेरिति भावः । 'हलन्ताच्च' इति कित्वाद् गुणनिषेधे प्राप्ते वचनम् । अभ्यास लोपः इति । 'अत्र लोपः–' इत्यनेनेति शेषः । मोक्षते इति । 'अत्र लोपः–'

---

मीमा । 'सः सि–' इत्यतः सीत्यनुवर्तते तस्य सनो विशेषणत्वात्सादौ सनीति लाभः । मीरूपाविशेषादिति । ननु मिनोतेर्मीरूपस्य लाक्षणिकत्वाद् मीग्रहणेन ग्रहणं न प्राप्नोति । नैष दोषः, यत्र लक्षणाभिनिर्वृत्तत्वेन शब्दरूपमपेक्ष्यते तत्र लक्षणप्रतिपदोक्तयोरिति परिभाषोपस्थापनं न तु यत्र प्रयोगाश्रयणं तत्रेति 'इको झल्' इति सूत्रे कैयटेनोक्तत्वात् । तस्यायमाशयः—मीरूपमात्रस्य प्रयोगोऽत्राश्रितः । 'विभाषा दिक्समासे–' इत्यत्र तु लक्षणाभिनिर्वृत्तस्य समासशब्दस्याश्रयणाद् 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्त एव समास आश्रीयत इति लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वात्क्वचिदुपतिष्ठते क्वचिन्नोपतिष्ठत इति तु निष्कृष्टोऽर्थः । मित्सतीति । 'हल-

मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम्-मुमुक्षति वत्सं कृष्णः । 'न वृद्भ्यश्चतुर्भ्यः' ( सू० २३४८ ) । विवृत्सति । तङि तु विवर्तिषते । 'सेऽसिच-' ( सू० २५०६ ) इति वेट् । निर्नर्तिषति, निनृत्सति । **२६२५ इट् सनि वा । (७-२-४१)** वृङ्वृञ्भ्यामॄदन्ताच्च सन इड् वा स्यात् । तितारिषति, तितरीषति, तितीर्षति । विवरिषति, विवरीषति, वुवूर्षति । वृङ्-वुवूर्षते, विवरिषते । दुध्वूर्षति । **२६२६ स्मिपूङ्रञ्ज्वशां सनि । (७-२-७४)** स्मिङ्, पूङ्, ऋ, अञ्जू, अशू, एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते ।

---

इत्यभ्यासलोपः । तङि त्विति । 'नवृद्भ्यः-'इत्यत्र परस्मैपदग्रहणानुवृत्तेरुक्तत्वादिति भावः । निनृत्सतीति । इडभावपक्षे 'हलन्ताच्च' इति कित्त्वान्न गुणः । **इट् सनि वा** । 'वृतो वा' इत्यतो वृत इत्यनुवर्तत इति मत्वाह वृङ्वृञ्भ्यामित्यादि । 'सनि ग्रहगुहोश्च' इत्यस्यापवादः चिकीर्षतीत्यादौ 'अज्झन—' इति दीर्घे कृते सनि नेदं प्रवर्तते, 'एकाच उपदेशे—' इत्यत उपदेशे इत्यनुवर्त्य उपदेशे ऋकारान्तादिति व्याख्यानात् । तितरिषति, तितरीषतीति । तॄधातोः सनि लटि 'वृतो वा' इति दीर्घः । इडभावे त्वाह तितीर्षतीति । 'इको झल्' इति कित्त्वात् गुणाभावे तॄ इत्यस्य ऋकारस्य इत्त्वे रपरत्वे 'हलि च' इति दीर्घं इति भावः । विवरिषतीति । वृञ्धातोः सनि इटि 'वृतो वा' इति दीर्घविकल्पः । इडभावे त्वाह वुवूर्षतीति । 'उदोष्ठ्य—' इत्युत्त्वे रपरत्वे 'हलि च' इति दीर्घः । वुवूर्षते इति । ङित्त्वादात्मनेपदम् । दुध्वूर्षतीति । 'ध्वृ कौटिल्ये' । 'अज्झन—' इति दीर्घः । 'उदोष्ठ्य—' इत्युत्त्वे 'हलि च' इति दीर्घं इति भावः । **स्मिपूङ्** । स्मि, पूङ्, ऋ, अञ्जू, अश एषां द्वन्द्वः । ऋकारस्य यणि रेफे रञ्ज्विति निर्देशः । इट् स्यादिति । 'इडत्त्यर्ति—' इत्यतस्तदनुवृत्तेरिति भावः । पूञस्तु पुपूषतीत्येव । 'सनि ग्रह—' इति इण्निषेधात् । सिस्मयिषते इति । 'स्तौतिण्योरेव—' इति नियमान्न षः । पिपविषते इति । पूङ्धातोः पू इत्यस्य द्वित्वे 'ओः पुयण्ज—'

---

न्ताच्च' कित्त्वान्नोपधागुणः । शिक्षतीति । ननु निरनुबन्धपरिभाषया 'शक मर्षणे' इत्यस्यैव ग्रहणमुचितमिति चेत् । अत्राहुः-इयं हि परिभाषा प्रत्ययग्रहणविषया । अत एव 'जॄवृश्च्योः-' इत्यत्र जॄजृषोरुभयोर्ग्रहणमिति न्यासकारेणोक्तमतोऽत्रापि स्वादिदैवादिकयोर्ग्रहणं युक्तमेवेति । मुचोऽकर्मकस्य । 'हलन्ताच्च' इति कित्त्वेन गुणाभावे प्राप्ते विधिरयम् । विवृत्सतीति । 'वृद्भ्यः स्यसनोः' इति विकल्पेन परस्मैपदम् । **इट् सनि वा** । चिकीर्षतीत्यादौ 'अज्झनगमाम्-'इति दीर्घे कृते नेदं प्रवर्तते । 'एकाच उपदेशे-' इत्यत उपदेश इत्यनुवर्त्य उपदेशे ऋकारान्तादितिव्याख्यानात् । अत एवेदं विनैवोदाहरति दुध्वूर्षतीति । ध्वृ कौटिल्ये । 'अज्झन—' इति दीर्घः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वं रपरत्वं 'हलि च' इति दीर्घः । **स्मिपूङ्** । पूङिति ङकारानुबन्धग्रहणात् पूञः पुपूषतीत्येव । 'सनिग्रह—' इतीण्निषेधात् । सिस्मयिषत इति । स्मिङ् ईषद्धसने अस्यानिट्त्वादिडागमस्या-

अरिरिषति । इह रिस्शब्दस्य द्वित्वम् । इस् इति सनोऽवयवः कार्यभागिति कार्यिणो निमित्तत्वायोगाद् 'द्विर्वचनेऽचि' ( सू० २२४३ ) इति न प्रवर्तते । अञ्जिजिषति । अशिशिषते । 'उभौ साभ्यासस्य' ( सू० २६०६ ) प्राणिणिषति । उच्छेस्तुक्, श्चुत्वम्, 'पूर्वत्रासिद्धीयमद्वित्वे' इति चछाभ्यां सहितस्येटो द्वित्वम्, 'हलादिः शेषः' ( सू० २१७९ ) उचिच्छिषति । 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति त्वनित्यम्, 'च्छ्वोः—' ( सू० २५६१ ) इति सतुक्कग्रहणाज्ज्ञापकात्, प्रकृतिप्रत्ययापत्तिवचनाद्वा । 'णौ च संश्चङोः' ( सू० २५७९ )

---

इति इत्वम् । **अरिरिषतीति** । ऋधातोः सनि इटि रूपम् । **रिस्शब्दस्येति** । गुणे रपरत्वे 'अजादेर्द्वितीयस्य' इति रिस् इत्यस्य द्वित्वमित्यर्थः । ननु 'द्विर्वचनेऽचि' इति निषेधाद् गुणासंभवाद् रिस् इत्यस्य कथं द्वित्वमित्यत आह **द्विर्वचनेऽचि इति न प्रवर्तते इति** । कुत इत्यत आह **कार्यिणो निमित्तत्वायोगादिति** । 'नहि कार्यी निमित्ततया आश्रीयते' इति निषेधादिडादेः सनो द्वित्वरूपकार्यिणो न द्वित्वनिमित्तमिति भावः । ननु इडागमः सन्भक्तः ततश्च इस् इत्यस्य द्वित्वेऽपि समुदायस्य इस इत्यस्य द्वित्वकार्यित्वाभावाद् द्वित्वनिमित्तत्वमित्यत आह **इस इतीति** । इस् इति सनोऽवयवो द्वित्वभागिति कृत्वा अवयवद्वारा इस् इति समुदायस्य कार्यित्वमिति भावः । **अञ्जिजिषतीति** अञ्जेः सनि इटि 'न न्द्राः—' इति नकारस्य निषेधाद् जिस् इत्यस्य द्वित्वम् । ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । **अशिशिषते इति** । 'अशू व्याप्तौ' ऊदित्त्वादिड्विकल्पे प्राप्ते नित्यमिट् । 'अश भोजने' इति क्र्यादिस्तु नित्यं सेडेव । **उच्छेरिति** । 'उच्छी विवासे' । अत्र 'छे च' इति तुगित्यर्थः । **श्चुत्वमिति** तुक इति शेषः । ननु उच्छ् इस इति स्थिते श्चुत्वस्यासिद्धत्वात्तकारसहितस्य द्वित्वे अभ्यासे तकारः श्रूयेत इत्यत आह **पूर्वत्रेत्यादि** । **हलादिः शेष इति** । च्छिस् इत्यस्य द्वित्वे ।हलादिशेषादभ्यासे छकारसकारयोर्निवृत्तौ युक्श्चकार इकारश्च शिष्यते इत्यर्थः, तदाह **उचिच्छिषतीति** । उत्तरखण्डे छकारे परे इकारस्य तुकश्चुत्वेन चकारः । ननु च्छिस् इत्यस्य द्वित्वे हलादिशेषात्पूर्वखण्डे छकारसकारयोर्निवृत्तौ 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन तुकोऽपि निवृत्तेस्तदादेशचकारस्य कथमभ्यासे श्रवणमित्यत आह **निमित्तापाये इति** । कथमनित्यत्वमित्यत आह **च्छ्वोरिति** । पृष्टः पृष्टवानित्यादौ प्रच्छेः छकारस्य 'च्छ्वोः—' इति शकारे व्रश्चादिना शस्य षत्वे तुक्चकारस्य श्रवणप्राप्तौ तन्निवृत्त्यर्थं सतुक्कग्रहणम् । तत्र चकारस्य शकारे सति निमित्ताभावादेव तुकोऽपि निवृत्तिसिद्धेः सतुक्कग्रहणं व्यर्थमापद्यमानं 'निमित्तापाये—' इत्यस्यानित्यतां ज्ञापयतीत्यर्थः । **प्रकृतिप्रत्ययापत्तिवचनाद्वेति** । 'हनश्च वधः' इति हनधातोरप्प्रत्यये प्रकृतेर्वधादेशो

---

प्राप्तिः । 'स्तौतिण्योरेव—' इति नियमान्न षः । **आरीरिषतीति** । अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः । **रिस्शब्दस्येति** । सन इटि गुणे च कृते अरिस् इति स्थिते। 'अजादेर्द्वितीयस्य' इति रिस्शब्दस्य द्वित्वमित्यर्थः । **अञ्जिजिषतीत्यादि**

( सू० २६०१ ) इति सूत्राभ्यामिङो गाङ्, श्वयतेः संप्रसारणं च वा । अधिजिगापयिषति, अध्यापिपयिषति । शिश्वाययिषति, शुशावयिषति । 'ह्वः संप्रसारणम्' ( सू० २५८६ ) जुहावयिषति । 'णौ द्वित्वात्प्रागच आदेशो न' इत्युक्तत्वादुकारस्य द्वित्वम् । पुस्फारयिषति । चुक्षावयिषति । 'ओः पुयण्ज्यपरे'

---

वधशब्दः । कंसवधमाचष्टे कंसं घातयतीत्यादौ 'आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः' इति अप्प्रत्ययस्य लुकि प्रकृतेर्वधादेशनिवृत्तिर्विहिता । तत्र कृतो लुकि निमित्तापायादेव वधाद्यादेशनिवृत्तिसिद्धेः प्रकृतिप्रत्यापत्तिवचनं व्यर्थमापद्यमानं 'निमित्तापाये—' इत्यस्य अनित्यतां ज्ञापयतीत्यर्थः । यद्यप्यत्र वधशब्दे अप्प्रत्ययो वधादेशश्च युगपद्विहितः, न तु प्रत्यये परे । तथापि संनियोगशिष्टत्वात् प्रत्ययस्य निमित्तत्वं पर्यवसानगत्येति बोध्यम् । वस्तुतस्तु पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके 'पुष्ययोगे ज्ञि' इति वचने भाष्योक्तप्रकृतिप्रत्यापत्तिरित्यनुवृत्तिरिह ज्ञापिका । तत्र हि 'चजोः—' इति घिति परतः कुत्वम् । अन्यथा कृल्लुकि निमित्तापायपरिभाषयैव कुत्वनिवृत्तौ किं प्रकृतिप्रत्यापत्त्यनुवृत्त्येति शब्देन्दुशेखरे विस्तरः । अथ 'इङ् अध्ययने' 'टु ओ श्वि गतिवृद्धयोः' इत्याभ्यां सनि विशेषमाह णौ चेति । 'संश्चङोः' इति सूत्रं द्वितीयस्य चतुर्थे पादे षष्ठस्य प्रथमे पादे च स्थितम् । सन्परे चङ्परे च णौ इङो गाङ् वेति प्रथमस्यार्थः । सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वेति द्वितीयस्यार्थः । प्रथमसूत्रेण इङो गाङ्, द्वितीयसूत्रेण श्वयतेः संप्रसारणमित्युभयमपि पाक्षिकं भवतीत्यर्थः । अधिजिगापयिषतीति । इङो णौ विवक्षिते गाङि पुकि गापि इत्यस्मात्सनि रूपम् । 'णौ च संश्चङोः' इति गाङ्विधौ विषयसप्तमीति प्रागेवोक्तम् । गाङभावे आह अध्यापिपयिषतीति । 'क्रीङ्जीनां णौ' इत्यात्वे पुक् । शिश्वाययिषतीति । श्विधातोर्णौ वृद्धावायादेशे श्वायि इत्यस्मात्सनि संप्रसारणाभावे रूपम् । संप्रसारणपक्षे आह शुशावयिषतीति । ण्यन्तात्सनि इटि श्वि इ इस इति स्थिते 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' इति वचनात्प्रथमं संप्रसारणं पूर्वरूपम् । शु इत्यस्य द्वित्वे उत्तरखण्डे उकारस्य वृद्धावावादेशे णिचो गुणायादेशाविति भावः । ह्वः संप्रसारणमिति । हेतुमण्ण्यन्तप्रक्रियायां व्याख्यातम् । जुहावयिषतीति । ह्वेञो ण्यन्तात्सनि इटि प्रथमं संप्रसारणं पूर्वरूपम् । हु इत्यस्य द्वित्वम् । उकारस्य वृद्ध्यावादेशौ, णिचो गुणायादेशाविति भावः । ननु परत्वाद् द्वित्वात् प्रागेव उकारस्य वृद्ध्यावादेशयोः कृतयोः हाव् इत्यस्य द्वित्वे अभ्यासस्यात इत्वे इकार एव श्रूयेतेत्यत आह णौ द्वित्वादिति । पुस्फारयिषतीति । स्फुरतेर्ण्यन्तात्सनि इटि 'चिस्फुरोर्णौ' इत्यस्मात् प्रागेव स्फुर् इत्यस्य द्वित्वम्, द्वित्वे कार्ये णावच आदेशस्य निषेधात् । 'ओः पुयण्जि—' इति इत्वं तु न, फकारस्य सकारेण व्यवहिततया पवर्गपरत्वाभावात् । चुक्षावयिषतीति । क्षुधातोः ण्यन्तात्

---

अञ्जू व्यक्तिम्रक्षणादौ । अशू व्याप्तौ । अनयोरूदित्त्वाद्विकल्पे प्राप्ते । नित्यमिट् । अश भोजन इति क्र्यादिस्तु नित्यं सेडेव । सूत्राभ्यामिति । एकं द्वितीयेऽपरं तु षष्ठे । तत्राद्येन गाङादेशोऽपरेण संप्रसारणम् । ह्वः संप्रसारणम् । इदं च णिजन्तेषु

( सू० २५७७ ) पिपावयिषति, बिभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति। पुयण्जि इति किम्—नुनावयिषति। अपरे किम्—बुभूषति। 'स्रवति—' ( सू० २५७८ ) इतीत्त्वं वा सिस्रावयिषति। सुस्रावयिषतीत्यादि। अपरे इत्येव, शुश्रूषते

२६२७ स्तौतिण्योरेवषण्यभ्यासात्। ( ८—३—६१ ) अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य। तुष्टूषति। 'द्युतिस्वाप्योः—' (सू० २३४४) इत्युत्त्वम्। सुष्वापयिषति। सिषाधयिषति। स्तौतिण्योः किम्—सिसिक्षति। उपसर्गात्तु 'स्थादिष्वभ्यासेन च—' ( सू० २२७७ ) इति षत्वम्। परिषिषिक्षति।

---

सनि इटि क्षु इत्यस्य द्वित्वम्। परिनिष्ठिते रूपे अवर्णपरत्वेन णावच आदेशस्य निषेधादिति भावः। ओः पुयण्जीति। हेतुमण्णिच्प्रक्रियायामिदं व्याख्यातमपि स्मार्यते। पिपावयिषतीत्यादि। पू, भू, यु, रु, लू, जु एभ्यो ण्यन्तेभ्यः सनि इटि द्वित्वे कार्ये णावच आदेशनिषेधात् उवर्णान्तानामेव द्वित्वे अभ्यासोवर्णस्य इत्त्वमिति भावः। जुः सौत्रो धातुः 'जुचङ्क्रम्य—' इत्यत्रोक्तः। अथ 'स्रवतिशृणोति'—' इति सूत्रं हेतुमण्णिच्प्रक्रियायां व्याख्यातं स्मारयति स्रवतीतीत्त्वं वेति शुश्रूषते इति। 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम्। स्तौतिण्योरेव। षणीति कृतषत्वस्य सनो ग्रहणम्। 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम्, 'इण्कोः—' इति च। तत्र कुग्रहणं निवर्तते असंभवात्। णिग्रहणेन तदन्तग्रहणम्। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते, तदाह अभ्यासेण इत्यादि। षभूते इति। षकारं प्राप्ते सनीत्यर्थः। नान्यत्रेति। अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेत्यर्थः। न च 'आदेशप्रत्यययोः' इत्येव सिद्धे आरम्भसामर्थ्यादेव नियमलाभाद् एवकारो व्यर्थ इति शङ्क्यम्, षण्येवेति नियमनिरसनार्थत्वात्। षण्येवेति नियमे सति तुष्टावेत्यत्र षत्वानापत्तेः। स्तौतेरुदाहरति। तुष्टूषतीति। 'अज्झन—' इति दीर्घः। ण्यन्तस्योदाहरिष्यन्नाह द्युतीति। उत्त्वमिति। वकारस्य संप्रसारणमुकार इत्यर्थः। सुष्वापयिषतीति। स्वपेर्णौ उपधावृद्धौ स्वापि इत्यस्मात् सनि इटि वकारस्य संप्रसारणे पूर्वरूपे सुप इत्यस्य द्वित्वे णेर्गुणेऽयादेशे सनः षत्वे अभ्यासेणः परस्य षत्वमिति भावः। सिषाधयिषतीति। अत्रापि ण्यन्तत्वादभ्यासेणः परस्य सस्य षत्वमिति भावः। सिसिक्षतीति। सेक्तुमिच्छतीत्यर्थः। सिच्धातोः सन् 'हलन्ताच्च' इति कित्त्वान्न लघूपधगुणः। अभ्यासेणः परस्य सस्य चेत् षत्वं तर्हि स्तौतिण्योरेव इति नियमान्न ष इति भावः। ननु परिषिषिक्षतीत्यत्र अभ्यासेणः परस्य सस्य कथं षत्वम्। 'स्तौतिण्योरे—' इति नियमात्, 'स्थादिष्वभ्यासेन च—' इति षत्वस्याप्यनेन नियमेन निवृत्तेरित्यत आह उपसर्गात्त्विति। 'स्तौतिण्योरेव—' इति नियमेन मध्येऽपवाद-

---

व्याख्यातमिह तु स्मारितम्। जिजावयिषतीति। जुः सौत्रो धातुः 'जुचङ्क्रम्य—' इत्यत्रोक्तः। शुश्रूषते इति। 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम्। स्तौतिण्योरेव। एवं च सिषाधयिषेति प्रयोगस्य साधुत्वं न तु सिसाधयिषेत्यस्येति ज्ञेयम्।

पणि किम्—तिष्ठासति । सुपुप्सति, अभ्यासादित्युक्तेर्नेह निषेधः । इण्—प्रतीषिपति । इक्—अधीषिपति । २६२८ सः स्विदिस्वदिसहीनां च । ( ८-३-६२ ) अभ्यासेणः परस्य ण्यन्तानामेषां सस्य स एव, न षः, पणि परे । सिस्वेदयिषति, सिस्वादयिषति । सिसाहयिषति । 'स्थादिष्वेवाभ्यासस्य' इति नियमान्नेह अभिसुसूषति ।

'शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः ।
सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥'

शैषिकाच्छैषिकः सरूपो न । तेन शालीये भव इति वाक्यमेव, न तु छान्ताच्छः । सरूपः किम्—अहिच्छत्त्रे भव आहिच्छत्त्रः, आहिच्छत्त्रे भव

---

न्यायवलाद् 'आदेशप्रत्यययोः' इति षत्वमेव वाध्यत इति भावः । पणि किमिति । कृतषत्वनिर्देशः किमर्थ इति प्रश्नः । तिष्ठासतीति । 'धात्वादेः—' इति षस्य सत्वे स्था इत्यस्य द्वित्वे अभ्यासह्रस्वे 'आदेशप्रत्यययोः' इति षत्वम् । कृतषत्वे सन्येवायं नियमः, अत्र तु सनः षत्वाभावेन नियमाप्रवृत्तेः षत्वं निर्बाधमिति भावः । सुपुप्सतीति । स्वप्धातोः सनि 'रुदविदमुषग्रहिस्वपि—' इति कित्त्वाद् 'वचिस्वपि—' इति संप्रसारणे कृते द्वित्वम् । कित्त्वान्न लघूपधगुणः । इहापि 'स्तौतिण्योरेव—' इति नियमो न भवति, सनः षत्वाभावादिति भावः । ननु पणि इणः परस्य सस्य चेत् षत्वं तर्हि स्तौतिण्योरेवेत्येतावदेवास्तु, अभ्यासादिति किमर्थमित्यत आह अभ्यासादित्युक्तेर्नेहेति । प्रतीषिपतीति । इण्धातोः सनि 'अजादेर्द्वितीयस्य' इति स इत्यस्य द्वित्वे अभ्यासेत्त्वम् । इह पभूते सनि 'इण गतौ' इति धातोः परस्य सस्य षत्वं भवत्येव, अभ्यासेणः परत्वे सत्येव नियमप्रवृत्तेरिति भावः । अधीषिपतीत्यप्येवम् । सः स्विदीति । सः स्विदीति छेदः । 'स्तौतिण्योरेव षण्यभ्यासात्' इति सूत्रं स्तौतिवर्जमनुवर्तते । 'सहे साडः सः' इत्यतः स इति षष्ठ्यन्तं च, तदाह अभ्यासेण इति । सकारविधिर्नियमार्थ इत्याह सस्य स एवेति । सुनोतेः सनि 'स्तौतिण्योरेव—' इति नियमादुत्तरखण्डस्य षत्वाभावे अभिसुसूषतीत्यत्र 'उपसर्गात्सुनोति—' इत्यभ्यासस्य षत्वमाशङ्क्याह स्थादिष्वेवेति । शैषिकादिति । सन्विधायकसूत्रस्थमिदं वार्तिकम् । शैषिकात्सरूपः शैषिकः प्रत्ययो न । मतुवर्थीयात् सरूपो मतुवर्थिकः प्रत्ययो नेत्यन्वयः । शेषाधिकारे विहितः शैषिकः । भवार्थे अध्यात्मादित्वाट्ठञ् । मतुवर्थे भवो मतुवर्थीयः, गहादित्वाच्छः । मतुवर्थोऽस्यास्तीति मतुवर्थिकः । 'अत इनिठनौ' इति ठन् । शालीये इति । शालायां भवः शालीयः । 'वृद्धाच्छः' । शालीये भव इत्यर्थे शालीयशब्दात् पुनश्छो नेत्यर्थः ।

---

उपसर्गात्त्विति । मध्येऽपवादन्यायात् 'स्तौतिण्योः—' इति नियमेन 'आदेशप्रत्यययोः' इति षत्वमेव वाध्यते, न तु 'स्थादिष्वभ्यासेन च—' इत्युत्तरेण विहितमिति भावः । सुपुप्सतीति । 'रुदविद—' इति सनः कित्त्वान्न गुणः । प्रतीषिपतीति । इह पभूते सनीण् गताविति धातोः परस्य सस्य षत्वं भवत्येवेत्यर्थः । नियमान्नेहेति । न चात्र नियमादेव निषेधे 'सुनोतेः स्यसनोः' इति सूत्रं सन्विषये निर्विषयं

आहिच्छत्त्रीयः, अण्णन्तात्च्छः। तथा मत्वर्थात्सरूपः स न। धनवानस्यास्ति, इह मतुवन्तान्मतुब्न। विरूपस्तु स्यादेव, दण्डिमती शाला। सरूप इत्यनुषज्यते। अर्थद्वारा सादृश्यं तस्यार्थः। तेन इच्छासन्नन्तादिच्छासन्न। स्वार्थसन्नन्तात्तु स्यादेव, जुगुप्सिषते मीमांसिषते।

इति तिङन्ते सन्प्रकरणम्।

—००—

---

**आहिच्छत्त्रे भव इति**। आहिच्छत्त्रशब्दो भवार्थे अणन्तः। ततो भवार्थे 'वृद्धाच्छः' इति छ एव भवति, न तु पुनरणिति भावः। ननु जुगुप्सिषते इत्यादौ कथं सन्नन्तात् सन्नित्यत आह **सरूप इत्यनुषज्यते इति**। सन्नन्तान्न सनिष्यते इत्यत्रापि सरूप इत्यनुषज्यते इत्यर्थः। नन्वेवमपि जुगुप्सिषते इत्यत्र सरूपस्य सनः कथं प्रवृत्तिरित्यत आह **अर्थद्वारेति**। शब्दतो वैरूप्यस्यासंभवादर्थद्वारकमेव सारूप्यं विवक्षितमिति भावः। **तेनेति**। इच्छासन्नन्तादिच्छासन्नेति लभ्यते इत्यर्थः। **स्वार्थेति**। स्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेत्यर्थः।

इति श्री वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां सन्नन्तनिरूपणं समाप्तम्।

---

स्यादिति वाच्यम्, अभिसुसूषतेरप्रत्ययः,[१] अभिसुसूरित्यत्र षत्वनिषेधाय तस्यावश्यकत्वात्। एतच्च काशिकायां स्पष्टम्। **शैषिकेति**। एतच्च श्लोकवार्तिकमिति केचित्। भाष्यमिति बहवः। शेषे भवः शैषिकः, अध्यात्मादित्वाट्ठञ्। मतुबर्थे भवो मतुबर्थीयः, गहादित्वाच्छः। मतुबर्थोऽस्यास्तीति मतुबर्थिकः, 'अत इनिठनौ' इति ठन्।

इति तत्त्वबोधिन्यां सन्नन्तप्रक्रियाप्रकरणम्।

---

१ क्विप् प्रत्यय इत्यर्थः।

# अथ तिङन्ते यङ्प्रकरणम् ॥ ५५ ॥

२६२९ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । (३-१-२२) पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः, तस्मिन् द्योत्ये यङ् स्यात् । २६३० गुणो यङ्लुकोः । (७-४-८२) अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । 'सनाद्यन्ता-' ( सू० २३०४ ) इति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् । पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयांचक्रे । अबोभूयिष्ट । धातोः किम्—आर्धधातुकत्वं यथा स्यात् । तेन 'ब्रुवो वचिः' ( सू० २४५३ ) इत्यादि । एकाचः किम्—पुनःपुनर्जागर्ति । हलादेः किम्—भृशमीक्षते । भृशं शोभते रोचते इत्यत्र यङ् नेति भाष्यम् । पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ।

---

अथ यङ्प्रक्रिया निरूप्यन्ते । **धातोरेकाचो** । **तस्मिन्द्योत्ये इति** । वाच्यत्वे तु प्रत्ययवाच्यस्य प्रधानतया सन्नन्ते इच्छाया इव तस्य विशेष्यत्वं स्यादिति भावः । **गुणो यङ्लुकोः** । यङ् च लुक्च इति द्वन्द्वात् सप्तमी । लुगिह यङ एव विवक्षित उपस्थितत्वात् । 'अत्र लोपः-' इत्यतः अभ्यासस्येत्यनुवर्तते, तदाह **अभ्यासस्येति** । इक्परिभाषया इगन्तस्येति । **बोभूयते इति** । 'सन्यङोः' इति द्वित्वम् । यङो ङित्त्वादूकारस्य न गुणः । बोभूय इत्यस्माल्लटि तिपि शपि पररूपम् । 'क्रियासमभिहारे द्वे वाच्ये' इति पुनर्द्वित्वं तु न, तस्य 'क्रियासमभिहारे' इति विहितलोडन्तमात्रविषयत्वात् । अत एव 'क्रियासमभिहारे लोट्' इति सूत्रभाष्ये 'क्रियासभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे वाच्ये' इत्येव पठितम् । पौनःपुन्ये यङि तु 'नित्यवीप्सयोः' इति न द्वित्वम्, 'क्रियासमभिहारे द्वे' इत्यनेन पौनःपुन्येऽपि लोडन्तद्वित्वविधानेन पौनःपुन्यस्य अन्यतो लाभे सौत्रद्वित्वाप्रवृत्तेर्ज्ञापनादित्यलम् । **धातोः किमिति** । 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्नः । **आर्धधातुकत्वमिति** । धातोरित्यभावे आर्धधातुकत्वं न स्यात् । धातोरिति विहितप्रत्ययस्यैव आर्धधातुकत्वादिति भावः । **ब्रुव इति** । यङः आर्धधातुकत्वे सत्येव तस्मिन् परे 'ब्रुवो वचिः' 'वेञो वयिः' इत्यादि कार्यं सिध्यति । अन्यथा 'आर्धधातुके' इत्यधिकृत्य तद्विधानान्न स्यादिति भावः । **भृशमीक्षते इति** । न च भृशशब्देनैवात्र भृशार्थभानाद् यङ् न भविष्यतीति वाच्यम्, भृशत्वं हि यङ्द्योत्यम्, न तु वाच्यम् । द्योतनं च उक्तस्यापि संभवतीति भावः । **यङ् नेति** । अनभिधानादिति भाष्ये स्पष्टम् । **पौनःपुन्ये त्विति** । पुनःपुनश्शब्दसमभिहारेऽपि यङस्त्येव, भृशार्थ एवानभिधानोक्तेरिति भावः । सूचि-

---

**धातोरेकाचो** । क्रियासमभिहार इत्युक्तत्वाद्धातोरेव स्यान्न तु प्रातिपदिकादिति पृच्छति **धातोः किमिति** । **ब्रुवो वचिरित्यादीति** । वावच्यते, चाख्यायत इत्यादिरूपसिद्धिः प्रयोजनमित्यर्थः । धातुग्रहणाभावे चिगित्यव्ययादपि स्यात्तस्य क्रियावाचित्वादेकाच्त्वाच्चेति तद्वारणार्थमपि धातुग्रहणमावश्यकमित्याहुः ।

'सूचिसूत्रिमूत्र्यटयर्त्यशूर्णोतिभ्यो यङ् वाच्यः' ( वा० १७५१ )। आद्यास्त्रयश्चुरादावदन्ताः। सोसूच्यते। सोसूत्र्यते। अनेकाच्कत्वेनाषोपदेशत्वात्षत्वं न। मोमूत्र्यते। **२६३१ यस्य हलः।** (६—४—४९) यस्य इति सङ्घातग्रहणम्। हलः परस्य यशब्दस्य लोपः स्यादार्धधातुके। 'आदेः परस्य' (सू० ४४)। 'अतो लोपः'। ( सू० २३०८ )। सोसूचांचक्रे। सोसूचिता। सोसूत्रिता। मोमूत्रिता। **२६३२ दीर्घोऽकितः।** ( ७—४—८३ ) अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च अटाट्यते। **२६३३ यङि च।** ( ७-४-३० ) अर्तेः

---

**सूत्रीति।** सूचि, सूत्रि, मूत्रि, अटि, अर्ति, अशू, ऊर्णोति एषां द्वन्द्वः। 'सूच पैशुन्ये, सूत्र वेष्टने, मूत्र प्रस्रवणे' एते त्रयश्चुराद्यन्तर्गणे कथादावदन्ताः। तेषामनेकाच्त्वादप्राप्तौ यङ्वचनमित्याह **आद्यास्त्रय इति।** 'अट गतौ, ऋ गतौ, अश भोजने, अशू व्याप्तौ' एषां हलादित्वाभावाद्वचनम्। ऊर्णुञस्तु हलादित्वाभावादेकाच्त्वाभावाच्च वचनम्। **सोसूच्यते इति।** ण्यन्ताद्यङि णिलोपे द्वित्वे 'गुणो यङ्लुकोः इति अभ्यासगुणः। सूचेः षोपदेशत्वभ्रमं वारयति **अनेकाच्कत्वेनेति।** षोपदेशत्वे तु 'धात्वादेः—' इति षस्य सत्वे कृते आदेशसकारत्वादुत्तरखण्डस्य षत्वं स्यादिति भावः। लिटि सोसूच् य आमिति स्थिते **यस्य हलः।** यकारादकारस्य उच्चारणार्थत्वभ्रमं वारयति **संघातग्रहणमिति।** यकाराकारसमुदायस्येत्यर्थः। हल इति पञ्चमी। 'आर्धधातुके' इत्यधिकृतम्। 'अतो लोपः' इत्यस्मात् लोप इत्यनुवर्तते, तदाह **हलः परस्येत्यादिना।** ननु 'अलोऽन्त्यस्य' इति यकारादकारस्य लोपः स्यादित्यत आह **आदेः परस्येति।** 'अलोऽन्त्यस्य' इत्यस्यायमपवाद इति भावः। **अतो लोप इति।** यकाराकारसंघाते यकारस्य लोपे सति परिशिष्टस्याकारस्य'अतो लोपः'इत्यर्थः। ननु मास्तु संघातग्रहणम्। यकारस्यैवात्र लोपो विधीयताम्। अतो लोपे सति इष्टसिद्धिरिति चेत्, न—ईर्ष्य्धातोस्तृचि इति ईर्ष्यितेत्यत्र यकारलोपनिवृत्त्यर्थत्वादित्यलम्। अटधातोः यङि 'अजादेर्द्वितीयस्य, इति टय इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ अटाट्यते इति स्थिते **दीर्घोऽकितः।** **अभ्यासस्येति।** 'अत्र लोपोऽभ्यासस्य' इत्यतस्तदनुवृत्तेरिति भावः। **यङि यङ्लुकि चेति** 'गुणो यङ्लुकोः'इत्यतस्तदनुवृत्तेरिति भावः। अकित इत्यस्य तु यंयम्यते इत्यादौ प्रयोजनं वक्ष्यते। ऋधातोर्यङि कृते ङित्वाद्गुणनिषेधे प्राप्ते **यङि च।** 'गुणोऽर्तिसंयोगाद्योः' इति सूत्रमनुवर्तते। 'रीङ् ऋतः' इत्यस्माद् ऋत इति च, तदाह **अर्तेरित्यादि।** तथा

---

**यस्य हलः। संघातग्रहणमिति।** तेन ईर्ष्यिता अहर्योदित्यादौ यलोपो न। संघातग्रहणेन चार्थवत्ग्रहणपरिभाषोपस्थित्या पुत्रकाम्येत्यादौ नातिप्रसङ्गः। वर्णग्रहणे तूक्तपरिभाषाया अनुपस्थित्या स्यादेवात्र यलोप इति भावः। हलः किम्, लोलूयिता पोपूयिता। **दीर्घोऽकितः।** अकितः किम्, यंयम्यते, रंरम्यते। ननु दीर्घश्रुत्योपस्थितेनाचा 'अत्र लोपोऽभ्यासस्य' इत्यतोऽनुवृत्तमभ्यासस्येत्येतद्विशिष्येत। ततश्चाजन्ताभ्यासस्य दीर्घो भवतीत्यर्थात् पापच्यत इत्यादावेव दीर्घो भवेन्न तु

संयोगादेश्च ऋतो गुणः स्याद्यङि यङ्लुकि च। यकारपररेफस्य न द्वित्वनिषेधः, अरार्यते इति भाष्योदाहरणात्। अरारिता। अशाशिता। ऊर्णोनूयते। वेभिद्यते। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः, वेभिदिता। २६३४ नित्यं कौटिल्ये गतौ। (३-१-२३) गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे। कुटिलं व्रजति वाव्रज्यते। २६३५ लुपसदचरजपजभदहदशगृभ्यो भावगर्हा-

च ऋ य इति स्थिते ऋकारस्य गुणे अकारे रपरत्वे अर् य इति स्थिते 'न न्द्राः–' इति रेफस्य द्वित्वनिषेधे य इत्यस्य द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घे अर्यायते इति प्राप्ते आह यकारपररेफस्येति। भाष्योदाहरणादिति। 'धातोरेकाचः–' इति सूत्रे इति शेषः अरारितेति। 'यस्य हलः' इति यकारलोपः। अशाशितेति। अशधातोर्यङि श्य इत्यस्य द्वित्वे हलादिशेषेण अभ्यासे यकारनिवृत्तौ 'दीर्घोऽकितः' इति दीर्घे 'यस्य हलः' इति यकार-लोपः। ऊर्णोनूयते इति। ऊर्णु य इति स्थिते 'न न्द्रा–' इति नु इत्यस्य द्वित्वे हला-दिशेषे अभ्यासगुणे 'अकृत्–' इति दीर्घः। वेभिद्यते इति। भिद् य इति स्थिते भिद् इत्यस्य द्वित्वे हलादिशेषे अभ्यासगुणः। ननु वेभिद्य इति यङन्ताल्लुटि तासि इटि यलोपे अतो लोपे वेभिदितेत्यत्र तासि परे लघूपधगुणः स्यादित्यत आह अल्लोपस्य स्थानिवत्त्वा-दिति। नित्यं कौटल्ये गतौ। नित्यशब्द एवार्थे। कौटिल्ये इत्यस्योपरि द्रष्टव्यः। 'धातोरेकाचः–' इत्यतो यङित्यनुवर्तते, तदाह गत्यर्थात्कौटिल्य एवेति। गत्यर्थवृत्तेर्धातोः कौटिल्ये द्योत्य एव यङित्यर्थः। एवशब्दव्यवच्छेद्यमाह न तु क्रियासमभिहारे इति। शब्देन्दुशेखरे तु गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्येवेति प्रपञ्चितम्। लुपसद। लुप, सद, चर जप, जभ, दह, दश, गृ एषां द्वन्द्वः।

यंयम्यते जङ्घनीतीत्यादौ। तत्र हि परत्वान्नुकि कृतेऽभ्यासस्याजन्तत्वाभावाद्दीर्घस्य प्रसक्तिरेव नास्तीति किमनेनाकित इत्यनेन। न चाभ्यासावयवस्याचो दीर्घ इति वैयधिकरण्यान्वये स्वीकृतेऽकिद्ग्रहणं प्रयोजनवदिति वाच्यम्, संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्', येन नाप्राप्तिन्यायेन नुको दीर्घापवादत्वस्वीकाराच्च। तस्मादकित इति व्यर्थमिति। चेत्। अत्राहुः– डोढौक्यते इत्यत्राभ्यासह्रस्वं बाधित्वा परत्वाद् 'दीर्घोऽकितः' इति दीर्घे कृते डोढौक्यत इति स्यात्। तस्माद् अभ्यासविकारेषु उत्सर्गविधीन् बाधका न बाधन्त इति ज्ञापनाय कित इति ग्रहणं कर्तव्यमिति। तथा चोक्तज्ञापकनिर्वाहाय'दीर्घोऽकितः'इत्यत्राभ्यास-स्याच इति वैयधिकरण्यपक्षस्याश्रयणाद् यंयम्यत इत्यादौ दीर्घात्प्रागेव नुकि कृतेऽपि दीर्घः स्यात, तद्वारणार्थमकित इत्यावश्यकमिति दिक्। अटाट्यत इति। इह ट्यशब्दस्य द्वित्वम्। यङि च। इह 'गुणोऽर्तिसंयोगाद्योः' इत्येतत्सर्वमप्यनुवर्तते। यकार पररेफस्येति। यदि भाष्योदाहरणं सामान्यापेक्षं ज्ञापकं स्यात्तदाऽर्यमाख्यद् आर्यदि-त्यादि सिध्यति। नित्यं कौटिल्ये। नित्यंशब्दोऽवधारणार्थक इत्याह कौटिल्य इवेति। तक्रकौण्डिन्यन्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यायस्यानित्यत्वज्ञापनार्थम्। तेन 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तेनाबाधनात्पूजार्थेभ्यो मते क्तः सिध्यति।

याम् । ( ३-१-२४ ) एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते सासद्यते । २६३६ चरफलोश्च । ( ७-४-८७ ) अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः । नुक् इत्यनेनानुस्वारो लक्ष्यते । 'स च पदान्तवद्वाच्यः' ( वा० ४६६१ ) 'वा पदान्तस्य' ( सू० १२५ ) इति यथा स्यात् । २६३७ उत्परस्यातः । ( ७-४-८८ ) चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । 'हलि च' ( सू० ३५४ ) इति दीर्घः । चञ्चूर्यते, चंचूर्यते । पम्फुल्यते, पंफुल्यते । २६३८ जपजभदहदशभञ्जपशां च । ( ७-४-८६ ) एषामभ्यासस्य नुक् स्याद्यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते इत्यादि । २६३९ ग्रो यङि । ( ८-२-२० ) गिरते रेफस्य लत्वं स्याद्यङि । गर्हितं गिलति जेगिल्यते । 'घुमास्था-' ( सू० २४६१ ) इतीत्वम्, गुणः, देदीयते । पेपीयते । सेषीयते । 'विभाषा श्वेः' ( सू० २४२० ), शोशूयते । शेश्वीयते ।

---

यङित्यनुवर्तते । भावो धात्वर्थः, तद्गता गर्हा भावगर्हा । नित्यमित्यनुवृत्तम् एवकारार्थकम्, तदाह एभ्य इत्यादि । चरफलोश्च । 'अत्र लोप-:' इत्यस्मादभ्यासस्येत्यनुवर्तते । 'नुगतोऽनुनासिकान्तस्य' इत्यस्माद् अतो नुगिति 'गुणो यङ्लुकोः' इत्यस्माद् यङ्लुकोरिति च, तदाह अनयोरित्यादि । नुकि ककार इत्, उकार उच्चारणार्थः । लक्ष्यते इति । 'नुगतोऽनुनासिकान्तस्य'इति पूर्वसूत्रे यंयम्यते रंरम्यते,इत्यादौ अनुस्वारश्रवणार्थं नुगित्यनुस्वारोपलक्षणमाश्रयणीयम् । अन्यथा झल्परत्वाभावाद् 'नश्च-' इत्यनुस्वारासंभवान्नकार एव श्रूयतेत्युक्तं भाष्ये । तस्यैवेहानुवृत्तेरत्राप्यनुस्वारोपलक्षणात्वमिति भावः । पदान्तवदिति । 'नुगतोऽनुनासिकान्तस्य'इति पूर्वसूत्रस्थमिदं वार्तिकमत्राप्यनुवर्तते इति भावः । उत्परस्यातः । 'अत्र लोपः-' इत्यस्मादभ्यासस्येत्यनुवृत्तं परशब्दयोगात् पञ्चम्या विपरिणम्यते । 'गुणो यङ्लुकोः' इत्यतो यङ्लुकोरिति 'चरफलोः-' इति चानुवर्तते, तदाह चरफलोरित्यादि । दीर्घ इति । उकारस्येति शेषः । चञ्चूर्यते इति । गर्हितं चरतीत्यर्थः । यङि द्वित्वे हलादिशेषे अभ्यासाकारादुपरि अनुस्वारागमे 'वा पदान्तस्य' इति तस्य परसवर्णे ञकारे उत्तरखण्डे अकारस्य उत्त्वे तस्य दीर्घः । परसवर्णाभावपक्षे त्वाह चंचूर्यते इति । पम्फुल्यते इति । अत्र अनुस्वारस्य मकारः परसवर्णः । जपजभ । 'चरफलोश्च'इत्यत्र यदनुवृत्तं तत्सर्वमिहाप्यनुवर्तते, तदाह एषामिति । इत्यादीति । जञ्जभ्यते । दन्दह्यते । दन्दश्यते । बम्भज्यते । पम्पश्यते । पसधातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति माधवः । तालव्यान्त इति काशिका । ग्रो यङि । ग्रु इत्यस्य गृ इति षष्ठ्येकवचम् । 'कृपो रो लः' इत्यतो रो ल इत्यनुवर्तते, तदाह गिरतेरित्यादि । दा, पा, सा, एभ्यो यङि विशेषमाह घुमास्थेत्यादि । शोशूयते इति । श्विधातोर्यङि संप्रसारणं तदाश्रयं च कार्यं बलवत् इति वचनात्

---

ततश्च 'क्तस्य च वर्तमाने' इति षष्ठी न प्रवर्तत इति 'पूजितो यः सुरासुरैः' इति तृतीया साधुरेव । इत्यादीति । जंजभ्यते । दंदश्यते । दंदह्यते । बंभज्यते । तस धातुर्दन्त्यान्तः सौत्रो गत्यर्थ इति । स्पश बाधनस्पर्शनयोरित्यत्र माधवः । पंपस्यते ।

'यङि च' ( सू० २६३३ ), सास्मर्यते । 'रीङृतः' ( सू० १२३४ ), चेक्रीयते । सुट् सञ्चेस्क्रीयते । २६४० सिचो यङि । ( ८—३—११२ ) सिचः सस्य षो न स्याद्यङि । निसेसिच्यते । २६४१ न कवतेर्यङि । ( ७—४—६३ ) कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कौतिकुवत्योस्तु चोकूयते । २६४२

---

संप्रसारणे पूर्वरूपे शु इत्यस्य द्वित्वम् । 'अकृत्सार्वधातुकयोः—' इति दीर्घः । सास्मर्यते इति । स्मृ य इति स्थिते संयोगादित्वाद् 'यङि च' इति परत्वाद्गुणे रपरत्वे द्वित्वे 'दीर्घोऽकितः' इत्यभ्यासदीर्घः चेक्रीयते इति । कृ य इति स्थिते परत्वाद् ऋकारस्य रीङादेशे क्री इत्यस्य द्वित्वे अभ्यासगुणः । सुडिति । 'संपरिभ्यां करोतौ भूषणे' 'समवाये च' इत्यनेनेति शेषः । सिचो यङि । 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तमनुवर्तते । 'मूर्धन्यः' इत्यधिकृतम् 'न रपरसृपि–' इत्यतो नेत्यनुवर्तते, तदाह सिच इति निसेसिच्यते इति । 'उपसर्गात्सुनोति–' इति 'स्थादिष्वभ्यासेन–' इति च षत्वमनेन निषिध्यते । न कवतेर्यङि । 'अत्र लोपः—' इत्यतः अभ्यासस्येति 'कुहोश्चुः' इत्यतः चुरिति चानुवर्तते इति मत्वाह कवतेरभ्यासस्येति । ननु कोर्यङि इत्येव

---

काशिकायां तु तालव्यान्तः क्वचिद् दृश्यते । एवं जञ्जपीति । जञ्जभीति । दन्दहीतीत्यादि यङ्लुकि उदाहर्तव्यम् । ग्रो यङि । 'कृपो रो लः' इत्यतो रो ल इति वर्तते, तदाह रेफस्य लत्वमिति । चेक्रीयते इति । परत्वाद्रीङि कृते द्विर्वचनम् । संचेस्क्रीयते इति । रीङि द्वित्वे च सुट् । न च संकृ इत्यस्यामवस्थायां द्वित्वात् परत्वात्सुटि कृते संयोगादित्वेन रीङ्प्रवृत्तेः प्राग् गुणः स्यादिति वाच्यम्, अडभ्यासव्यवायेऽपीत्यस्यारम्भे अडभ्यासयोः कृतयोरेव सुड् न तु ततः प्रागिति सिद्धान्तात् । एतेन सुटो वहिरङ्गत्वान्न संयोगादित्वेन गुण इति केषांचित्समाधानं परास्तम् । अभ्यासात्परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति गुणप्राप्तेरभावात् । ननु 'अडभ्यासव्यवायेऽपि 'सुट् कात्पूर्वः' इति वार्तिकप्रत्याख्यानाय 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्षं स्वीकृत्य भाष्यकृता संचस्करतुरित्यादावन्तरङ्गत्वात्सुटि ससुट्कस्यैव द्वित्वाभ्युपगमात् संचेस्क्रियते इति न सिध्येत् । तत्र हि सुटि कृते रीङं वाधित्वा परत्वाद् 'यङि च' इति गुणे संचस्कर्यत इत्यनिष्टरूपप्रसङ्गात् । यदि तु इष्टानुरोधेन पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति मताश्रयणेन रीङादेशं द्वित्वं च कृत्वा पश्चात्सुटि इष्टं रूपं सिध्यतीत्युच्यते, तर्हि 'अडभ्यासव्यवायेऽपि' इति वचनं स्वीकर्तव्यमेव स्यादिति चेत् । अत्राहुः—अडभ्यासेत्यादिवार्तिकं विनापि संचस्करतुरित्यादिरूपसिद्धये भाष्यकृता 'पूर्वं धातुरुपसर्गेण युज्यते' इति पक्ष आश्रितः । संचेस्क्रीयते समचेस्क्रियत इत्यादिसिद्धिस्तु वार्तिकायत्तैवेति । सिचो यङि । अभ्याससकारस्य 'उपसर्गात्सुनोति—' इति, ततः परस्य तु 'स्थादिष्वभ्यासेन च–' इति षत्वे प्राप्ते निषेधोऽयम् । यङि किम्, अभिषिषिक्षति । न कवतेर्यङि । इह कोरित्येव वाच्ये कवतेरिति शपा निर्देशात्कुङ् शब्द इति भ्वादिरेव गृह्यते न तु कु शब्द इति अदादिः, कूङ् शब्द इति तुदादिश्चेत्याशयेनाह

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् । ( ७-४-८४ ) एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रस्यते इत्यादि ।

२६४३ नुगतोऽनुनासिकान्तस्य । ( ७-४-८५ ) अनुनासिकान्तस्याङ्गस्य योऽभ्यासोऽदन्तस्तस्य नुक् स्यात् । नुका अनुस्वारो लक्ष्यते इत्युक्तम् । यंयम्यते यंयम्यते । तपरत्वसामर्थ्याद् भूतपूर्वदीर्घस्यापि न । भाम क्रोधे, बाभाम्यते । 'ये विभाषा' (सू० २३१९) जाजायते, जञ्जन्यते । 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' ( वा० ४६२१ ) जेघ्नीयते । हिंसायां किम्—

---

सिद्धे श्तिपा निर्देशो व्यर्थ इत्यत आह कौतिकुवत्योस्त्विति । शपा निर्देशार्थं कवतिग्रहणम् । तेन 'कु शब्दे' इति लुग्विकरणस्य 'कुङ् शब्दे' इति शविकरणस्य च ग्रहणं न लभ्यत इति भावः । न च कोरित्युक्तेऽपि दीर्घान्तस्य शविकरणस्य न ग्रहणप्रसक्तिरिति शङ्क्यम्, तुदादौ 'कुङ् शब्दे' इति ह्रस्वान्तपाठस्य न्यायसंमते तौदादिकेऽस्याप्रवृत्तिरेव फलम् । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्येव ग्रहणम्' इति लुग्विकरणस्य ग्रहणनिवृत्तिरिति बोध्यम् । नीग्वञ्चु अभ्यासस्येति । 'अत्र लोपः—' इत्यतस्तदनुवृत्तेरिति भावः । यङ्लुकोरिति । यङि यङ्लुकि चेत्यर्थः । न दीर्घ इति । नीगागमात् प्राक् प्राप्तोऽभ्यासदीर्घो नेत्यर्थः । भविष्यदपि कित्त्वं दीर्घप्रतिबन्धकमिति भावः । नलोप इति । 'अनिदिताम्—' इत्यनेन नकारस्य लोप इत्यर्थः । इत्यादीति । सनीस्रस्यते, दनीध्वस्यते, बनीभ्रस्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते । नुगतोऽनु । अङ्गस्येत्यधिकृतम् । 'अत्र लोपः—' इत्यतः अभ्यासस्येत्यनुवर्तते । 'गुणो यङ्लुकोः' इत्यतो यङ्लुकोरिति च, तदाह अनुनासिकान्तस्येत्यादि । ननु यंयम्यते इत्यत्र नुको नकारस्य अपदान्तत्वादझल्परकत्वाच्च कथं 'नश्च' इत्यनुस्वार इत्यत आह नुकेति । नन्वभ्यासे ह्रस्वविधानाद्दीर्घस्याभावाद् नुग्विधावत इति तपरकरणं व्यर्थमित्यत आह तपरत्वसामर्थ्यादिति । स्वाभाविक एव यो ह्रस्वोऽकारः, तस्येव ग्रहणम्, नतु दीर्घादेशभूतस्य ह्रस्वाकारस्येत्येतदर्थं तपरकरणमिति भावः । बाभाम्यते इति । आकारस्थानिकस्य ह्रस्वविधिसंपन्नस्य अकारस्य न नुगिति भावः । जनधातोर्यङि नकारस्य आत्त्वविकल्पं स्मारयति ये विभाषेति । घ्नीभाव इति । यद्यपीह ह्रीभावविधावपि 'अभ्यासाच्च' इति कुत्वे हकारस्य घकारः सिध्यति, तथापि प्रयत्नलाघवाभावात् प्रक्रियालाघवाच्च घ्नीति घकारोच्चारणमिति भावः । जेघ्नीयते इति । पुनः पुनरतिशयेन

---

कौतिकुवत्योस्त्विति । ननु कोरित्युक्तेऽपि कूङः प्रसङ्गो नास्ति दीर्घान्तत्वाल्लुग्विकरणपरिभाषया च कौतेरपि प्रसङ्गो नास्तीति चेत् । अत्राहुः—कोरित्युक्ते तु निरनुबन्धपरिभाषाया अपि जागरूकत्वादुभयोर्ग्रहणं स्यादिति कौतिव्यावृत्त्यर्थं शपा निर्देशः कर्तव्यः । कृते च तस्मिन्कुवतिमपि व्यावर्तयतीत्यत्र तात्पर्यमिति कुङ् इत्येवात्र सुवचम् । इत्यादीति । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते । एवं वनीवञ्चीति । सनीस्रंसीति । दनीध्वंसीतीत्यादि यङ्लु-

जङ्घन्यते। २६४४ रीगृदुपधस्य च। (७—४—९०) ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्यङ्लुकोः। वरीवृत्यते। क्षुभ्नादित्वान्न णः। नरीनृत्यते। जरीगृह्यते। उभयत्र लत्वम्, चलीक्लृप्यते। 'रीगृत्वत इति वक्तव्यम्' (वा० ४४६२)। परीपृच्छ्यते। वरीवृश्च्यते। २६४५ स्वपिस्यमिव्येञां यङि। (६—१—१९) संप्रसारणं स्याद्यङि। सोषुप्यते। सेसिम्यते। वेवीयते।

---

वा हिनस्तीत्यर्थः अत्र यङीति विषयसप्तमी। यङि विवक्षिते सतीति लभ्यते। तेन द्वित्वस्य परत्वेऽपि प्रागेव घ्नीभाव इति बोध्यम्। जङ्घन्यत इति। गर्हितं गच्छतीत्यर्थः। रीगृदुपधस्य च। अभ्यासस्येति। 'अत्र लोपः—' इत्यतः तदनुवृत्तेरिति भावः। यङ्लुकोरिति। 'गुणो यङ्लुकोः' इत्यतस्तदनुवृत्तेरिति भावः। वरीवृत्यते इति। 'वृतु वर्तने' अस्माद्यङि द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक्। नृतेर्यङि नरीनृत्यते इत्यत्र णत्वमाशङ्क्याह क्षुभ्नादित्वान्न ण इति। जरीगृह्यते इति। 'ग्रह उपादाने' अस्माद्यङि 'ग्रहिज्या—' इति संप्रसारणे द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रीक्। उभयत्रेति। कृप-धातोः यङि द्वित्वे उरदत्वे रपरत्वे हलादिशेषे रीक् चरीकृप्यते इत्यत्र 'कृपो रो लः' इत्यभ्यासे रेफस्य लकारः, उत्तरखण्डे ऋकारस्यावयवो यो रेफः तस्य लकारसदृश इत्यर्थः। ननु व्रश्च-धातोर्यङि वरीवृश्च्यते इत्यत्र कथमभ्यासस्य रीक्। धातोः शकारोपधत्वेन ऋदुपधत्वाभावा-दित्यत आह रीगृत्वत इति। 'रीगृदुपधस्य—' इत्यत्र ऋदुपधस्येत्यपनीय ऋत्वत इति वक्त-व्यमित्यर्थः। ऋत् अस्यास्तीति ऋत्वत्। 'तसौ मत्वर्थे' इति भत्वात् पदत्वाभावान्न जश्त्वम्। परीपृच्छ्यत इति। प्रच्छधातोर्यङि 'ग्रहिज्या—' इति रेफस्य संप्रसारणमृकारः। पूर्वरूपं द्वित्वं रपरत्वं हलादिशेषः रीक्। वरीवृश्च्यत इति। व्रश्चधातोर्यङि संप्रसारणे द्वित्वादि पूर्ववत्। स्वपिस्यमि। संप्रसारणं स्यादिति शेषपूरणम्। 'ष्यङः संप्रसारणम्' इत्यतस्तदनुवृत्तेरिति भावः। सोषुप्यते इति। स्वप्धातोर्यङि वकारस्य संप्रसारणे उकारे पूर्वरूपे द्वित्वे अभ्यासगुणः। उत्तरखण्डे सस्य षत्वम्। सेसिम्यते इति। स्यमुधातोर्यङि यकारस्य संप्रसारणे पूर्वरूपे द्वित्वादि। अपोपदेशत्वान्न षः। वेवीयत इति। व्येञो यङि यकारस्य संप्रसारणे पूर्वरूपे द्वित्वादि। 'हलः' इति वा 'अकृत्सार्वधातुकयोः—' इति वा दीर्घः। अथ वशधातोर्यङि वावश्यते इत्यत्र 'ग्रहिज्या—' इति संप्रसारणे प्राप्ते

---

व्युदाहर्तव्यम् घ्नीभाव इति। हीभावे कृतेऽपि 'अभ्यासाच्च' इति कुत्वेन जेघ्नीयत इति सिध्यति, तथापि प्रक्रियालाघवाय घ्नी इत्युक्तमिति मनोरमा। अन्ये तु 'सेहिः' 'मेनिः' इति इकारोच्चारणसामर्थ्याद्यथा 'एरुः' इत्युत्वं न भवति तथा हीभावे हि कृते 'अभ्यासाच्च' इति कुत्वं न स्यादित्याशयेन घ्नीभावः कृत इत्याहुः। अत्र च दिग्यादेशेनेव घ्नीभावेन द्वित्वं न बाध्यते पुनः प्रसङ्गविज्ञानादिति केचित्। वस्तुतस्तु यङन्तावयवस्य द्वितीयाजवयवकस्य द्वित्वं घ्नीभावस्तु प्रकृतिमात्रस्येति विष-यभेदाद् द्वित्वं निर्बाधमेव। रीगृदुपधस्य च। ऋदिति किम्, चेकीर्त्यते। णिज-भावपक्षे एकाच्त्वाद्यङ्। स्वपिस्यमि। यङि किम्, स्वप्नक्। सेसिम्यत इति।

२६४६ न वशः । ( ६—१—२० ) वावश्यते । २६४७ चायः की । ( ६-१-२१ ) चेकीयते । २६४८ ई घ्राध्मोः । ( ७—४—३१ ) जेघ्रीयते । देध्मीयते । २६४९ अयङ् यि क्ङिति । ( ७—४—२२ ) शीङोऽयङादेशः स्यादादौ क्ङिति परे । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते तोत्रौक्यते ।

॥ इति तिङन्ते यङ्प्रकरणम् ॥

---

तन्निषेधं स्मारयति **न वशः** । वशधातोः छान्दसत्वं प्रायिकमिति प्रागेवोक्तम् । **चायः की** । यङीति शेषः । 'स्वपिस्यमिव्येञां यङि' इत्यतस्तदनुवृत्तेरिति भावः । **चेकीयत इति** । 'चायृ पूजानिशामनयोः' । अस्माद्यङि प्रकृतेः कीभावे द्वित्वादि । **ई घ्राध्मोः** । घ्रा ध्मा अनयोः द्वन्द्वात् षष्ठीद्विवचनम् । यङीति शेषः, 'यङि च' इत्यतस्तदनुवृत्तेः **जेघ्रीयते । देध्मीयत इति** । ईत्वे कृते द्वित्वादि । ह्रस्वस्य इकारस्य विधावपि 'अकृत्सार्वधातुकयोः–' इति दीर्घसिद्धेः दीर्घोच्चारणम् 'अस्य च्वौ' इत्युत्तरार्थम् । **अयङ् यि क्ङिति** । यि इति सप्तमी । क् ङ् एतौ इतौ यस्येति विग्रहः । **शीङ इति** । 'शीङः सार्वधातुके गुणः' इत्यतस्तदनुवृत्तेरिति भावः । अयङि ङकार इत्, यकारादकार उच्चारणार्थः, ङित्वादन्तादेशः । **शाशय्यत इति** । शी य इति स्थिते ईकारस्य अय्, ततो द्वित्वे अभ्यासदीर्घः । ढौकृधातोर्यङि विशेषमाह **अभ्यासस्य ह्रस्व इति** । द्वित्वे अभ्यासह्रस्वे उकारे यस्य 'गुणो यङ्लुकोः' इति गुण इत्यर्थः । **तोत्रौक्यते इति** । त्रौके रूपम् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमाख्यायां यङन्तनिरूपणं समाप्तम् ।

---

स्यमु शब्दे दन्त्याजन्तासादित्वाभावेनाषोपदेशत्वान्न षः । **वेवीयत इति** । 'हलः' इति 'अकृत्सार्व–' इति वा दीर्घः । **चायः की** । यङि परे चायः की स्यात् । दीर्घोच्चारणं यङ्लुगर्थम् । अत एव 'न लुमता–' इति निषेधोऽपि न प्रवर्तते इति यङ्लुक्यपि चायः की स्यादेव । चेकीतः । **ई घ्राध्मोः** । दीर्घोच्चारणं प्राग्वत् । जेघ्रीतः । 'अस्य च्वौ' इत्याद्यर्थं दीर्घग्रहणमिति तु सुवचम् । **शाशय्यत इति** । परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् ।

इति तत्त्वबोधिन्यां यङन्तप्रक्रियाप्रकरणम् ।

—००—

## अथ तिङन्ते यङ्लुक्प्रकरणम् ॥ ५६ ॥

२६५० यङोऽचि च । ( २—४—७४ ) यङोच्प्रत्यये लुक् स्यात्, चकारात्तं विनापि बहुलं लुक्स्यात् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः ।

---

अथ यङ्लुक्प्रक्रिया निरूप्यते । यङोऽचि च । अचि इति प्रत्ययग्रहणम्, न तु प्रत्याहारः, यङा साहचर्यात् । 'ण्यक्षत्रियार्ष—' इत्यतो लुगित्यनुवर्तते तदाह यङोऽच्प्रत्यये लुगिति । चकारात्तं विनापीति । अच्प्रत्ययाभावेऽपीत्यर्थः । बहुलमिति । चकाराद् 'बहुलं छन्दसि' इति पूर्वसूत्राद्बहुलग्रहणमप्यनुकृष्यते इति भावः । एवं च अच्प्रत्यये तदभावेऽपि यङो बहुलं लुगिति फलितम् । तेन लूञो यङन्तादचि यङो लुगभावपक्षे अतो लोपे लोलूय इति रूपम्। लुकि तु लोलुव इति रूपं सिद्ध्यति । तथा अच्प्रत्ययाभावेऽपि बोभूयते बोभवीति इत्यादौ यङो लुग्विकल्पः सिद्ध्यतीति बोध्यम् । अनैमित्तिकोऽयमिति । अच्प्रत्ययादन्यत्र बोभवीतीत्यादौ यङ्लुग् अनैमित्तिकः । ततश्च परस्मादपि द्वित्वादिकार्यात्प्रागेव अन्तरङ्गत्वाद्यङो लुग् भवति, ततो द्वित्वादीति वस्तुतः स्थितिकथनमिदम् । अच्प्रत्यये विधीयमानस्तु यङ्लुग् नैमित्तिकत्वाद्बहिरङ्ग एव । ततश्च परत्वान्नित्यत्वाच्च आदौ द्वित्वे कृते यङो लुकि अच्प्रत्ययमाश्रित्य प्राप्तो गुणः 'न धातुलोप आर्धधातुके' इति निषेधान्न भवति, अच्प्रत्ययस्य यङ्लोपनिमित्तत्वादिति बोध्यम् । नन्वेवं सति यङ्लुकि 'सन्यङोः' इति द्वित्वं न स्यात् । यङो लुका लुप्तत्वेन प्रत्ययलक्षणाभावादित्यत आह तत इति । यङो लुगनन्तरमित्यर्थः । 'न लुमता—' इत्यनेन हि लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं निषिध्यते । द्वित्वादिकं तु यङन्तस्य कार्यम्, न तु यङ्निमित्तकम्, यङि परतस्तद्विध्यभावादिति भावः । द्वित्वमिति । न च 'एकाचः—' विधीयमानं द्वित्वं कथमिह यङ्लुकि स्यात्, 'श्तिपा शपा—' इति निषेधादिति वाच्यम्, 'गुणो यङ्लुकोः' इत्याद्यभ्यासकार्यविधिबलेन द्वित्वनिषेधाभावज्ञापनादिति भावः । अभ्यासकार्यमिति । गुणादीति भावः । धातुत्वादिति । यङो लुकि सत्यपि प्रत्ययलक्षणमाश्रित्य यङन्तत्वात् 'सनाद्यन्ताः—' इति

---

यङोऽचि च । यङा साहचर्यादचीति प्रत्ययो गृह्यते नतु प्रत्याहारः । 'ण्यक्षत्रियार्ष—' इत्यतोऽत्र लुगनुवर्तते, तदाह अच्प्रत्यये लुक् स्यादिति । चकारेण 'बहुलं छन्दसि' इत्यतो बहुलमित्यनुकृष्यत इत्याह बहुलं लुक् स्यादिति । केचित्तु छन्दसीत्यनुकर्षन्ति, तेषामपि मते क्वचिद्भाषायां यङ्लुग्भवत्येव । 'भूसुवोः—' इति गुणनिषेधे सिद्धे बोभूत्विति छन्दसि निपातनाज्ज्ञापकात् । एतच्च मूले एव स्फुटीभविष्यति । अनैमित्तिकोऽयमिति । अच्प्रत्यये विधीयमानो यङ्लुक् तु तन्निमित्त एव । तेन लालुवः पोपुव इत्यादौ 'न धातुलोप—' इति निषेधः सिध्यति । यङन्तत्वादिति । 'सन्यङोः' इति षष्ठी, न तु सप्तमी । अन्यथा यङो लुका लुप्तत्वेन प्रत्ययलक्षणाप्रवृत्तेर्द्वित्वं न स्यादिति भावः । न चाङ्गाधिकारविहितकार्यस्यैव

'शेषात्कर्तरि–' ( सू० २१५६ ) इति परस्मैपदम् । 'अनुदात्तङित:–' ( सू० २१५७ ) इति तु न । ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः । यत्र हि 'प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत्' । अत एव सुदृषत्प्रासाद इत्यत्र 'अत्वसन्तस्य–' ( सू० ४२५ ) इति दीर्घो न । येऽपि स्पर्धशीङादयोऽ-

---

-धातुत्वम् । न च 'न लुमता–' इति निषेधः शङ्क्यः, धातुसंज्ञाया यङन्तधर्मत्वेन यङि परतोऽङ्गकार्यत्वाभावादिति भावः । यङो ङित्त्वात्तदन्तादात्मनेपदमाशङ्क्याह शेषादिति । 'ननु 'शेषात्कर्तरि–' इत्यत्र आत्मनेपदनिमित्तहीनो धातुः शेषः । यङन्तधातुस्तु न तथा, आत्मनेपदनिमित्तङकारानुबन्धसत्त्वादित्यत आह अनुदात्तङित इति तु नेति । कुत इत्यत आह ङित्त्वस्येति । तदेवोपपादयति यत्र हीति । यत्र प्रत्यये लुप्तेपि प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण तमाश्रित्य कार्यप्रवृत्तिरिष्यते तत्रैव प्रत्ययलक्षणम् । यथा राजेत्यत्र हि लुप्तं सुप्प्रत्ययं सुप्त्वात्मकप्रत्ययमात्रवृत्तिधर्मपुरस्कारेणाश्रित्य सुबन्ततया पदत्वाद् 'नलोपः–' इति नकारलोपप्रवृत्तिः । ङित्त्वं तु न प्रत्ययमात्रधर्मः, 'ऋतेरीयङ्' इत्यादि प्रत्ययेष्वप्रत्ययेष्वपि चित्रङादिषु सत्त्वात् । ततश्च यङि लुप्ते सति प्रत्ययलक्षणेन तमाश्रित्य तद्वृत्तिङित्त्वप्रयुक्तं कार्यमात्मनेपदं न शङ्कितुं शक्यमिति भावः । ननु यत्किञ्चिद्धर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणं कुतो नेत्यत आह अत एवेति । प्रत्ययमात्रवृत्तिधर्मपुरस्कारेण प्रत्ययाश्रयकार्ये प्रत्ययलक्षणाश्रयणादेवेत्यर्थः । दीर्घो नेति । सु शोभनाः दृषदो यस्य स सुदृषत्प्रासाद इत्यत्र समासावयवत्वाल्लुप्तं जसं प्रत्ययलक्षणेनाश्रित्य प्राप्तःअसन्तत्वलक्षणो दीर्घो न भवति । उणादीनामव्युत्पत्तिपक्षे व्युत्पत्तिपक्षे च अस्त्वस्य वेधा इत्यादावप्रत्यये च सत्त्वेन प्रत्ययमात्रवृत्तित्वाभावेन तत्पुरस्कारेण दीर्घे क्रियमाणे प्रत्ययलक्षणासंभवादिति भावः । एतत्सर्वं प्रत्ययलक्षणसूत्रभाष्यकैयटादिषु स्पष्टम् । न च सुदृषत्प्रासाद इत्यत्र जसो लुका लुप्तत्वाद् 'न लुमता–' इति निषेधादेव

---

'न लुमता-' इति निषेधाद् द्वित्वमत्र स्यादेवेति सप्तमीपक्षोऽपि निर्दुष्ट इति वाच्यम्, 'न लुमता-' इत्यत्राङ्गाधिकारो न गृह्यते किं आङ्गमनाङ्गं वा प्रत्यये परतः पूर्वस्य विधीयमानं सर्वमिति सिद्धान्तात् । अन्यथा राजपुरुष इत्यादौ नलोपो न स्यात्, त्वदुक्तरीत्या प्रत्ययलक्षणप्रवृत्तौ भत्वेन पदत्वबाधात् । यद्यपि 'एकाचः–' इति विधियमानं द्वित्वं 'श्तिपाशपा–' इत्यादिना निषिध्यते तथापि तत्स्यादेव । 'गुणो यङ्लुकोः' 'रुग्रिकौ च लुकि' इत्याद्यभ्यासकार्यविधिर्द्वित्वानिषेधस्य ज्ञापनात् । प्रत्ययाप्रत्ययेति । प्रत्यये ङित्वं दृश्यते 'ऋतेरीयङ्' इत्यादिषु, अप्रत्ययेऽपि दृश्यते चित्रङादिषु । एवं च यङो लुकि प्रत्ययलक्षणेन यङाश्रितङित्त्वप्रयुक्तकार्यमात्मनेपदमत्र न शङ्क्यमिति भावः । ङित इत्यनुबन्धनिर्देशादिति परिहारस्त्वत्र नोक्तः, शीङादीनामिव भू इत्यादिधातूनामनुबन्धेनानिर्दिष्टत्वाद् । यङो ङकारस्य प्रत्ययानुबन्धत्वेन समुदायाननुबन्धत्वाद् यङन्तोऽपि धातुरनुबन्धेनानिर्दिष्ट इति बोध्यम् । सुदृषदिति । शोभना दृषदोऽस्मिन्निति बहुव्रीहौ दृषच्छब्दो जसन्तः । दीर्घो नेति । असिति प्रत्ययोऽप्रत्ययश्चास्तीति प्रत्ययस्यासाधारणरूपानाश्रयणात्प्रत्ययलक्षणेनासन्तत्वाभावा-

नुदात्तङितस्तेभ्योऽपि न, 'अनुदात्तङितः–' ( सू० २१५७ ) इत्यनुबन्धनिर्देशात्, तत्र च 'श्तिपा शपा–' ( प० २३२ ) इति निषेधात्। अत एव श्यन्नादयो न, गणेन निर्देशात्। किं तु शबेव। 'चर्करीतं च' इत्यदादौ पाठाच्छपो लुक्। **२६५१ यङो वा।** (७–३–९४) यङन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात्। 'भूसुवोः–' ( सू० २२२४ ) इति गुणनिषेधो यङ्लुकि भाषायां न, 'बोभूतु तेतिक्ते–' ( सू० ३५९६ ) इति छन्दसि निपातनात्

---

दीर्घो न भविष्यतीति वाच्यम्, दीर्घस्यासन्तकार्यत्वेन जसि परे अङ्गकार्यत्वाभावादित्यलम्। ननु उक्तरीत्या प्रत्ययलक्षणाभावाद् लुप्तयङन्ताद् ङित्त्वप्रयुक्तमात्मनेपदं मास्तु। ये तावत् स्पर्धादयः अनुदात्तेतः, ये च शीङादयो ङितः पठिताः, तेभ्य आत्मनेपदं दुर्वारमित्यत आह **येऽपीति। तेभ्योऽपि।नेति।** तेभ्यो यङ्लुकि नात्मनेपदमित्यर्थः। कुत इत्यत आह **अनुदात्तङित इत्यनुबन्धनिर्देशादिति।** नन्वनुबन्धनिर्देशेऽपि यङ्लुकि आत्मनेपदं कुतो न स्यादित्यत आह **तत्र च श्तिपेति।** न चानुबन्धनिर्देशादेव ङित्त्वप्रयुक्तमपि कार्यमात्मनेपदं यङ्लुकि न भविष्यति अतः प्रत्ययासाधारणधर्माश्रयत्वे सत्येव प्रत्ययलक्षणमिति क्लेशानुभवो वृथेति वाच्यम् यङो ङकारस्य प्रत्ययानुबन्धत्वेन यङन्तस्य धातोरनुबन्धेनानिर्देशादित्यलम्। **अत एवेति।** 'श्तिपा शपा–' इति निषेधादेव यङ्लुकि श्यन्नादयो विकरणा नेत्यर्थः। 'श्तिपा शपा–'इति निषेधमुपपादयति **गणेन निर्देशादिति।** 'दिवादिभ्य श्यन्' 'रुधादिभ्यः श्नम्' इत्यादिगणनिर्देशादित्यर्थः। **किंतु शबेवेति।** 'कर्तरि शप्' इत्यस्य 'श्तिपा शपा–'इति निषेधाविषयत्वादिति भावः। **चर्करीतमिति** यङ्लुगन्तमदादौ बोध्यमिति व्याख्यातं प्राक्। अतो यङ्लुगन्ताच्छपो लुगित्यर्थः। एवं च भूधातोर्यङो लुकि द्वित्वादौ बोभू इत्यस्माल्लटि तिपि शपो लुकि बोभूति इति स्थिते **यङो वा।** 'उतो वृद्धिः–' इत्यतो हलीति 'नाभ्यस्तस्याचि–' इत्यतः पिति सार्वधातुके इति 'ब्रुव ईट्' इत्यत ईडिति चानुवर्तते, तदाह **यङन्तादित्यादिना।** टित्वात्तिप आद्यवयव ईट्। तथा च बोभू ई ति इति स्थिते ऊकारस्य गुण अवादेशे बोभवीतीति रूपं वक्ष्यति। 'भूसुवोस्तिङि' इति गुणनिषेधमाशङ्क्याह **भूसुवोरिति। निपातनादिति।** 'कृषेः छन्दसि' इत्यतः छन्दसीत्यनुवृत्तौ दार्धा-

---

दिति भावः। **तेभ्योऽपीति।** ये त्वनुदात्तेतः प्रत्ययलक्षणं विनैव ङितश्च तेभ्योऽपीत्यर्थः। **अदादौ पाठादिति।** तथा च 'अदिप्रभृतिभ्यः शपः' इत्यनेन यङ्लुगन्तात्परस्य शपो लुगित्यर्थः। **यङो वा।** 'नाभ्यस्तस्याचि–' इति सूत्रात्पिति सार्वधातुक इति 'उतो वृद्धिः–' इत्यतो हलीति चानुवर्तते 'ब्रुव ईट्' इत्यत ईडिति च, तदेतदाह **यङन्तादित्यादि।** यङो लुक्यपि प्रत्ययलक्षणेनात्र यङन्तत्वम्। एतेन यङन्ताद्धलादिपित्सार्वधातुकं न संभवतीति यङ्शब्देन यङ्लुगन्तं लक्ष्यत इति व्याख्यानं परास्तम्। उक्तरीत्या यङन्तत्वानपायात्। किं च यङन्ताद् हलादिपिन्न संभवतीति यङ्शब्देन यङ्लुगन्ते लक्षितेऽपि 'सन्यङोः'इति द्वित्वस्य यङन्ते चरितार्थतया यङ्लुगन्तलक्षणायां बीजाभावाद्यङ्लुकि द्वित्वाभावप्रसङ्गादिति दिक्।

अत एव यङ्लुग्भाषायामपि सिद्धः । न च यङ्लुक्यप्राप्त एव गुणाभावो निपात्यतामिति वाच्यम्, 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्' ( प० १०१ ) 'द्विःप्रयोगो द्विर्वचनं पाष्ठम्' इति सिद्धान्तात् । बोभवीति, बोभोति बोभूतः बोभुवति । बोभवांचकार । बोभविता । अबोभवीत्, अबोभोत् अबोभूताम्

---

दर्धर्ति दर्धर्षि 'बोभूतु तेतिक्ते—' इत्यादिसूत्रे भूधातोर्यङ्लुगन्तस्य गुणाभावो निपात्यते । 'भूसुवोः—' इत्येव तत्र गुणनिषेध सिद्धे गुणाभावनिपातनं नियमार्थम्, यङ्लुकि छन्दस्यैवायम् 'भूसुवोः—' इति गुणनिषेधो, नान्यत्र इति । अतो लोकेऽपि यङ्लुगस्तीति विज्ञायते । एतेन 'यङोऽचि च' इति यङ्लुग्विधौ 'बहुलं छन्दसि' इति पूर्वसूत्राच्छन्दसीत्यनुवर्तयन्तः परास्ताः, तदाह **अत एव यङ्लुग् भाषायामपि सिद्ध इति** । 'भूसुवोस्तिङि' इति सूत्रभाष्ये तु बोभूत्वित्येतन्नियमार्थम् । अत्रैव यङ्लुगन्तस्य गुणो न भवति, नान्यत्र । क्व मा भूद् बोभवीतीत्युक्तम् । अत्रैवेत्यस्य बोभूत्विति लोट्येवेत्यर्थः । यङ्लुगन्तस्येत्यस्य भूधातोरिति शेषः । बोभवीतीत्येवोदाहृतत्वादिति शब्देन्दुशेखरे प्रपञ्चितम् । वस्तुतस्तु भाष्ये यङ्लुगन्तस्येति सामान्याभिप्रायमेव, भूधातुमात्रसंकोचे मानाभावात् । बोभवीति इत्युदाहरणं तु धात्वन्तराणामपि प्रदर्शनपरमिति मूलकृदाशयः । ननु भूधातोर्यङ्लुकि बोभु इत्यस्य 'भूसुवोस्तिङि' इति गुणनिषेधप्रसक्तिर्नास्ति, द्वित्वे सति यङ्लुगन्तस्य प्रकृत्यन्तरत्वेन भूरूपत्वाभावात् । ततश्च यङ्लुगन्तस्याप्राप्ते गुणाभावे तत्प्राप्त्यर्थमेव बोभूत्विति निपातनमिति युक्तम् तथा च छन्दस्येव यङ्लुगन्तस्य गुण निषेधः न तु भाषायामिति नियमः कथं सिध्येदित्याशङ्क्य निराकरोति **न च यङ्लुकीति । प्रकृतीति** । 'प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणम्' इति परिभाषया 'भूसुवोः—' इत्यत्र भूग्रहणेन बोभू इति यङ्लुगन्तस्यापि ग्रहणादित्यर्थः । ननु 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इत्यत्र किं प्रमाणमित्याशङ्क्य न्यायसिद्धमिदमित्याह **द्विःप्रयोग इति** । षष्ठाध्यायादौ 'एकाचो द्वे प्रथमस्य' इत्यत्र किमिदं द्विर्वचनम्—एकाचः प्रथमस्य एकस्य स्थाने द्वितयात्मक आदेशः स्थान्यपेक्षया अन्यो विधीयते, उत स्थानिन एकस्य सतो द्विरुच्चारणं विधीयते, न तु तत्स्थानिनः अतिरिच्यते इति संशय्य 'द्विःप्रयोगो द्विर्वचनम्' इति सिद्धान्तितम् । तदविकारस्यत्वात् 'सन्यङोः' इति द्विर्वचनमपि तथाविधमेव । ततश्च भू इत्यस्यैव बोभू इति द्विःप्रयुज्यमानतया 'भूसुवोः—' इति भूग्रहणेन ग्रहणाद्यङ्लुक्यपि निषेधसिद्धेः' बोभूत्विति निपातनं छन्दस्येव यङ्लुकि गुणनिषेधः न तु भाषायामिति नियमलाभाल्लोकेऽपि यङ्लुक् सिद्ध इति भावः । **बोभूत इति** । अपित्त्वादीण्न । ङित्त्वाच्च न गुणः । **बोभुवतीति** । 'अदभ्यस्तात्' इत्यत् । ङित्त्वाद् गुणाभावे उवङिति भावः । बोभवीषि, बोभोषि

---

छन्दसि निपातनादिति । गुणनिषेधे सिद्धे निपातनमिदं छन्दस्येव गुणनिषेधो नान्यत्रेति नियमार्थमित्यर्थः । **बोभूत्विति** समुदायस्यातिरिक्तत्वात् 'भूसुवोः—' इति गुणनिषेधो न प्राप्नोतीति निपातनमिदं न नियमार्थमित्याशङ्कायामाह **न चेति द्विःप्रयोग इति** । तथा च प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्येतन्न्यायसिद्धं

अवोभवुः । वोभूयात् वोभूयाताम् । वोभूयास्ताम् । 'गातिस्था-' ( सू० २२२३ ) इति सिचो लुक्, 'यङो वा' इतीट्पक्षे गुणं बाधित्वा नित्यत्वाद् वुक्, अवोभूवीत, अवोभोत् अवोभूताम् । अभ्यस्ताश्रयो जुस्, नित्यत्वाद् वुक्, अवोभूवुः । अवोभविष्यदित्यादि । पास्पर्धीति, पास्पर्द्धि पास्पर्द्धः पास्पर्धति । पास्पर्त्सि ।

---

वोभूथः वोभूथ । वोभवीमि, वोभोमि वोभूमः । वोभवांचकारेति । 'कास्यनेकाच्-' इत्याम् । वोभविता । वोभविष्यति । वोभवीतु, वोभोतु, वोभूतात् वोभूताम् वोभुवतु । हेरपित्त्वादीण्न,ङित्वान्न गुणः । वोभूहि,वोभूतात् वोभूतम् वोभूत । आटः पित्त्वेन अङित्त्वाद् गुणः वोभवानि वोभवाव वोभवाम । लङ्याह अवोभवीदित्यादि । अवोभवुरिति । 'सिजभ्यस्त—'इति जुसि गुणे अवादेशः । अवोभवोः, अवोभोः अभोभूतम् अवोभूत । अवोभवम् अवोभूव अवोभूम । वोभूयादिति । विधिलिङि आशीर्लिङि च रूपम् । वोभूयातामिति विधिलिङस्तामि रूपम् । वोभूयुः । वोभूयाः वोभूयातम् वोभूयात । वोभूयाम् वोभूयाव वोभूयाम । वोभूयास्तामिति । आशीर्लिङि तासि रूपम् । वोभूयास्त । वोभूयासम् वोभूयास्व वोभूयास्म । लुङस्तिपि सिचि कृते आह गातिस्थेति ईट्पक्ष इति । 'इतश्च'इति इकारलोपे कृते इडागमे 'सार्वधातुकार्धधातुकयोः' इति गुणं परमपि बाधित्वा नित्यत्वाद् 'भुवो वुग्लुङ्लिटोः' इति वुगित्यर्थः । गुणे कृते अकृते च प्राप्तेः वुको नित्यत्वं बोध्यम् । अवोभूवीदिति । वुकि कृते सति तेन व्यवधानादूकारस्य न गुणः । ननु लुङो झेर्जुसि वुकि अवोभूवुरिति रूपं वक्ष्यति । तदयुक्तम्, 'आतः' इति सूत्रे सिज्लुकि आदन्तादेव झेर्जुसिति नियमनादित्यत आह अभ्यस्ताश्रयो जुसिति । 'सिजभ्यस्त—' इत्यनेन अभ्यस्तात्परत्वाद् जुसित्यर्थः । सिजभ्यस्त—' इति सूत्रे सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवायं नियमः, न त्वभ्यस्ताश्रयजुस इति भावः । अवोभू उस् इति स्थिते 'जुसि च' इति गुणमाशङ्क्याह नित्यत्वाद् वुगिति । 'जुसि च' इति गुणापेक्षयेत्यर्थः । अवोभूवुरिति । न चात्राभ्यस्ताश्रयजुसं बाधित्वा परत्वाद् 'अदभ्यस्तात्' इत्यदादेशः स्यादिति शङ्क्यम्, अभ्यस्ताश्रयजुसः अदादेशापवादत्वादिति भावः । अवोभूवीः, अवोभोः अवोभूतम् अवोभूत । अवोभूवम् अवोभूव अवोभूम । इत्यादीति । अवोभविष्यताम् अवोभविष्यन् इत्यादि व्यक्तम् । पास्पर्धीतीति ।

---

नापूर्वं वचनमिति भावः । वोभुवतीति । 'अदभ्यस्तात्' इत्यत् । अवोभूवीदिति । केचिदिह 'भुवो वुक्—' इति सूत्रे 'ओः सुपि' इत्यत ओरित्यनुवर्तते । तथा च-उवर्णान्तस्य भुवो वुगित्यर्थाद् गुणे कृते वुकः प्राप्तिर्नास्तीत्यनित्यो वुक् स च पराभ्यां गुणवृद्धिभ्यां बाध्यते । तेन अवोभवीदिति रूपमाहुः । तच्चिन्त्यम्, भुवो वुको नित्यत्वादिति भाष्यग्रन्थविरोधात् । तस्माद् वुको नित्यत्वमाश्रित्य 'इण्विभवतिभ्यां च' इति सूत्रं प्रत्याख्यातवतो भाष्यकृत ओरित्यनुवर्तनमसंमतमेव । आत इति नियमाज्जुसभावमाशङ्क्याह अभ्यस्ताश्रय इति । अयं भावः—'सिजभ्यस्त—' इति सूत्रेण सिचः परत्वमाश्रित्य यो जुस् प्राप्तस्तस्यैवायं नियमो न त्वभ्यस्ताश्रयस्य

'हुझल्भ्यो हेर्धिः' ( सू० २४२५ )। पास्पर्धि । लङ्, अपास्पर्त्, अपास्पर्द्। सिपि 'दश्च' ( २४६८ ) इति रुत्वपक्षे 'रो रि' ( सू० १७३ ) अपास्पाः। जागाद्धि । जाघात्सि । अजाघात् । सिपि रुत्वपक्षे अजाघाः । नाथृ, नानात्ति

---

स्पर्धधातोः यङ्लुकि दित्वे 'शर्पूर्वाः खयः' इति पकारशेषे 'दीर्घोऽकितः' इति दीर्घे पास्पर्ध् इत्यस्माल्लटस्तिपि शपि शपो लुकि 'यङो वा' इति ईडागमे रूपम् । ईडभावे त्वाह पास्पर्द्धीति । पास्पर्ध् ति इति स्थिते 'झषस्तथोर्धोऽध' इति तकारस्य धकारः। 'झलां जश् झशि' इति पूर्वधकारस्य द इति भावः । मिब्वसमस्तु पास्पर्धीमि पास्पर्धिम पास्पर्द्वः पास्पर्ध्मः। पास्पर्धांचकार । पास्पर्धिता । पास्पर्धिष्यति । पास्पर्धीतु, पास्पर्द्धु, पास्पर्द्धात् पास्पर्धतु। हेरपित्त्वादीडभावं सिद्धवत्कृत्याह हुझल्भ्य इति। पास्पर्धीति । हेर्धिभावे 'झरो झरि—' इति वा धलोपः । पास्पर्धात् । पास्पर्धम् । पास्पर्धानि पास्पर्धाव पास्पर्धाम । लङिति। उदाहरणसूचनम् । ईटि अपास्पर्धीत् इति सिद्धवत्कृत्य ईडभावे आह अपास्पर्त् इति। अपास्पर्ध् त् इति स्थिते हल्ङ्यादिना तकारलोपे 'वाऽवसाने' इति चर्त्वविकल्प इति भावः। अपास्पर्धाम् अपास्पर्धुः । सिपि तु अपास्पर्ध् स् इति स्थिते जश्त्वे 'दश्च' इति दकारस्य रुत्वपक्षे अपास्पर् र् स् इति स्थिते हल्ङ्यादिना सकारलोपे 'रो रि' इति रेफलोपे 'ढ्रलोपे—' इति दीर्घे विसर्गे अपास्पाः इति रूपम् । न च दीर्घे 'दश्च' इति रुत्वमसिद्धमिति शङ्क्यम् 'ढ्रलोपे—' इति सूत्रे ढ्रग्रहणेन लण्सूत्रे जर्गृधेः अजर्घाः इति भाष्यप्रयोगेण च पूर्वत्रासिद्धमित्यस्याप्रवृत्तिबोधनात् । अपास्पर्धाम् । अपास्पर्द्व अपास्पर्ध्म । लिङि पास्पर्ध्यात् पास्पर्ध्याताम् । पास्पर्ध्यास्ताम् इत्यादि । लुङि अपास्पर्ध स् इति स्थिते 'अस्तिसिचः—' इति नित्यमीट् । 'इट ईटि' इति, सलोपः, अपास्पर्धीत् अपास्पर्धिष्टाम् अपास्पर्धिषुः । अपास्पर्धिष्यत् । गाधृधातोर्यङ्लुगन्ताद् लटस्तिपि ईटपक्षे जागाधीतीति सिद्धवत्कृत्य ईडभावे आह जागाद्धीति । जागाध् ति इति स्थिते 'झषस्तथोः—' इति तकारस्य धः । जागाद्धः

---

जुस इति । 'जुसि च' इति गुणमाशङ्क्याह नित्यत्वाद् वुगिति । अबोभूवुरिति । न चात्र परत्वाद् 'अदभ्यस्तात्' इति अदादेशः स्यादिति वाच्यम्, अभ्यस्ताश्रयजुसोऽदादेशापवादत्वात् । पास्पर्धीतीति । स्पर्ध संघर्षे । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । 'यङो वा' इति ईड्विकल्पः । ईडभावपक्षे 'झषस्तथोः'—इति धत्वम्, 'झरो झरि सवर्णे' इति वा धलोपः । लिटि पास्पर्धांचकार । पास्पर्धिता । लृटि पास्पर्धिष्यति । लोटि पास्पर्धु पास्पर्धात् । पास्पर्धाम् । पास्पर्धतु । पास्पर्धीति । हेर्धित्वे वा धिलोपः । लुङि इडागमपक्षे अपास्पर्धीत् रुत्वपक्षे इति । पक्षान्तरे तु अपास्पर्त्, अपास्पर्द । लिङि पास्पर्ध्याताम् । पास्पर्ध्यात् । पास्पर्ध्यास्ताम् । लुङि । 'अस्तिसिचोऽपृक्ते' इति नित्यमीट्, 'इट ईटि' इति सलोपः, अपास्पर्धीत् । अपास्पर्धिष्टाम् । अपास्पर्धिषुः । लृङि अपास्पर्धिष्यत् । जागाद्धीति । गाधृ प्रतिष्ठादौ । ईट्पक्षे तु जागाधीति । जाघात्सीति । 'एकाच—' इति भष्भावः । धस्य चर्त्वम् । लोटि जागाधीतु । जागाद्धु । जागाद्धाम् । जागाधतु । लङि अजा-

नानात्तः। दध, दादद्धि दादद्धः। दादत्सि। अदाधत् अदादधुः। अदाधः, अदाधत्। लुङि अदादाधीत्, अदादधीत्। चोस्कुन्दीति, चोस्कुन्ति। अचो-

जागाधति। सिपि ईट्पक्षे जागाधीपीति सिद्धवत्कृत्य ईडभावपक्षे आह जाघात्सीति। जागाध् सि इति स्थिते 'एकाचो वशः—' इति गस्य भष् धस्य चर्त्वमिति भावः। जागाद्धः जागाद्ध। जागाध्मि जागाध्वः जागाध्मः। जागाधांचकार जागाधिता जागाधिष्यति। जागाधीतु, जागाद्धु, जागाद्धात् जागाद्धाम् जागाधतु। जागाद्धि, जागाद्धात् जागाद्धाम् जागाद्ध। जागाधानि जागाधाव जागाधाम। लङि अजागाधीत्, अजाघात् अजागाद्धम् अजागाधुः। सिपि ईट्पक्षे अजागाधीरिति सिद्धवत्कृत्य ईडभावपक्षे आह सिपोति। अजागाध् स् इति स्थिते भष्भावे जश्त्वे 'दश्च' इति दस्य रुत्वपक्षे हल्ङ्यादिलोपे रेफस्य विसर्गे अजाघाः इति रूपमित्यर्थः। पक्षे अजाघाद् इति वाच्यम्। अजागाद्धम् इत्यादि। जागाध्यात्। लुङि 'अस्तिसिचः—' इति नित्यमीट, अजागाधीत् अजागाधिष्टाम् इत्यादि। नाथृ इति। उदाहरणसूचनम्। वर्गद्वितीयान्तोऽयं धातुः न झषन्तः। तस्य ईट्पक्षे नानाथीति इति सिद्धवत्कृत्य ईडभावपक्षे आह नानात्तीति। नानाथ्ति इति स्थिते 'खरि च' इति थस्य चर्त्वम् 'झषस्तथोः—'इति 'एकाचो वशो भष्—'इति च न,अझषन्तत्वात्। नानात्तः नानाथति। नानाथीपि,नानात्सि नानात्थः नानात्थ। नानाथीमि,नानाथ्मि नानाथ्वः नानाथ्मः। लोटि नानाथीतु, नानात्तु। हेर्धिः, थस्य जश्त्वेन दः, नानाद्धि। नानाथानि नानाथाव नानाथाम। लङि अनानाथीत्, अनानात् अनानात्ताम् अनानाथुः इत्यादि। लुङि 'अस्तिसिचः—' इति नित्यमीट्, अनानाथीत् अनानाथिष्टाम् इत्यादि। दृधेति। उदाहरणसूचनमिदम्। दधधातोर्लेटस्तिपि ईट्पक्षे दादधीतीति सिद्धवत्कृत्य ईडभावपक्षे आह दादद्धीति। दाद्ध ति इति स्थिते 'झषस्तथोः—' इति तकारस्य धः। दादधीपीति सिद्धवत्कृत्याह दाधत्सीति। 'एकाचो वशः—' इति दस्य भष्। धस्य 'खरि च' इति चर्त्वमिति भावः। दादत्थः दादत्थ। दादध्मि इत्यादि। लोटि दादधीतु, दादद्धु। दादद्धि। दादधानि। लिङस्तिपि ईटि अदादधीत् इति सिद्धवत्कृत्य ईडभावे आह अदाधत् इति। अदादध् त् इति स्थिते हल्ङ्यादिलोपे भष्भावे धस्य 'वावसाने' इति चर्त्वविकल्प इति भावः। सिपि ईटि अदादधीरिति सिद्धवत्कृत्य ईडभावे आह अदाधः इति। अदादध् इति स्थिते जश्त्वे 'दश्च' इति दस्य रुत्वे हल्ङ्यादिना सलोपे रुत्वजश्त्वयोरसिद्धत्वेन झषन्तत्वाद् दस्य भषिति भावः। अदाधदिति पक्षे रूपम्। 'अस्तिसिचः—' इति नित्यमीडिति मत्वाह अदादधीदिति। 'अतो हलादेः—' इति वृद्धिविकल्पः। अदादधिष्टाम् इत्यादि। स्कुदि आप्रवणे, इदित्त्वान्नुम्। अस्माद्यङ्लुकि उदाहरति चोस्कुन्दीतीति। ईटि रूपम्। तदभावे त्वाह चोस्कुन्तीति। 'झरो झरि सवर्णे' इति दकारस्य लोप-

गाधीत् अजाघात्। अजागाद्धाम्। अजागाधुः। लुङि अजागाधीत्। अजागाधिष्टाम्। नाथृ नाधृ याच्ञादौ। नानात्तीति। ईट्पक्षे नानाथीति। दृध

स्कुन् अचोस्कुन्ताम् अचोस्कुन्दुः। मोमुदीति, मोमोत्ति। मोमोदांचकार। मोमोदिता। अमोमुदीत्, अमोमोत् अमोमुत्ताम् अमोमुदुः। अमोमुदीः, अमोमोः, अमोमोत्, लुङि गुणः, अमोमोदीत्। चोकूर्ति, चोकूर्दीति। लङ्, तिप्, अचोकूर्त्, अचोकूर्दीत्। सिप्पक्षे अचोकूः। अचोखूः अजोगूः। वनीवञ्चीति,

---

विकल्पः। इह यङो लुप्तत्वादिदित्त्वाच्च यङं तिङं चाश्रित्य नलोपो न। लङि ईट्पक्षे अचोस्कुन्दीदिति सिद्धवत्कृत्य ईडभावे आह **अचोस्कुन्निति**। अचोस्कुन् द् त् इति स्थिते हल्ङ्यादिना तकारलोपे दकारस्य संयोगान्तलोपः लुङि तु 'अस्तिसिचः-' इति नित्यमीट्। अचोस्कुन्दीत् अचोस्कुन्दिष्टाम् इत्यादि। **मोमुदीतीति**। मुद हर्षे इटि 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति लघूपधगुणो न। **मोमोत्तीति**। ईडभावे अच्परत्वाभावाद् 'नाभ्यस्तस्याचि-' इति लघूपधगुणनिषेधो न। **मोमोदितेति**। 'न धातुलोप आर्धधातुके' इति गुणनिषेधस्तु न, धात्वंशलोपनिमित्ते आर्धधातुके परे एव तन्निषेधस्य प्रवृत्तेः, इह च यङ्लुकः अनैमित्तिकत्वस्य उक्तत्वात्। **लुङि गुण इति**। सिज्निमित्तक इति शेषः। अतो 'नाभ्यस्तस्य-' इति गुणनिषेधो न शङ्क्यः। **चोकूर्तीति**। कुर्द क्रीडायाम्, यङ्लुग् द्वित्वादि। ईडभावे 'उपधायां च' इति दीर्घः। **अचोकूर्त् इति**। लङस्तिपि अचोकूर्द् त् इति स्थिते हल्ङ्यादिलोपे 'रात्सस्य' इति नियमान्न संयोगान्तलोप इति भावः। **सिप्पक्षे इति**। लङः सिपि ईडभावे अचोकूर्द् स् इति स्थिते 'दश्च' इति रुत्वपक्षे हल्ङ्यादिना सलोपे 'रो रि' इति प्रथमरेफलोपे दीर्घे दकारस्थानिकरेफस्य विसर्गे अचोकूरिति रूपमित्यर्थः। **अचोखूरिति**। खुर्दधातोर्यङ्लुगन्ताद् लङः सिपि कुर्दवद्रूपम्। **अजोगूरिति**। गुर्दधातोर्यङ्लुगन्तात् सिपि रूपम्। **वनीवञ्चीतीति**। वञ्चु गतौ, अस्माद् 'नित्यं कौटिल्ये गतौ' इति यन्ङतस्य लुक्। द्वित्वादि। 'नीग्वञ्चु-' इत्यादिना अभ्यासस्य नीगागमः। यङो लुका लुप्तत्वान्न तदाश्रितो नलोपः। तिपः पित्त्वेन अङित्त्वान्न तदाश्रितोऽपि नलोपः। इकरोच्चारणसामर्थ्यान्नीको न गुणः। अन्यथा निकमेव विदध्यात्। न च 'नीग्वञ्चु-' इत्यनुबन्धनिर्देशाद्यङ्लुकि नीग् दुर्लभ इति शङ्क्यम्, तत्र यङ्लुकोः इत्यनुवृत्तिसामर्थ्येन अदोषादिति भावः।

---

धारणे। ईट्पक्षे दादधीति। लुङि 'अतो हलादेः-' इति वा वृद्धिः। **चोस्कुन्दीति**। स्कुदि आप्रवणे। 'इदितः-' इति नुम्। ईडभावे 'झरो झरि सवर्णे' इति वा लोपः। लङि ईट्पक्षे अचोस्कुन्दीत्। लुङि तु 'अस्तिसिचः-' इति नित्यमीट्। अचोस्कुन्दीत्। अचोस्कुन्दिष्टाम्। **मोमुदीतीति**। मुद हर्षे। 'नाभ्यस्तस्याचि-' इति लघूपधगुणनिषेधः। **मोमोदितेति**। न चात्र 'न धातुलोपः-' इति गुणनिषेधः शङ्क्यः, बहुलग्रहणेन प्राप्तस्य यङ्लुकोऽनैमित्तिकत्वात्। **लुङि गुण इति**। सिज्निमित्तकोऽयं गुणस्तेन 'नाभ्यस्तस्याचि-' इति निषेधो न शङ्कनीय इति भावः। **चोकूर्तीति**। कुर्द खुर्द गुर्द गुद क्रीडायाम्। लङि तिपि। ईट्पक्षे अचोकूर्दीत्। अचोखूर्दीत् अजोगूर्दीत्। **पक्षे अचोकूरिति**। 'दश्च' इति रुत्वपक्षे इत्यर्थः। **वनीवञ्चीतीति**। वञ्चु गतौ। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'नीग्वञ्चु-'

वनीङ्क्ति वनीवक्तः वनीवचति । अवनीवञ्चीत्, अवनीवन् । जङ्गमीति, जङ्गन्ति 'अनुदात्तोपदेश–' (सू० २४२८) इत्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति । 'म्वोश्च' (सू० २३०९) । जङ्गन्मि । जङ्गन्वः । एकाज्ग्रहणेनोक्तत्वान्नेण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । 'मो नो धातोः' (सू० ३४१), अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ्, 'ह्म्यन्त–' ( सू० २२९९ ) इति न वृद्धिः, अजङ्गमीत् अजङ्गमिष्टाम् । हन्तेर्यङ्लुक्, 'अभ्यासाच्च' ( सू० २४३० ) इति कुत्वं यद्यपि 'हो हन्तेः–' ( सू० ३५८ ) इत्यतो हन्तेरित्यनुवर्त्य विहितम्, तथापि यङ्लुकि भवत्येवेति न्यासकारः, 'श्तिपा शपा–' ( प० १३२ ) इति निषेधस्त्वनित्यः, 'गुणो यङ्लुकोः' ( सू० २६३० )

---

वनीवङ्क्तीति । ईडभावे चस्य कुत्वेन कः । नकारस्यानिकानुस्वारस्य परसवर्णो ङकार इति भावः । वनीवक्त इति । तसो ङित्त्वादिह स्यादेव 'अनिदिताम्–' इति नलोपः । लोटि वनीवञ्चीतु, वनीवङ्क्तु वनीवक्तात् वनीवक्ताम् वनीवचतु । हेर्धिः, अपित्त्वेन ङित्त्वान्नलोपः, अत एव ईडपि न, वनीवग्धि वनीवञ्चानि, आटः पित्त्वादङित्त्वान्नलोपो न । लङि तिपि इट्पक्षे आह अवनीवञ्चीदिति । ईडभावे त्वाह अवनीवन् इति । हल्यादिना तलोपे चकारस्य संयोगान्तलोपः । जङ्गमीतीति । गमेर्यङ्लुगन्ताल्लटस्तिपि इट् । 'नुगतोऽनुनासिकान्तस्य' इति नुक् । 'नश्च' इत्यनुस्वारः परसवर्णश्चेति भावः । तसि आह अनुदात्तेति । जङ्ग्मतीति । 'गमहन–' इत्युपधालोप इति भावः । ननु गमेरनिट्त्वात् प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणाज्जङ्गमितेत्यत्र कथमिडित्यत आह एकाज्ग्रहणेनेति । ननु जङ्गहीत्यत्र अनुनासिकलोपे कृते 'अतो हेः' इति लुक् स्यादित्यत आह अनुनासिकलोपस्येति । लङस्तिपि अजङ्गमीदिति सिद्धवत्कृत्य ईडभावे आह मो न इति । अजङ्गम् त् इति स्थिते हल्ङ्यादिना तलोपे 'मो नो धातोः' इति मस्य न इत्यर्थः, तदाह अजङ्गन्निति । अजङ्गताम् अजङ्ग्मुः । अजङ्गन् अजङ्गतम् अजङ्गत । अजङ्गमम् अजङ्गन्व अजङ्गन्म । लुङि अजङ्गीदित्यत्र 'पुषादिद्युताद्य्लृदितः–' इत्यङ्माशङ्क्याह अनुबन्धेति । हन्तेर्यङ्लुगिति । हिंसार्थे क्रियासमभिहारे गत्यर्थत्वे तु कौटिल्य इति बोध्यम् । हन्तेरित्यनुवर्त्येति । तथा च 'श्तिपा शपा–' इति निषेधात्कथमिह हन्तेः कुत्वमित्याक्षेपः । गुण इति । 'गुणो यङ्लुकोः' इति ज्ञापकादित्यन्वयः । 'एकाचो द्वे प्रथमस्य' इत्यत्र एकाज्ग्रहणाद्यङ्लुकि द्विर्वचनस्याप्रवृत्त्या अभ्यासाभावाद् 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणविधानं व्यर्थं सत् 'श्तिपा शपा–' इत्यादिनिषेधस्य क्वचिद्यङ्लुकि अप्रवृत्तिं ज्ञापयतीत्यर्थः । नन्वेकाज्ग्रहणविधेरेव यङ्लुकि क्वचिदप्रवृत्तिज्ञापनलाभेऽपि हन्तेः इति श्तिपा निर्देशनिमित्तकनिषेधस्य

---

इत्यभ्यासस्य नीगागमः । यङो लुका लुप्तत्वाद् न तदाश्रितो नलोपः वनीवक्त इति । तसोऽङित्त्वादिह स्यादेव 'अनिदिताम्–' इति नलोपः । लोटि वनीवञ्चीतु । वनीवङ्क्तु । वनीवक्तात् । वनीवक्ताम् । वनीवचतु । वनीवग्धि । वनीवञ्चानि । जङ्गमीतीति । 'नुगतोऽनुनासिकान्तस्य' इति नुक् । जङ्ग्मतीति । 'गमहन–

इति सामान्यापेक्षज्ञापकादिति भावः । जङ्घनीति, जङ्घन्ति जङ्घतः जङ्घ्नति । जङ्घनिता । श्तिपा निर्देशान्नादेशो न, जङ्घहि । अजङ्घनीत् अजङ्घन् । जङ्घन्यात् । आशिषि तु वध्यात् । अवधीत् अवधिष्टामित्यादि । वधादेशस्य द्वित्वं तु न भवति, स्थानिवत्त्वेन 'अनभ्यासस्य' इति निषेधात् । तद्धि समानाधिकरणं धातोर्विशेषणम्, बहुव्रीहिबलात् । आङ्पूर्वात्तु 'आङो गमहनः'

---

कथं यङ्लुकि अप्रवृत्तिस्तः स्यादित्यत आह सामान्यापेक्षेति । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणविधानमेकाज्ग्रहणस्यानित्यत्वं ज्ञापयत् तद्वचनोपात्तत्वसामान्यात् 'श्तिपा शपा–' इत्यादिसर्वनिषेधानां यङ्लुकि क्वचिदप्रवृत्ति ज्ञापयतीत्यर्थः । इति भाव इति । न्यासकृत इति शेषः । जङ्घनीतीति । 'नुगतः–' इति नुक् । जङ्घत इति । 'अनुदात्तोपदेश–' इत्यनुनासिकलोपः । जङ्घ्नतीति । 'गमहन–' इत्युपधालोपः । जङ्घनितेति । एकाज्ग्रहणादिण्निषेधो न जङ्घहीत्यत्र 'हन्तेर्जः' इत्याशङ्क्याह श्तिपेति । अजङ्घन्निति । लङस्तिपि ईडभावे अजङ्घन् त् इति स्थिते हल्ङ्यादिलोप इति भावः । आशिषि तु वध्यादिति । जङ्घन् इत्यस्मादाशीर्लिङि 'हनो वध लिङि' इति वधादेशः,प्रकृतिग्रहणेन यङ्लुगन्तस्यापि ग्रहणादिति भावः । अवधीदिति । जङ्घन् इत्यस्माल्लुङस्तिपि 'लुङि च' इति वधादेशे 'अस्तिसिचः–' इति नित्यमीडिति भावः । ननु हनो यङ्लुगन्तात् आशीर्लिङि लुङश्च तिपि द्वित्वात्प्रागेव वधादेशे कृते तस्य द्वित्वं कुतो न स्यादित्यत आह वधादेशस्य द्वित्वं तु न भवतीति । कुत इत्यत आह स्थानिवत्त्वेनेति । वधादेशात्परत्वादादौ द्वित्वे कृते सति कृतद्विर्वचनस्य स्थाने वधादेशः । तस्य च स्थानिवत्त्वेन साभ्यासतया अनभ्यासस्येति निषेधान्न द्वित्वमित्यर्थः । ननु साभ्यासस्य स्थाने भवन् वधादेशः स्थानिवत्त्वेन साभ्यासोऽस्तु । द्वित्वं तु दुर्वारम् । साभ्यासत्वेऽप्यभ्यासानात्मकत्वाद् अनभ्यासस्येत्यनेन धातोरवयवस्याभ्यासस्य द्वित्वनिषेधादित्यत आह तद्धीति । धात्ववयवस्य अभ्यासस्येति नार्थः । किंतु अनभ्यासो यो धातुः तदवयवस्यैकाच इत्येवम् अनभ्यासग्रहणं सामानाधिकरण्येन धातोर्विशेषणमित्यर्थः । नन्वेवमपि न अभ्यास इति विग्रहे द्वित्वं दुर्निवारमेव, वधादेशस्य स्थानिवत्त्वेन साभ्यासत्वेऽप्यभ्यासनात्मकत्वादित्यत आह बहुव्रीहिबलादिति । न विद्यते अभ्यासो यस्य धातोरिति बहुव्रीहिमाश्रित्य अनभ्यासस्येत्येतद्धातोः सामानाधिकरण्येन विशेषणमित्यर्थः । प्रकृते च वधादे-

---

इत्युपधालोपः । अजङ्घन्निति । ईट्पक्षे त्वजङ्घनीत् । अजङ्घताम् । अजङ्घ्नुः । अजङ्घनीः । अजङ्घतम् । अजङ्घत । अजङ्घनम् । अजङ्घन्व । अजङ्घन्म । सामान्यापेक्षेति । अयं भावः– एकाच इत्यत्रैकाज्ग्रहणाद्यङ्लुकि द्विर्वचनं न कुत्रापि प्राप्नोति । तथा च 'गुणो यङ्लुकोः' इत्यभ्यासस्य विधीयमानो गुणो द्विर्वचनं विना निवेशमलभमानः सन् 'श्तिपाशपा–' इति सर्वेषामपि निषेधानां क्वचिद्यङ्लुक्यप्रवृत्तिं ज्ञापयतीति । तथा च प्रयुज्यते–'राजा वृत्रमजङ्घनत्' इत्यादि । द्वित्वं तु न भवतीति । वध्यात् अवधीदित्यत्र कृतद्विर्वचनस्य 'हनो वध लिङि'

( सू० २६९५ ) इत्यात्मनेपदम्, आजङ्घ्नते इत्यादि । 'उत्परस्य–' ( सू० २६३७ ) इति तपरत्वान्न गुणः, 'हलि च' ( सू० ३५४ ) इति दीर्घस्तु स्यादेव, तस्यासिद्धत्वेन तपरत्वनिवर्त्यत्वायोगात्, चञ्चुरीति, चञ्चूर्ति, चञ्चूर्तः चञ्चुरति । अचञ्चुरीत् अचञ्चूः । चङ्खनीति, चङ्खन्ति । 'जनसन–' ( सू० २५०४ ) इत्यात्वम्, चङ्खातः । 'गमहन–' ( सू० २३६३ ) इत्युपधालोपः, चङ्घ्नति । चङ्खाहि । चङ्खानानि । अचङ्खनीत्, अचङ्खन् । अचङ्घ्नुः । 'ये विभाषा' ( सू० २३१९ ) चङ्खायात्, चङ्खन्यात् । अचङ्खनीत् । अचङ्खानीत् । 'उतो वृद्धिः' ( सू० २४४३ ) इत्यत्र 'नाभ्यस्तस्य–' इत्यनुवृत्तेरुतो वृद्धिर्न, योयोति, योयवीति । अयोयवीत्, अयोयोत् । योयुयात् । आशिषि दीर्घः । योयूयात् । अयोयावीत् ।

---

शस्य स्थानिवत्त्वेन साभ्यासत्वादभ्यासहीनत्वाभावान्न द्वित्वमिति भावः । आङ्पूर्वात्त्विति यङ्लुगन्ताद्धनधातोरिति शेषः । 'आङो यमहनः' इत्यत्र हन्ग्रहणेन यङ्लुगन्तस्यापि ग्रहणम् प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः । उत्परस्येति । चर गतौ भक्षणे च, अस्माद्यङ्लुकि लटस्तिपि इडभावे द्वित्वे 'चरफलोश्च' इत्यभ्यासस्य नुक् । 'उत्परस्यातः' इत्युत्तरखण्डे अकारस्य उत्वम्, 'हलि च' इति दीर्घः । चञ्चूर्तीति रूपम् । तिपमाश्रित्य उकारस्य लघूपधगुणस्तु न, उदिति तपरकरणसामर्थ्यात् । अन्यथा उरित्युक्तेऽपि 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इत्येव दीर्घादिव्यावृत्तेरित्यर्थः । ननु उदिति तपरकरणाद्यथा गुणो निवर्तते तथा 'हलि च' इति दीर्घोऽपि निवर्तेत इत्यत आह हलि चेति दीर्घस्तु स्यादेवेति । कुत इत्यत आह तस्येति । 'हलि च' इति दीर्घशास्त्रस्य त्रैपादिकत्वेन 'उत्परस्यातः' इति शास्त्रं प्रत्यसिद्धतया तपरकरणेन तन्निवृत्तेरसंभवादित्यर्थः । वस्तुतस्तु गुणस्यापि बहिरङ्गतया असिद्धत्वात्तपरत्वनिवर्त्यत्वं न भवति । अत एव विप्रतिषेधसूत्रे भाष्ये 'उदोष्ठ्य-' इत्युत्वे पोपूर्यते इत्यत्राभ्यासगुणो दृश्यमान उपपद्यत इति शब्देन्दुशेखरे प्रपञ्चितम् । अचञ्चूरिति । लङस्तिपि ईडभावे हल्ङ्यादिना तलोपे प्रत्ययलक्षणेन पदान्तत्वाद् 'र्वोरुपधायाः–' इति दीर्घः । खनु अवदारणे, अस्माद्यङ्लुकि उदाहरति चङ्खनीतीति । चङ्खाहीति । हेरपित्त्वेन ङित्वाद् 'जनसन–' इत्यात्त्वम् । अचङ्खनीदिति । 'अस्तिसिचः–' इति नित्यमीट् । 'अतो हलादेः–' इति वृद्धिविकल्पः । युधातोः योयोतीत्यत्र 'उतो वृद्धिः–' इति वृद्धिमाशङ्क्याह उतो वृद्धिरित्यत्रेति । आशिषि

---

'लुङि च' इति वधादेशात्पुनर्द्वित्वं न भवतीत्यर्थः । तत्र हेतुमाह स्थानिवत्त्वेनेति । आङ्पूर्वादिति । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणादिति भावः । चञ्चूर्तीति । चरतिर्गतौ भक्षणे च । 'चरफलोश्च' इत्यभ्यासस्य नुक् । 'उत्परस्यातः' इत्युत्वम् । 'हलि च' इति दीर्घः । अचञ्चूरित्यत्र तु पदान्तविषयत्वाद् 'र्वोरुपधायाः–' इति दीर्घः । चङ्खनीतीति । खनु अवदारणे । चङ्खात इति । यत्तु केचिद्धातुग्रहणेन कृतं कार्यं यङ्लुकि वेति 'जनसन—' इत्यात्वाभावे 'अनुनासिकस्य क्विझलोः—' इति दीर्घोऽपि न भवति । क्विप्साहचर्याद्धि झलादिः कृदेव तत्र

नोनवीति, नोनोति। जाहेति, जाहाति। 'ई हल्यघोः' ( सू० २४९७ ) जाहीतः। इह 'जहातेश्च' ( सू० २४९८ ) 'आ च हौ' ( सू० २४९९ ) 'लोपो यि' ( सू० २५०० ) 'घुमास्था–' ( सू० २४६२ ) 'एर्लिङि' ( सू० २३७४ ) इत्येते पञ्चापि न भवन्ति, श्तिपा निर्देशात्। जाहति। जाहासि, जाहेषि जाहीथः जाहीथ।

दीर्घ इति। 'अकृत्सार्वधातुकयोः–' इत्यनेनेति भावः। अयोग्रावीदिति। ईटि सिचि वृद्धिः। नुधातोरपि युधातुवद्रूपाणीति मत्वाह नोनवीतीति। हाङ्हाकोर्यङ्लुकि तुल्यानि रूपाणि ङित्त्वप्रयुक्तात्मनेपदस्य यङ्लुकि अप्रवृत्तेरुक्तत्वादिति मत्वाह जाहेतीति। हाङ्हाकोर्यङ्लुगन्ताल्लटस्तिपि ईटि आद्गुणे रूपम्। न च हाङोऽभ्यासस्य 'भृञामित्' इति इत्त्वम्, हाकस्तु तन्नास्ति, भृञ् माङ् ओहाङ् एषां त्रयाणामेव तत्र ग्रहणात्। तत् कथं हाङ्हाकोस्तुल्यत्वमिति शङ्क्यम्, 'भृञामित्' इत्यस्य श्लावेव प्रवृत्तेः। न च अकित इति निषेधाद् हाकोऽभ्यासस्य दीर्घाभावात् कथमुभयोस्तुल्यरूपत्वमिति वाच्यम्, क् इत् यस्य स कित्, न विद्यते किद् यस्य स अकित्, तस्य अकित इति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात्। इह च हाको धातोः कित्त्वेऽपि न किद्वत्त्वम्। तदभ्यासस्य तु दूरेतरां न किद्वत्त्वम्। 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात्। बहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवत्त्वेन हाको न किद्वत्त्वम्। अतो हाकोऽप्यभ्यासदीर्घो निर्बाध इति भावः। जाहीत इति। हाङ्हाकोस्तसि ईत्त्वमेव। ननु हाको 'जहातेश्च' इति इत्त्वविकल्पः कुतो नेत्यत आह इहेति। हलादौ क्ङिति सार्वधातुके 'जहातेश्च' इति इत्त्वविकल्पः, तथा 'आ च हौ' इति जहातेर्हौ परे आत्त्वमित्त्वमीत्वं च, तथा 'लोपो यि' इति यादौ सार्वधातुके जहातेराल्लोपश्च तथा 'घुमास्था–' इति जहातेर्हलादौ क्ङित्यार्धधातुके ईत्वं, तथा 'एर्लिङि' इति जहातेरार्धधातुके क्ङिति लिङ्येत्वं च इत्येते पञ्चापि विधयो यङ्लुकि न भवन्तीत्यर्थः। कुत इत्यत आह श्तिपेति। एवं च जाहीत इत्यत्र 'ई हल्यघोः' इति ईत्त्वमेव, न त्वित्त्वविकल्प इति स्थितम्। जाहतीति। 'अदभ्यस्तात्' इत्यदादेशः, 'श्नाभ्यस्तयोः–' इत्याल्लोपः। जाहांचकार। जाहिता। जाहिष्यति। जाहेतु,

गृह्यते न तु तिङित्यभ्युपेत्य चङ्खन्त इति रूपमाहुस्तदयुक्तम्। धातुग्रहणेन कृतस्य यङ्लुक्य-प्रवृत्तौ मानाभावात्। सत्यपि प्रमाणे आत्वं वेति विकल्पोक्त्या चङ्खात इति रूपं केन वार्यताम्। यच्चोक्तम् 'अनुनासिकस्य–' इति सूत्रे क्विप्साहचर्याज्झलादिरपि कृदेव गृह्यत इति तदप्ययुक्तमेव। यदि हि कृदेव क्विप् स्यात्तदा साहचर्योक्तिः सङ्गच्छेत किं तु कृद्भिन्नोऽप्यस्त्येवाचारक्विप्। अत एव राजानति चर्माणति इत्यादौ माधवादिभिः क्विनिमित्तो दीर्घ उक्तः। चङ्खाहीति। हेरपित्त्वेन ङित्त्वाद् 'जनसन–' इत्यात्वम्। अचङ्खानीदिति। 'अतो हलादेः–' इति वा वृद्धिः। जाहेतीत्यादि। हाङ्हाको-स्तुल्यानि रूपाणि। ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः 'भृञामित्' इति हाङ इत्त्वस्य श्लुनिमित्ताभ्यासस्यैव विहितत्वाच्च। न च अकित इति निषेधन हाकोऽभ्यासस्य दीर्घो दुर्लभ इति कथमुभयोस्तुल्यरूपतेति शङ्क्यम्, अकित इत्यत्र हि न विद्यते किद्यस्याभ्यासस्येति बहुव्रीहिराश्रीयते, तेन

जाहीहि । अजाहेत, अजाहात् अजाहीताम् अजाहुः । जाहीयात् । आशिषि जाहायात् । अजाहासीत् अजाहासिष्टाम् । अजाहिष्यत् । लुका लुप्ते प्रत्ययलक्षणाभावात् 'स्वपिस्यमि–' (सू० २६४५) इत्युत्त्वं न, 'रुदादिभ्यः–' (सू० २४७४) इति गणनिर्दिष्टत्वादिण्न, सास्वपीति, सास्वप्ति सास्वप्तः सास्वपति । असास्वपीत्, असास्वप् । सास्वप्यात् । आशिषि तु 'वचिस्वपि–' (सू० २४०९) इत्युत्त्वम्, सासुप्यात् । असास्वापीत, असास्वपीत् । २६५२ रुग्रिकौ च लुकि । (७–४–९१) ऋदुपधस्य धातोरभ्यासस्य रुक्, रिक्, रीक् एते आगमाः स्युर्यङ् लुकि । २६५३ ऋतश्च । (७–४–९२) ऋदन्तधातोरपि तथा । वर्वृतीति, वरिवृतीति, वरीवृतीति । वर्वर्ति, वरिवर्ति वरीवर्ति । वर्वृत्तः;

---

जाहातु, जाहीतात् जाहीताम् जाहतु । जाहीहीति । हेरपित्त्वेन ङित्वादीत्वम् । इह 'आ चे हौ' इति न । विधिलिङ्याह जाहीयादिति । 'ई हल्यघोः' इति ईत्वमेव । 'लोपो यि' इत्याल्लोपस्तु न । आशिषि जाहीयादिति । इह 'घुमास्था–' इति इत्वं न । 'एर्लिङि' इत्यपि न । अजाहासीदिति । 'यमरम–' इति सगिटौ । ञि ष्वप् शये । अस्य यङ्लुकि 'स्वपिस्यमिव्येञां यङि' इति संप्रसारणमाशङ्क्याह लुका लुप्त इति । उत्त्वं नेति । वस्य संप्रसारणं नेत्यर्थः । इडभावपक्षे 'रुदादिभ्यः–' इति इटमाशङ्क्याह रुदादिभ्य इति । असास्वप् इति । लङस्तिपि ईडभावे हल्ङ्यादिलोपः । असास्वापीत् इति । 'अतो हलादेः–' इति वृद्धिविकल्पः । 'अस्तिसिचः–' इति नित्यमीट् । रुग्रिकौ च लुकि । 'रीगृदुपधस्य च' इत्यत ऋदुपधस्येत्यनुवर्तते । रिगपि इह चकारात् समुच्चीयते । अत्र 'लोपः – ' इत्यतः अभ्यासस्येत्यनुवर्तते 'गुणो यङ्लुकोः' इत्यतो यङ्ग्रहणं च, तदाह ऋदुपधस्येत्यादिना । रुकि उकार उच्चारणार्थः । रिकि तु इकारः श्रूयत एव । एवं रीकि ईकारश्च, व्याख्यानात् । ऋतश्च । तथेति । अभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युर्यङ्लुकीत्यर्थः । वृतु वर्तने, अस्माद्यङ्लुगन्ताद् वर्वृत् इत्यस्माल्लटस्तिपि ईट्पक्षे अभ्यासस्य क्रमेण रुकं रिकं रीकं चोदाहरति वर्वृतीति, वरिवृतीति, वरीवृतीति इति । इट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधान्न लघूपधगुणः ।

---

'द्विप्रयोगो द्विर्वचनं षाष्ठम्' इत्यभ्युपगमाद्धातोः कित्त्वे अभ्यासस्य कित्त्वेऽपि वनीवञ्चीतीत्यादाविव कित्त्वाभावान्न दोषः । किं च द्वित्वाभावे केवलस्यार्थवत्त्वेऽपि द्वित्वे सति समुदाय एवार्थवानिति हि सर्वसंमतम् । तथा कित्त्वमपि समुदायस्यैवास्तु, न तु प्रत्यवयवमिति नास्त्येव दीर्घे प्रतिबन्धः । जाहीयादिति । 'ई हल्यघोः' इतीत्वम् । लुका लुप्त इति । सर्वविधिभ्यो लुग्विधेर्बलीयस्त्वादकृतव्यूहपरिभाषया च लुकः पूर्वं न शङ्क्यमेवेति भावः । उत्त्वं नेति । फलितार्थकथनमिदम् । 'स्वपिस्यमि–' इत्यादिना विधीयमानं यत्संप्रसारणं तन्नेत्यर्थः । असास्वापीदिति । 'अतो हलादेः–' इति विकल्पे वृद्धिः । रुग्रिकौ च । चकारेण 'रीगृदुपधस्य–'इत्यतो रीगनुकृष्यते । रुक उकार उच्चारणार्थः । ऋतश्च । ऋतोऽनुवर्तमानमङ्गं विशेष्यते । ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । ऋदन्ताद्धातोरिति पाठस्तु फलितार्थकथनपरतया नेयः ।

वरिवृत्तः, वरीवृत्तः, । वर्वृतति, वरिवृतति, वरीवृतति । वर्वर्तामास, वरिवर्तामास, वरीवर्तामास । वर्वर्तिता, वरिवर्तिता वरीवर्तिता । गणनिर्दिष्टत्वाद् 'न वृद्भ्यश्चतुर्भ्यः, (सू० २३४८) इति न । वर्वर्तिष्यति, वरिवर्तिष्यति, वरीवर्तिष्यति । अवर्वृतीत् अवरिवृतीत्, अवरीवृतीत् । अवर्वर्त्, अवरिवर्त् अवरीवर्त् । सिपि 'दश्च' ( सू० २४६८ ) इति रुत्वपक्षे 'रो रि' ( सू० १७३ ) अवर्वाः, अवरिवाः, अवरीवाः । गणनिर्दिष्टत्वादस् न, अवर्वर्तीत्, अवरिवर्तीत्, अवरीवर्तीत् । चर्करीति, चर्कर्ति, चरिकर्ति, चरीकर्ति, चर्कृतः चर्क्रति । चर्करांचकार । चर्करिता । अचर्करीत्, अचर्कः । चर्कृयात् । आशिषि रिस्, चर्क्रियात् । लुङि अचर्कारीत् । 'ॠतश्च' ( सू० २६५३ ) इति तपरत्वान्नेह । कॄ विक्षेपे चाकर्ति । तातर्ति तातीर्तः तातिरति । तातीर्हि । ताताराणि । अतात-

ईडभावेऽपि रुगाद्यागमत्रयमुदाहरति वर्वर्तीत्यादि । इति नेति । इण्निषेधो नेत्यर्थः । लोटि वर्वृतीतु, वर्वर्तु वर्वृत्तात् वर्वृत्ताम् वर्वृततु । वर्वृद्धि । वर्वर्तानि । लङस्तिपि ईटि आह अवर्वृतीदिति । ईडभावे त्वाह अवर्वर्त् इति । हल्ङ्यादिना तिपां लोपः । 'रात्सस्य' इति नियमान्न संयोगान्तलोपः । अवर्वा इति । लङः सिपि अवर्वर्त् स् इति स्थिते जश्त्वे 'दश्च' इति दकारस्य रुत्वे 'रो रि' इति पूर्वरेफस्य लोपे 'ढ्रलोपे–' इति दीर्घे हल्ङ्यादिना सिपो लोपे रेफस्य विसर्गे इति भावः । अङ् नेति । 'पुषादिद्युतादि–' इत्यनेनेति शेषः । 'अस्तिसिच–' इति नित्यमीट् । अथ 'डु कृञ् करणे' इति धातोरुदाहरति चर्करीतीत्यादि । चर्कृयादिति । विधिलिङस्तिङः सार्वधातुकत्वाद् 'अकृत्सार्वधातुकयोः–' इति दीर्घो न । आशिषीति । आशीर्लिङ आर्धधातुकत्वाद् 'रिङ् शयग्लिङ्क्षु' इति रिङिति भावः । लुङि अचर्कारीदिति । सिचि वृद्धिः । ॠतश्च इति तपरत्वान्न हेति । ऋग्रीक शेषः । इति चाकर्तीति ईडभावे रूपम् । न चाभ्यासह्रस्वत्वे 'रीगृत्वतः–' इति रीक् शङ्क्यः, नित्यत्वादुरदत्वस्य प्राप्तेः । चाकीर्तः चाकिरति इत्यादि ङित्त्वाद् गुणाभावे ॠत इत्वं रपरत्वम् । ईटि चाकरीति चाकीर्तः चाकिरति । चाकरांचकार । चाकरिता । चाकर्तु, चाकीर्तात् चाकिरतु । चाकीर्हि । चाकिराणि । लङि अचाकरीत, अचाकः अचाकीर्ताम् अचाकरुः । विधावाशिषि च चाकीर्यात् । यासुटो ङित्त्वान्न गुणः । इत्वं 'हलि च' इति दीर्घः । चाकीर्यास्ताम् । चाकीर्यास्ताम् इत्यादि । लुङि अचाकारीत् अचाकारिष्टाम् इत्यादि । एवं 'तॄ प्लवनतरणयोः' इत्यस्यापि रूपाणि । अद्वैतदीपिकायां तु चोद्यं नावतरीतर्तीति

लोटि वर्वृतीतु ३ । वर्वर्तु ३ वर्वृत्तात् । वर्वृत्ताम् ३ । वर्वृततु ३ । वर्वृद्धि ३ । अङ्नेति । 'पुषादिद्युतादि—' इत्यनेन । चर्करीतीति । डुकृञ् करणे । चर्कृयादिति । सार्वधातुकत्वाद् 'अकृत्सार्व—' इति न दीर्घः । लुङि 'सिचि वृद्धिः—' इति वृद्धिः । अचर्कारीत् ३ । अचर्कारिष्टाम् ३ । अचर्कारिषुः ३ । अचर्कारीः ३ । चाकर्तीति । ईट्पक्षे चाकरीति । लोटि चाकरीतु, चाकर्तु, चाकीर्तात् । चाकीर्ताम् । चाकिरतु । चाकीर्हि । लङि अचाकरीत् । अचाकः । अचाकीर्ताम् ।

रीत्, अतातः अतातीर्तम् अतातरुः । अतातारीत् अतातारिष्टामित्यादि । अर्तेर्यङ्लुकि द्वित्वेऽभ्यासस्योरदत्त्वं रपरत्वम्, 'हलादिः शेषः' (सू० २१७९), रुक्, रिग्रीकोस्तु 'अभ्यासस्यासवर्णे' (सू० २२९०) इति इयङ् अर्रति, अरर्यति । अररीति, अरियरीति । अऋृतः, अरियृतः । झि अत्, यण्, रुको 'रो रि' ( सू० १७३ ) इति लोपः, न च तस्मिन्कर्तव्ये यणः स्थानिवत्त्वम्, पूर्वत्रासिद्धे तन्निषेधात्, आरति अरियृति । लिङि श्तिपा निर्देशाद् 'गुणोऽर्ति–'

---

लेखकप्रमादः । चोद्यं तु नावतातर्तीति पाठः प्रामाणिकः । अर्तेरिति । 'सूचिसूत्रि–' इत्यादिना ऋधातोर्यङ् । तस्य लुक् । व्यपदेशिवत्त्वेन ऋ इत्यस्य आदिभूतादचः परत्वाद् द्वितीयैकाच्त्वाच्च द्वित्वम् । अभ्यासऋवर्णस्य अत्त्वे रपरत्वे अर् ऋ इति स्थिते हलादिशेषेण रेफस्य निवृत्तिः । अ ऋ इति स्थिते अभ्यासस्य रुक् । लटस्तिपि ईडभावे अर् ऋ ति इति स्थिते, तिपि ऋकारस्य गुणे अकारे रपरे सति, अरर्तीति रूपमित्यर्थः । रिग्रीकोस्त्विति । यङ्लुकि द्वित्वे उरदत्त्वे हलादिशेषे अ ऋ इति स्थिते रिकि रीकि च कृते तिपि उत्तरखण्डस्य ऋकारस्य गुणे अकारे रपरे कृते अरि अर्ति अरी अर्तीति स्थिते अभ्यासे रेफादिवर्णस्य यणं बाधित्वा 'अभ्यासस्यासवर्णे' इति इयङि अरियर्तीति रिग्रीकोस्तुल्यं रूपमित्यर्थः । अथ लटस्तिपि इट्पक्षे आह अररीति, अरियरीति । अऋृत इति । रुकि तसि रूपम् । ङित्त्वान्न गुणः । अरियृत इति । द्वित्वे उरदत्त्वे हलादिशेषे अ ऋ तस् इति स्थिते रिकि रीकि च कृते इयङादेशे रूपम् । झि अदिति । झि इत्यविभक्तिकनिर्देश उदाहरणसूचनार्थः । 'अदभ्यस्तात्' इति झेः अदादेश इति यावत् । यणिति । रुकि कृते अर् ऋ अति इति स्थिते ऋकारस्य यण् रेफ इत्यर्थः । तथा च अर् र् अतीति स्थिते आह रुको रो रीति लोप इति । ननु रेफस्य लोपे कर्तव्ये यणादेशसंपन्नस्य रेफस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वाद् ऋकारपरकत्वाद्रेफपरकत्वाभावात् कथं पूर्वरेफस्य लोप इत्यत आह पूर्वत्रासिद्धे तन्निषेधादिति । पूर्वत्रासिद्धीयकार्ये कर्तव्ये स्थानिवत्त्वनिषेधादित्यर्थः । आरतीति । अर् र् अति इति स्थिते पूर्वरेफस्य लोपे सति 'ढ्रलोपे–' इति दीर्घः । न च यणः स्थानिवत्त्वं शङ्क्यम्, दीर्घविधौ तन्निषेधादिति भावः । अरियृतीति । द्वित्वे उरदत्त्वे हलादिशेषे रिकि रीकि च कृते, परत्वादभ्यासस्य इयङि, ततो यणि रिग्रीकोस्तुल्यमेव रूपमित्यर्थः । अर्र्षि, अरियर्षि अररीषि, अरियरीषि । अऋृथः अरियृथः । अर्र्मि, अरियर्मि अररीमि, अरियरीमि । अऋृवः, अरियृवः ।

---

अचाकरुः । लिङि चाकीर्यात् । आशिषि तु चाकीर्यास्ताम् । लुङि अचाकारीत् । अचाकारिष्टाम् । एवं तातरीतीत्यादि । अर्तेरिति । भौवादिकजौहोत्यादिकयोर्ग्रहणम् । उरदत्त्वमिति । केचित्तु 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणमाहुः । फले तु न विशेषः रिग्रीकोस्त्विति । एवं च अरियर्तीति रूपमुभयोस्तुल्यमिति भावः । आरतीति । 'रो रि' इति लोपे 'ढ्रलोपे–' इति दीर्घः । 'दीर्घोऽकितः' इति दीर्घस्तु न भवति कित्त्वात् । अरियृतीति । परत्वात्पूर्वमियङ् । ततो यण् ।

( सू० २३८० ) इति गुणो न । रिङ्, रलोपः दीर्घः, अरियात्, अरियृयात् । गृहू ग्रहणे, जर्गृहीति, जर्गर्ढि जर्गृढः जर्गृहति । अजर्घट् । गृह्णाते-

---

अररांचकार, अरियरांचकार अररिता, अरियरिता । अररिष्यति, अरियरिष्यति । अरर्तु, अरियर्तु, अररीतु, अरियरीतु अर्ऋतात् अरियृतात् । अर्ऋताम्, अरियृताम् । आरतु, अरियृतु । अर्ऋहि, अरियृहि । अरराणि, अरियराणि । अरराव, अरियराव । लङि आरः, आरियः आररीत, आरियरीत् । आर्ऋताम्, आरियृताम् आररुः, आरियरुः । आरः, आरियः आररीः, आरियरीः । आर्ऋतम्, आरियृतम् । आर्ऋत, आरियृत । आररम्, आरियरम् । आर्ऋव, आरियृव । विधिलिङि अर्ऋयात्, अरियृयात् । अर्ऋयाताम् अरियृयाताम् । अर्ऋयुः अरियृयुः इत्यादि । आशीर्लिङि विशेषमाह लिङि श्तिपेति । एकि अर् ऋ यात् इति स्थिते 'अर्ति' इति श्तिपा निर्देशाद् 'गुणोऽर्ति–' इति गुणो नेत्यर्थः । रिङिति । ऋकारस्येति शेषः । तथा च अर् रि यात् इति स्थिते आह दीर्घ इति । 'रो रि' इति लोपे 'ढ्रलोपे–' इति दीर्घ इत्यर्थः । तथा च परिनिष्ठितमाह आरियदिति । रिग्रीकोस्त्वाह अरियियादिति । अरि ऋ यात्, अरी ऋ यात् इति स्थिते इवर्णस्य इयङ् ऋकारस्य रिङ । 'लोपो व्योः–' इलि यलोपस्तु न, वहिरङ्गत्वेन रिङोऽसिद्धत्वाद् 'अचः परस्मिन्–' इति स्थानिवत्त्वाच्च । 'न पदान्त–' इति निषेधस्तु न शङ्क्यः, 'स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवत्' इत्युक्तेरित्यलम् । लुङि् आरारीत, आरियारीत् । लृङि आररिष्यत्, आरियरिष्यत् । गृहू ग्रहणे इति । ऋदुपधोऽयम् । यङ्लुकि द्वित्वे उरदत्वे हलादिशेषे अभ्यासस्य रुग्रिग्रीकः तदाह जर्गृहीतीत्यादि । इट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति लघूपधगुणनिषेधः । इडभावे त्वाह जर्गर्ढि इत्यादि । जर्गृह् ति इति स्थिते लघूपधगुणे रपरत्वे ढत्वधत्वष्टुत्वढलोपाः । 'यणो मयः–' इति शिष्टस्य ढस्य द्वित्वविकल्पः । एवं जरिगर्ढि, जरीगर्ढि । जर्गृढ इति । रुक्, ढत्वधत्वष्टुत्वढलोपाः । ङित्वान्न गुणः । एवं जरिगृढः जरीगृढः । जर्गृहतीति ।

---

रिग्रीकोस्तुल्यमिदम् । मध्यमोत्तमयोस्तु । अरर्षि । अरियर्षि । अररीषि । अरियरीषि । अर्ऋथः । अरियृथः । अरर्मि । अरियर्मि । अररीमि । अरियरीमि । अर्ऋवः । अरियृवः लिटि अररांचकार । रिग्रीकोस्तु । अरियरांचकार । लुटि अररिता । रिग्रीकोस्तु अरियरिता । अररिष्यति । अरियरिष्यति । अरर्तु । अरियर्तु । अर्ऋतात् । अरियृतात् । अर्ऋताम् । अरियृताम् आरतु । अरियृतु । अर्ऋहि । अरियृहि । अरराणि । अरियराणि । अरराव । अरियराव । लङि आरः आरियः । आररीत् । आरियरीत् । आर्ऋताम् । आरियृताम् । आररुः आरियरुः । आरः । आरियः । आररीः । आरियरीः । आर्ऋतम् । आरियृतम् । आर्ऋत । आरियृत । आररम् । आरियरम् । आर्ऋव । आरियृव । विधिलिङि अर्ऋयात् । अरियृयात् । अर्ऋयाताम् । अरियृयाताम् । अर्ऋयुः । लिङीति । आशीर्लिङीत्यर्थः । अरियियादिति । रिग्रीकोः–अरियृ इति स्थिते लिङि रिङ् । बहिरङ्गत्वेन रिङोऽसिद्धत्वा-

स्तु जाग्रहीति, जाग्रीढि। तसादौ ङिन्निमित्तं संप्रसारणम्, तस्य बहिरङ्गत्वेना-

अदभ्यस्तात्' इत्यत्। जर्गृहीपि, जरिगृहीपि, जरीगृहीपि। 'नाभ्यस्तस्याचि पिति—' इति न लघूपधगुणः। जर्घर्क्षि, जरिघर्क्षि जरीघर्क्षि। जर्गृढः, जरिगृढः, जरीगृढः। जर्गृढ, जरिगृढ, जरीगृढ। जर्गृहीमि, जरिगृहीमि, जरीगृहीमि, जर्गर्ह्मि, जरिगर्ह्मि, जरीगर्ह्मि। जर्गृह्वः, जरिगृह्वः, जरीगृह्वः जर्गृह्मः जरिगृह्मः, जरीगृह्मः। जर्गर्हांचकार, जरिगर्हांचकार, जरीगर्हांचकार। जर्गर्हिता, जरिगर्हिता, जरीगर्हिता। जर्गर्हिष्यति, जरिगर्हिष्यति, जरीगर्हिष्यति, जर्गृहीतु जरिगृहीतु, जरीगृहीतु, जर्गर्ढु, जरिगर्ढु, जरीगर्ढु। जर्गृढात्, जरिगृढात्, जरीगृढात्। जर्गृढाम्, जरिगृढाम्, जरीगृढाम्। जर्गृहतु, जरिगृहतु, जरीगृहतु। जर्गृढि, जरिगृढि, जरीगृढि। जर्गृहाणि, जरिगृहाणि, जरीगृहाणि। लङि अजर्गृहीत्, अजरिगृहीत् अजरीगृहीत्। ईडभावे तु अजर्गर्ह् त् इति स्थिते हल्ङ्यादिना तलोपे हस्य ढत्वे गस्य भष घकारः। अजर्घर्ट्, अजरिघर्ट्। एकाज्ग्रहणे सत्यपीह यङ्लुकि भष्, 'गुणो यङ्लुकोः' इत्यनेन 'श्तिपा शपा—' इति निषेधस्यानित्यत्वज्ञापनादित्याहुः अजर्गृढाम् ३ अजर्गृहुः ३ अजर्गृहीः ३ अजर्घर्ट् ३ अजर्गृढम् ३ अजर्गृढ ३ अजर्गृहम् ३ अजर्गृह्व ३ अजर्गृह्म ३। जर्गृह्यात् ३ लुङि 'अस्तिसिचः—' इति नित्यमीट्। अजर्गर्हीत्। अजर्गर्हिष्यत्। गृह्णातेस्त्वयति। 'ग्रह उपदाने' इत्यस्मादित्यर्थः। अदुपधोऽयम्। इटि आह जाग्रहीतीति। यङो लुका लुप्तत्वात् तिपः पित्त्वाच्च 'ग्रहिज्या—' इति संप्रसारणं नेति भावः। ईडभावे त्वाह जाग्राढीति।

---

य्लोपो न भवति 'अचः परस्मिन्—' इति स्थानिवत्त्वाच्च। न च न पदान्त—इति निषेधः शङ्क्यः, स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवदित्युक्तत्वात्। न च अकृतव्यूहपरिभाषाया इयङ् नेति शङ्क्यम्, रिङः स्थानिवत्त्वेन निमित्तविनाशाभावाद् उक्तपरिभाषाया अप्रवृत्तेः। अतएव अरियृतीत्यपि सिद्धम्। तत्रापि यणः स्थानिवत्त्वेन निमित्तविनाशाभावात् तत्परिभाषाया अप्रवृत्तेरियङो निर्बाधत्वात्। क्वचित्तु मूलपुस्तकेषु परत्वान्नित्यत्वाच्च पूर्वं रिङि कृते इयङोऽप्रवृत्तिरित्याशयेन अरिरियात् अरीरियादिति पठ्यते; तदापाततः। अरियृतीति रूपासिद्धया पूर्वोत्तरग्रन्थयोर्विरोधापत्तेः लुङि आरारीत्। आरियारीत्। लृङि आररिष्यत्। आरियरिष्यत्। जर्गृहीतीति। 'नाभ्यस्तस्याचि—' इति गुणनिषेधः। मध्यमोत्तमयोस्तु जर्गृहीपि ३। जर्घर्क्षि ३। जर्गृढः ३। जर्गृहीमि। जर्गर्ह्मि ३ जर्गृह्वः ३। जर्गृह्मः ३। जर्गर्हांचकार जर्गर्हिता। जरीगर्हिता। इहानुबन्धनिर्देशादूदिल्लक्षण इड्विकल्पो न। जर्गृहीतु। जर्गर्ढु। जर्गृढम्। जर्गृहतु ३। जर्गृढि ३। मिपि जर्गृहाणि ३। लङि अजर्गृहीत् ३ ईडभावे 'एकाच—इति भष्भावः। अजर्घर्ट् ३। यद्यपि इह यत्रैकाज्ग्रहणं चेति निषेधाद्भष्भावो दुर्लभस्तथापि 'गुणो यङ्लुकोः' इत्यनेन 'श्तिपा शपा—इत्यादिनिषेधस्यानित्यत्वज्ञापनाद् भष्भावोऽत्र प्रवर्तते इत्याहुः। अजर्गृढाम्। अजर्गृहुः ३। अजर्गृहीः। अजर्घर्ट् ३ अजर्घर्ड् ३ अजर्गृहम् ३। अजर्गृह्व ६। जर्गृह्यात् ३। अजर्गर्हीत्। अजर्ग-

सिद्धत्वान्न रुगादयः, जागृढः जागृहति । जाग्रहीपि, जाग्रक्षि । लुटि जाग्रहिता । 'ग्रहोऽलिटि—' ( सू० २५६२ ) इति दीर्घस्तु न, तत्र एकाच इत्यनुवृत्तेः। माधवस्तु दीर्घमाह । तद्भाष्यविरुद्धम् । जर्गृहीति, जर्गर्ढि जर्गृढः जर्गृहति ।

---

जाग्रह् ति इति स्थिते ढत्वधत्वष्टुत्वढलोपदीर्घाः । जाग्रह् तस् इति स्थिते आह तसादाविति । कृते संप्रसारणे ऋदुपधत्वाद् रुगादीनाशङ्क्याह तस्येति । संप्रसारणस्येर्थः । जागृढ इति । ढत्वधत्वष्टुत्वढलोपाः । 'ढ्लोपे —' इति दीर्घस्तु न ऋकारस्याणत्वात् । जागृहति । सिपः पित्त्वान्न संप्रसारणमिति मत्वाह जाग्रहीपि जाग्रक्षीति । ईडभावे हस्य ढः, सस्य षः, भष्भावः । जागृढः जागृढ । जाग्रहीमि, जाग्रह्मि जागृह्वः जागृह्मः । इत्यनुवृत्तेरिति । 'एकाचो द्वे —' इति सूत्रे हरदत्तेन तथोक्तत्वादिति भावः । माधवस्त्विति । एकाज्ग्रहणं नानुवर्तते इति तदाशयः । भाष्यविरुद्धमिति । 'एकाचो द्वे प्रथमस्य' इति सूत्रभाष्ये 'ग्रह उपादाने' इत्यस्माद्यङि संप्रसारणे अभ्यासस्य रीकि यङन्ताद् जरीगृहिता जरीगृहितम्, जरीगृहितव्यमित्यत्र इटो दीर्घाभावं सिद्धवत्कृत्य तत्र दीर्घमाशङ्क्य ग्रहोऽङ्गात्परस्य इटो दीर्घो विधीयते। जरीगृह् इत्यङ्गम्; तच्च न ग्रहधातुरिति निरूप्याङ्गविशेषणसामर्थ्यादेव 'प्रकृतिग्रहणे यङ्लुगन्तस्याऽपि ग्रहणम्' इति नात्र प्रवर्तत इति समाहितम् । यङन्ते उक्तो न्यायो यङ्लुगन्तेऽपि जाग्रहितेत्यादौ समान इत्यादि प्रौढमनोरमायां ज्ञेयम् । न च हरदत्तमत एकाज्ग्रहणानुवृत्त्यैवात्र दीर्घनिवारणे सति भाष्योक्तमिदं समाधानं नादरणीयमिति वाच्यम्- उपायस्य उपायान्तरादूषकत्वादित्यलम् । जाग्रहिष्यति । जाग्रहीतु, जाग्राढु, जागृढात् जागृढाम् जागृहतु । हौ जागृढि । जाग्रहाणि । लङि अजाग्रहीत्, अजाग्रट् अजागृढाम् । अजागृढम् अजागृढ । अजाग्रहम् अजागृह्व अजागृह्म ।

---

र्हिष्टाम् ३ । अजर्गर्हिष्यत् । जाग्रहीतीति । ग्रह उपादाने । यङो लुका लुप्तत्वात्तन्निमित्तं 'ग्रहिज्या-' इति संप्रसारणमिह नेति भावः । जागृढ इति । 'दीर्घोऽकितः' । तत्रैकाच इति । 'ग्रहो लिटि-' इत्यत्रैकाच इति 'एकाचो द्वे-' इत्यस्मिन् सूत्रे हरदत्तेनोक्तत्वादिति भावः । माधवस्त्विति । अयं भावः-'ग्रहोऽलिटि-' इति सूत्रे यङ्लोपे चोक्तमिति वार्तिकतदीयभाष्यकैयटादिपर्यालोचनया जरीगृहीतेत्यादिषु ग्रहेर्यङन्तात्तृचस्तासेर्वा य इट् तस्य दीर्घाभावे युक्तिद्वयं लभ्यते । पूर्वस्मादपि विधौ स्थानिवद्भाव इत्येके ग्रहेर्विहितो य इट् तस्य दीर्घ इत्यपरे । तत्राद्यः पक्षो भाष्यवार्तिककाररीत्या । ताभ्यां हि 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यवष्टभ्य दीर्घादिग्रहणस्य प्रत्याख्यानात् । त्रैपादिकदीर्घातिरिक्तदीर्घेऽस्मिन् कर्तव्ये स्थानिवद्भावस्य तन्मते सुवचत्वात् । द्वितीयस्तु सूत्ररीत्या, तेन तु सामान्यतो दीर्घविधौ स्थानिवद्भावस्य निषिद्धत्वात्तन्मते स्थानिवद्भावस्य वक्तुमशक्यत्वात् । एवं च यङ्लुकि दीर्घप्रवृत्तौ न किंचिद् बाधकम् । यङ्लुकोऽनैमित्तिकत्वाद् अजादेशत्वाच्च । स्थानिवद्भावायोगात् । 'द्विःप्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्ताद्यङ्लुगन्ताद् गृह्णातेर्विहितस्य ग्रहेर्विहितत्वानपायाच्च । तद्भाष्यादिविरुद्धमिति । आदिशब्देन कैयटहरदत्तौ

जर्गृधीषि, जर्घर्सि। अजर्गृधीत्। ईडभावे गुणः, हल्ङ्यादिलोपः, भष्भावः, जश्त्वचर्त्वे, अजर्घर्त्। अजर्गृद्धाम्। सिपि 'दश्च' ( सू० २४६८ ) इति पक्षे रुत्वम्। अजर्घाः। अजर्गर्धीत् अजर्गर्धिष्टाम्। पाप्रच्छीति, पाप्रष्टि। तसादौ 'ग्रहिज्या—'

---

जागृह्यात्। लुङि अजाग्रहीत्। 'ह्म्यन्त—' इति न वृद्धिः। 'अस्तिसिचः—' इति नित्यमीट् अजाग्रहिष्यत्। 'गृधु अभिकाङ्क्षायाम्' अस्माद्यङ्लुगन्ताल्लटस्तिपि ईटि आह जर्गृधीतीति 'नाभ्यस्तस्य—' इति न लघूपधगुणः। ईडभावे आह जर्गर्द्धीति। जर्गृध् इति स्थिते 'झषस्तथोः—' इति तकारस्य धः। लघूपधगुणो रपरत्वम्। जर्गृद्ध इति। तसादौ ङित्वान्न गुणः। 'झषस्तथोः—' इति तस्य धः। जर्घर्त्सीति। जर्गृध् सि इति स्थिते गस्य भष् घः, गुणः, रपरत्वम्, धस्य चर्त्वम्। जर्गर्धिम ३, जर्गृधीमि ३। जर्गृध्वः ३। जर्गर्धांचकार ३। जर्गर्धिता ३। जर्गर्धिष्यति ३। जर्गृधीतु ३ जर्गर्द्धु ३ जर्गृद्धात् ३। हौ जर्गृद्धि ३। जर्गृधानि ३। लङि तिपि ईट् अजर्गृधीत् ३। इडभावे इति। अजर्गृध् त् इति पित्त्वादङित्त्वाद् गुणे रपरत्वे हल्ङ्यादिना तकारलोपे पदान्तत्वाद् गस्य भष् घकारः धस्य जश्त्वेन दकारः, तस्य 'वावसाने' इति चर्त्वविकल्प इत्यर्थः। अजर्घर्त् इति। 'रात्सस्य' इति नियमान्न संयोगान्तलोपः। अजर्गृद्धाम् अजर्गृधुः। सिपि ईडभावपक्षे अजर्गृध् स् इति स्थिते, गुणे, रपरत्वे, हल्ङ्यादिलोपे भष्भावे, धस्य जश्त्वे, तस्य चर्त्वविकल्पे पूर्ववदेव रूपं सिद्धवत्कृत्याह सिपि दश्चेति पक्षे रुत्वमिति। तथा च अजर्घर् र् इति स्थिते 'रो रि' इति लोपे 'ढ्रलोपे—' इति दीर्घे, शिष्टरेफस्य विसर्गे, अजर्घाः इति रूपमित्यर्थः। अजर्गृद्धम् अजर्गृद्ध। अजर्गृधम् अजर्गृध्व अजर्गृध्म। लुङ्याह अजर्गर्धीदिति। 'अस्तिसिचः—' इति नित्यमीट्। पाप्रच्छीतीति। 'प्रच्छ ज्ञीप्सा-

---

गृह्यते। विरोधश्चात्र मनोरमायामुपपादितः। तथा हि 'एकाचो द्वे प्रथमस्य' इति सूत्रे ग्रहेरङ्गादिति भाष्यमुपादाय कैयट आह 'तृचो हि जरीगृहीत्यङ्गं न तु ग्रहिः, विशेषण-सामर्थ्याद्धि यथाश्रुतरूपाश्रयणम्' इति। यद्यपि तत्र यङन्तं प्रक्रम्येदमुक्तम्, तथापि युक्ति-साम्याद्यङ्लुगन्तेऽपि न दीर्घ इति लक्ष्यते। एकाज्ग्रहणमनुवर्तयन् हरदत्तोऽप्यत्रानुकूलः। न ह्यस्मिन्पक्षे यङ्लुकि दीर्घस्य प्रसक्तिरस्ति। एवं च पूर्वस्मादपि विधौ स्थानिवद्भाव इति ग्रहेर्विहितस्य य इट् तस्य दीर्घ इति च प्रागुक्तसमाधानमुपायस्योपायान्तराद्रूपकत्वादिति न्यायेन यङन्तांशे उपायान्तरपरतया नेयम्। न च ग्रहीति यथाश्रुतरूपाश्रयणे गृहीत इत्यादा-विटो दीर्घो न स्यादिति वाच्यम्, अङ्गसंज्ञाप्रवृत्तिवेलायां यथाश्रुतरूपस्यैव सत्त्वात्। ग्राहित-मित्यादौ तु नैवम्। एकाच इति समाधानं तु णिज्भिन्नविषयकमेव, 'निष्ठायां सेटि' इति णिलोपे ग्राहितमित्यादावेकाच्त्वानपायात्। तदित्थम्—यङ्लुगन्ताण्णिजन्ताच्च यङन्ताच्च ग्रहेरिटः। द्विधा त्रिधा चतुर्धा च दीर्घप्राप्तिः समाहिता। अस्यार्थः—यङ्लुगन्ताद्दीर्घे प्राप्ते समाधानद्वयम्। ग्रहेरङ्गादिति व्याख्यानमेकाच इत्यनुवृत्तिश्चेति। णिजन्तात्तु ग्रहिस्वरूपाभावः, विहितविशेषणं स्थानिवद्भावश्चेति समाधानत्रयम्। यङन्तात्समाधानचतुष्टयम्, 'एकाचः—' इत्यनुवृत्तिः पूर्वोक्तसमाधानत्रयं चेति अजर्घा इति।

( सू० २४१२ ) इति संप्रसारणं न भवति, श्तिपा निर्देशात्। 'छ्वोः शूड्—' ( सू० २५६१ ) इति शः। 'व्रश्च—' ( सू० २९४ ) इति षः। पाप्रष्टः पाप्रच्छति। पाप्रश्मि पाप्रच्छ्वः पाप्रश्मः। 'यकारवकारान्तानां तूठ् भाविनां यङ्लुक् नास्ति' इति 'च्छ्वोः–' ( सू० २५६१ ) इति सूत्रे भाष्ये ध्वनितम्। कैयटेन स्पष्टी-

---

याम्' अस्माद्यङ्लुगन्ताल्लटस्तिपि ईटि रूपम्। ईडभावे आह पाप्रष्टीति। 'व्रश्च'–इति छस्य षः। तकारस्य ष्टुत्वेन टः। 'च्छ्वोः—' इति छस्य शकारस्तु नात्र भवति, तस्य अनुनासिकादौ प्रत्यये क्वौ झलादौ किति ङिति च विहितत्वात्। ननु तिपः पित्त्वेन ङित्त्वाभावाद् 'ग्रहिज्या–'इति संप्रसारणाभावेऽपि तसो ङित्त्वात् संप्रसारणं दुर्वारमित्यत आह तसादाविति। श्तिपेति। 'ग्रहिज्या—' इति सूत्रे पृच्छतीति श्तिपा निर्देशादित्यर्थः। पाप्रच्छतीति। 'अदभ्यस्तात्' इत्यत्। पाप्रच्छीषि। सिपि ईडभावे तु 'च्छ्वोः–' इति छस्य न शः, सिपो झलादित्वेऽपि ङित्त्वाभावात्। किंतु 'व्रश्च–' इति ष एव। 'षढोः–' इति षस्य कः सस्य षत्वम्। पाप्रक्षि पाप्रष्ठः पाप्रष्ठ। पाप्रश्मीति। अनुनासिकप्रत्ययपरकत्वात् छस्य 'च्छ्वोः—' इति श इति भावः। पाप्रच्छ्व इति। अत्र 'च्छ्वोः—' इति न शः; वसो झलादित्वाभावात्। पाप्रश्म इति। अनुनासिकादिप्रत्ययपरकत्वात् छस्य शः। पाप्रच्छांचकार। पाप्रच्छिता। पाप्रच्छिष्यति। पाप्रच्छीतु, पाप्रष्टु, पाप्रष्टात् पाप्रष्टाम् पाप्रच्छतु। हेर्धिः; अपित्त्वेन ङित्त्वाद् झलादित्वाच्च छस्य शः; तस्य 'व्रश्च—' इति षः ष्टुत्वेन धस्य ढः, षस्य जत्वेन डः, पाप्रड्ढि। पाप्रच्छानि। लङितिपि ईटि अपाप्रच्छीत्। ईडभावे तु अपाप्रच्छ् त् इति स्थिते हल्ङ्यादिना तलोपे छस्यः षः, तस्य जश्त्वचर्त्वे। अपाप्रट् अपाप्रष्टाम् अपाप्रच्छुः। अपाप्रच्छीः; अपाप्रट् अपाप्रष्टम् अपाप्रष्ट। अपाप्रच्छम् अपाप्रच्छ्व अपाप्रश्म। लिङि पाप्रच्छ्यात्। लुङि अपाप्रच्छीत्। 'अस्तिसिच–' इति नित्यमीट् अपाप्रच्छिष्यत्। ऊठ्भाविनामिति। 'भू प्राप्तौ' चुरादिराधृषीयः। तस्माद् 'आवश्यकाधमर्ण्ययोर्णिनिः' इति भविष्यदर्थे णिनिः। ऊठं प्राप्स्यतामित्यर्थः। ऊठ्विषयाणामिति यावत्। ध्वनितमिति। सूचितमित्यर्थः। स्पष्टीकृतमिति। तथा हि 'च्छ्वोः–' इति सूत्रे क्ङिद्ग्रहणानुवृत्तौ कांश्चिद् दोषानुद्भाव्य परिहृत्य क्ङिद्ग्रहणानुवृत्तिं स्वीकृत्योक्तं भाष्ये एतावानेव विशेषः। अनुवर्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यमिति। अत्र कैयटः–प्रष्टा पृष्टमित्यादौ 'च्छ्वोः—' इति छस्य शत्वे कृते तस्य 'व्रश्च–' इति षत्वे ष्टुत्वमिति स्थितिः। तत्र क्ङितीत्यनुवृत्तौ छस्य षत्वं न स्यात्। अतः छस्य षत्वं वक्तव्यमित्यर्थः। न च क्ङिद्ग्रहणानुवृत्तावत्र शत्वाभावेऽपि

---

गृधु अभिकाङ्क्षायाम्। इह अपदान्तस्यापि रेफस्य 'रो रि' इति लोपो भवत्येव, तत्र मण्डूकप्लुत्या पदस्येत्यननुवर्तनात्। पाप्रष्टीति। प्रच्छ ज्ञीप्सायाम्। 'व्रश्च–' इति षः। पाप्रच्छिता। पाप्रच्छिष्यति। पाप्रष्टु। पाप्रष्टात्। पाप्रष्टाम्। पाप्रच्छतु। पाप्रड्ढि। पाप्रच्छानि। अपाप्रच्छीत्। अपाप्रट्। अपाप्रष्टाम्। अपाप्रच्छुः। अपाप्रच्छीः, अपाप्रट्। अपाप्रष्टम्। अपाप्रष्ट। अपप्रच्छम्। अप्राप्रच्छ्व। अपाप्रश्म। भाष्ये ध्वनितमिति। 'च्छ्वोः शूड्–' इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते न

तम्, । इदं च 'च्छ्वोः—' ( सू० २५६१ ) इति यत्रोठ् तद्विषयकम् । 'ज्वर-त्वर—' ( सू०२६५४ ) इत्यूठ्भाविनोः स्त्रिविमव्योस्तु यङ्लुगस्त्येवेति न्याय्यम् । माधवादिसंमतं च । मव्य बन्धने, अयं यान्त ऊठ्भावी । 'तेवृ देवृ देवने' इत्यादयो वान्ताः । हय गतौ जाहयीति, जाहति जाहतः जाहयति । जाह-षीपि, जाहसि । वलि लोपे यलादौ दीर्घः, जाहामि जाहावः जाहामः ।

---

दोषः, व्रश्चादिना छस्य इष्टसिद्धेरिति वाच्यम्, 'च्छ्वोः—' इत्यत्र 'छस्य षत्वं वक्तव्यम्' इत्यनेनैव प्रष्टेत्यादिसिद्धेः व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमित्याशयात् । न च प्रडिति क्विब-न्तात् सोर्लोपे षत्वार्थं व्रश्चादिसूत्रे छग्रहणमिति वाच्यम्, तत्रापि क्विब्निमित्तशादेशस्य दुर्निवा-रत्वात् । विच् तु प्रच्छधातोरनभिधानान्नास्ति । एवं चात्र भाष्ये 'ऊठ्भाविभ्यो यङ्लुङ् नास्ति' इत्युक्तप्रायम् । अन्यथा 'च्छ्वोः—' इत्यत्र किङ्द्ग्रहणानुवृत्तौ दिवेर्यङ्लुकि दिवादौ ईडभावे लघूपधगुणे 'लोपो व्योः—' इति वलोपे देदेति देदेपीत्याद्यूठः अभावे रूपम् । तदन-नुवृत्तौ तु वस्य ऊठि देद्योति देद्योपि इत्यादि रूपमिति विशेषस्य सत्त्वादेतावानेवेत्येवकारो विरुध्येत । अत ऊठ्भाविनां यकारवकारान्तानां यङ्लुङ् नास्तीति विज्ञायते इत्यलम् । इदं चेति । 'च्छ्वोः—' इति सूत्रेण यत्र ऊठ् प्रवर्तते तद्विषयकमेव इदम् उक्तं ज्ञापनमित्यर्थः । स्त्रिविमव्योस्त्विति । स्त्रिवु गतिशोषणयोः, मव्य बन्धने इत्यनयोरित्यर्थः । न्याय्यमिति । उक्तज्ञापनस्य 'च्छ्वोः—' इति सूत्रस्यभाष्यमूलकत्वादिति भावः । ननु ज्ञापनस्य सामान्या-पेक्षत्वं कुतो नाश्रीयते इत्यत आह माधवादिसंमतं चेति । उक्तविशेषवत्त्वमिति शेषः । ऊठ्भावीति । अतो नास्य यङ्लुगिति भावः । वान्ता इति । ऊठ्भाविन इति शेषः । तेषामपि यङ्लुगिति भावः । ऊठ्भाविनामिति विशेषणस्य व्यावर्त्यमाह हय गताविति । अस्य यान्तत्वेऽपि ऊठ्विषयत्वाभावादस्त्येव यङ्लुगिति भावः । जाहतीति । तिप ईडभावे 'लोपो व्योः—' इति यलोपः । मिपि ईडभावे जाहय् मि इति स्थिते आह वलि लोपे इति । ईट जाहयीमि जाहयांचकार । जाहयिता । जाहयिष्यति । लोटि जाहयीतु जाहतात् जाहताम् जाहयतु । जाहहि । जाहयानि जाहयाव । लङि अजाहयीत् अजाहत् अजाहताम् अजाहयुः । अजाहयीः अजाहः अजाहतम् अजाहत । अजाहयम् अजाहाव अजाहाम । जाहय्यात् । लुङि 'ह्म्यन्त—' इति न वृद्धिः । 'अस्तिसिचः—' इति नित्यमीट् । अजाहयीत् अजाहयिष्टाम् । अजाहयिष्यत् ।

---

त्रेति विकल्प्य कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्—एतावानेव विशेषः—अनुवर्तमाने किद्ग्रहणे 'च्छः षत्वं वक्तव्यम्' इति, अननुवर्तमाने त्वनेन छः शत्वे कृते शान्त-त्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यमिति भावः । एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुग् नास्तीत्युक्तप्रायम् । अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति देदेपि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात् । तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योपीत्यादिरूपविशेषलाभात् । ततश्चैतावानेवेत्येवकारो विरुध्येत । स्त्रिविमव्योस्त्विति । स्त्रिवु गतिशोषणयोः । मव बन्धने । जाहामीति । ईट्पक्षे जाहयीमि । लोटि जाहयीतु । जाहतु ।

हर्य गतिकान्त्योः, जाहर्यीति, जाहर्ति जाहर्तः जाहर्यति । लोटि जाहर्हि । अजाहः अजाहर्ताम् अजाहर्युः । मव बन्धने । **२५५४ ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च** । ( ६-४-२० ) ज्वरादीनामुपधावकारयोरूठ् स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र क्ङिति इति नानुवर्तते । अवतेस्तुनि ओतुरिति दर्शनात् । अनुनासिकग्रहणं चानुवर्तते, अवतेर्मन्प्रत्यये तस्य टिलोपे ओम् इति दर्शनात् । ईडभावे ऊठि पिति गुणः । मामोति, मामवीति

---

जाह्र्ीति । तिपि जाहर्य् ति इति स्थिते ईडभावे यलोपः । जाहर्हीति । हौ यलोपः । लङस्तिपि अजाहर्य् त् इति स्थिते यलोपः । हल्ङ्यादिना यकारलोपः । रेफस्य विसर्ग इति । सिप्यप्येवं रूपम् । **ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च** । ज्वर, त्वर, स्त्रिवि, अवि, मव् एषां द्वन्द्वः । 'च्छ्वोः शूठ्–' इत्यतो वकारग्रहणम् ऊठ्ग्रहणम् अनुनासिके इति चानुवर्तते । छस्य श इति नानुवर्तते, ज्वरादिषु छस्य अभावेन असंभवात् । 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यतः क्विझलोरिति चानुवर्तते । चकारो वकारसमुच्चयार्थः, तदाह **ज्वरादीनामिति । अवतेस्तुनीति** । अवधातोरौणादिके तुन्प्रत्यये कृते, अकारवकारयोरूठि; तस्य गुणे; ओतुरिति दृश्यते । क्ङितीत्यनुवृत्तौ तु तन्न स्यादिति भावः । **ओमिति** । 'अवतेष्टिलोपश्च' इत्यौणादिकसूत्रम् । 'अव रक्षणे' इति धातोर्मन्प्रत्ययः स्यात् प्रत्ययस्य टेर्लोपश्चेति तदर्थः । तथा च अव् म् इति स्थिते उपधाभूतस्य अकारस्य वकारस्य च ऊठि तस्य गुणे ओमिति दृश्यते । 'ज्वरत्वर–' इत्यत्र अनुनासिकग्रहणानुवृत्तौ तु मनि परे अवतेरूठ् न स्यात्, क्विझलोरेव तद्विधिलाभादिति भावः । **ऊठि पितीति** । मवधातोर्यङ्लुक् । मामव् ति इति स्थिते ईडभावपक्षे अकारवकारयोरेकस्मिन् ऊठि तिपः पित्त्वेन ङित्त्वाभावाकारस्य गुणे मामोतीति रूपमित्यर्थः । उपधाया वकारस्य च प्रत्येकमूठ् इति पक्षे सवर्णदीर्घः पक्षद्वयमपि 'एकः पूर्वपरयोः' इत्यत्र भाष्ये स्पष्टम् । ईट्पक्षे आह **मामवीतीति** । अत्र ऊठ् न, क्वौ झलादौ अनुनासिकादौ च

---

जाहृतात् । जाहृताम् । जाहृयतु । जाहृहि, जाहृतात् । जाहृयानि । जाहृयाव । जाहृयाम । लङि । अजाहृयीत्, अजाहृत् । अजाहृताम् । अजाहृयुः । अजाहृयीः, अजाहः । अजाहृतम् । अजाहृत । अजाहृयम् । अजाहृाव अजाहृाम । जाहृयात् । 'ह्म्यन्तक्षण–' इति वृद्धिनिषेधः । अजाहृयीत् । अजाहृयिष्टाम् । अजाहृयिष्यत् । **ज्वरत्वर** । ज्वर रोगे । ञित्वरा संभ्रमे । अत्र वृत्तौ झलादौ क्ङितीत्युक्तम्, तत्र क्ङितीत्येतद्भ्रमसकृतमेवेत्याह **क्ङितीति नानुवर्तत इति । अवतेस्तुनीति** । 'ज्वरत्वर–' इत्युपधावकारयोरूठि गुणे च कृते ओतुरिति सिध्यति, नान्यथा । तेनात्र क्ङितीति नानुवर्तनीयमिति भावः । **अवतेरिति** । उपधावकारयोरूठि गुणे च कृते मन्प्रत्ययस्य टिलोपे चोमिति सिध्यतीत्यर्थः । ज्वरादेरुदाहरणं क्विपि–जूः । जूरौ । जूरः । झलादौ तु जूर्तिः । जूर्णः । जूर्णवान् । **त्वर** । तूः । तूरौ । तूरः । तूर्तिः । तूर्णः । तूर्णवान् । **स्त्रिवि** । स्रूः स्रुवौ । स्रुवः । स्रूतिः । अवि, ऊः ।

मामूतः मामवति। मामोषि। मामोमि मामावः मामूमः। मामोतु, मामूतात्। मामूहि। मामवानि। अमामोत्। अमामोः अमामवम् अमामाव अमामूम। तुर्वी हिंसायाम्, तोतूर्वीति। **२६५५ राल्लोपः।** ( ६—४—२१ ) रेफात्परयोश्छ्वोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये। इति वलोपः। लघूपधगुणः। **२६५६ न धातुलोप आर्धधातुके।** ( १—१—४ ) धात्वं-

---

प्रत्यये परे तद्विधानात्। **मामूत इति**। अकारवकारयोरूठि तसो ङित्त्वान्न गुण इति भावः। **मामवतीति**। 'अदभ्यस्तात्' इत्यत्। मामवीषीति सिद्धवत्कृत्याह **मामोषीति**। झलपरकत्वाद् ऊठ्, गुणः। मामूथः मामूथ। मामवीमि इति सिद्धवत्कृत्याह **मामोमीति**। अनुनासिकपरकत्वादूठ, गुणः। **मामाव इति**। मामाव् वस् इति स्थिते परनिमित्ताभावादूठ् न। 'लोपोव्यो—'इति वलोपे 'अतो दीर्घो यञि'दीर्घः। **मामूम इति**। मामव् मस् इति स्थिते अनुनासिक परकत्वादूठ। ङित्त्वान्न गुणः। मामूतात् मामूतम् मामवतु। **मामूहीति**। ऊठि हेरपित्त्वेन ङित्त्वान्न गुणः। मामूतात् मामूतम् मामूत। **मामवानीति**। आटः पित्त्वादङित्त्वाद् गुणः। मामवाव। मामवाम। लङस्तिप्याह **अमामोदिति**। अमामूताम्। अमामवुः। सिप्याह **अमामोरिति**। अमामूतम् अमामूत। लिङि मामव्यात्। लुङि 'अस्तिसिचः—' इति नित्यमीट्। अमामवीत् अमामावीत् अमामविष्यत। ज्वरतेस्तु जाज्वरीति जाजूर्ति इत्यादि। त्वरतेस्तु तात्वरीति तातूर्ति इत्यादि। स्रिवेस्तु सेस्रवीति। ईडभावे तु ऊठि सेस्रोति इत्यादि। छ्वतेस्तु यङभावात् क्विप्युदाहरणम्। ऊः उवौ उवः इत्याद्यूह्यम्। **तोतूर्वीतीति**। 'उपधायां च' इति दीर्घः। ईडभावे तोतुर्वति इति स्थिते **राल्लोपः**। 'च्छ्वोः शूडनुनासिके च' इति सूत्रं शूड्वर्जमनुवर्तते। 'अनुनासिकस्य क्विझलोः—' इत्यतः क्विझलोरिति च। तदाह **रेफात्परयोरित्यादि**। अत्रापि क्ङितीति नानुवर्तते, पूर्वसूत्रे तदननुवृत्तेः। **वलोप इति**। तथा च तोतुर् ति इति स्थिते उकारस्य लघूपधगुणः; तिपः पित्त्वेन अङित्त्वादित्यर्थः। **न धातुलोपे**। 'इको गुणवृद्धी' इत्यनुवर्तते। तत्र धातुलोपे सति इको गुणवृद्धी न स्त आर्धधातुके परत इत्यर्थे, लूञ्धातोः यङन्तात् पचाद्यचि, यङो लुकि, लोलुव इत्यत्र गुणनिषेधाभावप्रसङ्गात्, अत्र धात्ववयवस्य यङो लोपेऽपि धातोर्लोपाभावात्। धात्ववयवलोपे सतीत्यर्थे तु शीङ्धातोस्तृचि शयिता इत्यत्र गुणो न स्यात्; तत्र

---

उवौ। उवः। ऊतिः। मव, मूः। मुवौ। मुवः। मूतः। मूतिः। **मामोषीत्यादि**। ईट्पक्षे। मामवीषि। मामवीमि। मामवीतु। अमामवीत् अमामवीरिति बोध्यम्। **राल्लोपः**। 'च्छ्वोः शू—' इत्यतः च्छ्वोरित्यनुवर्तते। क्वावुदाहरणम्। तूः। तुरौ। तुरः। धुर्वी; धूः। धुरौ। धुरः। मूर्च्छा, मूः। मुरौ मुरः। **न धातुलोप**। आर्धधातुके धातुलोपो नास्तीति लक्षणया व्याचष्टे **धात्वंशेति**। यद्यपि 'दुरिणो लोपश्च' इत्यौणादिके रक्प्रत्यये धातुलोपः प्रसिद्धस्तथापि प्रयोजन-

शलोपनिमित्ते आर्धधातुके परे इको गुणवृद्धी न स्तः। इति नेह निषेधः तिवादीनामनार्धधातुकत्वात्। तोतोर्ति। 'हलि च' (सू० ३५४) इति दीर्घः

---

धात्ववयवङकारलोपसत्त्वात्। आर्धधातुके परे यो धात्ववयवलोपः तस्मिन् सतीत्यर्थे क्नोपयतीत्यत्रापि गुणनिषेधः स्यात्। तत्र यकारलोपस्य आर्धधातुकपरकत्वसत्त्वादित्यतो व्याचष्टे धात्वंशलोपनिमित्त इति। धातुं लोपयतीति धातुलोपः, कर्मण्यण्। धातुलोपनिमित्ते आर्धधातुके परे इति यावत्। लोलुव इत्याद्युदाहरणम्। लूञ्धातोर्यङन्तात् पचाद्यचि 'यङोऽचि च' इत्यच्प्रत्ययमाश्रित्य यङो लुकि, अच्प्रत्ययमाश्रित्य प्राप्तो गुणोऽनेन निषिध्यते। मरीमृज इति तु वृद्धिनिषेधोदाहरणम्। धात्विति किम्? शीङ्, शयिता। इह उत्सृष्टानुबन्धस्य धातुत्वम्, नतु सानुबन्धस्येति कैयटादिमते तु धातुग्रहणं स्पष्टार्थम्। इदं सूत्रं भाष्ये प्रत्याख्यातम्। हरदत्तेन पुनरुद्धृतम्। कौस्तुभे तु तदपि दूषयित्वा प्रत्याख्यातमेव। इति। नेहेति। तोतोर्तीत्यत्र अयं गुणनिषेधो नेत्यर्थः। हलि चेति। तोतुर्व् तस् इति स्थिते 'लोपो व्योः—' इति वकारस्य लोपं बाधित्वा 'च्छ्वोः शूठ—' इत्यूठि प्राप्ते, वकारस्यानेन लोपे, 'हलि च' इति दीर्घ इत्यर्थः। यद्यपि तोतोर्तीत्यत्र 'च्छ्वोः—' इत्यूठः अप्रवृत्तेर्वकारस्य 'लोपो व्योः—' इति लोपः सिध्यति, तथापि तोतूर्तं इत्यादौ ऊठो बाधनाय आवश्यकीयं लोपो न्याय्यत्वात्तोतोर्तीत्यत्रोपन्यस्त इति बोध्यम्।

---

वानप्रसिद्धः। इणो लुप्तत्वादेव गुणाप्रसङ्गात्। प्रत्ययसन्नियोगेन धातुलोपविधानाद् आर्धधातुकस्य निमित्तत्वमपि नास्ति। अत एव दूरमित्यत्र 'ढ्रलोपे—' इति दीर्घे कर्तव्ये धातुलोपस्य स्थानिवत्त्वं नास्ति, इह धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विशेष्यं चार्धधातुकमित्याशयेनाह लोपनिमित्त इति। गुणवृद्धी न स्त इति। यद्यपि। 'क्ङिति च' इति सूत्रे लैगवायन इत्यत्र गुणनिषेधो मा भूदिति 'इग्लक्षणे गुणवृद्धी न स्तः इति व्याख्यातम्, तथापि इह प्रयोजनाभावादिग्लक्षणे इति नोक्तम्। धात्विति किम्, लूञ् लविता। पूञ् पविता। नन्वत्रानुबन्धलोपनिमित्तमार्धधातुकं न भवतीति द्व्यङ्गविकलमिदमिति चेत्। अत्राहुः—धातुग्रहणे सति धातोर्लोपो यस्मिन् इति बहुव्रीहिलाभाद् लोपनिमित्त इत्यर्थो लभ्यते, तदभावे तु लोपे सत्यार्धधातुक इत्यर्थाल्लवितेत्यादौ दोषः स्यादेवेति। यदा तु लोपयतीति लोपः, तस्मिँल्लोपनिमित्ते आर्धधातुके इको गुणवृद्धी न स्त इति व्याख्यायते, तदा धातुग्रहणं स्पष्टप्रतिपत्त्यर्थम्। उत्सृष्टानुबन्धस्य धातुत्वमिति कैयटादिमते तु धातुलोप इत्यत्र बहुव्रीह्याश्रयणं विनापि धात्ववयवलोपे सत्यार्धधातुके इति व्याख्यायां लवितेत्यादौ नातिप्रसङ्ग इति बोध्यम्। आर्धधातुके किम्, 'त्रिधा बद्धो वृषभो रोरवीति'। रु शब्द इत्यस्माद् 'धातोरेकाच—' इति यङि तस्य लुक्। यङन्तस्य धातुत्वे यङो धात्ववयवत्वाल्लुप्तत्वाच्चात्रापि निषेधः स्यात्तन्माभूदिति। नन्वत्र यङ्लुकोऽनैमित्तिकत्वादिको लोपनिमित्तपरत्वं नास्तीति द्व्यङ्गविकल्पमिति चेत्। अत्राहुः—आर्धधातुकग्रहणे सति अन्यपदार्थलाभाद् बहुव्रीहिर्नलभ्यते, तदभावे त्ववयवलोपे सति गुणवृद्धी न स्त इत्यार्थाद्रोरवीतीत्यत्र दोषः स्यादेवेति। केचित्तु धातुं लोपयतीति धातुलोपः, 'ढ्रलोपे—'

तोतूर्तः तोतूर्वति । तोथोर्ति । दोदोर्ति । दोधोर्ति । मुर्च्छा, मोमोर्ति मोमूर्तः मोमूर्च्छतीत्यादि । आर्धधातुके इति विषयसप्तमी । तेन यङि विवक्षिते

तोतूर्वतीति । 'अदभ्यस्तात्' इत्यत् । 'उपधायां च' इति दीर्घः । तोतूर्वीपि, तोतोर्पि तोतूर्थः तोतूर्थ । तोतुर्वीमि, तोतोर्मि तोतूर्वः तोतूर्मः । तोतूर्वाचकार । तोतूर्विता । तोतूर्विष्यति । तोतूर्वीतु, तोतोर्तु तोतूर्तात् तोतूर्ताम् तोतूर्वतु । तोतूर्हि । तोतूर्वाणि लङि अतोतूर्वीत्, अतोतोः अतोतूर्ताम् अतोतूर्वुः । अतोतूर्वीः, अतोतोः अतोतूर्तम् अतोतूर्त । अतोतूर्वम् अतोतूर्व अतोतूर्म । तोतूर्व्यात् । लुङि 'अस्तिसिचः—' इति नित्यमीट् । अतोतूर्वीत् । अतोतूर्विष्यत् । धुर्वीधातोरुदाहरति तोथोर्तीति । तुर्वीवद्रूपाणि । दोदोर्तीति । दुर्वीधातो रूपम दोधोर्तीति । धुर्वीधातो रूपम् । मुर्च्छाधातोः मोमूर्च्छीति इति सिद्धवत्कृत्य ईडभावे आह मोमोर्तीति । 'राल्लोपः' इति छस्य लोपः । इत्यादीति । मोमूर्च्छीपि, मोमोर्पि । मोमूर्च्छीमि, मोमोर्मि । मोमूर्च्छ्वः । मोमूर्हि । अमोमूर्च्छीत् अमोमूः । सिप्यप्येवम् लुङि 'अस्तिसिचः—' इति नित्यमीट् । अमोमूर्च्छीत् । अमोमूर्च्छिष्यत् । विषयसप्तमीति । 'अजेर्व्यघञपोः'

इत्यत्रेव 'कर्मण्यण्' इत्यभ्युपेत्य व्यधिकरणबहुव्रीह्याश्रयणं विनैव धात्ववयवलोपनिमित्ते गुणवृद्धी न स्त इति व्याचक्षते । इक इति किम्, रागः अभाजि । 'घञि च भावकरणयोः' इति रञ्जेर्नलोपे कृते वृद्धिः । अभाजीत्यत्र तु 'भञ्जेश्च चिणि' इति नलोपे वृद्धिः । इति नेह निषेध इति । सूत्रस्योदाहरणं तु लोलुवः, पोपुवः, मरीमृज इत्यादि बोध्यम् । तत्र लोलूयपोपूयशब्दाभ्यां पचाद्यचि 'यङोऽचि च' इति यङ्लुकि कृते अच्प्रत्ययमाश्रित्य प्राप्तो निषिध्यते, मरीमृज इत्यत्र तु वृद्धिः। ननु लोलूयादिभ्योऽच्प्रत्यये 'अतो लोपः' इत्यल्लोपे यकारस्य 'यङोऽचि च' इति लुक्यल्लोपस्य स्थानिवत्त्वादच्प्रत्ययनिमित्तः 'सार्वधातुकार्धधातुकयोः' इति गुणो 'मृजेर्वृद्धिः' इति वृद्धिश्च न भवेदिति किमनेन निषेधसूत्रेण । न चैवमपि लोलुव इत्यादावुवङि कृते लघूपधगुणः स्यात् तद्वारणाय निषेधोऽयमावश्यकः । उवङ आदिष्टादचः पूर्वत्वेन लघूपधगुणे कर्तव्ये स्थानिवत्त्वाभावादिति वाच्यम्, स्थानिद्वारानादेष्टादचः पूर्वत्वेन उवङो दृष्टत्वात् । स्थानिद्वारा दृष्टत्वेऽपि स्थानिवद्भवतीत्येतद् 'न पदान्त—' इति सूत्रे सवर्णग्रहणेन ज्ञापितम् । न हि शिण्ढि इत्यत्र स्थानिभूतादचः पूर्वत्वेनानुस्वारो दृष्टः, किं तु स्थानिद्वारा । तथा च अनुस्वारस्य परसवर्णे कर्तव्ये श्नमः अल्लोपस्य स्थानिवत्त्वनिषेधाय तत्र सवर्णग्रहणं कृतमितीह स्थानिवद्भावः सिद्धः । नोनावेत्यत्र तु लिडुत्पत्तेः प्रागेव बहुलग्रहणादकारविशिष्टस्य यङो लुकि स्थानिवद्भावाप्रसक्त्या न वृद्ध्यभावशङ्केति 'न धातुलोप—' इति सूत्रस्य न किंचित्प्रयोजनमिति चेत् । सत्यम्, अतएव भाष्ये प्रत्याख्यातमिदमिति संक्षेपः । तोतोर्तीति । यद्यप्यत्र 'लोपो व्योः—' इत्यनेन वलोपः सिध्यति, तथापि तोतूर्त इत्यादौ वलोपार्थं 'राल्लोपः' इत्युपन्यस्तम् । अन्यथा तत्र 'लोपो व्योः—' इति लोपं बाधित्वा वस्य 'च्छ्वोः शूड्—' इति ऊठ् स्यात् । तोथोर्तीत्यादि । तुर्वी दुर्वी धुर्वी हिंसायाम् । मूर्च्छा मोहसमुच्छ्राययोः । मोमूर्च्छीपि । मोमोर्पि । मोमूर्थः ।

अजेर्वी, वेवीयते। अस्य यङ्लुङ् नास्ति, लुकापहारे विषयत्वासंभवेन वीभावस्याप्रवृत्तेः।

॥ इति तिङन्ते यङ्लुक्प्रकरणम् ॥

---

## अथ तिङन्ते नामधातुप्रकरणम् ॥ ५७ ॥

२६५७ सुप आत्मनः क्यच्। ( ३—१—८ ) इषिकर्मण एषितृ-

---

इति वीभावविधौ आर्धधातुके इत्यनुवृत्तं विषयसप्तम्यन्तमाश्रीयते। न तु परसप्तम्यन्तमित्यर्थः। ततः किमित्यत आह **तेनेति**। विषयसप्तम्याश्रयणेनेत्यर्थः। **विवक्षिते इति**। यङि विवक्षिते ततः प्रागेव अजेर्वीभाव इत्यर्थः। एवं च कृते वीभावे हलादित्वाद्यङ् लभ्यते इति मत्वाह **वेवीयते इति**। ननु अजेर्वीभावानन्तरं यङि सति तस्य 'यङोऽचि च' इति पाक्षिको लुक् कुतो नोदाह्रियते इत्यत आह **अस्य यङ्लुङ् नास्तीति**। **विषयत्वेति**। लुका लुप्तयङो भाविज्ञानविषयत्वाभावेनेत्यर्थः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां यङ्लुगन्तप्रक्रिया समाप्ता।

---

अथ नामधातुप्रक्रिया निरूप्यन्ते। **सुप आत्मनः क्यच्**। प्रत्ययग्रहणपरिभाषया सुबन्तादिति लभ्यते। 'धातोः कर्मण–' इति सूत्रात्कर्मण इच्छायां वेत्यनुवर्तते। कर्मण इति पञ्चमी। कर्मकारकादिति लभ्यते। सन्निधानादिच्छां प्रत्येव कर्मत्वं विवक्षितम्। आत्मन्शब्दः स्वपर्यायः। तादर्थ्यस्य शेषत्वविवक्षायां षष्ठी। स्वार्थात्कर्मण इति लभ्यते। स्वश्च इच्छायां सन्निधापितत्वादेषितैव विवक्षितः। तथा च स्वस्मै यदिष्यते कर्मकारकं तद्वृत्तेसुबन्तादिच्छायां क्यज्वा स्यादिति फलति।

---

मोमूर्थ। मोमूर्च्छीमि, मोमोर्मि। मोमूर्च्छ्वः। मोमूर्मः। मोमूर्च्छाचिकार। मोमूर्च्छिता। मोमूर्च्छीतु, मोमोर्तु, मोमूर्तात्। मोमूर्हि। अमोमूर्च्छीत्। अमोमोः। अमोमूर्च्छुः। मोमूर्च्छ्यात्। अमोमूर्च्छीत्। अमोमूर्च्छिष्टाम्। अमोमूर्च्छिष्यत।

इति तत्त्वबोधिन्यां यङ्लुगन्तप्रकरणम्।

---

**सुप आत्मनः क्यच्**। 'धातोः कर्मणः—' इति पूर्वसूत्रात् कर्मण इच्छायां वेत्यनुवर्तते। ततश्च सन्निधानादिच्छाकर्मण एव भवतीत्याह **इषिकर्मण इति**। परस्य पुत्रमिच्छतीत्यत्रातिप्रसङ्गवारणाय सूत्रे आत्मशब्द उपात्तः। स तु

म्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्प्रत्ययो वा स्यात्। धात्ववयवत्वात्सुब्लुक्।
२६५८ क्यचि च। ( ७—४—३३ ) अस्य ईत् स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति। 'वान्तो यि प्रत्यये' ( सू० ६३ ) गव्यति। नाव्यति। 'लोपः शाकल्यस्य' ( सू० ६७) इति तु न। अपदान्तत्वात्। तथाहि २६५९ नः क्ये। ( १—४—१६ ) क्यचि क्यङि च नान्तमेव पदं स्यान्नान्यत्। सन्निपातपरिभाषया क्यचो यस्य लोपो न, गव्यांचकार। गव्यिता नाव्यांचकार। नाव्यिता।

---

तदिदमभिप्रेत्याह इषिकर्मण एषितृसम्बन्धिन इत्यादिना। एषित्रर्थादिषिकर्मण इत्यर्थः। एषित्रा स्वार्थं यदिष्यते कर्मकारकं तद्वाचकात्सुबन्तादिति यावत्। धात्ववयवत्वादिति। सुबन्तात् क्यचि कृते तदन्तस्य 'सनाद्यन्ताः—' इति धातुत्वादिति भावः। क्यचि च। 'अस्य च्वौ' इत्यतोऽस्येत्यनुवर्तते 'ई घ्राध्मोः' इत्यत ईग्रहणं चेति मत्वा शेषं पूरयति अस्येति। अकारस्येत्यर्थः। पुत्रीयतीति। क्यचि पुत्र य इति स्थिते ईत्वे पुत्रीय इति धातोर्लडादिरित्यर्थः। आत्मनः किम्? राज्ञः पुत्रमिच्छति। पदविधित्वेन। समर्थपरिभाषायाः प्रवृत्तेः पुत्रमिच्छतीत्यत्र पुत्रशब्दान्न क्यच्। गव्यतीति। गामात्मन इच्छतीत्यर्थः। नाव्यतीति। नावमात्मन इच्छतीत्यर्थः। अपदान्तत्वादिति। 'लोपः शाकल्यस्य' इत्यस्य पदान्त एव प्रवृत्तेरिति भावः। नन्वन्तर्वर्तिविभक्त्या पदत्वमस्त्येवेत्यत आह तथा हीति। यथा पदत्वं न भवति तथोच्यत इत्यर्थः। नः क्ये। नकारादकार उच्चारणार्थः। 'सुप्तिङन्तम्—' इत्यतः सुबन्तं पदमित्यनुवर्तते। सुबन्तं नकारेण विशेष्यते, तदन्तविधिः। नकारान्तं सुबन्तं पदसंज्ञं स्यादिति लभ्यते। सुबन्तत्वादेव पदत्वे सिद्धे नियमार्थमिदम्। क्यग्रहणेन क्यच्क्यङोर्ग्रहणम्। न तु क्यषः, 'लोहितडाज्भ्यः क्यष्वचनम्—' इति वक्ष्यमाणतया हलन्तात् क्यषोऽभावात्, तदाह क्यचि क्यङि चेत्यादिना। ननु गव्यांचकारेत्यत्र आम आर्धधातुकत्वात्तस्मिन् परे वकाराद्धल उत्तरस्य यकारस्य 'यस्य हलः' इति लोपः स्यादित्यत आह सन्निपातेति। यकारनिमित्तकादेशसंपन्नवकारस्य यकारलोपं प्रति निमित्तत्वासंभवादिति भावः।

---

स्वशब्दपर्यायः। स्वश्च क इत्याकाङ्क्षायामिच्छायाः सन्निधापित्वादेपितैव गृह्यते, तदाह एषितृसंबन्धिन इति। सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकं वोध्यम्। नः क्ये। 'लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति वक्ष्यमाणतया हलन्तात् क्यषू दुर्लभ इत्यभिप्रेत्याह क्यचि क्यङीति। एवं चेह क्यपीत्यपि कैश्चिदुक्तम्, तदुपेक्ष्यम्। 'यस्य हलः' इति लोपमाशङ्क्याह सन्निपातपरिभाषयेति। यकारे परे वान्तादेशविधानाद्वकारो यलोपस्य निमित्तं न भवतीति भावः। गव्यतीति। अत्रान्तर्वर्तिविभक्त्या पदत्वाल्लोपो दुर्वारः स्यादित्याशङ्क्याह अपदान्तत्वादिति। इदं च समाधानस्य समाधानान्तरादूपकत्वादिति न्यायेन समाधिसौकर्यादुक्तम्। वस्तुतस्तु उक्तरीत्या शङ्कैव नेति वोध्यम्। अन्ये तु वार्तिक एव प्रश्लेष इति द्वितीयपक्षमाश्रित्येदम्. सूत्रे वकारप्रश्लेषे लोपासंभवात, न हि कार्यीति न्यायात्। न च वलीति निमित्तत्वेनाश्रयणात् तत्रापि लोपो भवत्येव। अन्यथा वलीत्येव कुर्यादिति वाच्यम्,

नलोपः, राजीयति । 'प्रत्ययोत्तरपदयोश्च' ( सू० १३७३ ) त्वद्यति मद्यति । एकार्थयोरित्येव, युष्मद्यति अस्मद्यति । 'हलि च' ( सू० ३५४ ) गीर्यति । पूर्यति । धातोरित्येव । नेह—दिवमिच्छति दिव्यति । इह पुरमिच्छति पुर्य-

---

गव्यितेति । इटि अतो लोपः । राजीयतीत्यत्राह नलोप इति । राजानमिच्छतीत्यर्थे क्यचि राजन् य ति इति स्थिते 'नः क्ये' इति पदत्वान्नकारस्य लोप इत्यर्थः कृते नलोपे 'क्यचि' इत्यकारस्य ईत्वमिति मत्वाह राजीयतीति । न च ईत्वे कर्तव्ये नलोपस्यासिद्धत्वं शङ्क्यम्, 'नलोपःसुप्स्वर–' इति नियमादित्यलम् । ननु त्वामात्मन इच्छति, मामात्मन इच्छतीत्यत्र युष्मदस्मद्भ्यां क्यचि धात्ववयवत्वात् सुपो लुकि प्रत्ययलक्षणाभावात् 'त्वमावेकवचने' इति कथं त्वमौ स्याताम्, विभक्तौ परत एव तद्विधानादित्यत आह प्रत्ययोत्तरपदयोश्चेति । सुपो लुका लुप्तत्वेऽपि क्यचमादाय मपर्यन्तस्य त्वमाविति भावः । ननु युष्मानात्मन इच्छति, अस्मानात्मन इच्छति, युष्मद्यति अस्मद्यति इत्यत्रापि क्यचमादाय त्वमौ स्यातामित्यत आह एकार्थयोरित्येवेति । 'प्रत्ययोत्तरपदयोश्च' इत्यत्र 'त्वमावेकवचने' इति सूत्रमनुवृत्तम् । एकवचनशब्दश्च न रूढः, किंतु एकत्वविशिष्टार्थवृत्तित्वमेकवचनशब्देन विवक्षितमिति युष्मदस्मत्प्रक्रियायां प्रपञ्चितं प्राक् । तथा च युष्मदस्मदोरेकत्वविशिष्टार्थवृत्तित्वाभावान्न त्वमाविति भावः । गिरमात्मन इच्छति, पुरमात्मन इच्छतीत्यत्र गिर्शब्दात्पुर्शब्दाच्च क्यचि विशेषमाह हलि चेति । उपधादीर्घ इति शेषः । ननु दिवमिच्छति दिव्यतीत्यत्रापि 'हलि च' इति दीर्घः स्यादित्यत आह धातोरित्येवेति । 'हलि च' इति सूत्रे 'सिपि धातोः–' इत्यतस्तदनुवृत्तेरिति भावः । दिव्यतीति । दिव्शब्दः अव्युत्पन्नं प्रातिपदिकमिति भावः । इहेति । 'हलि च' इति सूत्रे धातोरित्यनुवृत्तेः पुर्यतीत्यत्र न दीर्घ इति माधव-

---

वकारे परतो यकारलोपे तस्य निमित्तत्वेनाश्रयणावश्यकत्वादिति द्वितीयकल्प एव युक्त इत्याहुः । राजीयतीति । 'क्यचि' इत्यवर्णस्य ईत्वे कर्तव्ये 'पूर्वत्रासिद्धम्' इति नलोपोऽसिद्धो न भवति, 'नलोपः सुप्स्वर–' इति नियमात् । यद्यपि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति 'नलोपः सुप्स्वर–' इति सूत्रं राजीयतीत्यादिषु पठनीयम्, राजभ्यामित्यादौ तु पूर्वत्रासिद्धम्' इति, नलोपस्यासिद्धत्वेन दीर्घाद्यभावसिद्धेः, तथापि विधिमुखेन प्रवृत्तिरिति पक्षाभ्युपगमेन हलन्तेषु राजभ्यां राजभिरित्यत्रैव पठितमिति ज्ञेयम् । न च विधिमुखप्रवृत्तिपक्षो निरालम्ब एवेति वाच्यम्, 'अनुपराभ्यां कृञः' इति सूत्रस्थभाष्यग्रन्थपर्यालोचनया तत्पक्षावगमात् । यत्तु 'नलोपः सुप्स्वर—' इति सूत्रे मनोरमायामुक्तं 'नियमसूत्राणां विधिमुखेन प्रवृत्तिः सामान्यशास्त्रतात्पर्यसङ्कोचकता च' इति पक्षस्य 'द्युद्भ्यो लुङि' इति सूत्रे भाष्यकृता ध्वनितत्वादिति । तच्चिन्त्यम् तत्सूत्रस्य भाष्यकारैरस्पृष्टत्वात् । केचित्तु 'द्युद्भ्यो लुङि' इत्यत्र ध्वनितत्वादिति वक्तव्ये सूत्रग्रहणं बहुव्रीहिलाभार्थम् । 'द्युद्भ्यो लुङि' इति सूत्रं यस्मिन्प्रकरणे तद् 'द्युद्भ्यो लुङि इति सूत्रम्' परस्मैपदप्रकरणमित्यर्थः । तत्र हि 'अनुपराभ्याम्–' इति सूत्रं वर्तत इति तत्सूत्रे यद् ध्वनितं तत्तु परस्मैपदप्रकरणे

तीति माधवोक्तं प्रत्युदाहरणं चिन्त्यम्। पूर्गिरोः साम्यात्। दीव्यतीति दीर्घस्तु प्राचः प्रामादिक एव। अदस्यति 'रीङ्ऋतः' (सू० १२३४)। कर्त्रीयति। 'क्यच्व्योश्च' (सू० २११९)। गार्गीयति वात्सीयति। 'अकृत्सार्व—' (सू० २२९८) इति दीर्घः। कवीयति। वाच्यति। समिध्यति। २६६० क्यस्य विभाषा। (६—४—५०) हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके। आदेः

ग्रन्थश्चिन्त्य इत्यर्थः। कुत इत्यत आह पूर्गिरोः साम्यादिति। 'गॄ शब्दे, पॄ पालनपूरणयोः' इत्याभ्यां क्विपि 'ॠत इद्धातोः' इति 'उदोष्ठ्यपूर्वस्य' इति च इत्वे उत्वे च कृते रपरत्वे गिर्शब्दस्य पुरशब्दस्य च निष्पत्तेरिति भावः। प्रामादिक एवेति। दिव्शब्दस्य अव्युत्पन्नप्रातिपदिकत्वान्न धातुत्वम्। दिव्धातोः क्विबन्ताद् ऊठि द्यूशब्दाच्च क्यचि द्यूयतीत्येव उचितम्। विचि तु लघूपधगुणे 'लोपो व्योः—' इति लोपे देशब्दात् क्यचि देयतीत्येवोचितमिति भावः। अदस्यतीति। अमुमात्मन इच्छतीत्यर्थे अदस्शब्दात् क्यचि सुपो लुका लुप्तत्वाद्विभक्तिपरकत्वाभावान्न त्यदाद्यत्वम्। सान्तत्वान्नोत्वमत्वे। 'नः क्ये' इति नियमेन पदान्तत्वाभावान्न सस्य रुत्वमिति भावः। कर्तृशब्दात् क्यचि विशेषमाह रीङृत इति। गार्ग्यशब्दात् क्यचि विशेषमाह क्यच्व्योश्चेति। आपत्यस्य यलो यकारस्य लोप इति भावः। कृते यलोपे 'क्यचि च' इत्यकारस्य ईत्वं मत्वाह गार्गीयतीति। वात्सीयतीति। वात्स्यशब्दात् क्यचि पूर्ववत्। कविशब्दात् क्यचि विशेषमाह अकृत्सार्वेति। वाच्यतीति। वाच्शब्दात् क्यचि 'नः क्ये' इति नियमेन पदत्वाभावान्न कुत्वम्। 'वचिस्वपि—' इति संप्रसारणं तु न धातोः कार्यमुच्यमानं धातुविहितप्रत्यये एवेति नियमात्। समिध्यतीति। समिध्शब्दात् क्यचि 'नः क्ये' इति नियमेन पदत्वाभावान्न जश्त्वम्। लुटस्तासि इटि 'समिध्य इ ता' इति स्थिते 'यस्य हलः' इति नित्ये यलोपे प्राप्ते क्यस्य विभाषा। 'यस्य हलः' इत्यतो हल इति पञ्चम्यन्तमनुवर्तते। 'आर्धधातुके' इत्यधिकृतम्, तदाह हलः परयोः क्यच्क्यङोरिति। क्यप् तु नात्र गृह्यते, 'लोहितडाज्भ्यः क्यप्वचनम्—' इति वक्ष्यमाणतया हलन्तात्तदभावात्। अन्तलोपमाशङ्क्याह आदेः

ध्वनितं भवति। यद्वा 'अनुपराभ्यां कृञः' इत्यत्र हि भाष्यकृता 'ध्रुङ्क्ष्यो लुङि' इति परामृष्टम्। तथा च 'ध्रुङ्क्ष्यो लुङि' इति सूत्रं यस्मिंस्तत् 'ध्रुङ्क्ष्यो लुङीति सूत्रम्'। 'अनुपराभ्यां कृञः' इति सूत्रमित्यर्थ इत्येव कुकविकृतिवत् कथंचित्स्थितस्य गतिः समर्थनीयेत्याहुः। पूर्गिरोः साम्यादिति। गॄ शब्दे, पॄ पालनपूरणयोरित्येताभ्यां क्विपि 'ॠत इद्धातोः' उदोष्ठ्यपूर्वस्य' इति प्रवृत्तेरिति भावः। प्रामादिक एवेति। दिवुधातोः क्विपि तु द्यूरिति स्यात्। ततः क्यचि तु द्यूयतीति भवति। क्विपं विहाय विचि कृते लूपधागुणो वलोपश्च स्यात्। ततः क्यचि तु देवयतीति भवति। तथा च 'हलि च' इति सूत्रे वृत्तावपि 'धातोरित्येव नेह दिवमिच्छति दिव्यति' इत्येवोक्तमिति भावः। आपत्ययकारस्य लोपं स्मारयति क्यच्व्योश्चेति। 'नः क्ये' इति नियमेन पदत्वाभावात्कुत्वं नेत्याह वाच्यतीति। एवं समिध्यतीत्यत्र जश्त्वं नेति

परस्य' (सू० ४४)। 'अतो लोपः' (सू० २३०८)। तस्य स्थानिवत्त्वाल्लघूपधगुणो न। समिधिता, समिध्यिता। 'मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज् न' (वा० १७१४)। किमिच्छति। इदमिच्छति। स्वरिच्छति। **२६६१ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु।** (७-४-३४) क्यजन्ता निपात्यन्ते। अशनायति। उदन्यति। धनायति। बुभुक्षादौ किम्—अशनीयति। उदकीयति। धनीयति। **अश्वक्षीरवृषलवणामात्मप्रीतौ क्यचि।** (७-१-५१) एषां क्यचि असुगागमः स्यात्। 'अश्ववृषयोर्मैथुनेच्छायाम्' (वा० ४३०९)। अश्वस्यति वडवा। वृषस्यति गौः। 'क्षीरलवणयो-

---

**परस्येति।** तथा च समिध् अ इता इति स्थिते आह **अतो लोप इति।** तथा च समिध् इता इति स्थिते लघूपधगुणमाशङ्क्याह **तस्य स्थानिवत्त्वादिति।** क्यच्सूत्रे 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकम्। मान्तेभ्यः अव्ययेभ्यश्च क्यचः प्रतिषेध इत्यर्थे पुत्रमात्मन इच्छति पुत्रीयतीत्यत्र न स्यात्। पुत्राविच्छतीत्यादावेव स्यात्। मान्तानि अव्ययानि मान्ताव्ययानि तेभ्य इत्यर्थे स्वरिच्छतीत्यत्र क्यचः प्रतिषेधो न स्यात्। अतस्तद्वार्तिकं विवृण्वन्नाह **मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज् नेति। अशनायोदन्य।** अशनाय, उदन्य, धनाय इत्येषां द्वन्द्वः। **क्यजन्ता इति।** एते त्रयः शब्दाः क्रमेण बुभुक्षादिष्वर्थेषु निपात्यन्ते इत्यर्थः। भोक्तुमिच्छा बुभुक्षा। पातुमिच्छा पिपासा। गर्द्धः अभिकाङ्क्षा। **अशनायतीति।** अश्यते यत् तदशनम् अन्नम् तद्भोक्तुमिच्छतीत्यर्थः। 'क्यचि च' इति ईत्वाभावो निपात्यते। 'अकृत्सार्व—' इति दीर्घः। **उदन्यतीति।** उदकं पातुमिच्छतीत्यर्थः उदकशब्दस्य उदन्नादेशो निपात्यते नलोपाभावश्च। **धनायतीति।** जीवनार्थं सत्यपि धने अधिकं धनं वाञ्छतीत्यर्थः। ईत्वाभावो निपात्यते। **अशनीयतीति।** अशनम् अन्नं तत्संग्रहीतुमिच्छति वैश्वदेवाद्यर्थमित्यर्थः। **उदकीयतीति।** सस्यादिसेचनार्थमुदकमिच्छतीत्यर्थः। **धनीयतीति।** दरिद्रः सन् जीवनाय धनमिच्छतीत्यर्थः। **अश्वक्षीर। क्यचि।** परे असुगिति शेषपूरणम्, 'आजसेरसुक्' इत्यतस्तदनुवृत्तेरिति भावः। असुकि ककार इत्, उकार उच्चारणार्थः। कित्त्वादन्त्यावयवः। **अश्ववृषयोरिति।** वार्तिकम्। **अश्वस्यति वडवेति।** मैथुनार्थमश्व-

---

बोध्यम्। 'मान्ताव्ययेभ्यः प्रतिषेधः' इति वार्तिकस्य यथाश्रुतव्याख्याने पुत्रमिच्छतीत्यत्रापि न स्यात्। पुत्रौ पुत्रान् वा इच्छतीत्यादावेव स्यात्, अतो व्याचष्टे **मान्तप्रकृतिकादिति। अशनायोदन्य। क्यजन्ता इति।** उदकशब्दस्योदन्भावोऽन्ययोर्दीर्घ इत्यपि ज्ञेयम्। इह यः सद्य एव भोक्तुमशनमिच्छति यश्च पातुमुदकम्, यश्च धने सत्यपि पुनर्धनं तत्रोदाहरणानि। यस्तु कालान्तरोपयोगार्थमशनमिच्छति, यश्च स्नातुमुदकम्, यश्च दरिद्रः सन् धनमिच्छति तत्र प्रत्युदाहरणानि। ननु 'उदन्या तु पिपासा तृट्' इति निघण्टौ परस्परसामानाधिकरण्यं न स्याद् उदन्याशब्दस्य उदकेच्छावाचित्वादिति चेत्। अत्राहुः—अशनायतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षापिपासादिकमेवार्थः, तथा च नोक्तदोष इति। **अश्वक्षीर।**

र्लालसायाम्' ( वा० ४३१५ ) । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । 'सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ' ( वा० ४६१६–१७ ) दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति २६६३ काम्यच्च । (३—१—९) उक्तविषये काम्यच् स्यात् पुत्रकाम्यति । इह 'यस्य हलः' ( सू० २६३१ ) इति लोपो न, अनर्थकत्वात् । यस्य इति सङ्घातग्रहणमित्युक्तम् । यशस्काम्यति । सर्पिष्काम्यति । मान्ताव्ययेभ्योऽप्ययं स्यादेव । किंकाम्यति । स्वःकाम्यति । २६६४ उपमानादाचारे । ( ३—१—१० ) उपमानात्कर्मणः सुबन्तादाचारार्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति

---

मिच्छतीत्यर्थः । वृपस्यति । गौरिति । मैथुनार्थं वृषमिच्छतीत्यर्थः 'वृषस्यन्ती तु कामुकी' इति कोशस्तु अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छामात्रे लाक्षणिकः । क्षीरलवणयोरिति वार्तिकम् । असुगिति शेषः । लालसा उत्कटेच्छा । सर्वप्रातिपदिकानामिति । इदमपि वार्तिकम् । लालसायां सर्वेषां प्रातिपदिकानां क्यज् वक्तव्यः । तस्मिन् परे प्रकृतीनां सुगसुकौ च वक्तव्यौ इत्यर्थः । नचानेनैव वार्तिकेन सिद्धे 'क्षीरलवणयोर्लालसायाम्' इति वार्तिकं व्यर्थमिति शङ्क्यम्, 'क्षीरलवणयोः–' इति वार्तिकं कात्यायनीयम् 'सर्वप्रातिपदिकानाम्—' इति तु मतान्तरमित्यदोषात् । एतच्च भाष्ये अपर आहेत्येनेन ध्वनितम् । काम्यच्च । 'सुप आत्मनः क्यच्' इत्युत्तरमिदं सूत्रम्, तदाह उक्तविषय इति । पुत्रकाम्यतीति । कस्येत्संज्ञा तु न, फलाभावात् । अनर्थकत्वादिति । काम्यच एकदेशस्य यकारस्य अर्थाभावादित्यर्थः । ननु वेभिदिता इत्यत्रापि यकारस्य अनर्थकत्वाल्लोपो न स्यादित्यत आह यस्य इतीति । 'यस्य हलः' इत्यत्र यस्येत्यनेन यकाराकारसंघातग्रहणमित्यनुपदमेवोक्तमित्यर्थः । तथा च वेभिद्य इता इति स्थिते यङो यस्य संघातस्यार्थवत्त्वाद्यकार लोपो निर्बाधः । प्रकृते तु काम्यजेकदेशस्य यस्यानर्थकत्वाल्लोपो नेति भावः यशस्काम्यतीति । 'सोऽपदादौ' इति सत्वम् । ननु किमात्मन इच्छति किंकाम्यति स्वःकाम्यतीति कथम् ? मान्ताव्ययानां नेत्यनुवृत्तेरित्यत आह मान्ताव्ययेभ्योऽप्ययमिति । उपमानादाचारे । 'सुप आत्मनः क्यच्' इत्यतः सुप इत्यनुवर्तते । 'धातोः कर्मणः समानकर्तृकात्—' इत्यतः कर्मण इति तदाह उपमानात्कर्मण इत्यादिना । उपमानं यत्कर्मकारकं तद्वृत्तेः सुबन्तादित्यर्थः । पुत्रमिवेति । 'धातोः कर्मणः—' इत्यतो वेत्यनुवृत्तिरनेन सूचिता । छात्रं पुत्रत्वेन उपचरतीत्यर्थः ।

---

'आज्जसेः–' इत्यतोऽसुगिति वर्तते । अश्वस्यतीति । मैथुनार्थमश्वमिच्छतीत्यर्थः । एवं मैथुनार्थं वृषमिच्छति वृपस्यति गौः । ननु, 'इति रामो वृपस्यन्तीम्' इति प्रयोगो मनुष्यविषये कथं संगच्छत इति चेत् । अत्राहुः–अश्ववृषरूपप्रकृत्यर्थपरित्यागेन मैथुनेच्छैवार्थः अत एव 'वृषस्यन्ती तु कामुकी' इति कोशोऽपि स्वरसतः संगच्छते इति । लालसायामिति । उत्कटेच्छायामित्यर्थः । काम्यच्च । उच्चारणसामर्थ्यान्न कस्येत्संज्ञा । 'मान्ताव्ययेभ्यः प्रतिषेधः' इत्यस्यानुवृत्त्यभावं सूचयति अयं स्यादे-

द्विजम् । 'अधिकरणाच्चेति वक्तव्यम्' (वा० १७१७) प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे । २६६५ कर्तुः क्यङ् सलोपश्च । ( ३—१—११ ) उपमानात्कर्तुः सुबन्ता-दाचारे क्यङ् वा स्यात्, सान्तस्य तु कर्तृवाचकस्य लोपो वा स्यात् । क्यङ् वेत्युक्तेः पक्षे वाक्यम् । सान्तस्य लोपस्तु क्यङ्संनियोगशिष्टः । स च व्यवस्थितः । 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' ( वा० १७१९-२० )। कृष्ण इवाचरति कृष्णायते । ओजश्शब्दो वृत्तिविषये तद्वति, ओजायते । अप्सरायते । यशायते, यशस्यते । विद्वायते विद्वास्यते । त्वद्यते । मद्यते । अनेकार्थत्वे तु युष्मद्यते । अस्मद्यते । 'क्यङ्मानिनोश्च' ( सू० ८३७ ) । कुमारीवाचरति कुमारायते । हरिणीवाचरति हरितायते । गुर्वीव गुरूयते । सपत्नीव सपत्नायते । सपतीयते । सपत्नीयते । युवतिरिव युवायते । पट्वीमृद्व्याविव

---

विष्णूयतीति । द्विजं विष्णुत्वेन उपचरतीत्यर्थः । अधिकरणाच्चेति । उपमानभूता-धिकरणवृत्तेरपि सुबन्तादाचारे क्यजिति वक्तव्यमित्यर्थः । प्रासादीयति कुट्यामिति । प्रासादे इव कुट्यां हृष्टो वर्तते इत्यर्थः । कुटीयति प्रासादे इति । कुट्यामिव प्रासादे क्लिष्टो वर्तते इत्यर्थः । कर्तुः क्यङ् सलोपश्च । कर्तुरित्यावर्तते । कर्तुः क्यङित्येकं वाक्यम् । *अत्र कर्तुरिति पञ्चम्यन्तम् । उपमानादाचारे इत्यनुवर्तते । 'धातोः कर्मणः—'* इत्यतो वेति च, तदाह उपमानादिति । उपमानं यत्कर्तृकारकं तद्वृत्तेः सुबन्तादित्यर्थः । कर्तुः सलोपश्चेति द्वितीयं वाक्यम् । चकारः तुपर्यायो भिन्नक्रमः । स इति लुप्तषष्ठीकं पृथक्पदम् । कर्तुरिति षष्ठ्यन्तस्य विशेषणम् । तदन्तविधिः, तदाह सान्तस्य लोपस्त्विति । एतच्च भाष्ये स्पष्टम् । क्यङि सलोपविकल्पः सर्वत्र स्यादित्यत आह स च व्यवस्थित इति । सान्तस्य सलोप इत्यर्थः । व्यवस्थामेव दर्शयति ओजसोऽप्सरस इति । इदं वार्तिकम् । ओजश्शब्द इति । क्यङन्तोऽयम् । सनाद्यन्ता इति धातुत्वाद् वृत्तिः । तत्र ओजश्शब्द ओजस्विनि वर्तत इत्यर्थः । ओजायते इति । ओजस्वीवाचरतीत्यर्थः । ओजश्शब्दात् क्यङि सलोपे 'अकृत्सार्व—' इति दीर्घ इति भावः । अप्सरायते इति । अप्सरश्शब्दात् क्यङि सलोपदीर्घौ । क्यङो ङित्वादात्मनेपदम् । इतरेषां विभाषयेत्यस्योदाहरति यशायते, यशस्यते इति । यशस्वीवाचरती-

---

वेति । आचरतीति । व्यवहरतीत्यर्थः । अधिकरणाच्चेति । सप्तम्यन्तरूपात् सुबन्तादित्यर्थः । कर्तुः क्यङ् सलोपश्च । 'धातोः कर्मणः' इति सूत्राद्वेत्यनुवर्तत इत्याह क्यङ् वा स्यादिति । सेति लुप्तषष्ठीकं कर्तृविशेषणमित्याह सान्तस्येति । चकारस्तु अन्वाचये बोध्यः । तद्वतीति । तथा च ओजायत इत्यत्र ओजस्वीवाचरतीति विग्रहो बोध्यः विद्वस्यत इति । नान्तस्यैव पदत्वात्सस्य रुत्वं न । पुंवद्भावं स्मारयति क्यङ्मानिनोश्चेति सपत्नीवेति । त्रितयसाधारणं विग्रहवाक्यम् । सपत्नायत इति । शत्रुपर्यायात्सपत्नशब्दा-च्छार्ङ्गरवादिङीनान्तात्क्यङि पुंवद्भावे 'अकृत्सार्व—' इति दीर्घे च रूपमिदम् । सपतीयत इति । समानस्वामिकाभिधायिनो भाषितपुंस्कस्य 'नित्यं सपत्न्यादिषु' इति नादेशे नान्तत्वान्

पट्वीमृदूयते। 'न कोपधायाः' (सू० ८३८)। पाचिकायते। 'आचारेऽव-गल्भक्लीबहोडेभ्यः क्विब्वा' (वा० १७२१)। वाग्रहणात् क्यङपि। अव-

त्यर्थः। विद्वायते, विद्वस्यते इति। विद्वानिवाचरतीत्यर्थः। विद्वच्छब्दात् क्यङि सलोप-विकल्पः। त्वद्यते। मद्यते इति। त्वमिव अहमिव आचरतीत्यर्थः। युष्मदस्मच्छब्दात् क्यङि 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य त्वमौ। युष्मद्यते। अस्मद्यते इति। यूयमिव वयमिव आचरतीत्यर्थः। 'त्वमावेकवचने' इत्यस्मात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे एकवचने इत्यनुवृत्तेरेकत्वविशिष्टार्थवृत्तित्वे सत्येव युष्मदस्मदोस्त्वमाविति भावः। कुमार्यादिशब्दात् क्यङि पुंवत्त्वं स्मारयति क्यङ् मानिनोश्चेति। कुमारायते इति। पुंवत्त्वेन ङीपो निवृत्तौ दीर्घः। हरितायते इति। हरिणीशब्दात् क्यङि पुंवत्त्वेन 'वर्णादनुदात्तात्—' इति नत्वस्य ङीपश्च निवृत्तौ दीर्घः। गुरूयते इति। गुर्वीशब्दात् क्यङि ङीपो निवृत्तौ दीर्घः। सपत्नायते इति। शत्रुपर्यायात् सपत्नशब्दात् शार्ङ्गरवादित्वेन ङीनन्तात् पुंवत्त्वेन ङीनो निवृत्तौ दीर्घ इति भावः। सपतीयते इति। समानः पतिः स्वामी यस्याः इति बहुव्रीहौ सपतिशब्दस्य नत्वे ङीपि च निष्पन्नात् सपत्नीशब्दात् क्यङि पुंवत्त्वेन ङीब्नत्वयोर्निवृत्तौ दीर्घ इति भावः। सपत्नीयते इति। विवाहनिबन्धनं पतिशब्दमाश्रित्य समानः पतिः यस्या इति बहुव्रीहौ सपत्नीशब्दस्य नित्यस्त्रीलिङ्गत्वान्न पुंवत्त्वमिति भावः। युवायते इति। युवतिशब्दात् क्यङि पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ नलोपे दीर्घ इति भावः। वयोवाचिनां जातिकार्यं वैकल्पिकमिति 'जातेरस्त्रीविषयात्—' इत्यत्र भाष्ये स्पष्टम्। एतेन 'जातेश्च' इति निषेधादिह पुंवत्त्वं दुर्लभमित्यपास्तमिति शब्देन्दुशेखरे स्थितम्। पट्वीमृदूयते इति। इह पूर्वपदस्य क्यङ्परकत्वाभावान्न पुंवत्त्वम्। ननु पाचिकेवाचरति पाचिकायते इत्यत्रापि 'क्यङ्मानिनोश्च' इति पुंवत्त्वेन टापः 'प्रत्ययस्थात्—' इति इत्त्वस्य च निवृत्तौ पाच-कायते इति स्यादित्यत आह न कोपधाया इति। 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा' इति वार्तिकम्। उपमानादित्यनुवर्तते। 'धातोः कर्मणः—' इत्यतो वाग्रह-णस्यास्मिन्प्रकरणे अनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमित्यत आह वाग्रहणात् क्यङपीति। अन्यथा क्विपविहितत्वात् विकल्पा क्यङो बाधः स्यादिति भावः।

---

ङीप्, ततः क्यङि पुंवद्भावे च दीर्घः। सपत्नीयत इति। विवाहजन्यसंस्कारविशेषनिमित्त-केन पतिशब्देन समासे सति नित्यस्त्रीत्वान्न पुंवत्। युवायत इति। न च ङ्याप्सूत्रे भाष्ये युवतितरेत्युदाहरणाद् यौवनं जातिरिति 'जातेश्च'इति निषेधे युवतीयत इत्युदाहरणमिहोचित-मिति वाच्यम्, वयसोऽनित्यत्वेनाजातित्वात्। अन्यथा युवजानिरिति 'अचः परस्मिन्—' इति सूत्रस्थभाष्यग्रन्थो विरुध्येत। युवतितरेति भाष्यस्य तु का गतिरिति चेत्। अत्राहुः— 'तसिलादिषु—' इति पुंवद्भावे प्राप्ते भाष्यनिर्देशादेव न पुंवदिति। युवतीशब्दस्य तु तरपि 'घरूप—' इति ह्रस्वे युवतितरेति भवत्येव। पट्वीमृदूयत इति। पूर्वपदस्य क्यङ्परत्वा-भावान्न पुंवत्। पाचिकायत इति। पुंवद्भावे सति कात्पूर्वस्येत्वं न श्रूयेतेति भावः।

गल्भादयः पचाद्यजन्ताः । क्विप्संनियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते, तेन तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम्, एतद्वार्तिकारम्भसामर्थ्यात् । न च अवगल्भते इत्यादिसिद्धिस्तत्फलम् । केवलानामेवाचारेऽपि वृत्तिसंभवाद्, धातूनामनेकार्थत्वात् । अवगल्भांचक्रे ।

---

तथा चात्र वाशब्दो विकल्पार्थक इति फलितम् । अत्र सुप इति नानुवर्तते । प्रातिपदिकात् क्यङोऽप्राप्तौ वाग्रहणात् समुच्चीयते इति केचित् । **अवगल्भादय इति** । 'गल्भ धार्ष्ट्ये' अवपूर्वः, 'क्लीब अधार्ष्ट्ये' 'होडृ अनादरे' एभ्यः पचाद्यचि अवगल्भादिशब्दास्त्रयो निष्पन्ना इत्यर्थः । तथा च अवगल्भ इवाचरति, क्लीब इवाचरति, होड इवाचरतीत्यर्थे अवगल्भादिशब्देभ्यः क्विप्क्यङाविति स्थितम् । अवगल्भते इत्यात्मनेपदलाभायाह **क्विप्सन्नियोगेनेति** । अन्त्यस्य अकारस्य अनुदात्तत्वमनुनासिकत्वं चात्र प्रतिज्ञायते । ततश्च तस्य इत्संज्ञायां लोपे अनुदात्तेत्त्वादात्मने पदं लभ्यते, तदाह **तेन तङिति** । **अवगल्भते इति** । क्विपि भकारादकारस्य लोपे हलन्ताल्लडादौ तङि शबिति भावः । ननु अवगल्भांचक्रे, क्लीबांचक्रे इत्यत्र कथमाम् ? अन्त्यस्य च इत्संज्ञालोपाभ्यामपहारेण धातूनामेकाच्त्वेन 'कास्यनेकाच्' इत्यस्याप्रवृत्तेः । न च अवगल्भ इत्यस्य क्विबन्तस्य धातोरनेकाच्कत्वमस्तीति वाच्यम्, 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते, इत्यनुपदमेव वक्ष्यमाणत्वादित्यत आह **भूतपूर्वादपीति** । क्विबुत्पत्तेः प्राक्तनमनेकाच्त्वं भूतपूर्वगत्या आश्रित्येत्यर्थः । भूतपूर्वगत्याश्रयणे प्रमाणमाह **एतद्वार्तिकेति** । 'सर्वप्रातिपदिकेभ्यः क्विब्वा–' इति वक्ष्यमाणवार्तिकादेव अवगल्भते, अवजगल्भे इत्यादिसिद्धौ पुनरेभ्यः क्विब्विधानं तत्संनियोगेन अन्त्यवर्णस्य अनुदात्तत्वानुनासिकत्वप्रतिज्ञानार्थं सद् भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीत्यर्थः । नन्वनुदात्तत्वानुनासिकत्वप्रतिज्ञानस्यात्मनेपदसिद्धावुपक्षीणत्वात् कथमुक्तज्ञापकतेत्याशङ्क्य निराकरोति **न चावगल्भते इत्यादिसिद्धिस्तत्फलमिति** । कुत इत्यत आह **केवलानामिति** । अच्प्रत्ययरहितानां धातुपाठसिद्धानामनुदात्तेतामेव गल्भादिधातूनामवगल्भ इवाचरतीत्याद्यर्थेषु वृत्तिसंभवात् । तच्च कुत इत्यत आह **धातूनामनेकार्थत्वादिति** । एवं च 'आचारेऽवगल्भ–' इति क्विब्विधानमनुबन्धासञ्जनार्थं सद् भूतपूर्वगत्या अनेकाच्त्वाश्रयणं ज्ञापयतीति सिद्धम् । न च 'सर्वप्रातिपदिकेभ्यः–' इति क्विपि अवगल्भतीत्यादिवारणाय अनुबन्धासञ्जनमुपक्षीणमिति कथं तस्य उक्तज्ञापकतेति वाच्यम्, 'सर्वप्रातिपदिकेभ्यः–' इति वार्तिकेन क्विपि

---

एवं पञ्चमीयते । सौघ्नीयते । सुकेशीयते । ब्राह्मणीयत इत्यादि । **अचारेऽवगल्भ** । गल्भ धार्ष्ट्ये । क्लीबृ अधार्ष्ट्ये । होडृ अनादरे क्यङपीति । अपिशब्दाद्वाक्यम् । तत्तु 'सर्वप्रातिपदिकेभ्यः––' इत्यत्र वाग्रहणाल्लभ्यते इत्याहुः । **क्विप्सन्नियोगेनेत्यादि** । तेन क्यङ्सन्नियोगेनानुदात्तत्वानुनासिकत्वयोरभावादित्संज्ञालोपौ न स्त इति 'अकृत्सार्व––' इति दीर्घे सति अवगल्भायते क्लीबायत इत्यादि भवति । **तेन तङिति** । आत्मनेपदमित्यर्थः । तथा च अवगल्भमानः क्लीबमानः

क्लीबांचक्रे । होडांचक्रे । वार्तिकेऽवेत्युपसर्गविशिष्टपाठात्केवलादुपसर्गान्तरविशिष्टाच्च क्यङेवेति माधवादयः । तङ् नेति तूचितम् । 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' ( वा० १७२२ ) । पूर्ववार्तिकं तु अनुबन्धासञ्जनार्थम् । तत्र क्विबनूद्यते । प्रातिपदिकग्रहणादिह सुप इति न संबध्यते । तेन पदार्थं न । कृष्ण इवाचरति कृष्णति । 'अतो गुणे' ( सू० १९१ ) इति शपा सह पर-

---

तथा प्रयोगे इष्टापत्तेः भूतपूर्वाश्रयणपरभाष्याप्रमाण्येन 'सर्वप्रातिपदिकेभ्यः—' इति वार्तिकस्य अवगलभादिभ्यः अप्रवृत्तिविज्ञानाद्वेत्यास्तां तावत् । 'आचारेऽवगल्भ—' इत्यत्र अवेत्यस्य प्रयोजनमाह **अवेत्युपसर्गेति** । **केवलादिति** । उपसर्गविहीनाद्गल्भशब्दादित्यर्थः । **उपसर्गान्तरेति** । प्रगल्भानुगल्भादिशब्दादित्यर्थः । **क्यङेवेति** । न तु क्विबित्यर्थः । माधवादय इत्यस्वरसोद्भावनम् । तद्बीजमाह **तङ्नेति तूचितमिति** । केवलादुपसर्गान्तरविशिष्टाच्च गल्भशब्दात् प्रगल्भादिशब्दाच अनेन क्विबभावेऽपि 'सर्वप्रातिपदिकेभ्यः—' इति वार्तिकेन क्विब् निर्बाधः । परन्तु अवपूर्वत्व एवानुबन्धासज्जनादात्मनेपदमेव तत्र नेति वक्तुमुचितमित्यर्थः । **सर्वप्रातिपदिकेभ्य इति** । आचारे इति शेषः । नन्वनेनैव वार्तिकेन सिद्धे 'आचारेऽवगल्भ—' इति वार्तिकं व्यर्थमित्यत आह **पूर्ववार्तिकं त्विति** । अन्त्यवर्णस्य इत्संज्ञासिद्ध्यर्थमित्यर्थः । तर्हि तत्र क्विब्ग्रहणं व्यर्थमित्यत आह **तत्र क्विबनूद्यत इति** । तत्संनियोगेनानुबन्धासङ्गार्थमित्यर्थः । **पदकार्यं नेति** । राजानतीत्यादौ नलोपादिकं नेत्यर्थः । अन्यथा अन्तर्वर्तिविभक्त्या पदत्वान्नलोपादिकं स्यादिति भावः । **पररूपमिति** ।

---

इत्यादि सिध्यति । **माधवादय इति** । केचित्तेषामाशयमाहुः—'आचारेऽवगल्भ—' इत्यत्र सुप इत्यनुवर्तते । तथा च केवलादुपसर्गान्तरविशिष्टाद् गल्भप्रगल्भादिसुवन्तात्क्यङेव, न तु क्विप् । **तङ् नेति तूचितमिति** । उत्तरवार्तिकेन प्रातिपदिकमात्रात्क्विप् विधीयत इति एतेभ्योऽपि त्रिभ्यः क्विपि सिद्धे तत्सन्नियोगेनानुदात्तत्वानुनासिकत्वमात्रमच् प्रत्ययस्य 'आचारेऽवगल्भ—' इत्यवगल्भादिषु प्रतिज्ञायते लाघवात् । अन्यत्र तु गल्भप्रगल्भादिप्रातिपदिकेषु क्विपि परस्मैपदमेव भवति, न तु तङिति भावः । नन्वेवम् 'आचारेऽवगल्भ—' इत्यत्र वाग्रहणात् क्यङमनुवर्त्य अवगल्भादिप्रातिपदिकेभ्यः क्यङ्विधानेऽप्यन्यत्र सुवन्तादेव क्यङिति क्यङो विषय एव नास्ति । तथा च केवलादुपसर्गान्तरविशिष्टाच्च क्यङप्ययुक्त इति चेति अत्र वदन्ति-प्रातिपदिकेभ्यः क्विप् सुबन्तेभ्यः क्यङिति विषयभेदेनापि गल्भति गल्भायते प्रगल्भति प्रगल्भायते इत्यादि सिध्यत्येवेति । स्यादेतत्—गल्भ धार्ष्ट्ये इत्यादीनामनुदात्तत्वादवगल्भते इत्यादिप्रयोगसिद्धावपि अवगल्भादिपूत्तरवार्तिकेन क्विपि सत्यवगल्भतीत्याद्यनिष्टप्रयोगः स्यात्तद्वारणार्थम् 'आचारेऽवगल्भ' इति वार्तिकारम्भस्यावश्यकतया सामर्थ्यस्योपक्षीणत्वाद् 'भूतपूर्वादप्यनेकाच आम्' इत्येतदप्ययुक्तमिति चेत् । सत्यम् । अत्र ह्ययमाशयः—'सार्वप्रातिपदिकेभ्यः—' इति वार्तिके वाग्रहणेन व्यवस्थितविभाषाश्रीयते । तथा च 'अवगल्भक्लीबहोडेभ्यः—' क्विपोऽभावादनिष्टप्रयोगो न भविष्यतीति स्वीकृते सामर्थ्यं नोपक्षीणमिति दिक् । **पदकार्यं नेति** । सवर्णदीर्घो यद्यपि पदमात्रकार्यं न भवति,

रूपम् । अ इवाचरति अति अतः अन्ति । प्रत्ययग्रहणमपनीय अनेकाच इत्युक्तेर्नाम् । औ अतुः उः, द्वित्वम्, 'अतो गुणे' ( सू० १९१ ) 'अत

---

कृष्णशब्दात् क्विबन्ताल्लडादौ शपि 'अतो गुणे' इति पररूपमित्यर्थः। कृष्णांचकार। कृष्णिता। कृष्णिष्यति। कृष्णतु। अकृष्णत्। कृष्णेत्। कृष्णायात्। अतो लोपात्परत्वाद् 'अकृत्सार्व—' इति दीर्घः। पूर्वविप्रतिषेधस्य विहितत्वादतो लोप इत्यन्ये। अ इवेति। अः विष्णुः। स इवेत्यर्थः। अतीति। शपा पररूपम्। असि अयः अय। आमि आवः आमः। क्विप्रत्ययान्तत्वाल्लिटि 'कास्प्रत्ययात्—' इत्याम्प्रत्ययमाशङ्क्याह प्रत्ययग्रहणमपनीयेति। औ अतुः उः इति सिद्धरूपप्रदर्शनम्। तत्र प्रक्रियां दर्शयति द्वित्वमिति। णलि 'द्विर्वचनेऽचि' इति लोपस्य निषेध इति भावः। अतो गुणे इति। द्वित्वे कृते अ अ अ इति स्थिते अन्तरङ्गत्वादतो लोपं

---

तथापि पदस्य जायमानं कार्यं नेत्यत्र तात्पर्यं बोध्यम्। तनोतीति तत्, स इव आचरति ततति, अत्र जश्त्वं न । त्वगिव आचरति त्वचति, अत्र कुत्वं नेत्याद्यपि बोध्यम्। द्वित्वमिति। अ णल् इति स्थिते 'द्विर्वचनेऽचि' इति निषेधादतो लोपो न भवतीति भावः। 'अतो गुणे' इति द्वित्वे कृतेऽप्यतो लोपो न भवति, अन्तरङ्गेणानेन बाधितत्वादिति भावः। यद्यप्यत्र फले विशेषो नास्ति तथापि शास्त्रप्राप्तिक्रममनुरुध्योक्तम्। यद्यप्येवं 'वार्णादाङ्गं बलीयः' इति परिभाषयाऽतो लोप एवोचित इति चेत्। मैवम्, तस्याः समानाश्रये कारश्चकारेत्यादौ प्रवृत्तिस्वीकारान्न तु व्याश्रयेऽपि। न च परत्वान्नित्यत्वाच्च 'अत आदेः' इत्यनेनैव प्रथमं भाव्यमिति वाच्यम्, तस्य बहिरङ्गत्वेनासिद्धत्वात्। न चापवादत्वाद् 'अत आदेः' इत्यनेन भाव्यमिति वाच्यम्, अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यत इत्युक्तत्वात्। आनर्देत्यादौ तस्य चरितार्थत्वात्। तत्र हलादिःशेषात्प्रागेव परत्वाद् 'अत आदेः—' इत्यस्य प्रवृत्तेः। न च नित्यत्वाद्धलादिः शेष एव प्रथमं स्यादिति वाच्यम्, नित्यत्वस्य 'अत आदेः' इत्यत्रापि तुल्यत्वात्। एतच्च मनोरमानुसारेणोक्तम्। केचिदत्र वदन्ति। 'अतो गुणे' इति पररूपापवादस्य 'अत आदेः' इत्यस्य आनर्देत्यादौ चरितार्थत्वादन्तरङ्गमेव भवतीति मनोरमोक्तं चिन्त्यम्। स्वविषयमध्य एकत्रोदाहरणे चरितार्थस्योदाहरणान्तरेऽपि प्रवृत्त्यभ्युपगमात्। न हि गोद इत्यत्र 'आतोऽनुपसर्गे कः' इति चरितार्थमिति गोद इत्यादौ न प्रवर्तते तस्मादणं बाधित्वा कप्रत्ययो यथा स्वविषये सर्वत्र प्रवर्तते तथेहापि प्रवर्तत इति। तदपरे न क्षमन्ते। गोदगोपादौ सर्वत्राणः कस्य च प्राप्तिसंभवे विनिगमनाविरहादणं बाधित्वा कप्रत्यय एव भवति। प्रकृते त्वानर्देत्यादौ हलादिःशेषात्प्राग् 'अतो गुणे' इत्यस्य प्राप्त्यभावाद्वैषम्यमस्तीति। ननु 'अत आदेः' इत्यस्य पररूपापवादत्वमेषामास्तेत्यत्र यदुक्तं तत्कथं संगच्छते। आनृधतुरित्यादौ 'आद् गुणः' इति गुणस्यापि प्राप्तेः। न च यथा सवर्णदीर्घो यण्गुणयोरपवादस्तथायमप्युभयोरपवाद इति वाच्यम्, एवमप्यानर्देत्यत्रैव हलादिः—शेषात्प्रागेवासेत्यत्रापि 'अत आदेः' इत्यस्य प्रवृत्तौ किं तेन पररूपापवादकत्वकथनेनेति चेत्। अत्र केचिदाहुः—द्वन्द्वापवाद एकशेष इति केषांचित्प्रवादे यथाऽपवादशब्दो

आदेः' ( सू० २२४८ ) इति दीर्घः, णल औ, वृद्धिः। अतुसादिषु तु 'आतो लोप इटि च' ( सू० २३७२ ) इत्याल्लोपः। मालेवाचरति मालाति। लिङ्गविशिष्टपरिभाषयैकादेशस्य पूर्वान्तत्वाद्वा क्विप्। मालांचकार। लङि अमालात्, अत्र हल्ङ्यादिलोपो न, ङीप्साहचर्यादापोऽपि सुंरेव लोपविधानात्। इट्-

---

बाधित्वा पररूपमिति भावः। अत आदेरिति। न च परत्वान्नित्यत्वादपवादत्वाच्च 'अतो गुणे' इत्यस्मात्प्राग् 'अत आदेः' इत्यस्य प्रवृत्तिरिति वाच्यम्, तस्य बहिरङ्गत्वाद् 'अत आदेः' इत्यस्यापवादत्वेऽपि आनर्देत्यत्र हलादिशेषात्प्रागेव परत्वाद् 'अत आदेः' इत्यस्य चरितार्थत्वेन बाधकत्वासंभवाद् 'अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते' इत्युक्तेरित्यन्यत्र विस्तरः। यद्यप्यत्र प्रक्रियाव्युत्क्रमे फलविशेषो नास्ति, तथापि न्याय्यत्वादेवमुक्तम्। णल औ इति। पररूपे दीर्घे च आ अ इति स्थिते 'आत औ णलः' इत्यौत्वमिति भावः। वृद्धिरिति। आ औ इति स्थिते 'वृद्धिरेचि' इति वृद्धिरित्यर्थः। तथा च औ इति रूपं परिनिष्ठितम्। अतुसादिष्विति। अ अतुस्, अ उस, इति स्थिते द्वित्वे पररूपे 'अत आदेः' इति दीर्घे आतो लोप इत्यर्थः। अतुः उः इति प्रत्ययमात्रं शिष्यते। थलि इटि द्वित्वे दीर्घे आल्लोपे, इथ अथुः अ। औ इव इम। वस्तुतस्तु 'कास्यनेकाज्ग्रहणम्–' इति वार्तिकव्याख्यावसरे प्रत्ययग्रहणमपनीयेति भाष्ये नोक्तम्। कासेश्च प्रत्ययान्ताच्च आमिति लभ्यते। अत एव 'आचारेऽवगल्भक्लीबहोडेभ्यः–' इति वार्तिके अवगल्भांचक्र इत्यादौ अन्त्यवर्णस्यानुवन्धत्वेन एकाच्त्वेऽपि 'कास्प्रत्ययात्–' इत्यामित्युक्तं भाष्ये इति शब्देन्दुशेखरे प्रपञ्चितम्। इता। इष्यति। अतु, अतात् अताम् अन्तु। अ, अतात् अतम् अत। आनि आव आम। आत् आताम् आन्। आः आतम् आत। आम् आव आम। विधिलिङि एत एताम् एयुः। एः एतम् एत। एयम् एव एम। यात् यास्ताम् यासुः। लुङि 'इट ईटि' इति सिज्लोपे 'आटश्च' इति वृद्धिं बाधित्वा परत्वादतो लोपे इटा सह आटो वृद्धौ ऐत ऐष्टाम् ऐषुः इत्यादीति केचित्। आर्धधातुकोपदेशकाले एव परत्वादतो लोपे अङ्गस्याभावादाट् नेत्यन्ये। ईत् इष्टाम् इत्यादि। ऐष्यत ननु मालाशब्दस्य टाप्प्रत्ययान्तत्वेन प्रातिपदिकत्वाभावात्ततः कथं क्विविधिरत आह लिङ्गविशिष्टेति। वस्तुतस्तु आबन्तेभ्य आचारे क्विब् नास्त्येवेति विश्वपाशब्दनिरूपणे प्रपञ्चितम्। ङीप्साहचर्यादिति। ङ्यन्तादाचारक्विबन्ताद्

---

बाधकपरः, 'सरूपाणाम्—' इत्येकशेषानारम्भे हि स्वाद्युत्पत्तौ द्वन्द्वस्य प्रवृत्तेः, एकशेषसूत्रारम्भे तु पदान्तराभावेन तदप्रवृत्तेः, तथाऽत्रत्यापवादशब्दोऽपि बाधकपरः। 'अत आदेः' इत्यनारम्भे हि हलादिःशेषे पररूपप्रवृत्तावेवामासेति स्यात्। आरब्धे तु तत्सूत्रे परत्वाद्धलादिः शेषात्प्रागेव दीर्घप्रवृत्त्या पररूपस्याप्रसक्तेरिति। यद्यप्यासेत्यादौ प्रथमतः 'अत आदेः' इति दीर्घाकरणेऽपि हलादिः शेषे पररूपे च कृते तस्य पूर्वान्तिवद्भावे सति अभ्यासग्रहणेन ग्रहणाद् 'अत आदेः' इति दीर्घप्रवृत्त्या समीहितरूपसिद्धिः, तथाप्यानर्देत्यादि न सिध्यत्येव। तत्र हि 'तस्मान्नुड् द्विहलः' इति दीर्घीभूतादकारान्नुटि नकारोपर्यकारश्रवणाभावप्रसङ्गादिति दिक्। प्रत्ययान्तत्वेनाप्रातिपदि-

सकौ, अमालासीत्, कविरिव कवयति । आशीर्लिङि कवीयात् । 'सिचि वृद्धि–' (सू० २२९७) इत्यत्र धातोरित्यनुवर्त्य धातुरेव यो धातुरिति व्याख्यानान्नामधातोर्न वृद्धिरिति कैयटादयः; अकवयीत् । माधवस्तु नामधातोरपि वृद्धिमिच्छति, अकवायीत् । विरिव वयति । विवाय विव्यतुः । अवयीत्, अवायीत् । श्रीरिव श्रयति । शिश्राय शिश्रियतुः । पितेव पितरति । आशिषि रिङ् । पित्रियात् । भूरिव भवति । अत्र 'गातिस्था—' ( सू० २२२३ ) इति, 'भुवो वुक्—' ( सू० २१७४ ) इति, 'भवतेः—' ( सू० २१८१ ) इति च न भवति । अभिव्यक्तत्वेन धातुपाठस्थस्यैव तत्र ग्रहणात्, अभावीत् । बुभाव । द्रूरिव द्रवति । 'णिश्रि—' ( सू० २४१२ ) इति चङ् न, अद्रावीत् । २६६६

**अनुनासिकस्य क्विझलोः क्ङिति ।** ( ६—४—१५ ) अनुनासिकान्तस्यो-

---

गौरीशब्दात् लुङि अगौरयत् इत्यादौ तिस्योऽर्थन्तात्परत्वासंभवात्. तत्साहचर्यादावन्तादपि न तयोर्लोप इत्यर्थः । **कवयतीति** । शपि गुणायादेशौ । **कवीयादिति** । 'अकृत्सार्व–' इति दीर्घः । लुङि अकवि ईत् इति स्थिते सिचि वृद्धिमाशङ्क्याह **सिचि वृद्धिरित्यत्रेति** । सिचा धातोराक्षेपतो लाभेऽपि 'ऋत इद्धातोः' इत्यतस्तदनुवृत्तेर्धातुरेव यो धातुरिति लभ्यते इति भावः । **कैयटादय इति** । 'इको गुणवृद्धी' इति सूत्रे गोशब्दादाचारक्विपि अगवीदित्युपकम्य तथोक्तत्वादिति भावः । **माधवस्त्विति** । 'सिचिवृद्धिः-' इत्यत्र 'ऋत इद्धातोः' इत्युतो धातुग्रहणानुवृत्तौ मानाभावेन धातुरेव यो धातुरित्युक्तार्थालाभादिति तदाशयः । वस्तुतस्तु 'इको गुणवृद्धी' 'वदव्रजहलन्तस्याचः' इत्यादिसूत्रस्थभाष्ये सिचि परत एजन्तं नास्तीत्युक्तत्वादेजन्तेभ्य आचारक्विव् नास्त्येवेति शब्देन्दुशेखरे प्रपञ्चितम् । **विरिवेति** । विः पक्षी स इवेत्यर्थः । **अभिव्यक्तत्वेनेति** । 'अभिव्यक्तपदार्था ये–' इति न्यायेनेति भावः । **अभावीदिति** । इह 'गातिस्था–' इति सिचो न लुक् । **बुभावेति** । इह न वुक् । अभ्यासस्य अत्वं च न । **चङ् नेति** । 'णिश्रि–' इति सूत्रे दुग्रहणेन धातुपाठस्थस्यैव ग्रहणादिति भावः । **अनुनासिकस्य** । अङ्गस्येत्यधिकृतमनुनासिकेन विशेष्यते तदन्तविधिः । 'नोपधायाः' इत्यत उपधा इति 'ढ्रलोपे-' इत्यतो दीर्घ इति चानुवर्तते, तदाह **अनुनासिकान्तस्ये-**

---

कत्वात्क्विपोऽनुत्पत्तिमाशङ्क्याह **लिङ्गविशिष्टेत्यादि** । **सिचि वृद्धिरित्यत्रेति** । सिचा धातोराक्षेपाद् 'ऋत इद्धातोः' इत्यतो धातोरित्यनुवर्तनाच्च धातुरेव यो धातुरिति व्याख्या लभ्यते इति ज्ञेयम् । **विरिवेति** । विः पक्षी । **अनुनासिकस्य** । अङ्गस्येति विशेष्यसन्निधानात्तदन्तलाभः । 'ढ्रलोपे—' इत्यतो दीर्घग्रहणम्, 'नोपधायाः' इत्यत उपधाग्रहणं चानुवर्तते, तदाह **अनुनासिकान्तस्येत्यादि** । **झलादाविति** । एतच्च 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया लभ्यते । झलादौ किति शान्तो दान्त इत्युदाहरणम्, ङिति तु यङ्लुकि तसि शंशान्तः, दंदान्तः । **पथीनतीति** । अन्तरङ्गत्वाद्दीर्घस्ततो न गुण इत्याहुः । 'इन्हन्—' इत्यनेन शाववेति नियमाद्दीर्घाभावे गुणे सति पथेनतीत्येव रूपमित्यन्ये । येषामिन्नादीनां शावुपधादीर्घः

पयाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति ।। राजेव राजानति । पन्था इव पथीनति । । ऋभुक्षीणति । द्यौरिव देवतीति माधवः । अत्र ऊठि द्यवतीत्युचितम् । क इव कति । चकौ इति हरदत्तः । माधवस्तु 'ण्यल्लोपौ–' इति वचनाण्णलि वृद्धिं बाधित्वा अतो लोपात् चक इति रूपमाह । स्व इव सस्वौ, सस्व । यत्तु स्वामास स्वांचकार इति तदनाकरमेव ।

---

त्यादिना । इदामतीति । 'हलन्तेभ्य आचारक्विब् नास्ति' इति 'ह्रस्वनद्यापः—' इति सूत्रभाष्ये स्पष्टमिति शब्देन्दुशेखरे स्थितम् । पथीनतीति । पथिन्शब्दात् क्विपि 'अनुनासिकस्य–' इति इकारस्य दीर्घः । इदं तु माधवानुरोधेन । क्विबभ्युपगमेऽपि तिपि पथेनतीत्येव युक्तम्, 'इन्हन्–' इति नियमेन दीर्घाप्राप्तेः । न च 'नियमस्य सजातीयापेक्षत्वात् सुबानन्तर्ये एवायं नियमो नान्यत्रेति वाच्यम्, तथा सति वृत्रघ्नः स्त्री वृत्रघ्नीत्यत्रापि अल्लोपं बाधित्वा अन्तरङ्गत्वाद् 'अनुनासिकस्य–' इत्युपधादीर्घापत्तेरित्याहुः । देवतीति । दिव्शब्दादाचारक्विबन्तात् शपि लघूपधगुणः । 'नः क्ये' इति नियमेन अपदान्तत्वाद् 'दिव उत्' इत्युत्त्वं नेति भावः । अत्र ऊठीति । दिव्शब्दात् क्विपि 'च्छ्वोः–' इति वकारस्य ऊठि कृते लघूपधगुणं बाधित्वा परत्वादिकारस्य यणि द्यूशब्दात् शपि ऊकारस्य गुणे अवादेशे च द्यवतीति रूपमुचितमित्यर्थः । चकाविति । कशब्दात् क्विबन्ताल्लिटि णलि द्वित्वे चुत्वे चक अ इति स्थिते ककारादकारस्य अतो लोपात्परत्वाद् वृद्धौ आकारे 'आत औ णलः' इत्यौत्वे वृद्धिरेकादेश इति भावः । माधवस्त्विति । चक अ इति स्थिते पूर्वविप्रतिषेधाद् वृद्धिं बाधित्वा ककारादकारस्य अतो लोपे कृते णलोऽकारेण सह चक इति रूपमित्यर्थः । नचैवं सति अ इवाचरति अति औ अतुः इत्यत्रापि लिटि 'अत आदेः' इति दीर्घं बाधित्वा अतो लोपः स्यादिति वाच्यम्, ण्यल्लोपाविति पूर्वविप्रतिषेधलभ्यः अतो लोपः संनिहितमेव 'अकृत्सार्व—' इति दीर्घं बाधते, न तु 'अत आदेः' इति दीर्घमपि, 'अनन्तरस्य—' इति न्यायादिति माधवाशय

---

क्रियते परमदण्डीनीत्यादौ तेषामेव दण्डिन्वृत्रहन्नादीनाम् 'इन्हन्–' इति नियमो न तु पथ्यादीनाम् । तेषां तु घौ परतः सुपन्थानीत्यादावुपधादीर्घप्रवृत्तावपि 'इतोऽत्सर्वनामस्थाने' इत्यत्वे कृते 'इन्हन्–' इति नियमाप्रवृत्तेः । अन्यथा पन्थानौ पन्थान इति न सिध्येत्, तथा च पथीनतीत्याद्येव साध्वित्यपरे । देवतीति माधव इति । अपदान्तत्वाद्दिव उत्त्व । अत्रेति । लघूपधगुणं बाधित्वान्तरङ्गत्वादूठि यण्, तस्मिन्कर्तव्ये बहिरङ्गस्याप्यूठो नासिद्धत्वम्, 'नाजानन्तर्ये-' इति निषेधात् । न च वार्णादाङ्गस्य बलीयस्त्वाद्यणं बाधित्वा लघूपधगुणः स्यादिति वाच्यम्, व्याश्रयत्वात् । अत एव सिवेरौणादिके नप्रत्यये स्योनशब्दः सिध्यतीति भावः । क इवेति । को ब्रह्मा । चक इतीति । नन्वेवम् औ अतुरित्यत्रापि 'अत आदेः' इति दीर्घं बाधित्वा 'अतो लोपः' एव स्यादिति चेत् । अत्राहुः—'ण्यल्लोपौ–' इति वचनेन जायमानो योऽतो लोपः स तु सन्निहितमेव 'अकृत्सार्व–' इति दीर्घं बाधते, 'अनन्तरस्य–' इति न्यायात् न तु व्यवहितमपि 'अत आदेः' इति दीर्घमिति माधवाशयाज्ञानेन तद्ग्रन्थस्य

२६६७ **भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।** ( ३-१-१२ ) अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्याद्धलन्तानामेषां लोपश्च । अभृशो भृशो भवति भृशायते । अच्वेः इति पर्युदासबलाद् अभूततद्भावे इति लब्धम् । तेनेह न—क्व दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क्व भवन्तीत्यर्थः । सुमनस्, अस्य सलोपः, सुमनायते । चुरादौ 'संग्राम युद्धे' इति पठ्यते । तत्र संग्राम इति प्रातिपदिकम् । तस्मात् 'तत्करोति—' इति णिच्

---

इत्याहुः । **तदनाकरमेवेति** । अनेकाच्त्वाभावादिति भावः । वस्तुतस्तु प्रत्ययग्रहणमपनीयेत्यस्य भाष्ये अदर्शनात् प्रत्ययान्तत्वादाम्भवत्येवेति युक्तमेवेत्यनुपदमेवोक्तम् । **भृशादिभ्यो** । भवनं भूः, भावे क्विप्, तदाह **भवत्यर्थे इति** । भवने इत्यर्थः । **क्यङ् स्यादिति** । 'कर्तुः क्यङ् सलोपश्च' इत्यतस्तदनुवृत्तेरिति भावः । **हलन्तानामेषामिति** । भृशादिषु ये हलन्तास्तेषां लोपः क्यङ् चेत्यर्थः । ननु 'अभूततद्भावे' इति कुतो लब्धमित्यत आह **अच्वेरिति पर्युदासबलादिति** । अभूततद्भावग्रहणमिति वार्तिकमेतल्लब्धार्थकथनपरमिति भावः । **ये रात्रौ भृशा इति** । प्रकाशातिशयवन्त इत्यर्थः । भृशादिषु हलन्तमुदाहरति **सुमनस् इति** । **सुमनायते इति** । असुमनाः सुमना भवतीत्यर्थः । यद्यपि स्त्रियामित्यधिकारे अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासनसूत्रे सुमनश्शब्दस्य नित्यं बहुवचनं विहितम्, तथापि तद्देवादिपर्यायरूढविषयम् । सु शोभनं मनो यस्येति सुमनाः इति बहुव्रीहिर्यौगिक इति भावः । सुमनायते इति क्यङि सलोपे 'अकृत्सार्व—' इति दीर्घः । ननु लङि मनश्शब्दात्प्रागटि 'स्वमनायते' इति वक्ष्यमाणमनुपपन्नम्, अङ्गस्य अड्विधानात् सुमनश्शब्दस्य समस्तस्यैव लङः प्रत्यङ्गत्वात् 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति न्यायादित्याशङ्क्याह **चुरादौ 'संग्राम युद्धे' इति पठ्यते इति** । ततश्च क्वचित् सोपसर्गपाठबलादन्यस्मात् सोपसर्गादाचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इति विज्ञायते इत्यर्थः । ननु चुरादौ संग्रामेति समस्तो धातुः, न तु सोपसर्गो ग्रामशब्दः । एवं चास्य प्रातिपदिकत्वाभावात् सोपसर्गात् क्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमिदं गमकमित्यत आह **तत्र संग्राम इति प्रातिपदिकमिति** । 'ग्रसेरा च' इत्यौणादिके मन्प्रत्यये निष्पन्नस्य ग्रामशब्दस्य 'कृत्तद्धित—' इति प्रातिपदिकत्वम् । अव्युत्पत्तिपक्षे 'अर्थवदधातुः—' इति प्रातिपदिकत्वमित्यर्थः । ननु चुरादावस्य पाठो धात्वधिकारविहितचौरादिकणिजर्थः । एवं च प्रातिपदिकत्वेन चुरादौ तस्य पाठो व्यर्थ इत्यत आह **तस्मादिति** । तस्मात् संग्राम इति प्रातिपदिकात् चौरादिकणिजसंभवेऽपि 'तत्करोति—' इत्यर्थे णिच्

---

विरोध इति । **अनाकरमेवेति** । अनेकाच्त्वाभावादित्यर्थः । अन्ये तु भाष्ये प्रत्ययग्रहणमपनीयेत्यनुक्तत्वात्प्रत्ययान्ततया स्वामासेत्यादि रूपं शुद्धमेवेत्याहुः । **भृशादिभ्यो** । भुवीत्येतद्व्याचष्टे **भवत्यर्थ इति** । भृश, शीघ्र, मन्द, पण्डित, दुर्मनस्, सुमनस्, उन्मनस्, इत्यादयो भृशादयः । क्व दिवेत्यादि भाष्यकारीयं प्रत्युदाहरणं व्याचष्टे ये रात्रावित्यादिना । **प्रातिपदिकमिति** । न त्वयं धातुः, 'ग्रसेरा

सिद्धः । तत्सन्नियोगेनानुबन्ध आसज्यते । युद्धे । योऽयं ग्रामशब्द इत्युक्तेऽपि सामर्थ्यात्संग्रामशब्दे लब्वे विशिष्टपाठो ज्ञापयति—'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते, इति । तेन मनः शब्दात्प्रागट् । स्वमनायते । उन्मनायते । उदमनायत । एवं च अवागल्भत अवा-

---

सिद्ध इत्यर्थः । ननु 'तत्करोति—' इत्यनेनैव संग्रामशब्दात् प्रातिपदिकाण्णिच्सिद्धेः किमर्थमिह चुरादौ तस्य पाठ इत्यत आह तत्सन्नियोगेनेति । णिच्सन्नियोगेन अकारस्य इत्संज्ञकस्य अनुदात्तेत्त्वार्थकस्य आसञ्जनार्थः । न च मकारादकारस्य इत्संज्ञकत्वे अल्लोपस्य णिनिमित्तकत्वाभावादससंग्रामत इत्यत्र 'णौ चङ्युपधायाः—' इत्युपधाह्रस्वः स्यादिति वाच्यम्, संग्रामेत्ययं हि कथादित्वाददन्तः । तस्मादकारो भिन्न एव अनुबन्धत्वेनासज्यते इत्यर्थः । एवं च णौ अतो लोपे सति णावग्लोपित्वान्नोपधाह्रस्वः । कथादित्वलक्षणादन्तत्वलाभायैवास्य चुरादौ पाठ इति भावः । ननु चुरादौ संग्रामशब्दस्य 'तत्करोति - ' इति णिचि परे अस्त्वनुबन्धासङ्गः । तथापि आचारक्विपि उपसर्गस्य न धातुसंज्ञाप्रवेश इत्यत्र कथमस्य ज्ञापकतेत्यत आह युद्धे इति । सामर्थ्यादिति । ग्राम युद्धे इत्येतावतैव संग्रामशब्दो लभ्यते, केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाभावादित्यर्थः । विशिष्टपाठ इति । संग्रामशब्दपाठ इत्यर्थः । ज्ञाप्यमर्थमाह समानाकारमिति । संग्रामशब्दे युद्धवाचिनि समित्यस्य क्रियायोगाभावात् समानाकारमित्युक्तम् । धातुसंज्ञाप्रयोजके इति । क्विबादाविति शेषः । पृथक् क्रियते इति । तथा च न तस्य धातुसंज्ञाप्रवेश इत्यर्थः । ततः किमित्यत आह तेनेति । सम् इत्यस्य धातुसंज्ञाप्रवेशाभावेनेत्यर्थः । तथा च सुमनश्शब्दाद् आचारक्विपि विवक्षिते मनश्शब्दमात्रस्य धातुत्वात्ततो लङि मनश्शब्दस्यैवाङ्गत्वात्ततः प्रागेव अट् । न तु सुमनस् इति समुदायात्प्रागित्यर्थः । एतेन संग्रामयतेरेव सोपसर्गाद् नान्यस्मादित्यादि भाष्यं भृशादिभ्य इति सूत्रस्थं व्याख्यातमिति बोध्यम् । उन्मनायते इति । भृशादित्वात् क्यङि सलोपः । एवं चेति । एवमुक्तरीत्या 'आचारेऽवगल्भ—' इति क्विब्विधावपि अवेत्यस्य पृथक्करणाद् गल्भशब्दात्प्रागेव अड् इत्यर्थः । ननु आ ऊढः ओढः, 'कुगति—' इति समासः । अस्माद् भृशादित्वात् क्यङि ओढायते इत्यादि रूपम् । अत्रापि आङो धातुसंज्ञाप्रवेशो न स्यात् । तत्र यद्यपि लङि ऊढशब्दाद् वा आङो वा प्राग् प्राटि न रूपे विशेषः उभयथापि औढायतेत्येव रूपं सिद्धमेव । तथापि ओढायेति क्यङन्तात् क्त्वाप्रत्यये अतो लोपे

---

च' इत्यौणादिकेन मन्प्रत्ययान्ततया निष्पादितत्वात् एवं च वक्ष्यमाणज्ञापकं संगच्छत इति भावः । अनुबन्ध इति । संग्रामेति मशब्दाकाराद् भिन्नोऽकारोऽनुबन्ध इत्यर्थः । तथा च अत्र 'अतो गुणे' इति पररूपं ज्ञेयम् । यदि तु मकारादकारोऽनुबन्धः स्यात्तर्हि अससंग्रामतेत्यत्र 'णौ चङि—' इत्युपधाह्रस्वः स्यात् । णिच् सन्नियोगेनानुबन्धकरणे तु अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्याप्रवृत्त्या 'णिचश्च' इति कर्तृगमिनि क्रियाफल एवात्मनेपदं स्यान्न तु परगामिनीति विवेकः । सामर्थ्यादिति । केवलस्य ग्रामशब्दस्य युद्धे प्रयोगाभावादिति-भावः । क्रियायोगाभावादुप-

गल्भिष्ट्वेत्यादावप्यवेत्यस्य पृथक्करणं बोध्यम् । ज्ञापकं च सजातीयविषयम् । तेन यत्रोपसर्ग-स्वरूपं सकलं श्रूयते न त्वादेशेनापहृतं तत्रैव पृथक्कृतिः । एवं च आ ऊढ ओढः, स इवाचर्य ओढायित्वा, अत्र उन्मनाय्य अवगल्भ्य इतिवन्न ल्यप् । ज्ञापकस्य विशेषविषयत्वे पाठ्यवार्तिकं तद्भाष्यं च प्रमाणम् । तथाहि 'उस्योमाङ्क्ष्वाटः प्रतिषेधः' (वा० ३६३६) । उस्योमाङोश्च पर-योराटः पररूपं नेत्यर्थः। उभ्रामैच्छत् औस्रीयत् । औङ्कारीयत् । औढीयत् । 'आटश्च' (सू० २६९)

---

ओढायित्वेत्येवेष्यते, अत्र क्यङि चिकीर्षिते उक्तरीत्या पृथक्करणे पृथक्कृतस्य आङः 'कुगति-प्रादयः' इति क्त्वाप्रत्ययान्तेन समासे सति 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् स्यादित्यत आह ज्ञापकं च सजातीयविषयमिति। तदेवोपपादयति तेनेति । चुरादौ 'संग्राम युद्धे' इति सम्ग्रहणस्य उक्तार्थे पृथक्करणे ज्ञापकस्य सजातीयविषयकत्वाश्रयणेन यत्र उपसर्ग-स्वरूपम् अविकृतं श्रूयते नत्वेकादेशेनापहृतं तत्रैव उपसर्गस्य पृथक्कृतिरिति विज्ञायते इत्यर्थः, संग्रामे सम्ग्रहणस्य ज्ञापकस्य एवंविधत्वादिति भावः । ततः किमित्यत आह एवं चेति । ओढायित्वेति । ओढशब्दाद् भृशादित्वात् क्यङि ओढायेत्यस्मात् क्यङन्तात् क्त्वाप्रत्यये अतो लोपे रूपम् । अत्रेति । अत्र न ल्यबित्यन्वयः । क्यङि विवक्षिते आङ एकादेशेनापहृतत्वेन पृथक्करणाभावे सति तस्य आङः क्त्वाप्रत्ययान्तेन समासाभावान्न ल्यबिति भावः । उन्मनाय्य, अवगल्भ्य इतिवदिति व्यतिरेकदृष्टान्तः । उन्मनस्शब्दाद् भृशादित्वादाचारे क्यङि सकारलोपे 'अकृत्सार्व—' इति दीर्घे उन्मनायेत्यस्मात्, क्त्वो ल्यपि, अतो लोपे, उन्मनाय्येति रूपम् । अवगल्भशब्दाद् आचारेऽवगल्भेति क्विबन्तात् क्त्वो ल्यपि रूपम् । अत्र उदित्यस्य अवेत्यस्य च उपसर्गस्वरूपस्य अनपहृतत्वेन क्यङि क्विपि च विवक्षते पृथक्कृततया तयोः क्त्वान्तेन समासे सति ल्यबुचितः । इह तु ओढायित्वेत्यत्र न तथेति व्यतिरेकदृष्टान्तोऽयम् ज्ञापकस्य सजातीयत्वे प्रमाणं दर्शयति ज्ञापकस्येति । पाठं वार्तिकं दर्शयति उस्योमाङ्क्ष्विति । उसि, ओम, आङ् एषां द्वन्द्वः । षष्ठस्य प्रथमे पादे 'ओमाङोश्च' इति सूत्रे इदं वार्तिकं पठितम्, यद्व्याचष्टे उस्योमाङोश्च परयोरिति । 'एङि पररूपम्' इत्यतः पररूपग्रहणानुपपत्ति मत्वाह पररूपं नेति । उसि तावदु-दाहरति औस्रीयदिति । उस्रामात्मन ऐच्छदित्यर्थे 'सुप आत्मनः—' इति क्यज-

---

सर्गो नेत्यभिप्रेत्याह समानाकारमिति । पूर्वपदमिति । तच्च समास एव संभवति । तेन आन्दोलयित्वा प्रेङ्खोलयित्वेत्यादौ आ-प्रेत्यादीनां न पृथक्करणम् । अन्यथा तेषां क्त्वा-प्रत्ययान्तेन समासे सति ल्यप् स्यादिति भावः पृथक्करणस्य फलमाह तेनेति । सुमिमनायिषति उन्मिमनायिषतीत्यादौ मनश्शब्दस्य द्विर्वचनं पृथक्करणस्य फलमिति बोध्यम् । अवागल्भ-तेति । 'आचारेऽवगल्भ—' इति क्विब्विधौ अवेत्यस्य पृथक्करणाद् गल्भशब्दात्प्रागट् । किं तत्साजात्यमित्यत आह तेनेति । उस्रामिति । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरः ।औस्रीयदिति । क्यजन्तादुस्राशब्दाल्लङि अङ्गस्याटि च कृते 'उस्यपदान्तात्' इति

इति चशब्देन पुनर्वृद्धिविधानादिदं सिद्धमिति भाष्ये स्थितम् । २६६८ लोहितादिडाज्भ्यः क्यष् । ( ३—१—१३ ) लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् । २६६९ वा क्यषः । ( १—३—९० ) क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति, लोहितायते । अत्र अच्वेः इत्यनुवृत्त्या अभूततद्भावविषयत्वं

---

ताल्लसि उस्रीयशब्दादङ्गात्प्रागाटि कृते 'उस्यपदान्तात्' इति पररूपं प्राप्तमनेन निषिध्यते । अर्थवद्ग्रहणपरिभाषा त्वनित्या, अस्मादेव भाष्योदाहरणात् । अन्यथा भिन्द्युरित्यादौ पररूपं न स्यात्, आगमसहितस्य युस एवार्थवत्त्वादिति भावः । ओमि परत उदाहरति औङ्कारीयदिति ओढीयदिति । ओङ्कारशब्दात् क्यजन्ताल्लसि अङ्गस्य आटि कृते 'ओमाङोश्च' इति पररूपं प्राप्तमनेन निषिध्यते । आङि उदाहरति आटश्चेति । आ ऊढ ओढः, तस्मात् क्यजन्ताल्लसि अङ्गस्य आटि कृते 'ओमाङोश्च' इति पररूपं प्राप्तमनेन निषिध्यते । उदाहरणत्रयमिदं भाष्ये स्थितम् । तत्र यदि उपसर्गस्वरूपस्य एकादेशेनापहारेऽपि पृथक्करणं स्यात् तर्हि क्यचि विवक्षिते आसः पृथक्कृतौ सत्यां धातुवहिर्भावादूढशब्दात् प्रागाङःपरत्र आटि सति पररूपस्याप्रसक्तेरासि पररूपप्रतिषेधो व्यर्थः स्यात् । उक्तज्ञापकस्य सजातीयविषयत्वे तु अत्र आस एकादेशेनापहारात् पृथक्करणाभावादोढशब्दात् प्रागाडागमे सति आसि पररूपप्राप्तेस्तन्निषेधोऽर्थवान् भवति । अतो ज्ञापकस्य सजातीयविषयत्वे 'उस्योमाङ्क्षु—' इत्याङ्ग्रहणम् औढीयदिति तदुदाहरणपरभाष्यं च अत्र प्रमाणमिति भावः । ज्ञापकस्य सजातीयविषयत्वे प्रमाणान्तरमाह आटश्चेति । चशब्देनेति । 'आटश्च' इति चकारः पुनर्वृद्धिविधानार्थः । तथा च आटोऽचि वृद्धिरेव यथा स्याद् नान्यत्पररूपमिति लभ्यते इत्यपि षष्ठाध्याये 'ओमाङोश्च' इति सूत्रे 'आटश्च' इति सूत्रे च भाष्ये स्थितमित्यर्थः । एवं च एतद्वार्तिकप्रत्याख्यानपरः सौत्रश्चकारस्तद्भाष्ये ज्ञापकमित्युक्तं भवति । लोहितादि । भवत्यर्थे इति । 'भृशादिभ्यो भुवि—' इत्यतो भुवि इति अनुवृत्तेरिति भावः । वा क्यषः । परस्मैपदमिति । 'शेषात्कर्तरि—' इत्यतस्तदनुवृत्तेरिति भावः । लोहितायतीति । अलोहितो लोहितो भवतीत्यर्थः । अत्रेति । 'लोहितादि—' इति सूत्रे इत्यर्थः ।

---

पररूपं प्राप्तम् । न चानर्थकोऽयमुस् न ग्रहीष्यत इति वाच्यम् छिन्द्युर्भिन्द्युरित्यादावप्युसोऽनर्थकत्वादागमसहितस्यैवार्थवत्त्वात् । तथा चायुरपुरित्यादावेव स्यात् । एवं चायमेवाडागमस्य उसि परे प्रतिषेधोऽर्थवद्ग्रहणपरिभाषाया अत्राप्रवृत्तौ ज्ञापक इति स्थितम् । अतएव 'उस्यपदान्तात्' इत्यत्राऽपदान्तात् किं कोस्रेति भाष्ये प्रत्युदाहृतम् । औङ्कारीयदिति । 'ओमाङोश्च' इति पररूपं प्राप्तम् । आडागमस्याङि परे उदाहरणमाह औढीयदिति । यत्रादेशेनापहृतं तत्रापि यदि पृथक्कृतिस्तदा आङः परत्राटा भाव्यमित्याडागमस्याङि परे पररूपनिषेधो व्यर्थः स्यात् । तथा च ज्ञापकस्य विशेषविषयत्वे प्रमाणमयमेव निषेध इति भावः । चशब्दं प्रयुञ्जानः सूत्रकारोऽपि ज्ञापकस्य विशेषविषयत्वेऽनुकूल इत्याह चशब्देनेति । भाष्ये स्थितमिति । भाष्यकारोऽप्युक्तार्थे प्रमाणभूत इति भावः । स्यादेतत्—अवधीरयतीत्या-

